॥ अथाष्टमी ॥

प्र जिह्वया भरते वेपो अग्निः प्र वयुनानि चेतसा पृथिव्याः ।
तमायवः शुचयंतं पावकं मंद्रं होतारं दधिरे यजिष्ठं ॥८॥
प्र । जिह्वया । भरते । वेपः । अग्निः । प्र । वयुनानि । चेतसा । पृथिव्याः ।
तं । आयवः । शुचयंतं । पावकं । मंद्रं । होतारं । दधिरे । यजिष्ठं ॥८॥

योऽग्निर्जिह्वया ज्वालया वेपः । कर्मनामैतत् । कर्म भरते तथा योऽग्निर्वयुनानि प्रज्ञानानि स्तोत्राणि पृथिव्या रक्षणाय चेतसानुग्रहयुक्तेन मनसा प्रभरते तमग्निमायवो गंतारो मनुष्याः शुचयंतं दीप्यमानं पावकं शोधकं मंद्रं स्तुत्यं होतारमाह्वातारं होमनिष्पादकं वा यजिष्ठमतिशयेन यष्टव्यं यष्टृतमं वा दधिरे। धारयंति ॥

॥ अथ नवमी ॥

द्यावा यमग्निं पृथिवी जनिष्टामापस्त्वष्टा भृगवो यं सहोभिः ।
ईळेन्यं प्रथमं मातरिश्वा देवास्ततक्षुर्मनवे यजत्रं ॥९॥
द्यावा । यं । अग्निं । पृथिवी इति । जनिष्टां । आपः । त्वष्टा । भृगवः । यं । सहःऽभिः ।
ईळेन्यं । प्रथमं । मातरिश्वा । देवाः । ततक्षुः । मनवे । यजत्रं ॥९॥

यमग्निं द्यावापृथिवी द्यावापृथिव्यौ जनिष्टां अजनिषातां ॥ जनेर्लुङि व्यत्ययेन परस्मैपदं ॥ आपश्च यमुदपादयन् वैद्युतरूपेण त्वष्टा च यमजनयत् भृगवश्च यं सहोभिर्बलैः स्तोत्रादिसाधनैर्लब्धवंतः । भृगवोऽविंदन्निति ह्युक्तं । ऋ॰ सं॰ १०. ४६. २. । ईळेन्यं स्तुत्यं यं प्रथमं मातरिश्वा वायुरुदपादयत् अन्ये देवाश्च मनवे राज्ञे मनोरर्थाय यजत्रं यष्टव्यमग्निं ततक्षुः निष्पादितवंतः ॥

॥ अथ दशमी ॥

यं त्वा देवा दधिरे हव्यवाहं पुरुस्पृहो मानुषासो यजत्रं ।
स यामन्नग्ने स्तुवते वयो धाः प्र देवयन्यशसः सं हि पूर्वीः ॥१०॥
यं । त्वा । देवाः । दधिरे । हव्यऽवाहं । पुरुऽस्पृहः । मानुषासः । यजत्रं ।
सः । यामन् । अग्ने । स्तुवते । वयः । धाः । प्र । देवऽयन् । यशसः । सं । हि । पूर्वीः ॥१०॥

हे अग्ने हव्यवाहं यं त्वा त्वां देवा दधिरे धारितवंतो मानुषासो मनुष्याश्च पुरुस्पृहो बहुकामान् स्पृहयंतो यजत्रं यष्टव्यं दधिरे धारितवंतः हे अग्ने स त्वं यामन् यामनि यज्ञे स्तुवते मह्यं वयोऽन्नं धाः। देहि। हे अग्ने त्वत्तो देवयन् देवकामो यजमानः पूर्वीर्बह्वीर्बहूनि यशसो यशांसि। सं हीत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः। संप्राप्नोति खलु ॥

॥ इत्यष्टमे प्रथमस्य द्वितीयो वर्गः ॥

जगृभ्मा त इत्यष्टर्चं पंचमं सूक्तमांगिरसस्य सप्तगुनाम्न आर्षं त्रैष्टुभं। विकुंठा नामासुरस्त्री। सा चेंद्रसदृशं पुत्रं कामयमाना कृच्छ्रचांद्रायणादिकं तपस्तेपे। मत्सदृशोऽन्यः कश्चिन्मा जनिष्टेति बुद्ध्वेंद्र एव तस्याः पुत्रोऽजायत। तादृशो वैकुंठ इंद्रो देवता। तथा चानुक्रांतं। जगृभ्माष्टौ सप्तगुर्वैकुंठमिंद्रं तुष्टावेत्यादि। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

जगृभ्मा ते दक्षिणमिंद्र हस्तं वसूयवो वसुपते वसूनां।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः ॥१॥
जगृभ्म। ते। दक्षिणं। इंद्र। हस्तं। वसुऽयवः। वसुऽपते। वसूनां।
विद्म। हि। त्वा। गोऽपतिं। शूर। गोनां। अस्मभ्यं। चित्रं। वृषणं। रयिं। दाः ॥१॥

वसूनां वसुपते बहूनां धनानां स्वामिन् इंद्र ते तव दक्षिणं हस्तं वसूयवो वसुकामा वयं जगृभ्म। गृह्णीमः। यथा बहुप्रदस्यार्थिनो मह्यमदत्त्वा न गंतव्यमिति हस्तं गृह्णंति तद्वत्। हे शूर विक्रांतेंद्र त्वा त्वां गोनां गोपतिं। अत्र वृत्त्यवृत्तिभ्यां स्वामित्वं बहुत्वं च प्रतिपाद्यते। बह्वीनां गवां गोपतिं विद्म। जानीमः। अतोऽस्मभ्यं चित्रं चायनीयं वृषणं वर्षकं रयिं धनं दाः। देहि ॥

॥ अथ द्वितीया ॥

स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणां।
चर्कृत्यं शंस्यं भूरिवारमस्मभ्यं चित्रं वृषणं रयिं दाः ॥२॥
सुऽआयुधं। सुऽअवसं। सुऽनीथं। चतुःऽसमुद्रं। धरुणं। रयीणां।
चर्कृत्यं। शंस्यं। भूरिऽवारं। अस्मभ्यं। चित्रं। वृषणं। रयिं। दाः ॥२॥

स्वायुधं शोभनवज्राद्यायुधं स्ववसं शोभनरक्षणं सुगमनं वा सुनीथं सुनयनं चतुःसमुद्रं चतुरः समुद्रान्यो यशसा व्याप्नोति तं धरुणं धारकं। केषां। रयीणां धनानां। चर्कृत्यं पुनःपुनः कर्तव्यं शंस्यं स्तुत्यं भूरिवारं भूरीणां दुःखानां वारकं बहुभिर्वरणीयं वा त्वां विद्मेति शेषः। तादृशोऽस्मभ्यमित्यादि पूर्ववत्। यद्वा हे इंद्र उक्तगुणविशिष्टं पुत्राख्यं रयिं दाः। देहि ॥

॥ अथ तृतीया ॥

सुब्रह्माणं देववंतं बृहंतमुरुं गभीरं पृथुबुध्नमिंद्र।

श्रुतऋषिमुग्रमभिमातिषाहमस्मभ्यं चित्रं वृषणं रयिं दाः ॥३॥

सुऽब्रह्माणं। देवऽवंतं। बृहंतं। उरुं। गभीरं। पृथुऽबुध्नं। इंद्र।

श्रुतऽऋषिं। उग्रं। अभिमातिऽसहं। अस्मभ्यं। चित्रं। वृषणं। रयिं। दाः ॥३॥

हे इंद्र त्वं सुब्रह्माणं। ब्रह्म परिवृढं स्तुतिलक्षणं कर्म। शोभनस्तुतिकमित्यर्थः। देववंतं महांतमुरुं विस्तीर्णं गभीरमसुरादिभिरगम्यं पृथुबुध्नं विस्तृतमूलं श्रुतऋषिं श्रुता ऋषयो येन तादृशमृषीणां ख्यापयितारं प्रथितज्ञानं वोग्रमुद्गूर्णबलमत एवाभिमातिषाहमभिमातीनां शत्रूणामभिभवितारं हंतारमस्मभ्यं चित्रं पूज्यं वृषणं वर्षकं पुत्रं रयिं धनं दाः। देहि। अथवा विशेषणविशेष्यभावः। उक्तलक्षणं पुत्राख्यं रयिं दाः ॥

॥ अथ चतुर्थी ॥

सनद्वाजं विप्रवीरं तरुत्रं धनस्पृतं शूशुवांसं सुदक्षं।

दस्युहनं पूर्भिदमिंद्र सत्यमस्मभ्यं चित्रं वृषणं रयिं दाः ॥४॥

सनत्ऽवाजं। विप्रऽवीरं। तरुत्रं। धनऽस्पृतं। शूशुऽवांसं। सुऽदक्षं।

दस्युऽहनं। पूःऽभिदं। इंद्र। सत्यं। अस्मभ्यं। चित्रं। वृषणं। रयिं। दाः ॥४॥

सनद्वाजं लब्धान्नं विप्रवीरं मेधाविनं पुत्रं तरुत्रं तारकं धनस्पृतं धनानां पूरकं स्प्रष्टारं वा ॥ स्पृणोतेः स्पृशतेर्वोत्तरपदं ॥ शूशुवांसं वर्धमानं सुदक्षं शोभनबलं दस्युहनं शत्रूणां हंतारं पूर्भिदं शत्रूणां पुरां भेत्तारं सत्यं सत्यकर्माणं। शिष्टमुक्तं ॥

॥ अथ पंचमी ॥

अश्वावंतं रथिनं वीरवंतं सहस्रिणं शतिनं वाजमिंद्र ।
भद्रव्रातं विप्रवीरं स्वर्षामस्मभ्यं चित्रं वृषणं रयिं दाः ॥५॥
अश्वऽवंतं । रथिनं । वीरऽवंतं । सहस्रिणं । शतिनं । वाजं । इंद्र ।
भद्रऽव्रातं । विप्रऽवीरं । स्वःऽसां । अस्मभ्यं । चित्रं । वृषणं । रयिं । दाः ॥५॥

अश्वावंतं बहुभिरश्वैरुपेतं रथिनं रथवंतं वीरवंतं वीरैः पुरुषैरुपेतं सहस्रिणं सहस्रवंतं । असंख्यातगवादियुक्तमित्यर्थः । भद्रव्रातं भद्रगणं कल्याणैः सेवकैः परिवृतं विप्रवीरं विप्रैर्वीरैश्चोपेतं स्वर्षां सर्वस्य संभक्तारं वाजं बलवंतं हे इंद्र । शिष्टमुक्तं ॥

॥ इत्यष्टमस्य प्रथमे तृतीयो वर्गः ॥

॥ अथ षष्ठी ॥

प्र सप्तगुमृतधीतिं सुमेधां बृहस्पतिं मतिरच्छा जिगाति ।
य आंगिरसो नमसोपसद्योऽस्मभ्यं चित्रं वृषणं रयिं दाः ॥६॥
प्र । सप्तऽगुं । ऋतऽधीतिं । सुऽमेधां । बृहस्पतिं । मतिः । अच्छ । जिगाति ।
यः । आंगिरसः । नमसा । उपऽसद्यः । अस्मभ्यं । चित्रं । वृषणं । रयिं । दाः ॥६॥

सप्तगुं मां मतिः स्तुतिर्देवविषयाच्छा जिगाति । कीदृशं सप्तगुं । ऋतधीतिं सत्यकर्माणं सुमेधां शोभनप्रज्ञं बृहस्पतिं बृहतो मंत्रस्य स्वामिनं । यः सप्तगुरांगिरसोऽंगिरोगोत्रोत्पन्नोऽहं नमसा नमस्कारेण देवानुपसद्यः । उपगतः । यद्वा नमसान्नेनोपसद्य उपसदनीयो देवैरनुग्राह्य इत्यर्थः । तादृशायास्मभ्यं मह्यं चित्रं वृषणं रयिं दाः ॥

॥ अथ सप्तमी ॥

वनीवानो मम दूतास इंद्रं स्तोमाश्चरंति सुमतीरियानाः ।
हृदिस्पृशो मनसा वच्यमाना अस्मभ्यं चित्रं वृषणं रयिं दाः ॥७॥
वनीवानः । मम । दूतासः । इंद्रं । स्तोमाः । चरंति । सुऽमतीः । इयानाः ।
हृदिऽस्पृशः । मनसा । वच्यमानाः । अस्मभ्यं । चित्रं । वृषणं । रयिं । दाः ॥७॥

वनीवानो वननवंतः ॥ छंदसीवनिपाविति मत्वर्थीयो वनिप् ॥ मम सप्नगोर्दूतासो दूतसदृशाः । दूता यथा भर्तुरभिमतार्थं प्रापणीयं प्रापयंति तद्वत्स्तुत्यान्गुणान्प्रापयंतः स्तोमाः स्तवाः सुमतीस्तस्येंद्रस्यास्मद्विषया अनुकूला बुद्धीरियाना याचमाना इंद्रं चरंति । प्राप्नुवंति । पुनश्च त एव विशेष्यंते । हृदिस्पृशो हृदये स्पृशंतः । स्तुत्यस्य प्रियभूता इत्यर्थः ॥ हृद्द्युभ्यामित्युपसंख्यानात् ङेरलुक् ॥ मनसा सत्त्वोद्रिक्तेन वच्यमाना उच्यमानाः । अस्मभ्यमित्यादि गतं ॥

॥ अथाष्टमी ॥

यत्त्वा यामि दद्धि तन्न इंद्र बृहंतं क्षयमसमं जनानां ।

अभि तद्द्यावापृथिवी गृणीतामस्मभ्यं चित्रं वृषणं रयिं दाः ॥८॥

यत् । त्वा । यामि । दद्धि । तत् । नः । इंद्र । बृहंतं । क्षयं । असमं । जनानां ।

अभि । तत् । द्यावापृथिवी इति । गृणीतां । अस्मभ्यं । चित्रं । वृषणं । रयिं । दाः ॥८॥

हे इंद्र त्वा त्वां यद्वक्ष्यमाणं यामि याचामि । वर्णलोपश्छांदसः । याच्यमानं तद्दद्धि । देहि ॥ ददातेर्लोटि व्यत्ययेन परस्मैपदं । बहुलं छंदसीति शपो लुक् ॥ तदिति सामान्येन निर्दिष्टं विशेषयति । बृहंतं महांतं क्षयं निवासं जनानामन्येषामसममसाधारणं देहि । त्वया दातव्यं द्यावापृथिवी अभिगृणीतां । अस्मभ्यमित्यादि गतं ॥

॥ इत्यष्टमस्य प्रथमे चतुर्थो वर्गः ॥

अहं भुवमित्येकादशर्चं षष्ठं सूक्तं । पूर्वसूक्तेन सप्नगुना स्तुतो हृष्टः सन्निदमादिसूक्तत्रयेण स्वयमात्मानमस्तौत् । तस्माद्वैकुंठस्येंद्रस्य वाक्यत्वाद्यस्य वाक्यं स ऋषिरिति परिभाषयेंद्र ऋषिः । वैकुंठस्येंद्रस्य च स्तूयमानत्वाद्या तेनोच्यते सा देवतेति परिभाषयेंद्र एव देवता । दशम्येकादशीसप्तम्यस्त्रिष्टुभः । शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः । तथा चानुक्रांतं । सप्नगुस्तुतिसंहृष्ट आत्मानमुत्तरैस्त्रिभिस्तुष्टावाहं भुवमित्येकादशांत्ये त्रिष्टुभौ सप्तमी चेति ॥ अतिरात्रे द्वितीयपर्याये होतुः शस्त्र एतत्सूक्तं । सूत्रितं च । अहं भुवमपाय्यस्यांधसो मदायेति याज्या । आ॰ ६.४. । इति ॥ समूळ्हस्य दशरात्रस्य तृतीये छंदोमे निष्केवल्येऽप्येतत्सूक्तं । अहं भुवं तत्र इंद्रियमिति निष्केवल्यं । आ॰ ८.४. । इति सूत्रितं ॥

अहं। इंद्रः। न। परा। जिग्ये। इत्। धनं। न। मृत्यवे। अवं। तस्थे। कदा। चन।
सोमं। इत्। मा। सुन्वंतः। याचत। वसु। न। मे। पूरवः। सख्ये। रिषाथन ॥५॥

इंद्रो धनस्य सर्वस्य स्वाम्यहं धनमात्मीयं न परा जिग्य इत्। नैव पराभावयामि। मदीयं धनं न पराभूयत इत्यर्थः। किंचाहं मृत्यवे सर्वेषां मारकाय कदा चन कदापि नावतस्थे। नावस्थितो भवामि। इंद्रभक्ता न मृत्युभाजो भवंति किल किमु वक्तव्यमिंद्रस्य मृत्युविरहे। यस्मादेवं तस्मात्सोमं सुन्वंतो हे यजमाना वसु युष्मदभिमतं धनं मेत् मामेव याचत। हे पूरवो मनुष्याः सख्ये मा रिषाथन। मा रिष्टा भवथ। मत्सख्यं मा विनाशयत ॥

॥ इत्यष्टमस्य प्रथमे पंचमो वर्गः ॥

॥ अथ षष्ठी ॥

अहमेताञ्छाश्वसतो द्वाद्वेंद्रं ये वज्रं युधयेऽकृण्वत।
आह्वयमानाँ अव हन्मनाहनं दृळ्हा वदन्ननमस्युर्नमस्विनः ॥६॥
अहं। एतान्। शाश्वसतः। द्वाऽद्वा। इंद्रं। ये। वज्रं। युधये। अकृण्वत।
आऽह्वयमानान्। अव। हन्मना। अहनं। दृळ्हा। वदन्। अनमस्युः। नमस्विनः ॥६॥

अहमिंद्र एतान्वक्ष्यमाणाञ्छाश्वसतो भृशं प्राणतः प्रवृद्धबलाञ्शत्रून् द्वाद्वा द्वौ। युग्मभूतानित्यर्थः। तानहनमिति संबंधः। एतानित्युक्तं कानित्याह। ये शत्रव इंद्रं शत्रूणां दारकं। इंद्रः शत्रूणां दारयितेति निरुक्तं। ईदृशं वज्रं बलिनं। यद्वा वज्रवंतं युधये युद्धायाकृण्वत अकुर्वत। तानेतानित्यर्थः। पुनः कीदृशान्। आह्वयमानान् एहि युध्यस्वेत्याह्वयतः शत्रून् नमस्विनो नमनवतो बलान्नामयित्वानमस्युरप्रणतिशीलः सन् दृळ्हा दृढानि भयजनकानि स्थिराणि वचनानि वदन् अहनं। हतवानस्मि ॥

॥ अथ सप्तमी ॥

अभीइदमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करंति।
खले न पर्षान् प्रति हन्मि भूरि किं मा निंदंति शत्रवोऽनिंद्राः ॥७॥
अभि। इदं। एकं। एकः। अस्मि। निष्षाट्। अभि। द्वा। किं। ऊं इति। त्रयः। करंति।
खले। न। पर्षान्। प्रति। हन्मि। भूरि। किं। मा। निंदंति। शत्रवः। अनिंद्राः ॥७॥

अहमिदमिदानीमेकं शत्रुमेकोऽसहाय एव सन् अभ्यस्मि। अभिभवामि। किंच निष्षाट् सपत्नान्निःषहमाणोऽहं द्वा द्वावप्यसह्यौ शत्रू अभ्यस्मि। किमु किं वा त्रयः शत्रवः करंति। कुर्वंति। तानप्यभिभवामीत्यर्थः। किं बहुना। खले न खलनिष्पादने यथा जीर्णव्रीह्यादिस्तंभाननायासेन प्रतिहंति कर्षकः तद्वत्पर्षान्निष्ठुरान्भूरि बहूञ्शत्रून्प्रतिहन्मि। मा मामनिंद्रा इंद्ररहिता इंद्रमजानंत इंद्रविरोधिनः शत्रवो मामिंद्रं किं निंदंति। निंदितुमशक्ता इत्यर्थः। अत्राभिभवामीत्यादि निरुक्तं द्रष्टव्यं॥

॥ अथाष्टमी ॥

अहं गुंगुभ्यो अतिथिग्वमिष्करमिषं न वृत्रतुरं विक्षु धारयं।
यत्पर्णयघ्न उत वा करंजहे प्राहं महे वृत्रहत्ये अशुश्रवि ॥८॥

अहं। गुंगुऽभ्यः। अतिथिऽग्वं। इष्करं। इषं। न। वृत्रऽतुरं। विक्षु। धारयं।
यत्। पर्णयऽघ्ने। उत। वा। करंजऽहे। प्र। अहं। महे। वृत्रऽहत्ये। अशुश्रवि॥८॥

अहमिंद्रो गुंगुभ्य एतन्नामकेभ्यो जनपदेभ्यो रक्षणायातिथिग्वमतिथिगोः पुत्रं दिवोदासमृषिमिष्करं निष्कर्तारं वृत्रतुरं शत्रूणां हिंसकं विक्षु प्रजासु मध्य इषं नान्नमिव तासामन्नं यथा भोगाय भवति तद्वदन्नस्थानीयं धारयं। धारितवानस्मि। कदेति उच्यते। यद्यदा पर्णयघ्ने पर्णयनामकस्यासुरस्य हननवति उतापि च करंजह एतन्नामकस्य हननोपेते महे महति वृत्रहत्ये संग्रामेऽशुश्रवि। श्रुतोऽभवं॥

॥ अथ नवमी ॥

प्र मे नमी साप्य इषे भुजे भूद्गवामेषे सख्या कृणुत द्विता।
दिद्युं यदस्य समिथेषु मंहयमादिदेनं शंस्यमुक्थ्यं करं ॥९॥

प्र। मे। नमी। साप्यः। इषे। भुजे। भूत्। गवां। एषे। सख्या। कृणुत। द्विता।
दिद्युं। यत्। अस्य। संऽइथेषु। मंहयं। आत्। इत्। एनं। शंस्यं। उक्थ्यं। करं॥९॥

मे मम मत्संबंधी नमी। नामकत्वान्नमः स्तोत्रं। तदस्यास्तीति नमी स्तोता साप्यः सर्वैराश्रयणीय इषेऽन्नाय भुजे भोगाय प्रभूत्। प्रभवति। तं मत्स्तोतारं मनुष्या गवामेषेऽन्वेषणाय सख्या सख्याय च द्विता द्विविधं द्विप्रकाराय कृणुत। कृण्वंति। गवां दातारं सखायं च कुर्वंतीत्यर्थः। यद्वा गवामेष एषणे द्विता द्वैधाय

सख्याय शारीराय सैनिकाय च सख्याय कृण्वंति । कदेति उच्यते । यद्यदास्य मत्संबंधिनः स्तोतुर्जयार्थं समिथेषु संग्रामेषु दिद्युमायुधं मंहयं स्वीकुर्यामित्यर्थः । आदिदनंतरमेवैनं स्तोतारं शंस्यं स्तुत्यमुक्थ्यमुक्थार्हं करं । अकरं । करोमि ॥

॥ अथ दशमी ॥

प्र नेमस्मिन्ददृशे सोमो अंतर्गोपा नेममाविरस्था कृणोति ।

स तिग्मशृंगं वृषभं युयुत्सन् द्रुहस्तस्थौ बहुले बद्धो अंतः ॥१०॥

प्र । नेमस्मिन् । ददृशे । सोमः । अंतः । गोपाः । नेमं । आविः । अस्था । कृणोति ।

सः । तिग्मऽशृंगं । वृषभं । युयुत्सन् । द्रुहः । तस्थौ । बहुले । बद्धः । अंतरिति ॥१०॥

नेमस्मिन् । नेमशब्दोऽर्द्धपर्यायः । यष्टायष्टा च द्वौ पुरुषौ युध्यंतौ । तयोरेकस्मिन्यष्टरीत्यर्थः । तस्मिन्नंतः सोमो ददृशे । दृश्यते । तं नेममर्द्धमेकं गोपा गोपायितेंद्रोऽस्था क्षेपणसाधनेन वज्रेणाविष्कृणोति । प्रकटयति । शत्रुभिरनभिभूतं करोतीत्यर्थः । स यत्र सोमो न दृश्यते स तिग्मशृंगं तीक्ष्णायुधं वृषभं बाणान्वर्षयंतमिंद्रेणानुगृहीतं प्रति युयुत्सन् योद्धुमिच्छन् द्रुहो द्रोग्धा बद्धः सन् बहुलेऽधकारेऽंतस्तस्य मध्ये तस्थौ । तिष्ठति । यद्वैवं व्याख्येयं । नेमस्मिन्निंद्रभक्तेऽंतः सोमो ददृशे । नेममन्यं गोपाः स्वभक्तरक्षक इंद्रोऽस्था वज्रेणाविष्कृणोति । आविष्करोति । वज्रेण पीडयतीत्यर्थः । स नेमो द्रुहस्तिग्मशृंगं वृषभमिंद्रं युयुत्सन् । शिष्टं समानं ॥

॥ अथैकादशी ॥

आदित्यानां वसूनां रुद्रियाणां देवो देवानां न मिनामि धाम ।

ते मा भद्राय शवसे ततक्षुरपराजितमस्तृतमषाळ्हं ॥११॥

आदित्यानां । वसूनां । रुद्रियाणां । देवः । देवानां । न । मिनामि । धाम ।

ते । मा । भद्राय । शवसे । ततक्षुः । अपराऽजितं । अस्तृतं । अषाळ्हं ॥११॥

आदित्यानां वसूनां रुद्रियाणां रुद्राणां यद्वा रुद्रपुत्राणां मरुतां च देवानां धाम स्थानं देव इंद्रो न मिनाति । न हिनस्ति । त आदित्यादयो मा मां भद्राय शवसे ततक्षुः । अनुगृह्णंतु । अपराजितमस्तृतमहिंसितमषाळ्हमनभिभूतं ॥

॥ इत्यष्टमस्य प्रथमे षष्ठो वर्गः ॥

अहं दामित्येकादशर्चं सप्तमं सूक्तं। वैकुंठ एवर्षिर्देवता च। द्वितीयैकादश्यौ त्रिष्टुभौ। शिष्टा जगत्यः। अनुक्रांतं च। अहं दामंत्योपाद्ये चेति॥ द्वितीये रात्रिपर्याये मैत्रावरुणस्येदं सूक्तं। सूचितं च। अहं दां पाता सुतमिंद्रो अस्तु सोमं। आ॰ ६.४.। इति॥

॥ तत्र प्रथमा॥

अहं दां गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनं।
अहं भुवं यजमानस्य चोदितायज्वनः साक्षि विश्वस्मिन्भरे॥१॥
अहं। दां। गृणते। पूर्व्यं। वसु। अहं। ब्रह्म। कृणवं। मह्यं। वर्धनं।
अहं। भुवं। यजमानस्य। चोदिता। अयज्वनः। साक्षि। विश्वस्मिन्। भरे॥१॥

अहमिंद्रो गृणते स्तुवते पूर्व्यं मुख्यं वसु धनं दां। अदां। अहमेव ब्रह्म परिवृढं कर्म स्तुतिलक्षणं मह्यं वर्धनं कृणवं। करोमि। स्तोतुः संबंधि स्तोत्रं तस्मै धनं प्रयच्छन् मह्यमेव वर्धनं करोमीत्यर्थः। तथाहं यजमानस्य मामुद्दिश्य यष्टुर्धनस्य चोदिता प्रेरको भुवं। भवामि। अयज्वनोऽयष्टुः। अयष्टारमित्यर्थः। तं विश्वस्मिन्भरे सर्वस्मिन्नपि संग्रामे साक्षि। अभिभवामि॥

॥ अथ द्वितीया॥

मां धुरिंद्रं नाम देवता दिवश्च ग्मश्चापां च जंतवः।
अहं हरी वृषणा विव्रता रघू अहं वज्रं शवसे धृष्ण्वा ददे॥२॥
मां। धुः। इंद्रं। नाम। देवता। दिवः। च। ग्मः। च। अपां। च। जंतवः।
अहं। हरी इति। वृषणा। विऽव्रता। रघू इति। अहं। वज्रं। शवसे। धृष्णु। आ। ददे॥२॥

इंद्रं नामेंद्रनामानं मां देवता देवानां मध्ये दिवो द्युलोकस्य। ग्मा पृथिव्यापोऽंतरिक्षं। एतेषु लोकेषु जंतवो जाता मा मामेव धुः। दधुः। धारयंति हविर्भिः स्तुतिभिश्च। अहं यज्ञगमनाय संग्रामगमनाय वा हरी हरितवर्णौ वृषणा पुंस्त्वोपेतौ विव्रता विविधकर्माणौ रघू लघू शीघ्रगती अश्वौ नियोजयामि रथे। तथाहं धृष्णु धर्षकं वज्रमायुधं शवसे बलायाददे। स्वीकरोमि॥

॥ अथ तृतीया ॥

अहमत्कं कवये शिश्नथं हथैरहं कुत्समावमाभिरूतिभिः ।
अहं शुष्णस्य श्नथिता वधर्यमं न यो रर आर्यं नाम दस्यवे ॥३॥

अहं । अत्कं । कवये । शिश्नथं । हथैः । अहं । कुत्सं । आवं । आभिः । ऊतिऽभिः ।
अहं । शुष्णस्य । श्नथिता । वधः । यमं । न । यः । ररे । आर्यं । नाम । दस्यवे ॥३॥

अहमिंद्रोऽत्कमाच्छादकं शत्रुपुत्रं कवय उशनस ऋषये तस्य सुखार्थं हथैर्बहुप्रकारैः प्रहारैस्तत्साधनैरायुधैर्वा शिश्नथं । ताडितवानस्मि । श्नथतिर्वधकर्मा । किंचाहं कुत्समेतन्नामकमृषिमाभिरूतिभिर्वधादिरूपैः । कुत्साय शुष्णमशुषं नि बर्हीरित्यादि मंत्रांतरं । रक्षणैरावं । अरक्षं । पूर्वमेव कृतान्यपि रक्षणानीदानीमिव कृतानीत्यनुवदति । कुत्सार्थं शुष्णस्यैतन्नामकस्यासुरस्य श्नथिता हिंसिता । तस्य हननायेत्यर्थः । वधर्वज्रं यमं । प्रहरणाय नियमितवानस्मि । अपि चाहमार्यमार्यसंबंधि । आर्याणां देयमित्यर्थः । तादृशं नाम । उदकनामैतत् । नामकमुदकं दस्यवे शत्रव उपक्षपयित्रे न ररे । न दत्तवानस्मि । यद्वार्यं पूज्यमित्यसाधारणं नाम दस्यवे न दत्तवानस्मि । अत्रेंद्रस्यात्मस्तुतौ कुत्सरक्षणशुष्णवधादिकं आवः कुत्समिंद्र यस्मिञ्चाकन् शुष्णं पिप्रुं कुयवं वृत्रमिंद्रेत्यादिषु बहुधा प्रपंचितं । अतोऽत्र ग्रंथविस्तरभयान्न लिख्यते ॥

॥ अथ चतुर्थी ॥

अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रंधयं ।
अहं भुवं यजमानस्य राजनि प्र यद्भरे तुजये न प्रियाधृषे ॥४॥

अहं । पिताऽइव । वेतसून् । अभिष्टये । तुग्रं । कुत्साय । स्मत्ऽइभं । च । रंधयं ।
अहं । भुवं । यजमानस्य । राजनि । प्र । यत् । भरे । तुजये । न । प्रिया । आऽधृषे ॥४॥

अहमिंद्रः पितेव पिता पुत्रायेव । स यथा तस्मै निर्वाहार्थमभिमतं प्रदेशं प्रसाधयति तद्वद्वेतसून् एतन्नामकाञ्जनपदानभिष्टयेऽभीच्छते कुत्साय महर्षये तुग्रं स्मदिभं च रंधयं । वशमनयं । अहं यजमानस्य राजनि राजनार्थे भुवं । अभवं । समर्थ इति शेषः । यद्यस्मात्तुजये न पुत्रायेव पिता तस्मै यजमानायाधृषे शत्रूणां धर्षणाय प्रिया प्रियाणि प्रभरे प्रभरामि तस्माद्यजमानस्य राजनि भुवमिति संबंधः ॥

॥ अथ पंचमी ॥

अहं रंधयं मृगयं श्रुतर्वणे यन्माजिहीत वयुना चनानुषक् ।
अहं वेशं नम्रमायवेऽकरमहं सव्याय पड्गृभिमरंधयं ॥५॥
अहं । रंधयं । मृगयं । श्रुतर्वणे । यत् । मा । अजिहीत । वयुना । चन । आनुषक् ।
अहं । वेशं । नम्रं । आयवे । अकरं । अहं । सव्याय । पट्ऽगृभिं । अरंधयं ॥५॥

अहमिंद्रो मृगयमेतन्नामकमसुरं श्रुतर्वण एतन्नामकाय महर्षये रंधयं । रध्यतिर्वशगमने । वशमनयं । यद्यस्माच्छ्रुतर्वा मा मामजिहीत । ओहाङ् गतौ । आगच्छत् । तदेवोच्यते । वयुना प्रज्ञानेन स्तोत्रेणानुषक् अनुषक्तोऽभूत् । चनेति पूरणः । अहं वेशमेतन्नामानं नम्रं प्रह्वं करं । अकार्षं ॥ करोतेर्लुङि कृमृदृरुहिभ्यश्छंदसीति च्लेरङ् । अडभावश्छांदसः ॥ अहं सव्यायैतन्नामकाय पड्गृभिमेतन्नामकमरंधयं ॥

॥ इत्यष्टमस्य प्रथमे सप्तमो वर्गः ॥

॥ अथ षष्ठी ॥

अहं स यो नववास्त्वं बृहद्रथं सं वृत्रेव दासं वृत्रहारुजं ।
यद्वर्धयंतं प्रथयंतमानुषग्दूरे पारे रजसो रोचनाकरं ॥६॥
अहं । सः । यः । नवऽवास्त्वं । बृहत्ऽरथं । सं । वृत्राऽइव । दासं । वृत्रऽहा । अरुजं ।
यत् । वर्धयंतं । प्रथयंतं । आनुषक् । दूरे । पारे । रजसः । रोचना । अकरं ॥६॥

अहमिंद्रः सोऽस्मि योऽहं नववास्त्वं बृहद्रथं च वृत्रेव वृत्रमिव दासमुपक्षपयितारमिव नववास्त्वं बृहद्रथं चारुजं । अहं भग्नमकरवं । रुजो भंगे । यद्यदा वर्धयंतं वर्धमानं प्रथयंतं प्रथमानं चोभौ शत्रू आनुषगानुषक्तः सन् रोचना रोचनस्य रजसो लोकस्य दूरे पारेऽकरं कृतवानस्मि ॥

॥ अथ सप्तमी ॥

अहं सूर्यस्य परि याम्याशुभिः प्रैतशेभिर्वहमान ओजसा ।
यन्मा सावो मनुष आह निर्णिज ऋधक्कृषे दासं कृत्व्यं हथैः ॥७॥
अहं । सूर्यस्य । परि । यामि । आशुऽभिः । प्र । एतशेभिः । वहमानः । ओजसा ।
यत् । मा । सावः । मनुषः । आह । निःऽनिजे । ऋधक् । कृषे । दासं । कृत्व्यं । हथैः ॥७॥

अहं सूर्यस्य देवस्याशुभिः शीघ्रगामिभिरेतशेभिरेतशवर्णैरश्वैर्वहमान उह्यमान ओजसात्मीयेन बलेन प्रकर्षेण परियामि। परिगच्छामि सूर्यात्मना। किंच यद्यदा मा मां मनुषो मनुष्यस्य सावः सोमाभिषव आह ब्रूते। आह्वयतीत्यर्थः। किमर्थमाह। निर्णिजे। निर्णिगिति रूपनाम। यज्ञस्वरूपायेत्यर्थः। तदानीं कृत्व्यं कर्तव्यं। हंतव्यमित्यर्थः। दासमुपक्षपयितारं शत्रुं हथैर्हननसाधनैर्ऋधक् कृषे। पृथक्करोमि। ऋधगित्यव्ययं पृथगर्थे ॥

॥ अथाष्टमी ॥

अहं सप्तहा नहुषो नहुष्टरः प्राश्रावयं शवसा तुर्वशं यदुं।
अहं न्य१न्यं सहसा सहस्करं नव व्राधतो नवतिं च वक्षयं ॥८॥
अहं। सप्तऽहा। नहुषः। नहुःऽतरः। प्र। अश्रवयं। शवसा। तुर्वशं। यदुं।
अहं। नि। अन्यं। सहसा। सहः। करं। नव। व्राधतः। नवतिं। च। वक्षयं ॥८॥

अहं सप्तसंख्याकानां पुरां शत्रूणां वा हंता। सप्त यत्पुरः शर्म शारदीः। ऋग्वे॰ १.१७४.२.। इत्युक्तं। यद्वा सप्त नमुच्यादीन् हतवान्। किंच नहुषो बंधकस्यापि नहुष्टरो बंधकतरोऽहं शवसा बलेन तुर्वशं यदुं च प्राश्रावयं। शत्रुसंबंधिगवादिप्रदानेन श्रावितवानस्मि। तौ यथा लोके श्रुतौ भवतस्तथाकार्षमित्यर्थः। किंचाहमन्यं चास्मत्स्तोतारं सहसा बलेन सहो बलिनं करं। अकार्षं॥ करोतेर्लुङि कृमृदृरुहीति च्लेरङ्। अडभाव आर्षः॥ किंच नव नवसंख्याका नवतिं च नवतिसंख्याकाश्च। नवोत्तरनवतिमित्यर्थः। कथंभूताः। व्राधतो वर्धमानाः। वक्षयं। अवहं। व्यनाशयमित्यर्थः ॥

॥ अथ नवमी ॥

अहं सप्त स्रवतो धारयं वृषा द्रवित्न्वः पृथिव्यां सीरा अधि।
अहमर्णांसि वि तिरामि सुक्रतुर्युधा विदं मनवे गातुमिष्टये ॥९॥
अहं। सप्त। स्रवतः। धारयं। वृषा। द्रवित्न्वः। पृथिव्यां। सीराः। अधि।
अहं। अर्णांसि। वि। तिरामि। सुऽक्रतुः। युधा। विदं। मनवे। गातुं। इष्टये ॥९॥

वृषा वर्षकोऽहं सप्त स्रवतः स्रवंतीर्नदीर्धारयं। अधारयं। कीदृश्यस्ताः। द्रवित्न्वः। द्रवंतीः॥ वा छंदसीति पूर्वसवर्णदीर्घाभावः॥ सीराः सरणशीलाः। कुत्र। पृथिव्यां। सुक्रतुः शोभनकर्माहमर्णांस्युदकानि वि तिरामि। प्रयच्छामि।

किंच मनवे मनुष्यायेष्टये तस्य गमनाय गातुं मार्गं युधा संप्रहारेण। निरोधपरिहारेणेत्यर्थः। विदं। अलभं। प्रायच्छमित्यर्थः। विदेर्लाभार्थस्य पुषादित्वात् । पा॰ ३.१.५५.। च्लेरङ् ॥

॥ अथ दशमी ॥

अहं तदासु धारयं यदासु न देवश्चन त्वष्टाधारयद्रुशत् ।

स्पार्हं गवामूधःसु वक्षणास्वा मधोर्मधु श्वात्र्यं सोमंमाशिरं ॥१०॥

अहं। तत्। आसु। धारयं। यत्। आसु। न। देवः। चन। त्वष्टा। अधारयत्। रुशत्।

स्पार्हं। गवां। ऊधःऽसु। वक्षणासु। आ। मधोः। मधु। श्वात्र्यं। सोमं। आऽशिरं ॥१०॥

अहं तत्प्रसिद्धं पय आसु गोषु धारयं धृतवानस्मि ॥ धृञ् धारणे। ण्यंतस्य लङि रूपं ॥ यत्पय आसु गोषु देवश्चन त्वष्टा देवशिल्पी सूर्यो वा देवो न चनाधारयत् धर्तुं नाशक्नोत्। कीदृक् पयोऽधारयमिति चेत् उच्यते। रुशत्। दीप्तं स्पार्हं स्पृहणीयं। केषु प्रदेशेष्वित्युच्यते। गवामूधःसु। उद्धततरेषु गवां पयोधारणप्रदेशेषु। किंच मधूदकं वक्षणासु। नदीनामैतत्। वहनशीलासु नदीषु धारयामीत्यनुषज्यते। नद्युदकधारणस्यावधिरुच्यते। आ मधोः। आोदकोत्पत्तेः। आगामिवर्षसमयपर्यंतमित्यर्थः। कीदृशं मध्विति तदुच्यते। श्वात्र्यं। श्वात्रमिति क्षिप्रनाम। क्षिप्रगमनार्हं। यद्वा श्वात्र्यमित्युत्तरत्र संबध्यते। श्वात्र्यं सुखावहं सोमं प्रत्याशिरं धारयं ॥

॥ अथैकादशी ॥

एवा देवाँ इंद्रो विव्ये नॄन् प्र च्यौत्नेन मघवा सत्यराधाः ।

विश्वेत्ता ते हरिवः शचीवोऽभि तुरासः स्वयशो गृणंति ॥११॥

एव। देवान्। इंद्रः। विव्ये। नॄन्। प्र। च्यौत्नेन। मघऽवा। सत्यऽराधाः।

विश्वा। इत्। ता। ते। हरिऽवः। शचीऽवः। अभि। तुरासः। स्वऽयशः। गृणंति ॥११॥

अथानयेंद्र इंद्रभावं परित्यज्य ऋषिभावेनाह। एवैवमुक्तप्रकारेण देवान् नॄंश्चेंद्रो देवः प्रविव्ये। प्रकर्षेण गमयति। तस्मात्पराचीः प्रजाः प्रवीयंते प्रतीचीर्जायंत इति ब्राह्मणं। किमन्यसहायेन नेत्याह। च्यौत्नेन स्वीयेन बलेन। कीदृश इंद्रः। मघवा धनवान् सत्यराधाः सत्यधनः। अथ प्रत्यक्षेणाह। हे हरिवो हरिभ्यां तद्वन् शचीवः कर्मवन् हे स्वयशः स्वायत्तकीर्तेऽन्नवन्वेंद्र ता तानि विश्वा सर्वाणि

कर्माणि ते तव संबंधीनि येषु कर्मसु तुराश्त्वरमाणा ऋत्विजोऽभिगृणंति । अभिष्टुवंति ॥

॥ इत्यष्टमस्य प्रथमेऽष्टमो वर्गः ॥

प्र वो मह इत्यष्टर्चमष्टमं सूक्तं । आदितो द्वे जगत्यौ । के ते नर इत्यादिके द्वे अभिसारिण्यौ । आदितो द्वौ दशाक्षरौ ततो द्वौ द्वादशकौ साभिसारिणी । तदुक्तं वैराजौ जागतौ चाभिसारिणी । ततस्त्रिष्टुबेका । ततो द्वे जगत्यौ । पूर्ववदृषिदेवते । तथा चानुक्रांतं । प्र वो महे सप्त द्विजगत्याद्यंतं के तेऽभिसारिण्याविति ॥ महाव्रते निष्केवल्य एतत्सूक्तं निविद्धानं । सूचितं च । प्र वो महे मंदमानायांधस इति निविद्धानं । ऐ॰ आ॰ ५. ३. । इति ॥

॥ तत्र प्रथमा ॥

प्र वो महे मंदमानायांधसोऽर्चा विश्वानराय विश्वाभुवे ।
इंद्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥१॥
प्र । वः । महे । मंदमानाय । अंधसः । अर्च । विश्वानराय । विश्वऽभुवे ।
इंद्रस्य । यस्य । सुऽमखं । सहः । महि । श्रवः । नृम्णं । च । रोदसी इति । सपर्यतः ॥१॥

हे स्तोतः वस्त्वं । पूजार्थे बहुवचनं । महे महतेऽंधसः । अंधसेत्यर्थः । सोमेन मंदमानाय मोदमानाय विश्वानराय सर्वस्य नेत्रे ॥ नरे संज्ञायामिति दीर्घः ॥ विश्वाभुवे सर्वस्य भावयित्रे मह्यमिंद्राय प्रार्च । अर्चेतिः स्तुतिकर्मा । प्रोच्चारय । यस्य ममेंद्रस्य सुमखं सुष्ठु मंहनीयं सहो बलं महि महच्छ्रवोऽन्नं नृम्णं सुखं च रोदसी द्यावापृथिव्यौ सर्पयतः । पूजयतः । तस्मा इंद्रायार्चेति समन्वयः ॥

॥ अथ द्वितीया ॥

सो चिन्नु सख्या नर्य इनः स्तुतश्चर्कृत्य इंद्रो मावते नरे ।
विश्वासु धूर्षु वाजकृत्येषु सत्पते वृत्रे वाप्स्व१भि शूर मंदसे ॥२॥
सः । चित् । नु । सख्या । नर्यः । इनः । स्तुतः । चर्कृत्यः । इंद्रः । माऽवते । नरे ।
विश्वासु । धूःऽसु । वाजऽकृत्येषु । सत्ऽपते । वृत्रे । वा । अप्ऽसु । अभि । शूर । मंदसे ॥२॥

सो चिन्नु स खल्विंद्रः सख्या सखिभूतेन निमित्तेन नर्यो नृभ्यो हित इनः सर्वस्येश्वरः स्तुतः सर्वैरभिष्टुतः । सख्या स्तुत इति वान्वयः । मावते मत्सदृशाय

नरे नराय चर्कृत्यः। पुनःपुनः कर्तव्यः। परिचरणीय इत्यर्थः। अथ प्रत्यक्षवादः। हे सत्पते सतां पालकेंद्र स त्वं विश्वासु सर्वासु धूर्षु वोढव्येषु कार्यभारेषु वाजकृत्येषु च बलकृत्येषु च वृत्रे वाप्सु मेघे वर्तमानेषूदकेषु च निमित्तेषु हे शूर त्वमभि मंदसे। अभिष्टूयसे ॥

॥ अथ तृतीया ॥

के ते नर॑ इंद्र॒ ये त॑ इ॒षे ये ते॑ सु॒म्नं स॑ध॒न्य१॒॑मियं॑क्षान्।

के ते॒ वाजा॑यासु॒र्या॑य हिन्वि॒रे॒ के अ॒प्सु स्वासू॒र्वरा॑सु॒ पौंस्ये॑ ॥३॥

के। ते। नरः॑। इं॒द्र॒। ये। ते॒। इ॒षे। ये। ते॒। सु॒म्नं। स॒ऽध॒न्यं॑। इयं॑क्षान्।

के। ते॒। वाजा॑य। अ॒सु॒र्या॑य। हि॒न्वि॒रे॒। के। अ॒प्ऽसु। स्वासु॑। उ॒र्वरा॑सु। पौंस्ये॑ ॥३॥

हे इंद्र ते के नरः के मनुष्या इति प्रश्नः। ते महांतो मया ज्ञातव्या इत्यभिप्रायः। प्रष्टव्यानाह। ये नरास्ते तवेषेऽन्नाय प्रभवंतीति शेषः। ये च ते सुम्नं सुखं त्वदीयं सधन्यं धनयुक्तमियक्षान् गच्छंति। इयक्षतिर्गतिकर्मा। त्वदीयमन्नं सुखं धनं च ये लभंते ते के महात्मान इति। किंच के ते तवासुर्यायासुरसंबंधिने तेषां वधनिमित्ताय वाजाय बलाय हिन्विरे। प्रेरयंति सोमादि हविः। के वाप्सु स्वासु स्वापेक्षितेषूदकेषूर्वरासु सर्वसस्याढ्यासु भूमिषु पौंस्ये पुंस्त्वे चेति तेषु निमित्तभूतेषु हविः प्रेरयंतीत्यनुवर्तते। उक्तविधा महांतो दुर्लभा इति भावः ॥

भुवस्त्वमिंद्रेति दर्शपूर्णमासयोर्माहेंद्रस्य हविषो याज्या। सूचितं च। महां इंद्रो य ओजसा भुवस्त्वमिंद्र ब्रह्मणा महान्। आ॰१.६.। इति ॥ देवसुवां हविःष्विंद्रस्य ज्येष्ठस्यैषैव याज्या। भुवस्त्वमिंद्र ब्रह्मणा महाननमीवास इळया। आ॰ ४.११.। इति हि सूचितं ॥ एषैव भूनाम्न्येकाहे निष्केवल्ये सूक्तमुखीया। सूचितं च। शस्यमुक्तं बृहस्पतिसवेन त्वं भुवः प्रतिमानं पृथिव्या भुवस्त्वमिंद्र ब्रह्मणा महान्। आ॰ ९.५.। इति ॥ अस्याः पाठस्तु ॥

भुव॒स्त्वमिं॑द्र॒ ब्रह्म॑णा म॒हान्भुवो॒ विश्वे॑षु॒ सव॑नेषु य॒ज्ञियः॑।

भुवो॒ नॄँश्च्यौ॒त्नो विश्व॑स्मि॒न्भरे॒ ज्येष्ठ॑श्च॒ मंत्रो॑ विश्वचर्षणे ॥४॥

भुवः॑। त्वं। इं॒द्र॒। ब्रह्म॑णा। म॒हान्। भुवः॑। विश्वे॑षु। सव॑नेषु। य॒ज्ञियः॑।

भुवः॑। नॄन्। च्यौ॒त्नः। विश्व॑स्मिन्। भरे॑। ज्येष्ठः॑। च॒। मंत्रः॑। वि॒श्व॒ऽच॒र्ष॒णे॒ ॥४॥

हे इंद्र त्वं ब्रह्मणास्मत्कृतेन परिवृढेन स्तोत्रेण महान्भुवः। अभवः॥ भवतेर्लेटि भूसुवोस्तिङीति गुणप्रतिषेध उवङादेशः॥ तथा विश्वेषु सर्वेषु सवनेषु यज्ञियो यष्टव्यो भुवः। अभवः। तथा विश्वस्मिन्भरे संग्रामे नॄन् नेतॄणां शत्रूणां च्यौत्नः। च्यावयिताभवः। हे विश्वचर्षणे सर्वस्य द्रष्टरिंद्र मंत्रो मंत्रयितव्यस्त्वं ज्येष्ठश्चाभवः सर्वेषां मध्ये॥

॥ अथ पंचमी ॥

अवा नु कं ज्यायान् यज्ञवनसो मही त ओमात्रां कृष्टयो विदुः।
असो नु कमजरो वर्धाश्च विश्वेदेता सवना तूतुमा कृषे॥५॥

अव। नु। कं। ज्यायान्। यज्ञऽवनसः। मही। ते। ओमात्रां। कृष्टयः। विदुः।
असः। नु। कं। अजरः। वर्धाः। च। विश्वा। इत्। एता। सवना। तूतुमा। कृषे॥५॥

हे इंद्र त्वं ज्यायान् प्रशस्यतरस्त्वं यज्ञवनसः संभक्तयज्ञान् स्तोतॄन् नु कं क्षिप्रमव। रक्ष॥ अध्येतारो नु कमिति पदद्वयं कुर्वंति तथापि हिकं नुकमित्यादीनि नवोत्तराणि पदानीत्युक्तवान्यास्काचार्यः। अतः केवलानां हिकं नुकमित्येवमादीनां यावानर्थः स एव विशिष्टानामपि। तैत्तिरीया अप्येकमेव पदं कुर्वंति॥ अवेत्युक्तं। इंद्रस्यावनप्रसिद्धिं दर्शयति। हे इंद्र ते तवौमात्रां रक्षणं महीं महद्विदुः कृष्टयो मनुष्या ऋषयः॥ ओमात्रां। अम गत्यादिषु। औणादिक आत्रन्प्रत्ययः। छांदस उमादेशः॥ किंच त्वमजरो जरारहितोऽसः। भव। नु कं क्षिप्रं वर्धाश्च। वर्धस्व च हविराज्यादिना। किंच विश्वेत् सर्वाण्यप्येतानि सवना सवनानि तूतुमा तूर्णानि कृषे। करोषि॥ कृषे। छांदसे लिटि छंदसि वेति द्विर्वचनाभावः॥

॥ अथ षष्ठी ॥

एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो यानि दधिषे।
वराय ते पात्रं धर्मणे तना यज्ञो मंत्रो ब्रह्मोद्यतं वचः॥६॥

एता। विश्वा। सवना। तूतुमा। कृषे। स्वयं। सूनो इति। सहसः। यानि। दधिषे।
वराय। ते। पात्रं। धर्मणे। तना। यज्ञः। मंत्रः। ब्रह्म। उत्ऽयतं। वचः॥६॥

हे इंद्र एतैतानि विश्वा सवना सर्वाणि सवनानि तूतुमा तूर्णानि कृषे। करोषि। एतानीत्युक्तं कानीति तत्राह। हे सहसो बलस्य सूनो पुत्र। बलवन्नित्यर्थः। स्वयं यानि दधिषे धारयसि। हे इंद्र ते तव वराय शत्रूणां वारकाय ते तव स्वभूतं

पात्रं रक्षणं भवत्वस्माकं। किंच धर्मणे धारणाय तना धनं भवत्विति शेषः। किंच तुभ्यं यज्ञो मंत्रः। इज्यतेऽनेनेति यज्ञकरणसाधनभूतो मंत्रो यजुरित्यर्थः। ब्रह्म परिवृढं शस्त्रमित्यर्थः। तदुभयात्मकं वच उद्यतं भवतीति शेषः॥

॥ अथ सप्तमी ॥

ये ते विप्र ब्रह्मकृतः सुते सचा वसूनां च वसुनश्च दावने।

प्र ते सुम्नस्य मनसा पथा भुवन्मदे सुतस्य सोम्यस्यांधसः॥७॥

ये। ते। विप्र। ब्रह्मऽकृतः। सुते। सचा। वसूनां। च। वसुनः। च। दावने।

प्र। ते। सुम्नस्य। मनसा। पथा। भुवन्। मदे। सुतस्य। सोम्यस्य। अंधसः॥७॥

हे विप्र मेधाविन् इंद्र ते तुभ्यं ये ब्रह्मकृतः स्तोत्रकृतो हविष्कर्तारो वा स्तोतारः सचा संघीभूताः सुते सोमेऽभिषुते वसूनां बहूनां धनानां वसुनश्चैकस्य निवासयोग्यस्य धनस्य च दावने दानाय परिचरंतीति शेषः। अत्र वसूनामिति बहुवचनेनैहिकभोगसाधनानि धनान्यभिप्रेतानि। एकवचनांतेन च निवासयोग्यं स्वर्गाख्यं धनमभिप्रेतमित्यवगंतव्यं। तेऽनुष्ठातारः सुम्नस्य सुखस्य लाभाय मनसा पथा मनोमार्गेण। स्तोत्रवर्त्मनेत्यर्थः। प्रभुवन्। प्रभवंतु। उक्तवसुदानाय योग्या भवंत्वित्यर्थः। कदेत्युच्यते। सुतस्याभिषुतस्य सोम्यस्य सोमसंबंधिनोऽधसोऽन्नस्य मदे सति॥

॥ इत्यष्टमस्य प्रथमे नवमो वर्गः॥

महत्तदिति नवर्चं नवमं सूक्तं। वज्रभूतेन वषट्कारेण देवानां हविर्वहनेन च हतेषु भ्रातृषु कनिष्ठः सौचीको नामाग्निर्वषट्कारहविर्वहनाभ्यां भीतो देवेभ्यो निर्गत्यापः प्राविशत्। स च मत्स्यैः प्रदर्शितः सन्नन्वेष्टुमागतैर्देवैः सहेदमादिसूक्तत्रयेण संवादं कृतवान्। अस्य सूक्तस्य द्वितीयादियुजश्चतस्रो विश्वे देवाः शास्तेनेति षडृचमुत्तरसूक्तं चेति दशर्चोऽग्निवाक्यं। अयुजः प्रथमाद्याः पंचर्चो यमैच्छाम मनसेत्येकादशर्चमुत्तरसूक्तं च देवानां वाक्यं। तत्र तदद्य वाचः प्रथमं मसीयेति द्वृचस्त्वग्नेर्वाक्यं। अतोऽग्निवाक्येषु देवा देवताग्निर्ऋषिः। देवोक्तिष्वग्निर्देवता देवा ऋषयः। अनादेशपरिभाषयेदमुत्तरं च द्वे त्रैष्टुभे विशेषानभिधानात्। तथा चानुक्रांतं। वषट्कारेण वृक्णेषु भ्रातृषु सौचीकोऽग्निरपः प्रविश्य देवैः समवददुत्तरैस्त्रिभिर्महत्तन्नव तत्र युजोऽग्निवाक्यं विश्व इत्युत्तरं षट्कमयुजो देवानां

यमैच्छामेत्युत्तरं चैकादशकं तदद्येति तु तृचोऽग्नेस्तंतुमाद्या जगत्योऽष्टमीवर्जमिति ॥ गतो विनियगोः ॥ सूक्तत्रयोक्तार्थे तैत्तिरीयब्राह्मणं । अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् ते देवेभ्यो हव्यं वहंतः प्रामीयंत सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति स निलायत सोऽपः प्राविशत्तं देवाः प्रैषमैच्छन्नित्यादि । तै॰ सं॰ २.६.६. । तत्राद्यया देवा अग्निमाहुः ॥

महत्तदुल्बं स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः ।
विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः ॥१॥

महत् । तत् । उल्बं । स्थविरं । तत् । आसीत् । येन । आऽविष्टितः । प्रऽविवेशिथ । अपः ।
विश्वाः । अपश्यत् । बहुधा । ते । अग्ने । जातऽवेदः । तन्वः । देवः । एकः ॥१॥

तदुल्बं वक्ष्यमाणं प्रावरणं महत् स्थविरमत्यंतं स्थूलं च तदासीत् येनोल्बेनाविष्टित आवेष्टितः सन् हे अग्ने प्रविवेशिथापः । उदकानि प्रविष्टवानसि । हे अग्ने जातवेदो जातप्रज्ञान विश्वाः सर्वास्तन्वस्तनूः सर्वाण्यंगानि बहुधा बहुप्रकारमेको देवोऽपश्यत् । दृष्टवान् ॥

॥ अथ द्वितीया ॥

को मा ददर्श कतमः स देवो यो मे तन्वो बहुधा पर्यपश्यत् ।
क्वाह मित्रावरुणा क्षियंत्यग्नेर्विश्वाः समिधो देवयानीः ॥२॥

कः । मा । ददर्श । कतमः । सः । देवः । यः । मे । तन्वः । बहुधा । परिऽअपश्यत् ।
क्व । अह । मित्रावरुणा । क्षियंति । अग्नेः । विश्वाः । संऽइधः । देवऽयानीः ॥२॥

इदमग्नेर्वाक्यं । एको देवोऽपश्यदित्युक्ते पृच्छति । को मा मां ददर्श दृष्टवान् । स देवः कतमः । यो मे मम तन्वस्तनूर्बहुधा बहुप्रकारं स्थिताः पर्यपश्यत् परिदृष्टवान् । हे मित्रावरुणा मित्रावरुणौ अग्नेर्मम विश्वाः सर्वाः समिधो दीप्ता देवयानीर्देवयानसाधनभूतास्तन्वो दृष्टा इत्युक्तं यदि दृष्टाश्चेत्तर्हि क्व क्षियंति क्व निवसंतीत्येवं देवानां पुरतो वर्तमानौ मित्रावरुणावाहाग्निः ॥

॥ अथ तृतीया ॥

ऐच्छाम त्वा बहुधा जातवेदः प्रविष्टमग्ने अप्स्वोषधीषु ।
तं त्वा यमो अचिकेच्चित्रभानो दशांतरुष्यादतिरोचमानं ॥३॥

ऐच्छाम। त्वा। बहुधा। जातऽवेदः। प्रऽविष्टं। अग्ने। अप्ऽसु। ओषधीषु।
तं। त्वा। यमः। अचिकेत्। चित्रभानो इति चित्रऽभानो। दशऽअंतरुष्यात्।
अतिऽरोचमानं ॥३॥

एवमग्निना पृष्टा देवा अग्निं ब्रुवंति। हे जातवेदो जातप्रज्ञाग्ने त्वा त्वामन्वैच्छाम। कीदृशं त्वां। अप्सूदकेष्वोषधीषु च बहुधा प्रविष्टं। अन्विष्य च तं तादृशं प्रविष्टं त्वा त्वां यमो देवोऽचिकेत् ज्ञातवान् हे चित्रभानो चायनीयरश्मे। कुत्र स्थितं ज्ञातवानिति तदुच्यते। दशांतरुष्यात्। अंतरुष्यं गूढमावासस्थानं तच्च स्थानं दशसंख्योपेतं। तादृशं स्थानमतिरोचमानमतीत्य प्रकाशमानं। अग्नेर्हि गूढानि दश स्थानानि भवंति पृथिव्यादयस्त्रयो लोका अग्निवाय्वादित्यास्त्रयो देवा आप ओषधयो वनस्पतयः प्राणिशरीरमिति दश स्थानानि ॥

॥ अथ चतुर्थी ॥

होत्रादहं वरुण बिभ्यदायं नेदेव मा युनजन्नत्र देवाः।
तस्य मे तन्वो बहुधा निविष्टा एतमर्थं न चिकेताहमग्निः ॥४॥
होत्रात्। अहं। वरुण। बिभ्यत्। आयं। न। इत्। एव। मा। युनजन्। अत्र। देवाः।
तस्य। मे। तन्वः। बहुधा। निऽविष्टाः। एतं। अर्थं। न। चिकेत। अहं। अग्निः ॥४॥

अनया देवगणा मां ज्ञातवंत इति निश्चित्य गूहनस्य प्रयोजनमाह। हे वरुण देव अहं होत्राद्धोतव्यात्। हविर्वहनादित्यर्थः। तस्माद्बिभ्यदायं। आगतवानस्मि। अतो मा मामेवैवं पूर्वप्रकारेणात्रास्मिन्हविर्वहनप्रयोजने नेद्युनजन् नैव योजयंत देवाः। तस्य तादृशस्य बिभ्यतो मे तन्वो बहुधा निविष्टा अप्सु। एतमर्थमेतद्ध-विर्वहनकार्यमग्निरहं न चिकेत। न बुध्ये। नांगीकरोमि ॥

॥ अथ पंचमी ॥

एहि मनुर्देवयुर्यज्ञकामोऽरंकृत्या तमसि क्षेष्यग्ने।
सुगान्पथः कृणुहि देवयानान्वह हव्यानि सुमनस्यमानः ॥५॥
आ। इहि। मनुः। देवऽयुः। यज्ञऽकामः। अरंऽकृत्य। तमसि। क्षेषि। अग्ने।
सुऽगान्। पथः। कृणुहि। देवऽयानान्। वह। हव्यानि। सुऽमनस्यमानः ॥५॥

अग्निनैवमुक्ता देवाः पुनरग्निमाह्वयंति। हे अग्न एहि। आगच्छ। मनुर्मनुष्यो

यष्टा मननीयो मनू राजा वा देवयुर्देवान्यष्टुमिच्छन् यज्ञकामश्च भवति। अत एहि। किं कुर्वन् यज्ञकामो भवतीति चेत् उच्यते। अरंकृत्य केवलं तेजःपुंजमेवालंकुर्वन्। यद्वेदमुत्तरच संबध्यते। त्वमलंकृत्यात्मानमलंकुर्वन् तमस्यन्यैर्ज्ञातुमशक्येऽधकारे क्षेषि। निवससि। हे अग्ने आगत्य च देवयानान् देवान्प्रति यैर्मनुष्या गच्छंति तान्पथो मार्गान् सुगान्कृणुहि। कुरु॥ कृवि हिंसाकरणयोश्च। धिन्विकृण्व्योरचेत्युप्रत्ययः॥ संमत्या नो यज्ञनिष्पत्तेर्देवयानाः सुपथा भवंति। वह हव्यान्यस्मदीयानि सुमनस्यमानः सौमनस्यमाचरंस्त्वं॥

॥ इत्यष्टमस्य प्रथमे दशमो वर्गः॥

॥ अथ षष्ठी॥

अग्नेः पूर्वे भ्रातरो अर्थमेतं रथीवाध्वानमन्वावरीवुः।
तस्माद्भिया वरुण दूरमायं गौरो न क्षेप्नोरविजे ज्यायाः॥६॥

अग्नेः। पूर्वे। भ्रातरः। अर्थं। एतं। रथीऽइव। अध्वानं। अनु। आ। अवरीवुरिति।
तस्मात्। भिया। वरुण। दूरं। आयं। गौरः। न। क्षेप्नोः। अविजे। ज्यायाः॥६॥

अनयाग्निः स्वपलायननिमित्तमाह। हे देवा अग्नेर्मम पूर्वे पूर्वमुत्पन्ना भ्रातरो भूपतिर्भुवनपतिर्भूतानां पतिरिति त्रयोऽग्रजा एतमर्थं हविर्वहनाख्यमर्थमन्वावरीवुः। अनुक्रमेण वृतवंतः॥ तत्र वृणोतेर्यङ्लुगंताल्लुङि ऊेश्छांदसो लुक्। बहुलं छंदसीत्युक्तं॥ आवरणे दृष्टांतः। रथीवाध्वानं। अध्वानं यथा रथी वृणुते तद्वत्। ते भ्रातरस्तथा कुर्वंतो हताः। तस्मान्मरणाद्भिया भीत्या हे वरुण दूरं देशमायं। किंच क्षेप्नोरिषुक्षेप्तुर्धनुषो ज्यायाः सकाशाद्गौरो न मृग इव स यथा बिभेति चलति वा तद्वदविजे। अकंपे। ओविजी भयचलनयोः। अनुदात्तेत्तौदादिकः। तस्य लङ्युत्तमे रूपं॥

॥ अथ सप्तमी॥

कुर्मस्त आयुरजरं यदग्ने यथा युक्तो जातवेदो न रिष्याः।
अथा वहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजात॥७॥

कुर्मः। ते। आयुः। अजरं। यत्। अग्ने। यथा। युक्तः। जातऽवेदः। न। रिष्याः।
अथ। वहासि। सुऽमनस्यमानः। भागं। देवेभ्यः। हविषः। सुऽजात॥७॥

इदं देवानां वाक्यं। हे अग्ने यदायुरायुष्यमजरं जरारहितमस्ति तत्ते कुर्मः। तथा तेनायुषा युक्तस्त्वं हे जातवेदो जातप्रज्ञ यथा न रिष्या न म्रियसे तथा कुर्मः। अथ वहासि वह सुमनस्यमानः सौमनस्यं कुर्वन् वोढव्यं वहन्। तदेव दर्शयति। हविषो यजमानप्रत्तस्य भागं। केभ्यः। देवेभ्यः। हे सुजात शोभनजन्मन्नग्ने ॥

॥ अथाष्टमी ॥

प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वंतं हविषो दत्त भागं।
घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥८॥

प्रऽयाजान्। मे। अनुऽयाजान्। च। केवलान्। ऊर्जस्वंतं। हविषः। दत्त। भागं।
घृतं। च। अपां। पुरुषं। च। ओषधीनां। अग्नेः। च। दीर्घं। आयुः। अस्तु। देवाः ॥८॥

अनेनाग्निर्हविर्वहने दातव्यान्युक्त्वा दत्तेति प्रतिजानाति। हे देवा मे मह्यं प्रयाजान् प्रधानस्य प्रमुखे यष्टव्यानेतन्नामकान् हविर्भागान् तथानुयाजान् अनु प्रधानात्पश्चाद्यष्टव्यानेतन्नामकान् केवलानसाधारणान्दत्त। प्रयच्छत। तथोर्जस्वंतं प्रत्यभिघारणात्सारवंतं हविषः सर्वस्यापि चरुपुरोडाशादेर्भागं स्विष्टकृदाख्यं भागं दत्त। अथवोर्जस्वंतं हविषो भागं प्रयाजानुयाजाख्यं दत्तेति योज्यं। किंचापां सारभूतं ताभ्य उत्पन्नं वा घृतमाज्यभागादिसाधनं ओषधीनामोषधीभ्य उत्पन्नं पुरुषं च भागं दत्त। किंचाग्नेर्मम दीर्घमायुश्चास्तु। वषट्कारकृतवधभयं मा भूदित्यर्थः। अमुमितिहासं प्रस्तुत्य कौषीतकिब्राह्मणं तस्मादाहुराग्नेयाः प्रयाजा आग्नेया अनुयाजा आग्नेयमाज्यमाग्नेयः पुरोडाश इति। शरीरदाया ह वा अग्नयो भवंतीति च ब्राह्मणं पुरुषाहुतिर्यस्य प्रियतमेति च ॥

॥ अथ नवमी ॥

तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वंतो हविषः संतु भागाः।
तवाग्ने यज्ञो३ऽयमस्तु सर्वस्तुभ्यं नमंतां प्रदिशश्चतस्रः ॥९॥

तव। प्रऽयाजाः। अनुऽयाजाः। च। केवले। ऊर्जस्वंतः। हविषः। संतु। भागाः।
तव। अग्ने। यज्ञः। अयं। अस्तु। सर्वः। तुभ्यं। नमंतां। प्रऽदिशः। चतस्रः ॥९॥

एवमग्निना याच्यमाना देवाः प्रतिब्रुवते। हे अग्ने तव प्रयाजा अनुयाजाश्च

केवलेऽसाधारणा ऊर्जस्वंतो बलवंतो हविषो भागाः संतु । हे अग्ने अयं सर्वो यज्ञश्च तवास्तु । तथा प्रदिशः प्रकृष्टा मुख्याश्चतस्रो दिशस्तुभ्यं नमंतां । अत एहि हविर्वहेति शेषः ॥

॥ इत्यष्टमस्य प्रथम एकादशो वर्गः ॥

विश्वे देवाः शास्तनेति षडृचं दशमं सूक्तं सौचीकस्याग्नेरार्षं वैश्वदेवं । गतः सूक्तविनियोगः । स्रुगादापनात्पूर्वभाविनि जपे विनियुक्ता । सूचितं च । विश्वे देवाः शस्तन मा यथेहाराधि होता निषदा यजीयानिति ॥

॥ सैषा प्रथमा ॥

विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य ।

प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि ॥१॥

विश्वे । देवाः । शास्तन । मा । यथा । इह । होता । वृतः । मनवै । यत् । निऽसद्य ।

प्र । मे । ब्रूत । भागऽधेयं । यथा । वः । येन । पथा । हव्यं । आ । वः । वहानि ॥१॥

एतत्सूक्तं कृत्स्नमाग्नेयं । हे विश्वे देवा यूयं मा मां शास्तन । अनुज्ञां दत्त । यथेह यज्ञे होता देवानामाह्वाता सन् वृतो होतृत्वेन वृतोऽहं मनवै स्तौमि भवतः । यद्यस्मान्निषद्य स्तौमि तस्माच्छास्तन । मे मम भागधेयं प्रब्रूत । यथा वो यूयं भागं कल्पितवंतस्तथा तं भागं प्रब्रूत येन च पथा वो हव्यमावहानि । वहनं करोमि ॥

॥ अथ द्वितीया ॥

अहं होता न्यसीदं यजीयान् विश्वे देवा मरुतो मा जुनंति ।

अहरहरश्विनाध्वर्यवं वां ब्रह्मा समिद्भवति साहुतिर्वां ॥२॥

अहं । होता । नि । असीदं । यजीयान् । विश्वे । देवाः । मरुतः । मा । जुनंति ।

अहःऽअहः । अश्विना । आध्वर्यवं । वां । ब्रह्मा । संऽइत् । भवति । सा । आऽहुतिः । वां ॥२॥

यजीयान् यष्टृतमोऽहं होता सन् न्यसीदं । निषण्णोऽस्मि । निषदने तं निषण्णं विश्वे व्याप्ता मरुतो देवा जुनंति । प्रेरयंति हविर्वहनाय । हे अश्विना वां युवयोराध्वर्यवमहरहः प्रतिदिनं कर्तव्यमिति शेषः । आध्वर्यवं भवद्भ्यामनुज्ञातव्यमित्यर्थः । ब्रह्मा भवति भवतु कः । समित् समिद्धश्चंद्रमाः । चंद्रमा ब्रह्मा भवतु

किंच सा स इत्यर्थः। स च समित् समिद्धश्चंद्रमा वां युवयोर्होमार्थं वां युवाभ्यां क्रियमाणायाध्वर्यवकर्मण आहुतिर्भवत्वित्यर्थः। सोमात्मको हि चंद्रमा हूयते। एष वै सोमो राजेत्युपक्रम्य तदेवोभयं भवतीति हि छंदोगब्राह्मणं। अथवैवं योजना। याहुतिराध्वर्यवमनुष्ठितवद्भ्यां होतव्या सा वां युवयोर्युवाभ्यां भवति। भवतु। आध्वर्यवं वामित्यस्यैव विवरणमेतत् ॥

॥ अथ तृतीया ॥

अयं यो होता किरु स यमस्य कमप्यूहे यत्समंजंति देवाः।
अहरहर्जायते मासिमास्यथा देवा दधिरे हव्यवाहं ॥३॥
अयं। यः। होता। किः। ऊं इति। सः। यमस्य। कं। अपि। ऊहे। यत्। संऽअंजंति। देवाः।
अहःऽअहः। जायते। मासिऽमासि। अथ। देवाः। दधिरे। हव्यऽवाहं ॥३॥

योऽयं होता स किः। को भवति। कीदृशो भवति। तस्य को व्यापार इत्यर्थः। तस्योत्तरमुच्यते। यमस्य मृत्योर्भीतः सन्निति शेषः। कमपि हुतमूहे। वहति। यद्वा सर्वमृत्विग्जातं नियमयतीति यमो यजमानः। तस्य कमपि हुतमूहे वहति देवान्प्रति यत्समंजंति यद्धविः प्राप्नुवंति देवाः। किंचाग्निरहरहः प्रतिदिनमग्निहोत्रार्थं जायते। प्रादुर्भवति। तथा मासिमासि प्रतिमासं जायते पितृयज्ञार्थं। एतत्कालद्वयमुपलक्षणं पक्षचतुर्मासषण्माससंवत्सरादीनां। अपरे पुनरेवमाहुः। अहरहः सूर्यात्मना जायते मासि मासि चंद्रात्मनेति। अथ तमिममग्निं देवा दधिरे हव्यवाहं। हविषां वोढारं। एवमग्निरात्मानं स्वयमेवोक्तवान् ॥

॥ अथ चतुर्थी ॥

मां देवा दधिरे हव्यवाहमपम्लुक्तं बहु कृच्छ्रा चरंतं।
अग्निर्विद्वान्यज्ञं नः कल्पयाति पंचयामं त्रिवृतं सप्ततंतुं ॥४॥
मां। देवाः। दधिरे। हव्यऽवाहं। अपऽम्लुक्तं। बहु। कृच्छ्रा। चरंतं।
अग्निः। विद्वान्। यज्ञं। नः। कल्पयाति। पंचऽयामं। त्रिऽवृतं। सप्तऽतंतुं ॥४॥

मामग्निं देवा हव्यवाहं हविर्वोढारं दधिरे। कृतवंतः। कीदृशं मां। अपम्लुक्तं। अपक्रम्यागतं। बहु कृच्छ्रा बहूनि कृच्छ्राणि स्थानानि चरंतं गच्छंतं। कया मनीषया दधिर इत्युच्यते। अयमग्निर्विद्वान् सर्वं जानन्नोऽस्माकं यज्ञं कल्पयाति।

कीदृशं यज्ञं। पंचयामं। पंचविधगमनं। पांक्तो हि यज्ञः। त्रिवृतं। सवनत्रयभेदेन त्रिप्रकारं। सप्ततंतुं। सप्तभिश्छंदोमयैः स्तुतिभिर्विस्तृतं ॥

॥ अथ पंचमी ॥

आ वो यक्ष्यमृतत्वं सुवीरं यथा वो देवा वरिवः कराणि।

आ बाह्वोर्वज्रमिंद्रस्य धेयामथेमा विश्वाः पृतना जयाति ॥५॥

आ। वः। यक्षि। अमृतऽत्वं। सुऽवीरं। यथा। वः। देवाः। वरिवः। कराणि।

आ। बाह्वोः। वज्रं। इंद्रस्य। धेयां। अथ। इमाः। विश्वाः। पृतनाः। जयाति ॥५॥

हे देवा वो युष्मानायक्षि। आयाचे। किं। अमृतत्वमविनाशित्वं सुवीरं सुपुत्रं च। हे देवा वो युष्माकं वरिवः परिचर्या हवीरूपं धनं वा यथा कराणि करवाणि तदर्थमित्यर्थः। किंचेंद्रस्य बाह्वोर्वज्रमाधेयां। ग्राहयामीत्यर्थः। अग्नेर्होतृत्वाभाव इंद्रस्य सोमाद्यभावाद्दुर्बलत्वेन वज्रधारणं नोपपद्यते। अतस्तत्कृत्वा वज्रं ग्राहयामीत्यर्थः। अथैवं सतीमा विश्वाः सर्वाः पृतनाः शत्रुसेना जयाति। जयति। जयतु वा ॥

॥ अथ षष्ठी ॥

त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन्।

औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयंत ॥६॥

त्रीणि। शता। त्री। सहस्राणि। अग्निं। त्रिंशत्। च। देवाः। नव। च। असपर्यन्।

औक्षन्। घृतैः। अस्तृणन्। बर्हिः। अस्मै। आत्। इत्। होतारं। नि। असादयंत ॥६॥

त्रीणि शतानि त्रीणि सहस्राणि त्रिंशच्च नव च एतत्संख्याका देवा अग्निं मामसपर्यन् पर्यचरन्। परिचर्याप्रकार उच्यते। घृतैः क्षरद्भिराज्यैरौक्षन्। सिक्तवंतः। अस्मा अग्नये मह्यं च बर्हिरस्तृणन् आस्तृतवंतः। आदित् आस्तरणानंतरं होतारमाह्वातारं न्यसादयंत। नियमेनासादितवंतः ॥

॥ इत्यष्टमस्य प्रथमे द्वादशो वर्गः ॥

यमैच्छामेत्येकादशर्चमेकादशं सूक्तं। देवानां वाक्यत्वाद्देवा ऋषयः। तदद्येति तृचस्य सौचीकोऽग्निर्ऋषिः। तंतुमाद्या अष्टमीवर्जिता जगत्यः। अष्टमी शिष्टाश्च त्रिष्टुभः। तथा चानुक्रांतं। तंतुमाद्या जगत्योऽष्टमीवर्जमिति। शिष्टमुक्तं। गतः सूक्तविनियोगः ॥

॥ तत्र प्रथमा ॥

यमैच्छा॑म॒ मन॑सा॒ सो॒३॒॑यमागा॑द्य॒ज्ञस्य॑ वि॒द्वान्परु॑षश्चिकि॒त्वान् ।
स नो॑ यक्षद्दे॒वता॑ता॒ यजी॑यान्नि॒ हि षत्स॒दंत॑रः॒ पूर्वो॑ अ॒स्मत् ॥१॥

यं । ऐच्छा॑म । मन॑सा । सः । अ॒यं । आ । अ॒गा॒त् । य॒ज्ञस्य॑ । वि॒द्वान् । परु॑षः । चि॒कि॒त्वान् ।
सः । नः॒ । य॒क्ष॒त् । दे॒व॒ऽता॑ता । यजी॑यान् । नि । हि । सत्स॑त् । अंत॑रः । पूर्वः॑ । अ॒स्मत् ॥१॥

यमग्निमैच्छामान्विष्टवंतो वयं मनसा हविःप्रापणबुद्ध्या । मह्यं हविः प्रापयत्विति बुद्ध्येत्यर्थः । सोऽयमग्निरागात् आजगाम । कीदृशोऽग्निः । यज्ञस्य यज्ञं विद्वान् । तथा परुषः पर्ॡषि संधातव्यान्यंगानि चिकित्वान् अभिगच्छन् । सोऽग्निर्यजीयान् यष्टृतमो नोऽस्मान्देवताता देवतातौ यज्ञे यक्षत् । यजतु । नि हि षत्सत् न्यसीदत्खलु वेद्यामिति शेषः । कीदृशः सन् । अंतरः । ऋत्विजां यष्टव्यानां देवानां च मध्ये संचरन् । अस्मत्पूर्वः । अस्मत्तो देवेभ्यः पूर्वभावी सन् । अग्निं समिध्य पश्चाद्धि देवा आहूयंते ॥

दर्शपूर्णमासयोः पुराराधीत्येषा जप्या । सूत्रमुदाहृतं ॥

॥ सैषा द्वितीया ॥

अरा॑धि॒ होता॑ नि॒षदा॒ यजी॑यानभि॒ प्रयां॑सि॒ सुधि॑तानि॒ हि ख्यत् ।
यजा॑महै य॒ज्ञिया॒न्हंत॑ दे॒वाँ ईळा॑महा॒ ईड्याँ॒ आज्ये॑न ॥२॥

अरा॑धि । होता॑ । नि॒ऽसदा॑ । यजी॑यान् । अ॒भि । प्रयां॑सि । सुऽधि॑तानि । हि । ख्यत् ।
यजा॑महै । य॒ज्ञियां॑न् । हंत॑ । दे॒वान् । ईळा॑महै । ईड्यां॑न् । आज्ये॑न ॥२॥

अयमग्निर्होता होमनिष्पादको यजीयान् यष्टृतमश्च सन् निषदा वेद्यां निषदनेनाराधि । सिद्धोऽभूत् । आहुतियोग्योऽभूदित्यर्थः । तथाभूतोऽयं सुधितानि सुष्ठु निहितानि प्रयांसि चरुपुरोडाशाद्यन्नान्यभि हि ख्यत् । अभिचष्टे । सर्वतः पश्यति । हीति पादपूरणः । कया बुद्ध्येति । यज्ञियान्यष्टव्यानाहुतिभाजो देवान् हंत शीघ्रमाज्येन यजामहै तथेड्यान् स्तुतिभाजो देवान् स्तुत्येळामहा इति बुद्ध्येति शेषः ॥

यस्मिन्यजमाने जीवति मृतशब्दो जायते तस्य सुरभिमतीष्टिः कर्तव्या । साध्वीमकरित्येषा तत्र याज्या । सूत्रितं च । अग्निर्होता न्यसीदद्यजीयान् साध्वीमकर्देववीतिं नो अद्य । आ० ३.१३.। इति ॥

॥ सैषा तृतीया ॥

साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्यां ।
स आयुरागात्सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य ॥३॥
साध्वीं । अकः । देवऽवीतिं । नः । अद्य । यज्ञस्य । जिह्वां । अविदाम । गुह्यां ।
सः । आयुः । आ । अगात् । सुरभिः । वसानः । भद्रां । अकः । देवऽहूतिं । नः । अद्य ॥३॥

अयमग्निरद्य नोऽस्माकं देववीतिं देवानामागमनवंतं देवानां हविर्भक्षणोपेतं वा यज्ञं साध्वीमकः । साधुमकरोत् । वयं च यज्ञस्य जिह्वां गुह्यां गूढतरां जिह्वामविदाम । लब्धवंतः स्म । अग्निर्हि यज्ञस्य जिह्वा तेन देवानां पानाज्जिह्वात्वेनोपचारः । स तादृशोऽग्निः सुरभिः सुगंध आयुर्देवैर्दत्तमायुष्यं वसान आच्छादयन्नागात् आगच्छति । आगत्य च नोऽस्मदर्थं देवहूतिं देवानामाह्वानवंतं यज्ञं भद्रामकः । कल्याणं कृतवान् अद्येदानीं ॥

दर्शपूर्णमासयोः सामिधेन्यर्थं प्रेषितेन होत्रा तदद्य वाच इत्येषा जप्या । स्रुगादापनात्पूर्वमपि जप्या । सूत्रितं च । तदद्य वाचः प्रथमं मसीयेति समाप्य । आ॰ १.२. । इति ॥

॥ सैषा चतुर्थी ॥

तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम ।
ऊर्जाद उत यज्ञियासः पंच जना मम होत्रं जुषध्वं ॥४॥
तत् । अद्य । वाचः । प्रथमं । मसीय । येन । असुरान् । अभि । देवाः । असाम ।
ऊर्जेऽअदः । उत । यज्ञियासः । पंच । जनाः । मम । होत्रं । जुषध्वं ॥४॥

इदमुत्तरं चाग्नेर्वाक्यमित्युक्तं । अद्येदानीं प्रथमं । मुख्यनामैतत् । वाचां मुख्यं तद्वाचो वचो वचनं मसीय । मंसीय । उच्चारयामि । येन वचसाहं देवाश्च वयमसुरानभ्यसाम । अभिभवेम । किं तत्प्रथमं वचनमित्युच्यते । ऊर्जादो हे अन्नाद उतापि च यज्ञियासो यज्ञार्हा हे पंच जना देवमनुष्यादयो यूयं मम होत्रं जुषध्वं सेवध्वमिति । एवं बहूच्यमानेऽग्निमनूद्यंति सर्वे देवा इत्यभिप्रायः । अत्र तदद्य वाच इत्यादि निरुक्तं द्रष्टव्यं । नि॰ ३.८. ॥

॥ अथ पंचमी ॥

पंच जना मम होत्रं जुषंतां गोजाता उत ये यज्ञियासः ।

पृथिवी नः पार्थिवात्पात्वंहसोऽंतरिक्षं दिव्यात्पात्वस्मान् ॥ ५ ॥

पंच । जनाः । मम । होत्रं । जुषंतां । गोऽजाताः । उत । ये । यज्ञियासः ।

पृथिवी । नः । पार्थिवात् । पातु । अंहसः । अंतरिक्षं । दिव्यात् । पातु । अस्मान् ॥ ५ ॥

पंच जना देवादयो मम होत्रं हवमाह्वानं जुषंतां । सेवंतां । अपि च गोजाता भूम्यामुत्पन्नाः । यद्वा गोशब्देन तज्जं पयआदिकमुच्यते । हविरर्थं प्रादुर्भूता इत्यर्थः । तादृशा ये संति । उतापि च ये यज्ञियासो यज्ञार्हाः संति ते मम होत्रं जुषंतां । किंच पृथिवी पृथिवीदेवता पार्थिवात्पृथिवीसंबंधान्नोऽस्मानंहसः पापात्पातु । रक्षतु । तथांतरिक्षमंतरिक्षदेवता दिव्यादांतरिक्षादंहसः पापसकाशादस्मान्पातु ॥

॥ इत्यष्टमस्य प्रथमे त्रयोदशो वर्गः ॥

गार्हपत्यादारभ्याहवनीयाद्वेदिं वेदतृणैरास्तृणाति तंतुमित्यनया । सूत्रितं च । अविधुन्वन् संततं स्तृणन् सव्येन गार्हपत्यादाहवनीयमेति तंतुं तन्वन् रजसो भानुमन्विहि । आ॰ १.११. । इति ॥ अग्निहोत्रहोमेऽप्यनयोदकधारा स्रावणीया । सूत्रितं च । गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तंतुं तन्वन्रजसो भानुमन्विहि । आ॰ २.२. । इति ॥ अग्न्यंतराले श्वातिक्रमणेऽनया गार्हपत्याहवनीययोर्मध्य उदकेन भस्मना चापूरयेत् । सूत्रितं च । गार्हपत्याहवनीययोरंतरं भस्मराज्योदकराज्या च संतनुयात् । आ॰ ३.१०. । इति ॥ आग्निमारुतेऽप्येषा धाय्या । सूत्रितं च । तंतुं तन्वन्रजसो भानुमन्विह्येवा न इंद्रो मघवा विरप्शी । आ॰ ५.२०. । इति ॥

॥ सैषा षष्ठी ॥

तंतुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।

अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनं ॥ ६ ॥

तंतुं । तन्वन् । रजसः । भानुं । अनु । इहि । ज्योतिष्मतः । पथः । रक्ष । धिया । कृतान् ।

अनुल्बणं । वयत । जोगुवां । अपः । मनुः । भव । जनय । दैव्यं । जनं ॥ ६ ॥

हे अग्ने तंतुं यज्ञं तन्वन् विस्तारयन् रजसो रंजनात्मकस्य लोकस्य भानुं

भासकमादित्यमन्विहि । अनुगच्छ । रश्मिद्वारा सूर्यमंडलं प्रविशेत्यर्थः । किंच ज्योतिष्मतः प्रकाशवतो यज्ञस्य पथो गमनमार्गान् अथवा ज्योतिष्मतो दीप्तिमतः स्वर्गस्य पथो मार्गान्देवयानान् रक्ष । पालय । कीदृशान्मार्गान् । धिया कर्मणा कृतान् संपादितान् । किंच सोऽग्निर्जोगुवां स्तोतॄणामपः । कर्मनामैतत् । क्रियया व्याप्यं कर्मानुल्बणमनतिरिक्तं वयत । करोतु । यदेव यज्ञ उल्बणं क्रियते तस्यैवैषा शांतिरिति हि ब्राह्मणं । स त्वं मनुर्भव । मंतव्यो भव । स्तुत्यो भवेत्यर्थः । किंच दैव्यं जनं देवसंघं जनय । उत्पादय । यज्ञाभिगमनवंतं कुर्वित्यर्थः ॥

॥ अथ सप्तमी ॥

अक्षानहो नह्यतनोत सोम्या इष्कृणुध्वं रशना ओत पिंशत ।
अष्टावंधुरं वहताभितो रथं येन देवासो अनयन्नभि प्रियं ॥७॥

अक्षऽनहः । नह्यतन । उत । सोम्याः । इष्कृणुध्वं । रशनाः । आ । उत । पिंशत ।
अष्टाऽवंधुरं । वहत । अभितः । रथं । येन । देवासः । अनयन् । अभि । प्रियं ॥७॥

अत्र यज्ञजिगमिषवो देवाः परस्परं ब्रुवते । हे सोम्याः सोमार्हा देवा यूयमक्षानहोऽक्षेषु नह्यान् बंधनीयानश्वान्नह्यतन । नह्यत । बध्नीत रथे । उतापि च रशना अश्वबंधनप्रग्रहानिष्कृणुध्वं । निष्कुरुत । सम्यक् संस्कुरुत ॥ नकारलोपश्छांदसः ॥ उतापि च आ पिंशत । पिश अवयवे । अश्वानलंकुरुतेत्यर्थः । अष्टावंधुरं । वंधुरं सारथिनिवासस्थानं । अष्टसंख्याकवंधुरोपेतं रथं सूर्यसंबंधिनमभितः सर्वतो वहत । सूर्यरथेन साकं युष्मदीयान्रथान्यज्ञं प्रति गमयतेत्यर्थः । येन देवासो देवाः प्रियमस्माननयन् अभिगमयंति तं रथमभितो वहतेति संबंधः । यद्वा तं यज्ञं प्रति वहतेति योज्यं ॥

वैवाहिके प्रयाणे यदि नावा तार्या नदी स्यात् तदानीमश्मन्वतीत्यर्धर्चेन वधूं नावमारोहयेत् उत्तरेणार्धर्चेन नदीमुत्क्रमयेत् । सूत्रितं च । अश्मन्वती रीयते सं रभध्वमित्यर्धर्चेन नावमारोहयेदुत्तरेणोत्क्रमयेत् । आ॰ गृ॰ १.८. । इति ॥

॥ सैषाष्टमी ॥

अश्मन्वती रीयते सं रभध्वमुत्तिष्ठत प्र तरता सखायः ।
अत्रा जहाम ये असन्नशेवाः शिवान्वयमुत्तरेमाभि वाजान् ॥८॥

अश्मन्ऽवती । रीयते । सं । रभध्वं । उत् । तिष्ठत । प्र । तरत । सखायः ।
अत्र । जहाम । ये । असन् । अशेवाः । शिवान् । वयं । उत् । तरेम । अभि । वाजान् ॥८॥

अनयापि देवा यज्ञजिगमिषवः परस्परं ब्रुवते । अश्मन्वती नाम नदी रीयते । गच्छति । री गतिरेषणयोः । तां यज्ञगमनायोत्तरीतुमुत्तिष्ठत । उद्गच्छत । तथा कृत्वा प्रतरत । तां नदीमुल्लंघयत । हे सखायो यजमानस्य सखिभूता इति देवानां संबोधनं । अत्रास्यां नद्यां जहाम । परित्यजाम । कानित्युच्यते । येऽशेवाः । शेवमिति सुखनाम । येऽसुखभूता असन् अभवन् अस्मानाश्रित्य वर्तंते तान्जहाम । तथा कृत्वा शिवान् सुखकराणि वाजानन्नानि हवींष्यभि प्राप्नुमुत्तरेम ॥

॥ अथ नवमी ॥

त्वष्टा माया वेदपसामपस्तमो बिभ्रत्पात्रा देवपानानि शंतमा ।
शिशीते नूनं परशुं स्वायसं येन वृश्चादेतशो ब्रह्मणस्पतिः ॥९॥
त्वष्टा । मायाः । वेत् । अपसां । अपःऽतमः । बिभ्रत् । पात्रा । देवऽपानानि । शंऽतमा ।
शिशीते । नूनं । परशुं । सुऽआयसं । येन । वृश्चात् । एतशः । ब्रह्मणः । पतिः ॥९॥

अयं त्वष्टा देवशिल्पी मायाः । कर्मनामैतत् । कर्माणि पात्रनिर्माणविषयाणि वेत् । वेत्ति । जानाति । स च त्वष्टापसां शोभनकर्मवतां मध्येऽपस्तमोऽतिशयेन शोभनकर्मा देवपानानि । देवाः पिबंति येषु तानि पात्रा सोमपात्राणि बिभ्रत् धारयन्वर्तत इति शेषः । स च त्वष्टा नूनमिदानीमग्नौ हविर्वहनायांगीकृते सति स्वायसं शोभनायःसारभूतं परशुं शिशीते । तीक्ष्णयति । त्वष्टा पात्रसंपादनार्थं येन परशुनैतश एतशवर्णो ब्रह्मणस्पतिर्ब्रह्मणो मंत्रस्य पाता पात्रादिसंपादनरूपस्य कर्मणः स्वामी वा वृश्चात् वृश्चति ॥

॥ अथ दशमी ॥

सतो नूनं कवयः सं शिशीत वाशीभिर्याभिरमृताय तक्षथ ।
विद्वांसः पदा गुह्यानि कर्तन येन देवासो अमृतत्वमानशुः ॥१०॥
सतः । नूनं । कवयः । सं । शिशीत । वाशीभिः । याभिः । अमृताय । तक्षथ ।
विद्वांसः । पदा । गुह्यानि । कर्तन । येन । देवासः । अमृतऽत्वं । आनशुः ॥१०॥

हे कवयो मेधाविनस्त्वष्टुर्मम शिष्या ऋभवः सतः। संत इत्यर्थः। प्रशस्ता यूयं नूनमिदानीं सं शिशीत। अत्यर्थं तीक्ष्णीकुरुत वाशीः। याभिर्वाशीभिः पात्राख्यमृताय सोमाय। तत्पानायेत्यर्थः। यद्वा युष्माकममृतत्वाय तदर्थं तक्षथ। संपादयथ। हे कवयो विद्वांसो यूयं गुह्यानि गोपनीयानि पदा पदानि निवासस्थानानि कर्तन। कुरुत। येन स्थानकरणेन देवासो देवा यूयममृतत्वमानशुः। प्राप्ता यूयं। एवं स्वशिष्यानाह ॥

॥ अथैकादशी ॥

गर्भं योषामदधुर्वत्समासन्यपीच्येन मनसोत जिह्वया।

स विश्वाहा सुमना योग्या अभि सिषासनिर्वनते कार इज्जितिं ॥११॥

गर्भं। योषां। अदधुः। वत्सं। आसनि। अपीच्येन। मनसा। उत। जिह्वया।

सः। विश्वाहा। सुऽमनाः। योग्याः। अभि। सिसासनिः। वनते। कारः। इत्। जितिं॥११॥

ते मरुतो गर्भे मृताया गोर्मध्ये ग्राहके चर्मणि मृताया गोः संबंधिनि योषां कांचिद्गामदधुः। धारितवंतः। निश्चर्मणो गामरिणीत धीतिभिरित्युक्तं। तथासनि मृताया आस्ये वत्समदधुः। केन साधनेन। अपीच्येन मनसा। देवत्वमाकांक्षता। उतापि च जिह्वया। सादृश्यप्रधानोऽयं निर्देशः। जिह्वावदायतया वाश्येत्यर्थः। यद्वा जिह्वया युक्तां योषामिति संबंधः। सिषासनिः संभजनशीलः स ऋभुसंघो विश्वाहा सर्वेष्वहःसु सर्वदा योग्याः स्वोचिताः सुमनाः स्तुतीरभिवनते। स च संघो जितिं शत्रुजयं कामं कार इत् कर्तेव। शत्रुजयकर्तैव ॥

॥ इत्यष्टमस्य प्रथमे चतुर्दशो वर्गः ॥

तां सु त इति षडृचं द्वादशं सूक्तं वामदेवगोत्रस्य बृहदुक्थस्यार्षं त्रैष्टुभमैंद्रं। तथा चानुक्रांतं। तां सु षड् बृहदुक्थो वामदेव्यो वेति ॥ समूढस्य दशरात्रस्य द्वितीये छंदोम एतत्सूक्तं। सूत्रितं च। अपूर्व्या पुरुतमानि तां सु ते कीर्तिं महां इंद्र। आ° ८.७.। इति ॥ महाव्रते निष्केवल्य एतत्सूक्तं। सूत्रितं च। तां सु ते कीर्तिं मघवन्महित्वा भूय इद्वावृधे वीर्याय। ऐ° आ° ५.३.। इति ॥

॥ तत्र प्रथमा ॥

तां सु ते कीर्तिं मघवन्महित्वा यत्त्वा भीते रोदसी अह्वयेतां।

प्रावो देवाँ आतिरो दासमोजः प्रजायै त्वस्यै यदशिक्ष इंद्र ॥१॥

तां। सु। ते। कीर्तिं। मघऽवन्। महिऽत्वा। यत्। त्वा। भीते इति। रोदसी इति। अह्वयेतां।
प्र। आवः। देवान्। आ। अतिरः। दासं। ओजः। प्रऽजायै। त्वस्यै। यत्। अशिक्षः। इंद्र॥१॥

हे इंद्र मघवन् धनवन् ते तव संबंधिनीं महित्वा महत्त्वेनागतां कीर्तिं सु सुष्ठु कीर्तयामीति शेषः। किंच यद्यदा त्वा त्वां प्रति भीते असुरैर्भयं प्राप्ते रोदसी द्यावापृथिव्यावह्वयेतां अवेत्यब्रूतां तदानीं देवान्प्रावः। प्रारक्षः। तथा दासं देवानामुपक्षयकर्तारमसुरमातिरः। व्यनाशयः। असुरान् हत्वा देवानां रक्षणेन द्यावापृथिव्योर्भीतिं पर्यहरः। इति यदस्ति किंच त्वस्या एकस्यै प्रजायै यजमानरूपायै यद्बलमशिक्षः प्रायच्छस्तां कीर्तिं कीर्तयामीत्यर्थः॥

॥ अथ द्वितीया ॥

यदचरस्तन्वा वावृधानो बलानीद्र प्रब्रुवाणो जनेषु।
मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से॥२॥
यत्। अचरः। तन्वा। ववृधानः। बलानि। इंद्र। प्रऽब्रुवाणः। जनेषु।
माया। इत्। सा। ते। यानि। युद्धानि। आहुः। न। अद्य। शत्रुं। ननु। पुरा। विवित्से॥२॥

हे इंद्र तन्वा शरीरेण स्तोत्रेण वा वावृधानो वर्धमानो जनेषु प्राणिषु बलानि प्रब्रुवाणो वृत्रवधादिरूपाणि सामर्थ्यानि प्रकर्षेण कथयन्नचर इति यत्संचारं कृतवानिति यदस्ति ते तव सा गतिर्मायेत् मायैव। मृषेत्यर्थः। किंच यानि युद्धानि शत्रुविषयाण्याहुर्ब्रुवते पुराविद ऋषयस्तान्यपि मायैव। कुत इत्याह। अद्येदानीं शत्रुं हंतव्यं न विवित्से। न लभसे। अद्य मा भूत् पूर्वं हतवानस्मीति यद्ब्रूषे तदपि नेत्याह। नन्विति प्रश्ने। किं पुरा शत्रुमलभथाः। तदपि नेत्यर्थः॥

॥ अथ तृतीया ॥

क उ नु ते महिमनः समस्यास्मत्पूर्व ऋषयोऽतमापुः।
यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः॥३॥
के। ऊं इति। नु। ते। महिमनः। समस्य। अस्मत्। पूर्वे। ऋषयः। अंतं। आपुः।
यत्। मातरं। च। पितरं। च। साकं। अजनयथाः। तन्वः। स्वायाः॥३॥

हे इंद्र ते तव महिमनो महिम्नः समस्य सर्वस्यापंतं पारमस्मदस्मत्तः पूर्व

ऋषयः क आपुः। प्राप्नुवन्। न कोऽपीत्यर्थः। यद्यपि महत्त्वं प्रख्यापयंति तथापि न कार्त्स्न्येनेति। तत्र कारणमाह। यद्यस्मान्मातरं पितरं च। द्यौः पिता पृथिवी मातेति हि श्रुतं। अतो द्यावापृथिव्यावित्यर्थः। ते उभे अपि साकं सहैव स्वायास्तन्वः स्वकीयाच्छरीरादजनयथाः। उदपादयः। अतो नापुरिति संबंधः॥

॥ अथ चतुर्थी ॥

चत्वारि ते असुर्याणि नामादाभ्यानि महिषस्य संति।
त्वमंग तानि विश्वानि वित्से येभिः कर्माणि मघवञ्चकर्थ ॥४॥
चत्वारि। ते। असुर्याणि। नाम। अदाभ्यानि। महिषस्य। संति।
त्वं। अंग। तानि। विश्वानि। वित्से। येभिः। कर्माणि। मघऽवन्। चकर्थ ॥४॥

हे इंद्र महिषस्य महतः पूज्यस्य ते तव चत्वार्यसुर्याण्यसुरविघातीन्यदाभ्यान्यन्यैरहिंस्यान्युत्तरसूक्त उपांत्यवर्जिते दूरे तन्नामेत्यादिषु प्रतिपादितानि यानि नाम नामकानि शरीराणि संति अंग सखे त्वं तानि विश्वानि सर्वाणि वित्से। अदाभ्यान्यहिंस्यानि वेत्सि जानासि। येभिर्यैर्नामभिः कर्माणि वृत्रवधादिरूपाणि चकर्थ कुरुषे हे मघवन् तानि वेत्सीति॥

॥ अथ पंचमी ॥

त्वं विश्वा दधिषे केवलानि यान्याविर्या च गुहा वसूनि।
काममिन्मे मघवन्मा वि तारीस्त्वमाज्ञाता त्वमिंद्रासि दाता ॥५॥
त्वं। विश्वा। दधिषे। केवलानि। यानि। आविः। या। च। गुहा। वसूनि।
कामं। इत्। मे। मघऽवन्। मा। वि। तारीः। त्वं। आऽज्ञाता। त्वं। इंद्र। असि। दाता॥५॥

हे इंद्र त्वं विश्वा सर्वाणि केवलान्यन्येषामसाधारणानि वसूनि धनानि दधिषे। धारयसि। विश्वानीत्युक्तं कथं विश्वत्वमित्यत आह। यान्याविराविर्भूतानि सर्वैः प्रसिद्धानि वसूनि वासयोग्यानि धनानि संति या च गुहा गुहायां निगूढे प्रदेशे वर्तमानानि वसूनि संति तानि विश्वानि दधिष इति। यस्मादेवं तस्मान्मे मम कामं कांक्षितं हे मघवन् धनवन्निंद्र मा वि तारीः। मा हिंसीः। इदिति पादपूरणः। वर्धयेति शेषः। हे इंद्र त्वमाज्ञातासि प्रापयितास्यभिलषितं धनं। तथा हे इंद्र त्वं दातासि॥

॥ अथ षष्ठी ॥

यो अदधाज्ज्योतिषि ज्योतिरंतर्यो असृजन्मधुना सं मधूनि ।
अध प्रियं शूषमिंद्राय मन्म ब्रह्मकृतो बृहदुक्थादवाचि ॥ ६ ॥
यः । अदधात् । ज्योतिषि । ज्योतिः । अंतः । यः । असृजत् । मधुना । सं । मधूनि ।
अध । प्रियं । शूषं । इंद्राय । मन्म । ब्रह्मऽकृतः । बृहत्ऽउक्थात् । अवाचि ॥ ६ ॥

य इंद्रो ज्योतिषि द्योतमान आदित्यादिके तेजस्यंतर्ज्योतिस्तेजोऽदधात् धारितवान् । यदादित्याग्न्यादिषु तेजोऽस्ति तदिंद्रकृतमित्यर्थः । यश्च मधुना मधुरेण रसेन मधूनि सोमादिमधुद्रव्याणि समसृजत् समयोजयत् । यद्वा मधुना । अत्र मधुशब्देन सर्वैः सेव्यमान आदित्य उच्यते । तेन सह मधून्युदकानि समसृजत् । अध संप्रति तस्मा इंद्राय प्रियं प्रीतिजनकं शूषं बलं शत्रूणां शोषकत्वाद्बलकरं मन्म मननीयं स्तोत्रं ब्रह्मकृतो मंत्रकृतो बृहदुक्थात् प्रभूतशस्त्रयुक्तात् एतन्नामकाद्दषेर्मत्तोऽवाचि । उक्तमभूत् ॥

॥ इत्यष्टमस्य प्रथमे पंचदशो वर्गः ॥

दूरे तदित्यष्टर्चं त्रयोदशं सूक्तं । ऋष्याद्याः पूर्ववत् । दूर इत्यनुक्रांतं । गतः सूक्तविनियोगः ॥

॥ तत्र प्रथमा ॥

दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अह्वयेतां वयोधै ।
उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान्मघवन्तित्विषाणः ॥ १ ॥
दूरे । तत् । नाम । गुह्यं । पराचैः । यत् । त्वा । भीते इति । अह्वयेतां । वयःऽधै ।
उत् । अस्तभ्नाः । पृथिवीं । द्यां । अभीके । भ्रातुः । पुत्रान् । मघऽवन् । तित्विषाणः ॥ १ ॥

अनया चत्वारि ते असुर्याणि नामेत्युक्तस्याद्यं नाम स्तूयते । हे इंद्र ते तव तद्वक्ष्यमाणं नाम सर्वेषां नामकं शरीरं पराचैः पराङ्मुखैर्मनुष्यैः । मनुष्याणामित्यर्थः । गुह्यं गोपनीयमप्रकाशितं सत् दूरे इतो विप्रकृष्टे दूरदेशे वर्तत इति शेषः । यद्यदा त्वा त्वां रोदसी द्यावापृथिव्यौ भीते सती आह्वयेतां । अवेत्यब्रूतां । किमर्थं । वयोधै । अन्नस्य निधानार्थं । जगतोऽन्नस्य साधनायेत्यर्थः । तदानीं तेन शरीरेणाभीके । अंतिकनामैतत् । तव समीप एव पृथिवीं द्यां चोदूर्ध्वं

परस्परवियुक्तं यथा भवति तथास्तभ्नाः। स्तंभितवानसि। किं कुर्वन्। हे मघवन् इंद्र भ्रातुः पर्जन्यस्य पुत्रान् पुत्रस्थानीयानुदकसंस्त्यायांस्त्विषाणो दीपयन् ॥

॥ अथ द्वितीया ॥

महत्तन्नाम गुह्यं पुरुस्पृग्येन भूतं जनयो येन भव्यं।
प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशंत पंच ॥२॥
महत्। तत्। नाम। गुह्यं। पुरुऽस्पृक्। येन। भूतं। जनयः। येन। भव्यं।
प्रत्नं। जातं। ज्योतिः। यत्। अस्य। प्रियं। प्रियाः। सं। अविशंत। पंच ॥२॥

हे इंद्र तव तद्गुह्यं गोपनीयमन्यैरविज्ञातं पुरुस्पृक् बहुभिर्वृष्ट्यर्थिभिः स्पृहणीयमाकाशात्मकं नाम शरीरं महदत्यंतं प्रवृद्धं येन नाम्ना भूतं भव्यं च पूर्वं जनयः। उत्पादितवानसि। भूतभव्योभयान्वयाय येनेत्यर्थस्यावृत्तिः स्यात्। आकाशात्मकाद्धि परमेश्वरस्वरूपाद्भूतभव्यात्मकं जगदुत्पद्यते। आकाशाद्वायुरित्यादिश्रुतेः। किंच प्रत्नं पुराणं पूर्वकालीनं यज्ज्योतिर्द्योतमानमादित्याख्यमुदकाख्यं वास्येंद्रस्य प्रियं प्रियभूतं तत्त्वं जातमुत्पन्नं प्रियाः प्रीयमाणाः पंच। पंच जना इति शेषः। भीमसेनो भीम इतिवदेकदेशलक्षणा। निषादपंचमाश्चत्वारो वर्णाः समविशंत। संविशंते। स्वनिर्वाहार्थं भजंत इत्यर्थः ॥

॥ अथ तृतीया ॥

आ रोदसी अपृणादोत मध्यं पंच देवाँ ऋतुशः सप्तसप्त।
चतुस्त्रिंशता पुरुधा वि चष्टे सरूपेण ज्योतिषा विव्रतेन ॥३॥
आ। रोदसी इति। अपृणात्। आ। उत। मध्यं। पंच। देवान्। ऋतुऽशः। सप्तऽसप्त।
चतुःऽत्रिंशता। पुरुधा। वि। चष्टे। सऽरूपेण। ज्योतिषा। विऽव्रतेन ॥३॥

अयमिंद्र आत्मीयेन शरीरेण तेजसा वा रोदसी द्यावापृथिव्यावा सर्वतोऽपृणात्। पूरयति। उतापि च मध्यं द्युभूम्यपेक्षया मध्यभूतमंतरिक्षमपृणादिति वर्तते। तदपि स्वशरीरेण तेजसा वा पूरयति। किंच पंच देवान् देवमनुष्यपितृसुरराक्षससंज्ञकान् तथा सप्त सप्त। द्विरुक्त्या सप्तसंख्याकानि तत्त्वानि लोके यानि संति तानि परिगृह्यंते। कानि तानीति सप्त मरुद्गणान् सप्तादित्यरश्मीन् सप्त चेंद्रियाणि सप्त लोकान् अन्यानपि सप्तसंख्योपेतानृतुशः काले काले

चतुस्त्रिंशता चतुस्त्रिंशत्संख्याकेन देवगणेन सह पुरुधा बहुप्रकारं वि चष्टे । विपश्यति । सर्वेदेक्षते । अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च विराट् चेति चतुस्त्रिंशत्त्वं देवानां । केनेति तदुच्यते । सरूपेण समानरूपेण ज्योतिषा प्रकाशकेन विव्रतेन विविधेन कर्मणा ॥

॥ अथ चतुर्थी ॥

यदुष औच्छः प्रथमा विभानामजनयो येन पुष्टस्य पुष्टं ।
यत्ते जामित्वमवरं परस्या महन्महत्या असुरत्वमेकं ॥४॥

यत् । उषः । औच्छः । प्रथमा । विऽभानां । अजनयः । येन । पुष्टस्य । पुष्टं ।
यत् । ते । जामिऽत्वं । अवरं । परस्याः । महत् । महत्याः । असुरऽत्वं । एकं ॥४॥

अत्र प्रसंगात्सूर्यात्मकेंद्रसंबंधिन्युषाः स्तूयते ॥ हे उष उषोदेवते विभानां विभासकानां ग्रहनक्षत्रादीनां प्रथमा प्रथमभूता सत्यौच्छः । विभासनमकरोः । अग्रे ह्युषसः प्रादुर्भवंति पश्चादन्यानि तेजांसि । येन च तेजसा पुष्टस्य पोषयुक्तस्यापि पदार्थस्य पुष्टमतिशयेन पोषयुक्तमादित्यमजनयः । उदपादयः । यत् यद्वा ते तव जामित्वं बांधवमवरमवाङ्मुखं । अस्मदभिमुखमित्यर्थः । कीदृश्यास्तवेत्युच्यते । परस्याः । उपरि स्थिताया इत्यर्थः । तदिदं महत्यास्तव महदतिप्रवृद्धमेकमसाधारणमेकमेव वासुरत्वं प्रकृष्टबलवत्त्वं । तव बलेन कृतमित्यर्थः ॥

महाव्रते निष्केवल्ये विधुं दद्राणमित्येषा । सूचितं च । आ याह्यर्वाङुप वंधुरेष्ठा विधुं दद्राणमिति ॥

॥ सैषा पंचमी ॥

विधुं दद्राणं समने बहूनां युवानं संतं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥५॥

विऽधुं । दद्राणं । समने । बहूनां । युवानं । संतं । पलितः । जगार ।
देवस्य । पश्य । काव्यं । महिऽत्वा । अद्य । ममार । सः । ह्यः । सं । आन ॥५॥

अनया कालात्मक इंद्रः स्तूयते । विधुं विधातारं सर्वस्य युद्धादेः कर्तारं । विपूर्वो दधातिः करोत्यर्थः । तथा समने । अननमनः प्राणनं । सम्यगननोपेते संग्रामे बहूनां शत्रूणां दद्राणं द्रावकं ईदृक्सामर्थ्योपेतं युवानं संतं पुरुषं पलितो

जरा जगार । निगिरतीद्राङ्मया । एवमुक्तलक्षणं वक्ष्यमाणलक्षणं च देवस्य कालात्मकस्येंद्रस्य महित्वा महत्त्वेनोपेतं काव्यं सामर्थ्यं पश्य । पश्यत हे जनाः । तथा जरसा प्राप्तोऽयं ममार । म्रियते । स ह्यः परेद्युः समान । सम्यक् चेष्टते । पुनर्जन्मांतरे प्रादुर्भवतीत्यर्थः । तदेवं चत्वारि नामानि शरीराण्युक्तानि ॥

॥ इत्यष्टमस्य प्रथमे षोडशो वर्गः ॥

॥ अथ षष्ठी ॥

शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीळः ।
यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥ ६॥

शाक्मना । शाकः । अरुणः । सुऽपर्णः । आ । यः । महः । शूरः । सनात् । अनीळः ।
यत् । चिकेत । सत्यं । इत् । तत् । न । मोघं । वसु । स्पार्हं । उत । जेता । उत । दाता ॥६॥

शाक्मना । शक्मैव शाक्म । शक्मना बलेन शाकः शक्तः । शक्लृ शक्तौ । स्वशक्त्यैव सर्वं कर्तुं शक्त इत्यर्थः । न हींद्रस्य सहायांतरापेक्षास्तींद्रत्वादेव । अरुणोऽरुणवर्णः सुपर्णः कश्चिच्छोभनपर्णः पक्ष्या गच्छतीत्यध्याहारः । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । यो महो महान् शूरो विक्रांतः सनात् पुराणोऽनीळोऽनीडो नीडस्याकर्ता । न हींद्रोऽग्निवत् कुत्रचिदपि यज्ञे निकेतनं करोति । एवं सुपर्णरूपेणेंद्रमाह । स पक्षींद्रो यच्चिकेत कर्तव्यत्वेन जानाति तत्सत्यमित् सत्यमेव न तु मोघं व्यर्थं भवति । स स्पार्हं स्पृहणीयं वसूत जेता जयति शत्रुभ्यः सकाशात् उतापि दाता प्रयच्छति च स्तोतृभ्यः । न लोकाव्ययेत्यादिना षष्ठीप्रतिषेधः ॥

॥ अथ सप्तमी ॥

ऐभिर्ददे वृष्ण्या पौंस्यानि येभिरौक्षद्वृत्रहत्याय वज्री ।
ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्ममुदजायंत देवाः ॥७॥

आ । एभिः । ददे । वृष्ण्या । पौंस्यानि । येभिः । औक्षत् । वृत्रऽहत्याय । वज्री ।
ये । कर्मणः । क्रियमाणस्य । मह्ना । ऋतेऽकर्म । उत्ऽअजायंत । देवाः ॥७॥

इंद्र एभिर्मरुद्भिः सह वृष्ण्यानि वर्षकाणि पौंस्यानि बलान्याददे । आदत्ते । येभिर्मरुद्भिः सहितो वृत्रहत्याय । प्राण्युपकारकवृष्ट्यावरकत्वाद्वृत्रः पापं । तस्य हत्याय । मनुष्याणामुपद्रवशमनायेत्यर्थः । तदर्थं वज्री वज्रवानिंद्र औक्षत् ।

वर्षंति। ये च मरुतो देवा मह्ना महतेंद्रेण क्रियमाणस्य कर्मणो वृष्टिप्रदानलक्षणस्य साहाय्यार्थमृतेकर्ममृतकर्म वृष्टिप्रदानकर्म प्रत्युदजायंतोन्मुखा जायंते स्वयमेव तैरेभिर्दद इति समन्वयः ॥

॥ अथाष्टमी ॥

युजा कर्मा॑णि ज॒नय॑न्वि॒श्वौजा॑ अश॒स्ति॒हा वि॒श्वम॑नास्तुरा॒षाट् ।
पी॒त्वी सोम॑स्य दि॒व आ वृ॒धा॒नः शूरो॒ निर्यु॑धाध॑म॒द्दस्यू॑न् ॥८॥
युजा। कर्मा॑णि। ज॒नय॑न्। वि॒श्वऽओ॑जाः। अ॒श॒स्ति॒ऽहा। वि॒श्वऽम॑नाः। तु॒रा॒षाट्।
पी॒त्वी। सोम॑स्य। दि॒वः। आ। वृ॒धा॒नः। शूरः॑। निः। यु॒धा। अ॒ध॒म॒त्। दस्यू॑न् ॥८॥

स इंद्रो युजा मरुतां साहाय्येन कर्माणि प्रवर्षणादीनि जनयन् उत्पादयन् विश्वौजा व्याप्तबलोऽशस्तिहा रक्षोहा विश्वमना व्याप्तमना अत्यंतं मनस्वी तुराषाट् तूर्णमभिभविता शत्रूणां। एवंमहानुभाव इंद्रः सोमस्य सोमं पीत्वी पीत्वा दिवो द्युलोकादागत्य सोमं पीत्वा वृधानो वर्धमानः शूरः सन् युधायुधेन प्रहारेण वा दस्यून् शत्रून्निरधमत् निर्धमति। युद्धेनासुरानपबाधत इत्यर्थः ॥

॥ इत्यष्टमस्य प्रथमे सप्तदशो वर्गः ॥

इदं त इति सप्तर्चं चतुर्दशं सूक्तं। वामदेवपुत्रो बृहदुक्थ ऋषिः। चतुर्थीपंचमीषष्ठ्यो जगत्यः। आदितस्तिस्रः सप्तमी च त्रिष्टुभः। विश्वे देवा देवता। तथा चानुक्रांतं। इदं ते सप्त वैश्वदेवं तु चतुर्थ्याद्यास्तिस्रो जगत्य इति ॥ गतः सूक्तविनियोगः ॥ आहवनीये वाद्यादिकारणेनायतनान्निष्क्रम्य शम्यापरासादर्वाचीने देशे दीप्यमाने सति तमग्निमनया पुनरायतने संवपेत्। सूचितं च। आहवनीयमवदीप्यमानमर्वाक् शम्यापरासादिदं त एकं पर ऊ त एकमिति संवपेत्। आ॰ ३.१०.। इति ॥

॥ सैषा सूक्ते प्रथमा ॥

इ॒दं त॒ एकं॒ प॒र ऊं॑ त॒ एकं॑ तृ॒तीये॑न॒ ज्योति॑षा॒ सं वि॑शस्व ।
सं॒वेश॑ने त॒न्व१॒॑श्चारु॑रेधि प्रि॒यो दे॒वानां॑ प॒र॒मे ज॒नित्रे॑ ॥१॥

इदं। ते। एकं। परः। ऊं इति। ते। एकं। तृतीयेन। ज्योतिषा। सं। विशस्व।
संऽवेशने। तन्वः। चारुः। एधि। प्रियः। देवानां। परमे। जनित्रे ॥१॥

एतदादिभिर्बृहदुक्थो वाजिनं नाम स्वपुत्रं मृतं वदति। हे मृत पुत्र ते तवेदं। उपरि ज्योतिषेति वक्ष्यमाणत्वादत्रेदंशब्देन ज्योतिरभिधीयते। इदं ज्योतिरग्न्याख्यमेकं। एकोऽशः। अतस्तमग्निं तव देहगताग्न्यंशेन बाह्यमग्निं संविशस्व। संगच्छस्व। तथा पर उ अन्योऽपि ते तवैकं वाय्वाख्योऽशः। ते तव प्राणवाय्वाख्येनांशेन संविशस्व। शरीराग्निप्राणवाय्वोर्बाह्याग्निवाय्वोश्चैकत्वादंशत्वमिति भावः। तथा तृतीयेन ज्योतिषादित्याख्येन तेजसा तवात्मना संविशस्व। सूर्यगतात्मचैतन्यदेहगतात्मचैतन्ययोरभेदादंशत्वं। तद्योऽहं सोऽसौ योऽसौ सोऽहं सूर्य आत्मा जगतस्तस्थुषश्चेति श्रुतेरात्मनः सूर्यप्रवेशो युक्तः। तन्वस्तन्वाः संवेशने तस्मिन्सूर्ये संविश्य चारुरेधि। कल्याणो भव। कीदृशस्त्वं। प्रियः। तेन सह प्रीयमाणः। कीदृशे तस्मिन्। देवानां परम उत्तमे जनित्रे जनके। देवानां ह्येतत्परमं जनित्रं यः सूर्य इति हि श्रुतिः॥

॥ अथ द्वितीया ॥

तनूष्टे वाजिन्तन्वं१नयंती वाममस्मभ्यं धातु शर्म तुभ्यं।
अह्रुतो महो धरुणाय देवान्दिवीव ज्योतिः स्वमा मिमीयाः ॥२॥
तनूः। ते। वाजिन्। तन्वं। नयंती। वामं। अस्मभ्यं। धातु। शर्म। तुभ्यं।
अह्रुतः। महः। धरुणाय। देवान्। दिविऽइव। ज्योतिः। स्वं। आ। मिमीयाः ॥२॥

हे वाजिन् एतन्नामक पुत्र ते तव तन्वं शरीरं नयंती स्वशरीरं प्रापयंती तनूरियं पृथिवी। उभयोरपि पार्थिवत्वात्तव शरीरस्य पृथिवीप्राप्तौ सत्यां तस्यास्तव शरीरनयनं युक्तं। तादृशी पृथिवी वामं वननीयं धनमस्मभ्यं धातु। दधातु। शर्म च सुखं तुभ्यं धातु। दधातु। स त्वमह्रुतोऽनवपतितः सन् महो महतो देवान् तव कारणभूतान् दिवीव ज्योतिर्द्युलोके वर्तमानं सूर्यं च। इवशब्दश्चार्थे निपातानामनेकार्थत्वात्। तं च स्वं तव स्वभूतमा मिमीयाः। आविश ॥

॥ अथ तृतीया ॥

वाज्यसि वाजिनेना सुवेनीः सुवितः स्तोमं सुवितो दिवं गाः।
सुवितो धर्म प्रथमानु सत्या सुवितो देवान्त्सुवितोऽनु पत्म ॥३॥

वाजी। असि। वाजिनेन। सुऽवेनीः। सुवितः। स्तोमं। सुवितः। दिवं। गाः।
सुवितः। धर्म। प्रथमा। अनु। सत्या। सुवितः। देवान्। सुवितः। अनु। पत्म ॥३॥

हे पुत्र त्वं वाजिनेनान्नरसेन बलेन वा वाज्यसि तद्वान्भवसि। कीदृशस्त्वं। सुवेनीः। सुष्ठु कांतः ॥ वी गत्यादिषु ॥ तादृशस्त्वं सुवितः सुष्ठु प्रेरितस्त्वं स्तोमं पूर्वं त्वया कृतं स्तोत्रं तदभिमानिदेवमनु गाः। अन्वगाः। अनुगच्छ। तथा सुवितो दिवं गाः। तथा सुवितो धर्म त्वया संपादितानि धर्माण्यनुगच्छ। कीदृशानि। प्रथमा मुख्यानि सत्या सत्यफलानि। तथा सुवितो देवान् इंद्रादीन्। तथा सुवितः पत्म पतज्ज्योतिरादित्याख्यमनु गाः ॥

॥ अथ चतुर्थी ॥

महिम्न एषां पितरश्चनेशिरे देवा देवेष्वदधुरपि क्रतुं।
समविव्यचुरुत यान्यत्विषुरैषां तनूषु नि विविशुः पुनः ॥४॥
महिम्नः। एषां। पितरः। चन। ईशिरे। देवाः। देवेषु। अदधुः। अपि। क्रतुं।
सं। अविव्यचुः। उत। यानि। अत्विषुः। आ। एषां। तनूषु। नि। विविशुः। पुनरिति ॥४॥

पितरश्चनास्मत्पितरोऽप्यंगिरस एषां देवानां महिम्नो महत्त्वस्येशिरे। ईश्वरा अभवन्। ते देवा अपि देवत्वं प्राप्ता अंगिरसो देवेष्विंद्रादिषु क्रतुं संकल्पमदधुः। धृतवंतः। उतापि च यानि तेजांस्यत्विषुर्दीप्यंते तानि समविव्यचुः। संगता आसन्। एषां देवानां तनूषु शरीरेषु नि विविशुः। निविशंति पितरोऽगिरसः। अतस्त्वमपि तथा कुर्वित्यर्थः ॥

॥ अथ पंचमी ॥

सहोभिर्विश्वं परि चक्रमू रजः पूर्वा धामान्यमिता मिमानाः।
तनूषु विश्वा भुवना नि येमिरे प्रासारयंत पुरुध प्रजा अनु ॥५॥
सहःऽभिः। विश्वं। परि। चक्रमुः। रजः। पूर्वा। धामानि। अमिता। मिमानाः।
तनूषु। विश्वा। भुवना। नि। येमिरे। प्र। असारयंत। पुरुध। प्रऽजाः। अनु ॥५॥

मदीयाः पितरः सहोभिर्बलैः स्वीयैर्विश्वं सर्वं रजो लोकं। लोका रजांस्युच्यंत इति निरुक्तं। पूर्वा पूर्वाणि धामानि स्थानान्यमितान्यैरमितानि मिमानाः

परिच्छिंदंतः परिचक्रमुः । पर्यक्रामन् । किंच तथा कुर्वंतो विश्वा सर्वाणि भुवना भूतजातानि नियेमिरे । नियमितवंतः । किंच पुरुध पुरुधा बहुप्रकारं प्रजा अनु ज्योतींषुदकानि वा प्रासारयंत । प्रसारितवंतः । अस्मत्पितरः पूर्वेऽंगिरसः स्वसामर्थ्येन सर्वं लोकं व्याप्य पुरातनानि ग्रहनक्षत्रादीनि परिच्छिद्य सर्वभूतानि नियम्य प्रजा अनूदकानि तेजांसि वा प्रसारितवंत इत्यर्थः । अतस्त्वमप्येवं कुर्विति भावः ॥

॥ अथ षष्ठी ॥

द्विधा सूनवोऽसुरं स्वर्विदमास्थापयंत तृतीयेन कर्मणा ।
स्वां प्रजां पितरः पित्र्यं सह आवरेष्वदधुस्तंतुमाततं ॥६॥
द्विधा । सूनवः । असुरं । स्वःऽविदं । आ । अस्थापयंत । तृतीयेन । कर्मणा ।
स्वां । प्रऽजां । पितरः । पित्र्यं । सहः । आ । अवरेषु । अदधुः । तंतुं । आऽततं ॥६॥

सूनव आदित्यस्य पुत्रा देवा अंगिरसः । देवानां ह्येतत्परमं जनित्रं यत्सूर्य इति प्रदर्शितत्वादादित्यस्य सूनव इति गम्यते । असुरं बलवंतं स्वर्विदं सर्वज्ञं स्वर्गस्य लंभकं वादित्यं तृतीयेन कर्मणा प्रजोत्पत्त्याख्येन । ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति श्रुतेः प्रजोत्पादनस्य तृतीयकर्मत्वं । तेनादित्यं द्विधास्थापयंत । द्विप्रकारमास्थापयंति । उदितं चास्तमितं च कुर्वंति । उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्निति मंत्रस्य ब्राह्मणेऽसौ वा आदित्य उद्यन्नुद्ग्राभ एष निम्रोचन्निग्राभः । तै॰ सं॰ ५.४.६.६. । इति श्रुतत्वाद्देवानामादित्यस्य द्विःस्थापनमुदयास्तमयकरणमिति गम्यते । किंच पितरो मदीया अंगिरसः स्वां प्रजां । उत्पाद्येति शेषः । पित्र्यं सहः पितुरादित्यस्य संबंधिनमपराभिभवक्षमं बलमवरेष्वादधुः । निकृष्टेषु स्वप्रजाभूतेषु मनुष्येषु स्थापितवंतः । यथा पित्र्यं धनं सम्यक् परिरक्ष्य स्वपुत्रेभ्यः प्रयच्छंति तद्वत्पितुरादित्यस्य प्रकाशादिबलं मनुष्येषु न्यदधुरित्यर्थः । किंच तंतुं प्रजामाततं विततं कृतवंत इति शेषः । पुत्रपौत्रादिरूपेणानवच्छिन्नां प्रजामित्यर्थः । अयं ह्याततंतंतुर्यत्प्रजेति ब्राह्मणं । प्रजातंतुं मा व्यवच्छेत्सीः । तै॰ उप॰ १.११.१. । इति च । तंतुं तन्वन् । ऋ॰ सं॰ १०.५३.६. । इत्यस्य ब्राह्मणं प्रजा वै तंतुः । ऐ॰ ब्रा॰ ३.३८. । इति ॥

॥ अथ सप्तमी ॥

नावा न क्षोदः प्रदिशः पृथिव्याः स्वस्तिभिरति दुर्गाणि विश्वा ।
स्वां प्रजां बृहदुक्थो महित्वावरेष्वदधादा परेषु ॥७॥

नावा । न । क्षोदः । प्रऽदिशः । पृथिव्याः । स्वस्तिऽभिः । अति । दुःऽगानि । विश्वा ।
स्वां । प्रऽजां । बृहत्ऽउक्थः । महिऽत्वा । आ । अवरेषु । अदधात् । आ । परेषु ॥७॥

नावा नोदकोत्तरणसाधनेनेव क्षोद उदकं यथा मनुष्या नावोदकमतितरंति । यथा स्वस्तिभिः क्षेमैर्विश्वा सर्वाणि दुर्गाणि दुःखेन गंतव्यान्यतितरंति तद्वद्बृहदुक्थः स्वां प्रजां वाजिनं मृतं पुत्रं महित्वा स्वमहत्त्वेनावरेष्वग्न्यादिष्वादधात् । कृतवान् । तदा परेषु सूर्यादिष्वादधात् । एवमृषिर्ब्रूते स्वयमेव वा स्वात्मानं परोक्षेणाह ॥

॥ इत्यष्टमस्य प्रथमेऽष्टादशो वर्गः ॥

मा प्र गामेति षडृचं पंचदशं सूक्तं गायत्रं वैश्वदेवं । ऐक्ष्वाकोऽसमातिर्नाम राजा । तस्य बंधुः सुबंधुः श्रुतबंधुर्विप्रबंधुश्चेति चत्वारः पुरोहिता आसन् । ते च गौपायनाः । स च राजा तांस्त्यक्त्वान्यौ मायाविनावृषी पुरोहितत्वेनावृणीत । ततो बंध्वादयः क्रुद्धाः संत इमं राजानमभिचरितवंतः । एतज्ज्ञात्वा मायाविनौ पुरोहितावेषामन्यतमं सुबंधुं प्राणैर्वियोजितवंतौ । मृतस्यास्य भ्रातरो बंधुः श्रुतबंधुर्विप्रबंधुरित्येतेऽविनाशप्राप्तिहेतुभूतमिदं दृष्ट्वा जपंति स्म । अतस्तेऽस्य सूक्तस्यर्षयः । प्रतिपाद्यत्वादावर्तमानं मनो देवता । तथा चानुक्रांतं । अथ हैक्ष्वाको राजासमातिर्गौपायनान्बंध्वादीन्पुरोहितांस्त्यक्त्वान्यौ मायाविनौ श्रेष्ठतमौ मत्वा पुरोदधे । तमितरे क्रुद्धा अभिचेरुः । अथ तौ मायाविनौ सुबंधोः प्राणानाचिक्षिपतुरथ हास्य भ्रातरस्त्रयो मा प्र गामेति षट्कं गायत्रं स्वस्त्ययनं जप्त्वेति ॥ अग्निसमीपाद्देशांतरगमनसमय इदं सूक्तं जप्यं । सूत्रितं च । प्रव्रजेदनपेक्षमाणो मा प्र गामेति सूक्तं जपन्निति ॥ महापितृयज्ञेऽप्येतदृत्विग्भिर्जप्यं । सूत्रितं च । मा प्र गामाग्ने त्वं न इति जपंतः । आ० २.१९. । इति ॥ निविदः स्थानातिपत्ताविदं सूक्तं शस्त्वा सूक्तांतरे निवित्प्रक्षेप्तव्या । सूत्रितं च । स्थानं चेन्निविदोऽतिहरेन्मा प्र गामेति पुरस्तात्सूक्तं शस्त्वा । आ० ६.६. । इति ॥

॥ तत्र प्रथमा ॥

मा प्र गा॑म प॒थो व॒यं मा य॒ज्ञादि॑न्द्र सो॒मिनः॑ । मान्तः स्थु॑र्नो॒ अरा॑तयः ॥१॥

मा । प्र । गा॒म॒ । प॒थः । व॒यं । मा । य॒ज्ञात् । इं॒द्र॒ । सो॒मिनः॑ । मा । अं॒तरिति॑ । स्थुः॒ । नः॒ । अरा॑तयः ॥१॥

अत्रोक्ताख्याने शाट्यायनकं । असमातिं राथप्रौष्ठं गौपायना अभ्यगमंस्ते खांडवे सत्त्रमासताथ हासमातौ राथप्रौष्ठे किलाताकुली ऊषतुरसुरमायौ तं ह स्मानग्नौ निधायौदनं पचतोऽग्नौ मांसमथासुरा अन्नं दग्ध्वेक्ष्वाकवः पराबभूवुः । तमसमातिं राथप्रौष्ठं गौपायनानामाहुतयोऽभ्यतपन् सोऽब्रवीदिमौ किलाताकुली इमा वै मा गौपायनानामाहुतयोऽभितपंतीति तावब्रूतां तस्य वा आवामेव भिषजौ स्व आवां प्रायश्चित्तिरावां तथा करिष्यावो यथा त्वेता नाभितपंतीति । तौ परेत्य सुबंधोर्गौपायनस्य स्वपतः प्रमत्तस्यासुमाहुत्यांतःपरिधि न्यधत्तामित्यादि । तं सुबंधोरसुमादातुं खांडवादसमातिं प्रतिगच्छंतो गौपायना वदंति । हे इंद्र वयं गौपायनाः पथः समीचीनान्मार्गान्मा प्र गाम । मा परागच्छाम । असमातिगृहमेव गच्छाम । मा च सोमिनोऽसमातेर्यज्ञात्प्रगाम । मा स्थुर्मा तिष्ठंतु नोऽस्माकमंतर्मार्गमध्येऽरातयः शत्रवः । यद्वा सोमिनः सोमवतो यागान्मा प्रगाम ॥

॥ अथ द्वितीया ॥

यो य॒ज्ञस्य॑ प्र॒साध॑न॒स्तंतु॑र्दे॒वेष्वात॑तः । तमाहु॑तं नशीमहि ॥२॥

यः । य॒ज्ञस्य॑ । प्र॒ऽसाध॑नः । तंतुः॑ । दे॒वेषु॑ । आऽत॑तः । तं । आऽहु॑तं । न॒शी॒म॒हि॒ ॥२॥

योऽयमग्न्याख्यस्तंतुराहवनीयादिरूपेण विस्तृतो यज्ञस्य प्रसाधनः प्रकर्षेण साधयिता देवैः स्तोतृभिर्ऋत्विग्भिर्विस्तारितो वर्तते वेद्यां तमाहुतं सर्वतो हूयमानं नशीमहि । प्राप्नुयाम । नशतिर्व्याप्तिकर्मा ॥

पिंडपितृयज्ञे मनो न्वा हुवामह इति तृचेन पिंडाभिमानिनः पितर उपस्थेयाः । सूचितं च । मनो न्वा हुवामह इति चतसृभिरथैनान्प्रवाहयेत् । आ० २.७. । इति ॥

॥ अथ तृतीया ॥

मनो न्वा हुवामहे नाराशंसेन सोमेन । पितॄणां च मन्मभिः ॥३॥

मनः । नु । आ । हुवामहे । नाराशंसेन । सोमेन । पितॄणां । च । मन्मऽभिः ॥३॥

वयं बंधुश्रुतबंध्वादयो मनः सुबंधोः संबंधि मायाविभिरपहृतं नु क्षिप्रमा हुवामहे । केन साधनेनेति तदुच्यते । नाराशंसेन नराशंसचमसगतेन सोमेन । नरैः शस्यंत इति नराशंसाः पितरः । तेषां चमसानां कंपनमेव होमः । तथाविधेन सोमेन पितॄणामंगिरसां मन्मभिर्मननीयैः स्तोत्रैश्च ॥

॥ अथ चतुर्थी ॥

आ त एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥४॥

आ । ते । एतु । मनः । पुनरिति । क्रत्वे । दक्षाय । जीवसे । ज्योक् । च । सूर्यं । दृशे ॥४॥

हे सुबंधो ते मनः पुनरैतु । अभिचरतः सकाशात्पुनरागच्छतु । किमर्थमित्युच्यते । क्रत्वे कर्मणे लौकिकवैदिकविषयाय दक्षाय बलाय च । यद्वा क्रत्वेऽपानाय दक्षाय प्राणाय । प्राणो वै दक्षोऽपानः क्रतुरिति हि श्रुतिः । जीवसे जीवनाय च । ज्योक् च चिरकालं सूर्यं दृशे सूर्यं द्रष्टुं । अत्यंतंचिरजीवनायेत्यर्थः ॥

॥ अथ पंचमी ॥

पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि ॥५॥

पुनः । नः । पितरः । मनः । ददातु । दैव्यः । जनः । जीवं । व्रातं । सचेमहि ॥५॥

नोऽस्माकं पितरः पितृभूता अंगिरसो जनः । तेषां संघ इत्यर्थः । स च जीवं व्रातं प्राणादींद्रियसंघातं पुनर्ददातु । तथा दैव्यो जनः । जनशब्दः संघवचनः । देवानां संघोऽपि जीवं व्रातं च ददातु । वयं च तदुभयं सचेमहि । प्राप्नुयाम ॥

॥ अथ षष्ठी ॥

वयं सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावंतः सचेमहि ॥६॥

वयं । सोम । व्रते । तव । मनः । तनूषु । बिभ्रतः । प्रजाऽवंतः । सचेमहि ॥६॥

हे सोम देव वयं बंध्वादयस्तव व्रते त्वदीये कर्मणि । व्रतमिति कर्मनाम ।

तव तनूषु त्वदीयेष्वंगेषु च मनो बिभ्रतस्तात्पर्ययुक्तां बुद्धिं धारयंतः प्रजावंतः प्रजाभिः पुत्रपौत्रादिभिर्युक्ताः सचेमहि । संगच्छेमहि । जीवं व्रातं चेति शेषः ॥

॥ इत्यष्टमस्य प्रथम एकोनविंशो वर्गः ॥

यत्ते यममिति द्वादशर्चं षोडशं सूक्तमानुष्टुभं । बंध्वादय ऋषयः सुबंधुदेहान्निर्गतस्येंद्रियवर्गसहितस्य मनसः पुनस्तस्मिन्प्रवेशनार्थमिदं सूक्तं दृष्ट्वाजपन् । अतस्तेऽस्यर्षयः । प्रतिपाद्यत्वादावर्तमानं मन एव देवता । तथा चानुक्रांतं । यत्त इति द्वादशर्चमानुष्टुभं मनआवर्तनं जेपुरिति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

यत्ते॑ य॒मं वै॑वस्व॒तं मनो॑ ज॒गाम॑ दूर॒कं । तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥१॥

यत् । ते॒ । य॒मं । वै॒व॒स्व॒तं । मनः॑ । ज॒गाम॑ । दू॒र॒कं । तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह ।
क्षया॑य । जी॒वसे॑ ॥१॥

पुरुषस्य म्रियमाणस्य मनो नाम महद्भूतं बहुधा विशीर्णं भवति । तस्य पुनःसंभरणमत्रोच्यते । हे म्रियमाण पुरुष यत्ते तव मनो वैवस्वतं विवस्वतः पुत्रं यमं दूरकमत्यंतं दूरं यथा भवति तथा जगाम ते तव तन्मन आ वर्तयामसि । आवर्तयामः । किमर्थं । इह क्षयाय । इह लोके निवासाय । जीवसे चिरकालजीवनायेत्यर्थः ॥

॥ अथ द्वितीया ॥

यत्ते॒ दिवं॒ यत्पृ॑थि॒वीं मनो॑ ज॒गाम॑ दूर॒कं । तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥२॥

यत् । ते॒ । दिवं॑ । यत् । पृ॒थि॒वीं । मनः॑ । ज॒गाम॑ । दू॒र॒कं । तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ ।
इ॒ह । क्षया॑य । जी॒वसे॑ ॥२॥

हे सुबंधो यन्मनो दिवं जगाम यच्च पृथिवीं दूरकं । दूरकमिति क्रियाविशेषणं । तदिह निवासाय जीवनाय चावर्तयामः ॥

॥ अथ तृतीया ॥

यत्ते॒ भूमिं॒ चतु॑र्भृष्टि॒ मनो॑ ज॒गाम॑ दूर॒कं । तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥३॥

यत् । ते॒ । भूमिं॑ । चतुः॑ऽभृष्टिं । मनः॑ । ज॒गाम॑ । दू॒र॒कं । तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ ।
इ॒ह । क्षया॑य । जी॒वसे॑ ॥३॥

हे सुबंधो यन्मनो भूमिं चतुर्भृष्टिं। चतुर्दिक्षु भ्रंशो यस्याः सा। तां जगाम तदावर्तयामः ॥

॥ अथ चतुर्थी ॥

यत्ते चतस्रः प्रदिशो मनो जगाम दूरकं। तत्त आ वर्तयामसीह क्षयाय जीवसे ॥४॥

यत्। ते। चतस्रः। प्रऽदिशः। मनः। जगाम। दूरकं। तत्। ते। आ। वर्तयामसि। इह। क्षयाय। जीवसे ॥४॥

हे सुबंधो यत्ते मनः प्रदिशः प्रकृष्टा महादिशश्चतस्रो जगाम तदावर्तयामः ॥

॥ अथ पंचमी ॥

यत्ते समुद्रमर्णवं मनो जगाम दूरकं। तत्त आ वर्तयामसीह क्षयाय जीवसे ॥५॥

यत्। ते। समुद्रं। अर्णवं। मनः। जगाम। दूरकं। तत्। ते। आ। वर्तयामसि। इह। क्षयाय। जीवसे ॥५॥

हे सुबंधो यत्ते मनोऽर्णवं। अर्णांस्युदकानि। तद्वंतं समुद्रं मेघं वा जगाम तदावर्तयामः ॥

॥ अथ षष्ठी ॥

यत्ते मरीचीः प्रवतो मनो जगाम दूरकं। तत्त आ वर्तयामसीह क्षयाय जीवसे ॥६॥

यत्। ते। मरीचीः। प्रऽवतः। मनः। जगाम। दूरकं। तत्। ते। आ। वर्तयामसि। इह। क्षयाय। जीवसे ॥६॥

हे सुबंधो यत्ते मनः प्रवतः प्रगच्छंतोर्मरीचीर्दीप्तीर्जगाम तदिति गतं ॥

॥ इत्यष्टमस्य प्रथमे विंशो वर्गः ॥

॥ अथ सप्तमी ॥

यत्ते अपो यदोषधीर्मनो जगाम दूरकं। तत्त आ वर्तयामसीह क्षयाय जीवसे ॥७॥

यत्। ते। अपः। यत्। ओषधीः। मनः। जगाम। दूरकं। तत्। ते। आ। वर्तयामसि। इह। क्षयाय। जीवसे ॥७॥

हे सुबंधो यत्ते मनोऽप उदकं यदोषधीर्वनस्पतीनिति तदिति गतं ॥

॥ अथाष्टमी ॥

यत्ते सूर्यं यदुषसं मनो जगाम दूरकं। तत्त आ वर्तयामसीह क्षयाय जीवसे ॥८॥

यत्। ते। सूर्यं। यत्। उषसं। मनः। जगाम। दूरकं। तत्। ते। आ। वर्तयामसि।
इह। क्षयाय। जीवसे ॥८॥

हे सुबंधो यत्ते मनः सूर्यं सूर्यमिव यदुषसं तदिति गतं ॥

॥ अथ नवमी ॥

यत्ते पर्वतान्बृहतो मनो जगाम दूरकं। तत्त आ वर्तयामसीह क्षयाय जीवसे ॥९॥

यत्। ते। पर्वतान्। बृहतः। मनः। जगाम। दूरकं। तत्। ते। आ। वर्तयामसि।
इह। क्षयाय। जीवसे ॥९॥

हे सुबंधो यत्ते मनो बृहतः पर्वतान् तदिति गतं ॥

॥ अथ दशमी ॥

यत्ते विश्वमिदं जगन्मनो जगाम दूरकं। तत्त आ वर्तयामसीह क्षयाय जीवसे॥१०॥

यत्। ते। विश्वं। इदं। जगत्। मनः। जगाम। दूरकं। तत्। ते। आ। वर्तयामसि।
इह। क्षयाय। जीवसे ॥१०॥

हे सुबंधो यत्ते मनो विश्वमिति तदिति गतं ॥ चतस्र ऋचो निगदसिद्धाः ॥

॥ अथैकादशी ॥

यत्ते पराः परावतो मनो जगाम दूरकं। तत्त आ वर्तयामसीह क्षयाय जीवसे॥११॥

यत्। ते। पराः। पराऽवतः। मनः। जगाम। दूरकं। तत्। ते। आ। वर्तयामसि।
इह। क्षयाय। जीवसे ॥११॥

हे सुबंधो यत्ते मनः पराः परावतोऽत्यंतं दूरदेशाज्जगाम तदिति गतं ॥

॥ अथ द्वादशी ॥

यत्ते भूतं च भव्यं च मनो जगाम दूरकं। तत्त आ वर्तयामसीह क्षयाय जीवसे॥१२॥

यत्। ते। भूतं। च। भव्यं। च। मनः। जगाम। दूरकं। तत्। ते। आ। वर्तयामसि।
इह। क्षयाय। जीवसे ॥१२॥

हे सुबंधो यत्ते मनो भूतं च भव्यं चेत्यनेन भूतभव्यात्मकव्यतिरेकेण कस्यचिद्भावाद्वर्तमानस्य पृथगेवाभिधानात् कृत्स्नं प्रपंचमुक्तं भवति। तत्र सर्वत्र गतं मनो जीवनाय निवासाय चावर्तयामः ॥

॥ इत्यष्टमस्य प्रथम एकविंशो वर्गः ॥

प्र तारीति दशर्चं सप्तदशं सूक्तं बंध्वादीनां त्रयाणां गौपायनानामार्षं। आदितः सप्त त्रिष्टुभः। अष्टमी पंचाष्टका पंक्तिः। नवमी षडष्टका महापंक्तिः। दशमी पंक्त्युत्तरा। आद्यौ दशकावष्टकास्त्रय इत्युक्तलक्षणसद्भावात्। एकाक्षराधिक्याद्भूरिग्विशेषणेयं वेदितव्या। सूक्तस्यादितश्चतस्रो देहात्प्राणान्निर्गमयित्र्या निर्ऋतेर्निवृत्त्यर्थं बंध्वादयोऽजपन्। मो षु णः सोमेति चतुर्थ्यामेव मृत्युनिवृत्त्यर्थं सोममस्तुवन् अतश्चतसृणां निर्ऋतिर्देवता चतुर्थ्याः सोमश्च। असुनीते मन इति द्वाभ्यामसुनीतिनाम्नी देवीमस्तुवन् अतस्तयोः सा देवता। पुनर्नो असुमित्यस्याः पृथिव्याद्या लिंगोक्ता देवताः। ततस्तिसृभिः शिष्टाभिः पंक्तिमहापंक्तिपंक्त्युत्तराभिर्द्यावापृथिव्याविति द्यावापृथिव्यौ देवते। समिंद्रेत्यर्धर्चस्येंद्रो देवता। तथा चानुक्रांतं॥ प्र तारीति दशर्चे चतस्रो निर्ऋत्यपनोदनार्थं जेपुश्चतुर्थ्यां सोमं चास्तुवन्मृत्योरपगमायोत्तराभ्यां दैवीमसुनीतिं सप्तम्यां लिंगोक्तदेवताः शिष्टाभिः पंक्तिमहापंक्तिपंक्त्युत्तराभिर्द्यावापृथिव्यौ समिंद्रेतीद्रं चार्धर्चेनेति। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

प्र ता॒र्यायुः॑ प्रत॒रं नवी॑यः॒ स्थाता॑रेव॒ क्रतु॑मता॒ रथ॑स्य।
अध॒ च्यवा॑न॒ उत्त॑वी॒त्यर्थं॑ परात॒रं सु निर्ऋ॑तिर्जिहीतां ॥१॥

प्र। ता॒रि॒। आयुः॑। प्र॒ऽत॒रं। नवी॑यः। स्थाता॑राऽइव। क्रतु॑ऽमता। रथ॑स्य।
अध॑। च्यवा॑नः। उत्। त॒वी॒ति॒। अर्थं॑। प॒रा॒ऽत॒रं। सु। निः॒ऽऋ॑तिः। जि॒ही॒तां॒ ॥१॥

सुबंधोरायुरायुष्यं प्र तारि। प्रवर्धतां। प्रपूर्वस्तिरतिर्वर्धनार्थः। कथं प्रवर्धतामित्युच्यते। प्रतरं प्रवृद्धतरं नवीयो नवतरं। यौवनोपेतमित्यर्थः। निर्ऋत्यनुग्रहादेवमायुर्वर्धतां। तत्र दृष्टांतः। क्रतुमता कर्मवता सारथिना रथस्य स्थातारेव रथे स्थिताविव वर्धेते तद्वत्। अधाथ च्यवानो जीवितात्प्रच्यवमानोऽर्थं स्वाभिलषितमायुर्लक्षणमुत्तवीति। वर्धयति। सुबंधुप्राणापहर्त्री निर्ऋतिः पापदेवता परातरमत्यंतं दूरतरं परिजिहीतां। परित्यजतु। गच्छतु ॥

॥ अथ द्वितीया ॥

सामन्नु राये निधिमन्न्वन्नं करामहे सु पुरुध श्रवांसि।
ता नो विश्वानि जरिता ममत्तु परातरं सु निर्ऋतिर्जिहीतां ॥२॥
सामन्। नु। राये। निधिऽमत्। नु। अन्नं। करामहे। सु। पुरुध। श्रवांसि।
ता। नः। विश्वानि। जरिता। ममत्तु। पराऽतरं। सु। निःऽऋतिः। जिहीतां ॥२॥

सामन्नु साम्नि गीयमाने सति। नु चार्थे। राये जीवायूरूपधनार्थं निधिमन्निधानवदन्नं हविश्च करामहे। कुर्मः। अत्र न्विति चार्थे। निर्ऋत्यै स्तुतिं हविश्चोभयं कुर्म इत्यर्थः। तदेवाह। सु सुष्ठु पुरुध पुरुधा बहुप्रकारं श्रवांस्यन्नानि हवींषि करामहे। ता तानि हवींषि नोऽस्माकं संबंधीनि विश्वानि सर्वाणि जरिता जीर्णा स्तुता वा। जरा स्तुतिः। नि॰ १०.८.। ममत्तु। स्वदतां। आस्वाद्य च निर्ऋतिः परातरमत्यंतं दूरदेशं जिहीतां। गच्छतां ॥

॥ अथ तृतीया ॥

अभी ष्व१र्यः पौंस्यैर्भवेम द्यौर्न भूमिं गिरयो नाज्रान्।
ता नो विश्वानि जरिता चिकेत परातरं सु निर्ऋतिर्जिहीतां ॥३॥
अभि। सु। अर्यः। पौंस्यैः। भवेम। द्यौः। न। भूमिं। गिरयः। न। अज्रान्।
ता। नः। विश्वानि। जरिता। चिकेत। पराऽतरं। सु। निःऽऋतिः। जिहीतां ॥३॥

वयमर्योऽरीञ्शत्रून्पौंस्यैः पुंस्त्वैर्बलैः सु सुष्ठ्वभिभवेम। द्यौर्न भूमिं। सूर्यो यथा स्वरश्मिभिर्भूमिमभिभवति तद्वत्। गिरयो नाज्रान्। गिरिर्वज्रः। ते यथाज्रानजनशीलान्मेघानभिभवंति तद्वत्। ता तानि यानि नोऽस्माभिः कृतानि स्तोत्राणि तानि विश्वानि सर्वाणि जरिता स्तुता सती निर्ऋतिश्चिकेत। जानाति। शिष्टमुक्तं ॥

॥ अथ चतुर्थी ॥

मो षु णः सोम मृत्यवे परा दाः पश्येम नु सूर्यमुच्चरंतं।
द्युभिर्हितो जरिमा सू नो अस्तु परातरं सु निर्ऋतिर्जिहीतां ॥४॥
मो इति। सु। नः। सोम। मृत्यवे। परा। दाः। पश्येम। नु। सूर्यं। उत्ऽचरंतं।
द्युऽभिः। हितः। जरिमा। सु। नः। अस्तु। पराऽतरं। सु। निःऽऋतिः। जिहीतां ॥४॥

हे सोम नोऽस्मान् सु सुष्ठु मृत्यवे मो परा दाः। मैव परादानं कुरु। मृत्य्वधीनान्नोऽस्मान्मा कार्षीः। किंतु न्विदानीमुच्चरंतमूर्ध्वं गच्छंतमुदयंतं सूर्यं पश्येम। चिरकालं जीवेमेत्यर्थः। जीवाभावे सूर्यादर्शनादित्यभिप्रायः। किंच द्युभिः। अहर्नामैतत्। अहोभिर्दिवसैर्हितः प्रेरितो जरिमा जराभावो नोऽस्माकं सु सुखकरोऽस्तु। शिष्टमुक्तं ॥

॥ अथ पंचमी ॥

असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः।
रारंधि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ॥५॥

असुऽनीते। मनः। अस्मासु। धारय। जीवातवे। सु। प्र। तिर। नः। आयुः।
ररंधि। नः। सूर्यस्य। संऽदृशि। घृतेन। त्वं। तन्वं। वर्धयस्व ॥५॥

हे असुनीते मनुष्याणामसूनां नेत्रि देवि अस्मासु मनः पुनर्धारय। किंच जीवातवे जीवितुं सु प्र तिर सुष्ठु वर्धय नोऽस्माकमायुः। किंच रारंधि स्थापय नोऽस्मान् सूर्यस्य संदृशि चिरसंदर्शने। त्वं च घृतेनास्माभिर्दत्तेन तन्वं शरीरं वर्धय। वर्धयस्व ॥

॥ इत्यष्टमस्य प्रथमे द्वाविंशो वर्गः ॥

॥ अथ षष्ठी ॥

असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगं।
ज्योक् पश्येम सूर्यमुच्चरंतमनुमते मृळया नः स्वस्ति ॥६॥

असुऽनीते। पुनः। अस्मासु। चक्षुः। पुनरिति। प्राणं। इह। नः। धेहि। भोगं।
ज्योक्। पश्येम। सूर्यं। उत्ऽचरंतं। अनुऽमते। मृळय। नः। स्वस्ति ॥६॥

हे असुनीते प्राणदायिनि देवि अस्मासु। अस्मदीये सुबंधावित्यर्थः। पुनश्चक्षुः प्रकाशकं नयनं। ईक्षणसामर्थ्यमित्यर्थः। किंच पुनः प्राणमस्मासु धेहि। स्थापय। वयं च ज्योक् चिरमुच्चरंतमुद्गच्छंतं सूर्यं पश्येम। हे अनुमते देवि स्वस्ति अविनाशं यथा स्यात्तथा नोऽस्मान्मृळय। सुखय ॥

॥ अथ सप्तमी ॥

पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरंतरिक्षं।
पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्यां३ या स्वस्तिः ॥७॥

पुनः। नः। असुं। पृथिवी। ददातु। पुनः। द्यौः। देवी। पुनः। अंतरिक्षं।
पुनः। नः। सोमः। तन्वं। ददातु। पुनरिति। पूषा। पथ्यां। या। स्वस्तिः ॥७॥

पृथिवी देवी नोऽस्मभ्यमसुं प्राणं ददातु पुनः। द्यौर्देवतासुं ददातु। तथांतरिक्षमंतरिक्षदेवतासुं ददातु। तथा सोमो नस्तन्वं शरीरं पुनर्ददातु। तथा पूषा पोषाभिमानिनी देवता पथ्यां। पंथा अंतरिक्षं।नि॰ ११.४५.। तत्र भवां वाचं। वागात्मकः शब्दो ह्याकाशादुत्पद्यते। तां पुनर्ददातु। किंच या स्वस्तिर्या लोके वेदे च स्वस्तिरुच्यते तामपि पूषा प्रयच्छतु यद्वा पूषा पोषं प्रयच्छतु। या स्वस्तिर्वाग्नाम्नी देव्यस्ति सा पथ्यां वाचं प्रयच्छतु। वाग्वै पथ्या स्वस्तिरिति ब्राह्मणं॥

॥ अथाष्टमी ॥

शं रोदसी सुबंधवे यह्वी ऋतस्य मातरा।
भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥८॥
शं। रोदसी इति। सुऽबंधवे। यह्वी इति। ऋतस्य। मातरा।
भरतां। अप। यत्। रपः। द्यौः। पृथिवि। क्षमा। रपः। मो इति। सु। ते। किं।
चन। आममत् ॥८॥

इदमादिभिस्तिसृभिर्द्यावापृथिव्योः स्तुतिः। रोदसी द्यावापृथिव्यौ सुबंधवे शं सुखं प्रयच्छतां। कीदृश्यौ ते। यह्वी महत्यौ। ऋतस्य यज्ञस्योदकस्य वा मातरा निर्मात्र्यौ। यद्रपः पापं कृच्छ्रमस्ति तदप भरतां। अपहरतां। अपनयतां। हे द्यौः हे पृथिवि हे द्यावापृथिव्यौ क्षमा क्षमायां सत्यां। यद्वा क्षमा पृथगप्युच्यते। क्षमाप्यपहरतु। एवमुक्त्वा सुबंधुं बंध्वादयो ब्रुवते। हे सुबंधो ते त्वां मो षु मैव सु सुष्ठु किंचन परं रपः कृच्छ्रमाममत्। हिनस्तु॥

॥ अथ नवमी ॥

अव द्वके अव त्रिका दिवश्चरंति भेषजा।
क्षमा चरिष्ण्वेककं भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥९॥

अवं । द्वके इति । अवं । त्रिका । दिवः । चरंति । भेषजा ।

क्षमा । चरिष्णु । एककं । भरतां । अपं । यत् । रपंः । द्यौः । पृथिवि । क्षमा । रपंः ।

मो इति । सु । ते । किं । चन । आममत् ॥९॥

दिवो द्युलोकाद्भेषजा भेषजानि द्वके द्विकं त्रिका त्रिकं चाव चरंति । अश्विनौ द्विकमवचरतः । इळा सरस्वती भारती त्रिकमवचरंति । क्षमा क्षमायां चरिष्णु चरत्येककमेकं भेषजमित्यभिप्रायमाह । तानि सर्वाणि सुबंधोः प्राणं रक्षंत्विति शेषः ॥

॥ अथ दशमी ॥

समिंद्रेरय गामंनड्वाहं य आवंहदुशीनराण्या अनः ।

भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनामंमत् ॥१०॥

सं । इंद्र । ईरय । गां । अनड्वाहं । यः । आ । अवंहत् । उशीनराण्याः । अनः ।

भरतां । अपं । यत् । रपंः । द्यौः । पृथिवि । क्षमा । रपंः । मो इति । सु । ते । किं ।

चन । आममत् ॥१०॥

हे इंद्र समीरय प्रेरय । किं । गां गंतारमनड्वाहमनोवहनसमर्थं । योऽनड्वानावहदावहत्यस्मान्प्रति किं । अनः शकटं । कस्य । उशीनराण्या एतन्नामिकाया ओषधेः । ययार्तमनुलिंपंति सोशीनराणी । भरतामित्यादि गतं ॥

॥ इत्यष्टमस्य प्रथमे त्रयोविंशो वर्गः ॥

आ जनमिति द्वादशर्चमष्टादशं सूक्तं । गौपायना बंध्वादय ऋषयः । षष्ठ्यास्त्वगस्त्यस्य स्वसैषां मातर्षिका । आदितः पंच गायत्र्यः । अष्टमीनवम्यौ पंक्ती शिष्टा अनुष्टुभः । आदितश्चतसृणामसमातिनाम्नो राज्ञः स्तूयमानत्वात् स एव देवता । पंचम्या इंद्रः । षष्ठ्या अप्यसमातिः । ततः पंचानां सुबंधोर्जीविताह्वानरूपोऽर्थो देवता । अयं मे हस्त इत्यस्या लब्धसंज्ञस्य सुबंधोः स्पर्शनहेतुभूतो देवता । तथा चानुक्रांतं । आ जनमिति द्वादशर्चमानुष्टुभं चतसृभिरसमातिमस्तुवन्पंचम्यैंद्रं षष्ठ्यागस्त्यस्य स्वसा मातैषां राजानमस्तौत्पराभिः सुबंधोर्जीवमाह्वयंस्तमंत्यया लब्धसंज्ञमस्पृशन् पंचम्याद्या गायत्र्योऽष्टम्याद्ये पंक्ती इति ॥

॥ तत्र प्रथमा ॥

आ जनं त्वेषसंदृशं माहीनानामुपस्तुतं । अगन्म बिभ्रतो नमः ॥१॥

आ । जनं । त्वेषऽसंदृशं । माहीनानां । उपऽस्तुतं । अगन्म । बिभ्रतः । नमः ॥१॥

इदमादिभिस्तिसृभी राजानं स्तुवंति । वयं बंध्वादयो जनं जनपदमसुनीतिस्वभूतमागन्म । अभिगताः ॥ गमेर्लुङि मंत्रे घसेति च्लेर्लुक् । म्वोश्चेति मकारस्य नकारः ॥ कीदृशं जनं । त्वेषसंदृशं । दीप्तदर्शनं । माहीनानां महतामुपस्तुतमुपगतस्तुतिं ॥ तादौ चेति गतेः प्रकृतिस्वरः ॥ कीदृशा वयं । नमो नमस्कारं विभ्रतो धारयंतः । कुर्वंत इत्यर्थः । यद्वा जनमसमातिमित्यर्थः । शिष्टं समानं । नमो बिभ्रत इति राजकृते नमस्कारं धारयंत इत्यर्थः ॥

॥ अथ द्वितीया ॥

असमातिं नितोशनं त्वेषं निययिनं रथं । भजेरथस्य सत्पतिं ॥२॥

असमातिं । निऽतोशनं । त्वेषं । निऽययिनं । रथं । भजेऽरथस्य । सत्ऽपतिं ॥२॥

असमातिं राजानं नितोशनं शत्रूणां हंतारं । नितोशतिर्वधकर्मा । त्वेषं दीप्तं । नियविनं रथमित्युपमाप्रधानो निर्देशः । रथवत्सर्वाभिमतप्राप्तिसाधनं भजेरथस्यैतन्नामकस्य राज्ञो वंशे जातं । यद्वैतन्नामा कश्चिदस्य शत्रुः । तस्य नियविनं ॥ हलदंतादिति सप्तम्या अलुक् ॥ सत्पतिं सतां पालकं ॥

॥ अथ तृतीया ॥

यो जनान्महिषाँ इवातितस्थौ पवीरवान् । उतापवीरवान्युधा ॥३॥

यः । जनान् । महिषान्ऽइव । अतिऽतस्थौ । पवीरवान् । उत । अपवीरवान् । युधा ॥३॥

योऽसमातिर्जनान् स्वविरोधिभूताननतितस्थौ अतिक्रम्य तिष्ठति । पराभावयतीत्यर्थः । क इव । महिषान् सिंह इव । कीदृशः सन् । पवीरवान् । पवीरः पविः । खड्गवान् । उतापि चापवीरवान् अपगतखड्गः सन् । शस्त्रसाहाय्यमपि कदाचिन्नापेक्षत इत्यर्थः । उतापि च किं कुर्वन् युधा योधनेन युध्येत्यर्थः ॥

॥ अथ चतुर्थी ॥

यस्येक्ष्वाकुरुप व्रते रेवान्मराय्येधते । दिवीव पंच कृष्टयः ॥४॥

यस्य । इक्ष्वाकुः । उप । व्रते । रेवान् । मरायी । एधते । दिविऽइव । पंच । कृष्टयः ॥४॥

यस्य जनपदस्येक्ष्वाकू राजा व्रते कर्मणि रक्षणरूप उपैधते प्रवर्धते । कीदृशः सन् । रेवान् रयिवान् मरायी शत्रूणां मारकश्च सन् । विशेषणद्वयेन जनानां दानादिरूपेण धनलाभः परराजोपद्रवापत्तिश्चोक्ता भवति । एवं सति तद्विषयस्थाः पंच कृष्टयो निषादपंचमाश्चत्वारो वर्णा दिवीव द्युलोके यथा संकल्पसिद्धाः संतः सुखिनो भवंति तद्वत्सुखिनो भवंतीति शेषः ॥

॥ अथ पंचमी ॥

इंद्र क्षत्रासमातिषु रथप्रोष्ठेषु धारय । दिवीव सूर्यं दृशे ॥५॥

इंद्र । क्षत्रा । असमातिषु । रथऽप्रोष्ठेषु । धारय । दिविऽइव । सूर्यं । दृशे ॥५॥

अनयेंद्रमाह्वयतेऽसमात्यर्थं । हे इंद्र क्षत्रा क्षत्राणि बलानि रथप्रोष्ठेष्वसमातिषु । एकस्मिन्बहुवचनं पूजार्थं । रथप्रोष्ठेऽसमातौ धारय । दिवीव सूर्यं दिवि यथा सूर्यं दृशे सर्वेषां संदर्शनाय स्थापितवानसि तद्वदत्र बलं धारय ॥

॥ अथ षष्ठी ॥

अगस्त्यस्य नद्भ्यः सप्ती युनक्षि रोहिता ।

पणीन्न्यक्रमीरभि विश्वान्राजन्नराधसः ॥६॥

अगस्त्यस्य । नत्ऽभ्यः । सप्ती इति । युनक्षि । रोहिता ।

पणीन् । नि । अक्रमीः । अभि । विश्वान् । राजन् । अराधसः ॥६॥

अनयागस्त्यस्य स्वसा बंध्वादीनां माता राजानं स्तौति । हे राजन् असमाते त्वमगस्त्यस्यर्षेर्नद्भ्यो नंदयितृभ्यो बंध्वादिभ्यो निमित्तभूतेभ्यस्तेषां धनप्राप्तये सप्ती सर्पणस्वभावावश्वौ रोहिता रोहितवर्णौ युनक्षि । योजय रथे । तथा कृत्वा विश्वान् सर्वानराधसोऽदातॄन् अयजमानान्पणीन् वणिजो लुब्धकान् नि निकृष्टं नितरां वाभ्यक्रमीः । अभिभव ॥

॥ इत्यष्टमस्य प्रथमे चतुर्विंशो वर्गः ॥

॥ अथ सप्तमी ॥

अयं मातायं पितायं जीवातुरागमत् ।
इदं तव प्रसर्पणं सुबंधवेहि निरिहि ॥७॥

अयं । माता । अयं । पिता । अयं । जीवातुः । आ । अगमत् ।
इदं । तव । प्रऽसर्पणं । सुबंधो इति सुऽबंधो । आ । इहि । निः । इहि ॥७॥

अत्र शेषे शाट्यायनकं । अथाग्निं द्वैपदेन सूक्तेनास्तुवन् अग्निः स्तुत आजगाम । आगत्य चाह किंकामा मागच्छतेति । सुबंधोरेवासुं पुनर्वनुयामेत्यब्रुवन् । एषांतःपरिधीत्यब्रवीत्तमादद्ध्वमिति । तन्निराह अयं मातायं पितेति । शौनकश्च ।

स्तुतः स राजा सुप्रीतस्तस्थौ गौपायनानभि ।
सूक्तेन तेऽस्तुवन्नग्निं द्वैपदेन यथाविषु ॥
अथाग्निरब्रवीदेनानयमंतःपरिध्यसुः ।
सुबंधोरस्य चेक्ष्वाकोर्मया गुप्तो हितार्थिना ॥
सुबंधवे प्रदायासुं जीवेत्युक्त्वा च पावकः ।
स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति ॥
अयं मातेति दृष्टास्ते सुबंधोरसुमाह्वयन् ।
शरीरमभिनिर्दिश्य सुबंधोः पतितं भुवि ॥
सूक्तशेषं जगुश्चास्य चेतसो धारणाय त इति ॥

अयमग्निर्माता । अयमेव पिता । अयं जीवातुर्जीवयितागमत् । आजगाम । अतो हे सुबंधो जीवपरिधौ वर्तमानेदं तव शरीरं तव प्रसर्पणं प्रकर्षेण सर्पणसाधनं । अत इदं प्रत्येहि । आगच्छ । निरिहि । निर्गच्छ परिधेः सकाशात् । अन्य एवं व्याचक्षते । हे निर्गतप्राण सुबंधो अयं । विभक्तिव्यत्ययः । इयं मातायं पितायं जीवातुर्जीवनफलभूतः पुत्रश्चागमदिति संबध्यते । सर्वे त्वामागता दुःखिताः संतः । शिष्टं समानं ॥

॥ अथाष्टमी ॥

यथा युगं वरत्रया नह्यंति धरुणाय कं ।
एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥८॥

यथा । युगं । वरत्रया । नह्यंति । धरुणाय । कं ।
एव । दाधार । ते । मनः । जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥८॥

यथा युगं वरत्रया पाशेन नह्यंति बध्नंति धरुणाय रथादिधारणाय । कमिति पादपूरणः । एवैवं ते मनो दाधार परिधावग्निः । किमर्थं । जीवातवे । जीवनाय । न मृत्यवे मरणाय न । अथो अपि चारिष्टतातये । अविनाशाय । स्वार्थिकस्तातिः ॥

॥ अथ नवमी ॥

यथेयं पृथिवी मही दाधारेमान्वनस्पतीन् ।
एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥९॥
यथा । इयं । पृथिवी । मही । दाधार । इमान् । वनस्पतीन् ।
एव । दाधार । ते । मनः । जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥९॥

यथेयं पृथिवी महीमान्वनस्पतीन्वृक्षादीन्दाधार । शिष्टमुक्तं ॥

॥ अथ दशमी ॥

यमादहं वैवस्वतात्सुबंधोर्मन आभरं ।
जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥१०॥
यमात् । अहं । वैवस्वतात् । सुऽबंधोः । मनः । आ । अभरं ।
जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥१०॥

इयं निगदसिद्धा ॥

॥ अथैकादशी ॥

न्य१ग्वातोऽव वाति न्यक्तपति सूर्यः ।
नीचीनमघ्न्या दुहे न्यग्भवतु ते रपः ॥११॥
न्यक् । वातः । अव । वाति । न्यक् । तपति । सूर्यः ।
नीचीनं । अघ्न्या । दुहे । न्यक् । भवतु । ते । रपः ॥११॥

वातो वायुर्द्युलोकान्न्यग्निचीनमव वाति । गच्छति । सूर्यश्च न्यक् तपति । अघ्न्याहननीया गौर्निचीनं दुहे । दुग्धे । एवं ते रपः पापं न्यग्निचीनं भवतु ॥

॥ अथ द्वादशी ॥

अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥१२॥
अयं । मे । हस्तः । भगऽवान् । अयं । मे । भगवत्ऽतरः ।
अयं । मे । विश्वऽभेषजः । अयं । शिवऽअभिमर्शनः ॥१२॥

अनया बंध्वादयो लब्धजीवं सुबंधुं पाणिभिरस्पृशन् । अयं मे हस्तो भगवान् यस्मात्सजीवं सुबंधुं स्पृशति तस्मात् । तथायं मे हस्तो भगवत्तरः । अतिशयेन भगवान् । तथायं मे हस्तो विश्वभेषजो जीवचिकित्सासाधनसर्वौषधवान् तत्स्थानीयो वा । अयं शिवाभिमर्शनो मंगलस्पर्शनः । यतो जीवंतं स्पृशत्यत इत्यर्थः ॥

॥ इत्यष्टमस्य प्रथमे पंचविंशो वर्गः ॥

॥ दशमे मंडले चतुर्थोऽनुवाकः ॥

पंचमेऽनुवाकेऽष्टौ सूक्तानि । तत्रेदमित्थेति सप्तविंशत्यृचं प्रथमं सूक्तं मानवस्य नाभानेदिष्ठस्य । इदमादीनि षट् सूक्तानि वैश्वदेवानि । तथा चानुक्रांतं । इदमित्था सप्ताधिका नाभानेदिष्ठो मानवो वैश्वदेवं तदिति ॥ पृष्ठ्यस्य षष्ठेऽहनि वैश्वदेवशस्त्रेऽभिप्लविकातिदेशप्राप्तस्योषासानक्तेत्यस्य स्थान इदं सूक्तं । सूचितं च । उद्धृत्य चोत्तमं सूक्तं चीणीदमित्था रौद्रमिति । आ॰ ८.१. । इति ॥ अचैतरेयब्राह्मणं । नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसंतं भ्रातरो निरभजंत्सोऽब्रवीदेत्य किं मह्यमभाक्तेत्येतमेव निष्ठावमववदितारमित्यब्रुवन्नित्यादि । ऐ॰ ब्रा॰ ५.१४.॥ तत्र नाभानेदिष्ठो भ्रातृभिर्भागे निराकृतः पितृसामीप्यमागत्य किं मह्यं भागं न कल्पितवानसीत्यपृच्छत् । स च किमनेन भागेन । अंगिरसः स्वर्गार्थं सत्त्रमासीनाः षष्ठाहःपर्यंतमनुष्ठाय मुह्यंति । तानिदमित्थेति सूक्ते शंसय ते स्वर्गं यंतो वसिष्ठा गा सहस्रसंख्याकान्दास्यंतीति पित्रा प्रेरितोऽंगिरसां समीपमागत्य तेभ्यः सत्त्रपरिवेषणं गोसहस्रमुत्कोचं परिकल्प्य तानेते सूक्ते षष्ठेऽहन्यशंसयत् । ते च तत्सूक्तसामर्थ्याद्यज्ञं पारं प्रापय्य स्वर्जिगमिषवोऽस्मै गोसहस्रं प्रादुः । तं च तद्गोसहस्रं स्वीकुर्वाणं कश्चन कृष्णशवासी पुरुष उत्तरत उत्थाय ब्राह्मण मदीयं यज्ञशेषभागं मा स्वीकुर्वित्यब्रवीत् । स च मह्यमंगिरसः प्रादुरिति प्रत्यब्रवीत् । तर्हि ब्राह्मण तव

पितरमेव पृच्छ कस्मै भागः प्राप्नुयादित्युक्तः पितृसमीपमागत्य पित्रा रुद्रायायं भाग इति तेनोक्तस्तवैवायं भाग इति मम पिताब्रवीदिति प्रत्युवाच। ततो यथार्थकथनेन तुष्टः पुरुषो नाभानेदिष्टायैव स्वं भागं प्रादादित्युक्तं ॥ तथाध्वर्युब्राह्मणेऽपि मनुः पुत्रेभ्यो दायं व्यभजत् स नाभानेदिष्ठं वै मानवमित्यादिनायमर्थ उक्तः। तत्सर्वमत्रानुसंधेयं ॥

॥ तत्र सूक्ते प्रथमा ॥

इदमित्था रौद्रं गूर्तवचा ब्रह्म क्रत्वा शच्यामंतराजौ।
क्राणा यदस्य पितरा मंहनेष्ठाः पर्षत्पक्थे अहन्ना सप्त होतॄन् ॥१॥

इदं। इत्था। रौद्रं। गूर्तऽवचाः। ब्रह्म। क्रत्वा। शच्यां। अंतः। आजौ।
क्राणा। यत्। अस्य। पितरा। मंहनेऽस्थाः। पर्षत्। पक्थे। अहन्। आ। सप्त। होतॄन्॥१॥

गूर्तवचा उद्यतवचनो नाभानेदिष्ठ इदं ब्रह्म स्तोत्रं रौद्रं रुद्रप्रणीतमित्थेत्थमिदानींक्रियमाणप्रकारं क्रत्वा प्रज्ञानेन निष्पाद्यं स्तोत्रं शच्यामंतः कर्मणि सत्त्रमध्य आजावंगिरसां संघे करोतीति शेषः। यत्स्तोत्रं क्राणा भागं कुर्वाणा भागं कुर्वाणावस्य पितरा पितरावन्ये च मंहनेष्ठा भागप्रदाने प्रवर्तमाना भ्रातरश्च गोलाभसाधनत्वेनाकल्पयन्निति शेषः। तेन नाभानेदिष्ठः पक्थे पक्तव्येऽहन् अहनि। षष्ठेऽहनीत्यर्थः। ते षष्ठमेवाहरागत्य मुह्यंति तानेते सूक्ते षष्ठेऽहनि शंसयेत्युक्तत्वात्। सप्त होतॄन् होतृप्रशास्तृब्राह्मणाच्छंस्यादिकान् आ पर्षत्। सर्वतोऽपूरयत्। इदमित्थेति सूक्ताभ्यां यज्ञपारं प्रापयामासेत्यर्थः ॥

॥ अथ द्वितीया ॥

स इद्दानाय दभ्याय वन्वञ्च्यवानः सूदैरमिमीत वेदिं।
तूर्वयाणो गूर्तवचस्तमः क्षोदो न रेत इतऊति सिंचत् ॥२॥

सः। इत्। दानाय। दभ्याय। वन्वन्। च्यवानः। सूदैः। अमिमीत। वेदिं।
तूर्वयाणः। गूर्तवचःऽतमः। क्षोदः। न। रेतः। इतःऽऊति। सिंचत् ॥२॥

स इत् स कृष्णशवासी पुरुषो रुद्राख्यो दानाय स्तोतॄणां धनप्रदानाय दभ्याय शत्रूणां वधाय च वन्वन् स्तोतॄन्संभजन् सूदैः सूदकैर्हिंसकैः शस्त्रैश्च्यवानो रक्षांसि च्यावयन् वेदिममिमीत। परिमितवान्। यज्ञवास्त्वधिष्ठितवानित्यर्थः।

तं कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इदं मम वै वास्तुहमितीति ब्राह्मणं। तदेवाह। तूर्वयाणस्तूर्णगमनो गूर्तवचस्तमोऽत्यंतमुद्यतवचा रुद्रः क्षोदो नोदकमिव। उदकं यथा घनः सिंचति तद्वद्रेतः स्वसामर्थ्यमितऊतीतोगमनवद्यथा भवति तथा सिंचत्। प्रेरितवानित्यर्थः। यद्वानेनोत्तरार्धेनोत्तराभ्यां च प्रासंगिक्यश्विनोः स्तुतिः क्रियते। तूर्वयाणस्तूर्णगमनोऽतिशयेनोद्यतवचनो रुद्रः क्षोदो नोदकमिव रेत उत्पादनसामर्थ्योपेतं रेत इतऊति सिंचत्। जनयामासाश्विनौ। अन्यचेतऊतीत्यश्विनोरभिधानादन्यच्च तयो रुद्रपुत्रत्वसिद्धेश्चायमर्थो लभ्यते ॥

॥ अथ तृतीया ॥

मनो॒ न येषु॒ हव॑नेषु ति॒ग्मं विपः॒ शच्या॑ वनु॒थो द्रवं॑ता।
आ यः शर्या॑भिस्तुविनृ॒म्णो अ॒स्याश्री॑णीता॒दिशं॒ गभ॑स्तौ ॥३॥

मनः॑। न। येषु॑। हव॑नेषु। ति॒ग्मं। विपः॑। शच्या॑। व॒नु॒थः। द्रवं॑ता।
आ। यः। शर्या॑भिः। तु॒वि॒ऽनृ॒म्णः। अ॒स्य। अश्री॑णीत। आ॒ऽदिशं॑। गभ॑स्तौ ॥३॥

हे अश्विनौ युवां मनो न मन इव। यथा मनस्तिग्मं तीक्ष्णमाशु धावत्यागच्छत्येवं येषु हवनेष्वाह्वानेषु विपः स्तोतुः शच्या प्रज्ञानेन गंतव्यमिति बुद्ध्या द्रवंता द्रवंतौ गच्छंतौ वनुथः संभजथः। योऽध्वर्युरा आभिमुख्येन तुविनृम्णः प्रभूतहविर्लक्षणधनः सन् अस्य कर्मणि प्रवृत्तस्य मम संबंधी शर्याभिरंगुलीभिरश्रीणीत श्रीणाति। किं कृत्वा। गभस्तौ हस्ते धृत्वादिशं। इदमश्विभ्यामिति निर्दिश्येत्यर्थः। तादृशं मदीयमध्वर्युं येषु हवनेषु वनुथः संभजथस्तौ युवां हुव इत्युत्तरत्र संबंधः ॥

॥ अथ चतुर्थी ॥

कृ॒ष्णा यद्गोष्व॑रु॒णीषु॒ सीद॑द्दि॒वो नपा॑ताश्विना हुवे वां।
वी॒तं मे॑ य॒ज्ञमा ग॑तं मे॒ अन्नं॑ ववन्वांसा॒ नेष॒मस्मृ॑तध्रू ॥४॥

कृ॒ष्णा। यत्। गोषु॑। अ॒रु॒णीषु॑। सीद॑त्। दि॒वः। नपा॑ता। अ॒श्वि॒ना। हु॒वे। वां।
वी॒तं। मे॒। य॒ज्ञं। आ। ग॒तं। मे॒। अन्नं॑। व॒व॒न्वांसा॑। न। इषं॑। अस्मृ॑तध्रू इत्यस्मृ॑तऽध्रू ॥४॥

कृष्णा रात्रिर्यद्यदारुणीष्वरुणवर्णासु गोषु सीदन्निवसति। उषा विभासनाय रथमधितिष्ठतीत्यर्थः। अरुण्यो गाव उषसामिति निरुक्तं। उषःकाले हे दिवो

नपाता दीप्यमानस्य स्वर्गस्य प्रकाशात्मकस्य यागस्य वा न पातयितारौ हे अश्विनौ वां हुवे। आह्वये। वीतं कामयेथां मेऽन्नं हविर्लक्षणं। तदर्थं मे यज्ञमा गतं। आगच्छतं। इषमन्नं ववन्वांसा न। संभजमानावश्वाविव। तद्वदागतं। कीदृशौ युवां। अस्मृतध्रू। अस्मृतद्रोहौ। मयि द्रोहमस्मरंतौ ॥

॥ अथ पंचमी ॥

प्रथिष्ट यस्य वीरकर्ममिष्णदनुष्ठितं नु नर्यो अपौहत्।

पुनस्तदा वृहति यत्कनाया दुहितुरा अनुभृतमनर्वा ॥५॥

प्रथिष्ट। यस्य। वीरऽकर्मं। इष्णत्। अनुऽस्थितं। नु। नर्यः। अप। औहत्।

पुनरिति। तत्। आ। वृहति। यत्। कनायाः। दुहितुः। आः। अनुऽभृतं। अनर्वा ॥५॥

यथा स्वांशेन भगवान्रुद्रः प्रजापतिर्वास्तोष्पतिं रुद्रमसृजत्तदेतदादिभिस्त्रिसृभिर्वदति। यस्य प्रजापतेरिष्णदेषणवद्वीरकर्म। लिंगव्यत्ययः। येन रेतसोत्पन्ना वीरा भवंति तादृग्रेतः प्रथिष्ट प्रथितमासीत्तद्रेतोऽनुष्ठितं प्रजापतिनापत्यार्थं निषिक्तं नर्यो नरेभ्यो हितो यद्वा नेतृभ्यो देवेभ्यो हितो रुद्रोऽपौहत्। अपोहति। तदेवाह। पुनस्तद्रेत आ वृहति। सर्वत उत्खिदत्युद्गमयति पुरुषाकारेण स्वयमुत्पन्नः सन्। कीदृशं रेतः। यद्रेतः कनायाः कांताया दुहितुः स्वपुत्र्याः। तस्यामित्यर्थः। तत्र प्रजापतिनानुभृतमाः। आसीत्। अस्तेः सिपि। कीदृशो रुद्रः। अनर्वा। अन्यस्मिन्नप्रत्यृतः। प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये। ऐ॰ ब्रा॰ ३. ३३.। इति ब्राह्मणं ॥

॥ इत्यष्टमस्य प्रथमे षड्विंशो वर्गः ॥

॥ अथ षष्ठी ॥

मध्या यत्कर्त्वमभवदभीके कामं कृण्वाने पितरि युवत्यां।

मनानग्रेतो जहतुर्वियंता सानौ निषिक्तं सुकृतस्य योनौ ॥६॥

मध्या। यत्। कर्त्वं। अभवत्। अभीके। कामं। कृण्वाने। पितरि। युवत्यां।

मनानक्। रेतः। जहतुः। विऽयंता। सानौ। निऽसिक्तं। सुऽकृतस्य। योनौ ॥६॥

कामं यथेच्छं कृण्वाने कुर्वाणे पितरि प्रजापतौ युवत्यां दुहितर्युषसि दिवि वा। दिवमित्यन्य इति हि ब्राह्मणं प्रदर्शितं। मध्या तयोर्मध्येऽतरिक्षमध्ये वा-

भीके समीपे यत्कर्त्र कर्माभवत् मिथुनीभावाख्यं तदानीं मनानगल्पं रेतो जहतुः। त्यक्तवंतौ। किं कुर्वाणाविति तत्राह। वियंतौ। परस्परमभिगच्छंतौ। प्रजापतिना सानौ समुच्छ्रिते स्थाने सुकृतस्य यज्ञस्य योनौ निषिक्तमासीदित्यर्थः। ततो रुद्र उत्पन्न इत्यर्थः॥

॥ अथ सप्तमी ॥

पिता यत्स्वां दुहितरमधिष्कन्क्ष्मया रेतः संजग्मानो नि षिंचत्।
स्वाध्योऽजनयन्ब्रह्म देवा वास्तोष्पतिं व्रतपां निरतक्षन् ॥७॥

पिता। यत्। स्वां। दुहितरं। अधिऽस्कन्। क्ष्मया। रेतः। संऽजग्मानः। नि। सिंचत्।
सुऽआध्यः। अजनयन्। ब्रह्म। देवाः। वास्तोः। पतिं। व्रतऽपां। निः। अतक्षन् ॥७॥

पिता प्रजापतिर्यद्यदा स्वां दुहितरं दिवमुषसं वाधिष्कन् अध्यस्कंदत् तदानीमेव क्ष्मया पृथिव्या सह संजग्मानः संगच्छमानः प्रजापतिरस्मिँल्लोके रोहितो भूत्वा रेतो नि षिंचत्। निषेकमकरोत्। तामृश्यो भूत्वा रोहितं भूतामभ्यैदिति ब्राह्मणं। ऐ॰ ब्रा॰ ३. ३३.। तदानीं स्वाध्यः सुध्यानाः सुकर्माणो वा देवा ब्रह्माजनयन्। उदपादयन्। किं तद्ब्रह्मेति तदाह। वास्तोष्पतिं यज्ञवास्तुस्वामिनं व्रतपां व्रतस्य कर्मणो रक्षःप्रभृतिभ्यः पालकं निरतक्षन् समुदपादयन्। यज्ञवास्तुस्वामित्वं दत्त्वा कर्मरक्षकत्वेन निर्मितवंत इत्यर्थः॥

॥ अथाष्टमी ॥

स ईं वृषा न फेनमस्यदाजौ स्मदा परैदप दभ्रचेताः।
सरत्पदा न दक्षिणा परावृङ् न ता नु मे पृशन्यो जगृभ्रे ॥८॥

सः। ईं। वृषा। न। फेनं। अस्यत्। आजौ। स्मत्। आ। परा। ऐत्। अप। दभ्रऽचेताः।
सरत्। पदा। न। दक्षिणा। पराऽवृक्। न। ताः। नु। मे। पृशन्यः। जगृभ्रे ॥८॥

अंगिरसां सत्रांते नाभानेदिष्ठो गा निरोधयंतं वास्तोष्पतिं पुरतः पश्यन्वदति। स ईं सोऽयं वृषा न वर्षक इंद्र इव। स यथा नमुचेर्वधार्थमाजौ संग्रामे फेनमस्यत् क्षिप्तवान् तद्वत्क्षेपमानो वास्तोष्पतिरिदानीं तवैव वास्तुभागो युक्त इति यथार्थकथनानंतरं स्मदस्मत्त आप परैत्। अपपरागच्छति। दभ्रचेता अल्पमनस्को यः कश्चिद्दक्षिणा दक्षिणार्थानां गवां परावृक् परावर्जयिता सन् पदा

पदानि न सरत् न सरति । अस्मदभिमुखमागच्छति । मे मम संबंधिन्यस्ता गा अंगिरोभिर्दत्ताः पृश्न्यः पथिकानामभिस्पर्शनकुशलो रुद्रो न जगृभ्रे न गृह्णातीत्येवमाशास्ते ॥

॥ अथ नवमी ॥

मक्षू न वह्निः प्रजाया उपब्दिरग्निं न नग्न उप सीददूधः ।
सनितेध्मं सनितोत वाजं स धर्ता जज्ञे सहसा यवीयुत् ॥९॥

मक्षु । न । वह्निः । प्रऽजायाः । उपब्दिः । अग्निं । न । नग्नः । उप । सीदत् । ऊधः ।
सनिता । इध्मं । सनिता । उत । वाजं । सः । धर्ता । जज्ञे । सहसा । यविऽयुत् ॥९॥

वास्तोष्पतिना रुद्रेण गोप्यमानेऽस्मिन्यज्ञे वह्निर्वह्निवद्दाहको राक्षसादिर्मक्षु न शीघ्रं नोप सीदत् । नागच्छति । यो वह्निः प्रजाया उपब्दिरुपपीडको भवति यज्ञविघातार्थमागच्छति । ऋत्विगादिरूपायाः प्रजाया न पीडां करोत्यहनि । तथोधः । रात्रिनामैतत् । रात्रावप्यग्निं ज्वलंतं नग्नो विवसनो राक्षसादिर्नोप सीदत् । एवं रुद्रे रक्षितरि सति सोऽग्निरिध्मं सनिता जज्ञे । उत्पन्नः । उतापि च वाजमन्नं हविः सनिता जज्ञे । स धर्ता यज्ञस्य फलस्य वा धारक उत्पन्नः सोऽग्निः सहसा बलेन यवीयुद्यज्ञमिश्रयितॄणां रक्षःप्रभृतीनां योद्धा जज्ञे ॥

॥ अथ दशमी ॥

मक्षू कनायाः सख्यं नवग्वा ऋतं वदंत ऋतयुक्तिमग्मन् ।
द्विबर्हसो य उप गोपमागुरदक्षिणासो अच्युता दुदुक्षन् ॥१०॥

मक्षु । कनायाः । सख्यं । नवऽग्वाः । ऋतं । वदंतः । ऋतऽयुक्तिं । अग्मन् ।
द्विऽबर्हसः । ये । उप । गोपं । आ । अगुः । अदक्षिणासः । अच्युता । दुधुक्षन् ॥१०॥

नवग्वा अंगिरसः । गवामयनाख्यं सत्रमनुतिष्ठतामंगिरसां मध्ये ये नवसु मासेषु लब्धगावः संत उत्थितास्ते नवग्वाः । त ऋतं वदंतो मक्षु शीघ्रं कनायाः कमनीयायाः स्तुतेर्नाभानेदिष्ठप्रेरितायाः सकाशादृतयुक्तिमग्मन् । उक्तयोगपरिसमाप्तिमग्मन् । प्राप्ताः । यद्वा ऋतयुक्तिं यज्ञयोगोपेतमृतं शब्दं स्तुतिं वदंतोऽंगिरसः कनायाः पृश्न्याः सख्यमग्मन्निति योजना । द्विबर्हसो द्वयोः स्थानयोर्द्यावापृथिव्योः परिवृढा येऽंगिरसो गोपं गोपायितारं नाभानेदिष्ठमिंद्रं वोपागुरु-

पगतास्तेऽदक्षिणा दक्षिणारहिताः। अदक्षिणानि सत्त्राणीत्याहुरिति हि वचनं ये यजमानास्त ऋत्विज इति। ते चाच्युतोदकान्यक्षीणानि फलानि वा दुधुक्षन्॥

॥ इत्यष्टमस्य प्रथमे सप्तविंशो वर्गः ॥

॥ अथैकादशी ॥

मक्षू कनायाः सख्यं नवीयो राधो न रेत ऋतमित्तुरण्यन्।

शुचि यत्ते रेक्ण आयजंत सबर्दुघायाः पय उस्रियायाः ॥११॥

मक्षु। कनायाः। सख्यं। नवीयः। राधः। न। रेतः। ऋतं। इत्। तुरण्यन्।

शुचिं। यत्। ते। रेक्णः। आ। अयजंत। सबःऽदुघायाः। पयः। उस्रियायाः॥११॥

मक्षु शीघ्रं कनायाः कमनीयाया घर्मदोग्ध्या नवीयो नवतरं सख्यं प्रापेति शेषः। अथवा नवीय इति राधोविशेषणं। नवतरं राधो धनमिव रेतः सिच्यमानमृतमुदकं तुरण्यन्। दिवः सकाशात्प्रेरितवंतः। हे इंद्र ते तुभ्यं यद्यदा रेक्णः पायोलक्षणं धनमाभिमुखमयजंतापूजयन्। कीदृशं रेक्णः। सबर्दुघायाः। सबरित्यमृतनाम। अमृतदोग्ध्या उस्रियाया गोः पयः पानयोग्यं रसं। तदोदकं तुरण्यन्निति। अत्राध्वर्युब्राह्मणं। अंगिरसो वै सत्त्रमासत। तेषां पृश्निर्घर्मधुगासीत्। सर्जीषेणाजीवत्। तेऽब्रुवन्। कस्मै नु सत्त्रमास्महे येऽस्या ओषधीर्न जनयाम इति। ते दिवो वृष्टिमसृजंत। तै॰ ब्रा॰ २.१.१.। इति॥

॥ अथ द्वादशी ॥

पश्वा यत्पश्वा वियुता बुधंतेति ब्रवीति वक्तरी रराणः।

वसोर्वसुत्वा कारवोऽनेहा विश्वं विवेष्टि द्रविणमुप क्षु ॥१२॥

पश्वा। यत्। पश्वा। विऽयुता। बुधंत। इति। ब्रवीति। वक्तरि। रराणः।

वसोः। वसुऽत्वा। कारवः। अनेहा। विश्वं। विवेष्टि। द्रविणं। उप। क्षु ॥१२॥

यद्यदा स्तोतारः पश्वा पशुना। गोसमूहेनेत्यर्थः। तेन वियुता वियुक्तानि स्वकीयानि गोस्थानानि पश्वा पश्चाद्बुधंताजानन् तदानीं कारवः। कारुरित्यर्थः। इति ब्रवीति। इत्थं ब्रूते। किमिति। वक्तरि स्तोतरि रराणो रममाणो वसोर्वा-सकाद्वसुत्वातिशयेन वासयिता। यद्वा वसुत्वेति समूहार्थे त्वा नामकरणः। गोरूपधनवतोऽतिशयेन गोसमूहवानित्यर्थः। अनेहा अपाप इंद्रो विश्वं सर्वं

द्रविणं गोरूपं पणिभिरपहृतं धनं मक्षु। मक्ष्वित्यर्थः। शीघ्रमुप विवेष्टि। उपव्याप्नोति पुनरादातुं। अयमर्थः। यदेंद्रस्य स्तोतारोऽसुरैरपहृतमात्मीयं गोधनं जानंति ततः प्रागेवागत्येंद्रस्तं न्यरुधदिति॥

॥ अथ त्रयोदशी॥

तदिन्न्वस्य परिषद्वानो अग्मन्पुरू सदंतो नार्षदं बिभित्सन्।
वि शुष्णस्य संग्रथितमनर्वा विदत्पुरुप्रजातस्य गुहा यत्॥१३॥

तत्। इत्। नु। अस्य। परिऽसद्वानः। अग्मन्। पुरु। सदंतः। नार्सदं। बिभित्सन्।
वि। शुष्णस्य। संऽग्रथितं। अनर्वा। विदत्। पुरुऽप्रजातस्य। गुहा। यत्॥१३॥

तदित् तत्रैव नु क्षिप्रमस्येंद्रस्य परिषद्वानः परितो वर्तमानाः परिचारका रश्मयोऽग्मन्। प्रकाशनार्थमगच्छन्। पुरु पुरूणि कृत्रिमाणि सदंतः सीदंतोऽसुरा नार्षदं नृषदः पुत्रं बिभित्सन्। भेत्तुमैच्छन्। किंचायं शुष्णस्यैतन्नामकस्यासुरस्य पुरुप्रजातस्य बहुप्रादुर्भावस्य संग्रथितं मर्म विदत्। वेत्ति। अयमिंद्रो यदसुरस्य दुर्ज्ञेयं मर्म गुहा गुहायां गोपितं तद्विदत्॥

॥ अथ चतुर्दशी॥

भर्गो ह नामोत यस्य देवाः स्व१र्ण ये त्रिषधस्थे निषेदुः।
अग्निर्ह नामोत जातवेदाः श्रुधी नो होतर्ऋतस्य होताध्रुक्॥१४॥

भर्गः। ह। नाम। उत। यस्य। देवाः। स्वः। न। ये। त्रिऽसधस्थे। निऽसेदुः।
अग्निः। ह। नाम। उत। जातऽवेदाः। श्रुधि। नः। होतरिति। ऋतस्य। होता। अध्रुक्॥१४॥

उतापि च भर्गो ह नाम तत्तेजः किल प्रसिद्धं यस्य तेजस आग्नेयस्य संबंधिनि त्रिषधस्थे बर्हिषि ये देवाः संति ते सर्वे स्वर्ण स्वर्गे यथा तथैव निषेदुर्निषीदंति। उतापि च तत्तेजोऽग्निर्ह नामाग्निः किल नाम। उतापि च जातवेदा जातप्रज्ञो जातानां वेदितैतदपि तस्य तेजसो नाम। अग्नेर्भर्ग इत्यग्निरिति जातवेदा इति च त्रीणि नामानीत्यर्थः। अथ प्रत्यक्षकृतः। हे होतर्होमनिष्पादकोक्तनामाग्ने ऋतस्य होता यज्ञस्य संबंधिनां देवानामाह्वातरध्रुग्द्रोहरहितस्त्वं नोऽस्माकमाह्वानं श्रुधि। शृणु॥

॥ अथ पंचदशी ॥

उत त्या मे रौद्रावर्चिमंता नासत्याविंद्र गूर्तये यजध्यै ।
मनुष्वद्वृक्तबर्हिषे रराणा मंदू हितप्रयसा विक्षु यज्यू ॥१५॥
उत । त्या । मे । रौद्रौ । अर्चिऽमंता । नासत्यौ । इंद्र । गूर्तये । यजध्यै ।
मनुष्वत् । वृक्तऽबर्हिषे । रराणा । मंदू इति । हितऽप्रयसा । विक्षु । यज्यू इति ॥१५॥

उतापि च हे इंद्र त्या तौ प्रसिद्धौ रौद्रौ रुद्रपुत्रौ । क्षोदो न रेत इतऊति सिंचत् । ऋग्वे॰ १०. ६१. २. । इति हि रुद्रपुत्रत्वमुक्तं । अर्चिमंता दीप्तिमंतौ नासत्यावश्विनौ मे गूर्तये स्तुतये यजध्यै यागाय च भवेतामिति शेषः । किंच मनुष्वत् मम पितुर्मनोरिव । तस्य यज्ञे यथा तथैव वृक्तबर्हिषे स्तीर्णबर्हिषे मह्यं रराणा रममाणौ मंदू मदिष्णू हितप्रयसा प्रेरितधनौ विक्ष्वृत्विक्ष्वस्मदीयेषु तथा यज्यू यष्टव्यौ भवतमिति शेषः ॥

॥ इत्यष्टमस्य प्रथमेऽष्टाविंशो वर्गः ॥

॥ अथ षोडशी ॥

अयं स्तुतो राजा वंदि वेधा अपश्च विप्रस्तरति स्वसेतुः ।
स कक्षीवंतं रेजयत्सो अग्निं नेमिं न चक्रमर्वतो रघुद्रु ॥१६॥
अयं । स्तुतः । राजा । वंदि । वेधाः । अपः । च । विप्रः । तरति । स्वऽसेतुः ।
सः । कक्षीवंतं । रेजयत् । सः । अग्निं । नेमिं । न । चक्रं । अर्वतः । रघुऽद्रु ॥१६॥

अयं वेधाः सर्वस्य विधाता राजा सोमः स्तुतः सर्वैर्वंदि । स्तूयतेऽस्माभिः । किंच विप्रो विशेषेण पूरको विप्रवच्छुद्धो वा स्वसेतुर्यस्य स्वभूता रश्मयो जगद्बंधकाः संति सः सोमोऽपश्चांतरिक्षं च तरति । लंघयति प्रतिदिनं । सः सोमः कक्षीवंतमृषिं पर्वतमध्ये सोमार्थं गतं रेजयत् सः स एवाग्निं हविर्वोढुमशक्तं संतं पलाय्याप्सु प्रविष्टं रेजयत् । अकंपयत् । कंपने दृष्टांतः । नेमिं नमनशीलं रघुद्रु लघुगमनं चक्रमर्वतोऽर्वतोऽश्वा इव । ते यथा तथा रेजयत् । नुमभावश्छांदसः ॥

॥ अथ सप्तदशी ॥

स द्विबंधुर्वैतरणो यष्टा सबर्धुं धेनुमस्वं दुहध्यै।
सं यन्मित्रावरुणा वृंज उक्थैर्ज्येष्ठेभिरर्यमणं वरूथैः ॥१७॥
सः। द्विऽबंधुः। वैतरणः। यष्टा। सबःऽधुं। धेनुं। अस्वं। दुहध्यै।
सं। यत्। मित्रावरुणा। वृंजे। उक्थैः। ज्येष्ठेभिः। अर्यमणं। वरूथैः ॥१७॥

सोऽग्निर्द्विबंधुर्द्वयोर्लोकयोर्बंधुभूतो वैतरणः सर्वस्य विशेषेण तारयिता। यद्वा वितरणार्हो हविःप्रदानार्हो यष्टा देवानां याजकोऽग्निः सबर्धुममृतोपमपयोदोग्ध्रीं धेनुमस्वमप्रसूतां निवृत्तप्रसवां शयवे दुहध्यै दोहायाकरोत्। यद्यदा स शयुर्मित्रावरुणावर्यमणं च ज्येष्ठभिर्ज्येष्ठैः प्रशस्तैर्वरूथैर्वरणीयैरुक्थैः शस्त्रैः सं वृंजे सम्यक् स्तौति। यदा स शयुर्मित्रावरुणार्यम्णां स्तुतिं करोति तदा तेषामाज्ञयाग्निर्निवृत्तप्रसवां पयोदोग्ध्रीमकरोदिति ॥

॥ अथाष्टादशी ॥

तद्बंधुः सूरिर्दिवि ते धियंधा नाभानेदिष्ठो रपति प्र वेनन्।
सा नो नाभिः परमास्य वा घाहं तत्पश्चा कतिथश्चिदास ॥१८॥
तत्ऽबंधुः। सूरिः। दिवि। ते। धियंऽधाः। नाभानेदिष्ठः। रपति। प्र। वेनन्।
सा। नः। नाभिः। परमा। अस्य। वा। घ। अहं। तत्। पश्चा। कतिथः। चित्। आस ॥१८॥

तद्बंधुः। सैव पृथिवी बंधिकोत्पत्त्यधिष्ठानत्वेन यस्यासौ तद्बंधुः। तन्मातृक इत्यर्थः। सूरिः स्तुतेः प्रेरको दिवि वर्तमानस्य ते तव स्वभूत इति शेषः। त्वदपत्यभूत इति यावत्। षष्ठीसामर्थ्यात्संबंधसामान्यं प्रतीयते। तच्चादित्यपुत्रो मनुर्मनोः पुत्रो नाभानेदिष्ठ इत्येवं सूर्यापत्यत्वं पर्यवस्यति। सूर्यनाभानेदिष्ठयोः संबंधश्चरमपाद उत्तरमंत्रे च वक्ष्यते। स च धियंधाः कर्मणां धारको नाभानेदिष्ठो वेनन् अंगिरोदत्तं गोसहस्रं वेनन् कामयन् प्र रपति। प्रलपति। स्तौतीत्यर्थः। वापि चेत्यर्थः। सा द्यौर्नोऽस्माकं परमोत्कृष्टा नाभिर्बंधिका चास्यादित्यस्याधिष्ठानभूतास्ति। घेति पूरणः। अहं तत्तस्यादित्यस्य पश्चा पश्चादनंतरं कतिथः कतिपयानां पूरण आस। अभवं। अनेन ममादित्येन जन्यजनकभावः संबंधः संनिकृष्ट इत्युक्तं भवति ॥

॥ अथैकोनविंशी ॥

इयं मे नाभिरिह मे सधस्थमिमे मे देवा अयमस्मि सर्वः ।
द्विजा अह प्रथमजा ऋतस्येदं धेनुरदुहज्जायमाना ॥१९॥

इयं । मे । नाभिः । इह । मे । सधऽस्थं । इमे । मे । देवाः । अयं । अस्मि । सर्वः ।
द्विऽजाः । अहं । प्रथमऽजाः । ऋतस्य । इदं । धेनुः । अदुहत् । जायमाना ॥१९॥

इयं माध्यमिका वाग्मे नाभिः संनाहिनी । आदित्यस्य तस्याश्चाभेदाद-स्यर्षेर्माध्यमिका वाग्बंधिका भवति । तथा च ब्राह्मणं । सा या वागसौ स आदित्य इति ब्राह्मणं । इहास्मिन्मंडले मे मम सधस्थं स्थानं । इमे मे देवा द्योतमाना रश्मयो मे मम स्वभूताः । अयमहमस्मि सर्वः । सूर्यस्य स्वस्योक्तेन प्रकारेणाभेदात्तद्द्वारा सर्वात्मकत्वं । अह किंचेत्यर्थः । द्विजा विप्रा ऋतस्य प्रथमजाः सत्यस्य प्रथमजाः सत्यभूतस्य ब्रह्मणः प्रथमोत्पन्नाः । धेनुः पृश्निदेवता माध्य-मिका वाग्जायमानेदं सर्वमदुहत् । दुदोह । उदपादयदित्यर्थः ॥

॥ अथ विंशी ॥

अधासु मंद्रो अरतिर्विभावाव स्यति द्विवर्तनिर्वनेषाट् ।
ऊर्ध्वा यच्छ्रेणिर्न शिशुर्दन्मक्षू स्थिरं शेवृधं सूत माता ॥२०॥

अध । आसु । मंद्रः । अरतिः । विभाऽवा । अव । स्यति । द्विऽवर्तनिः । वनेषाट् ।
ऊर्ध्वा । यत् । श्रेणिः । न । शिशुः । दन् । मक्षु । स्थिरं । शेऽवृधं । सूत । माता ॥२०॥

अधाथासु चतसृषु दिक्षु मंद्रो मोदमानोऽरतिर्गंता विभावा दीप्तिमान् द्विवर्त-निर्द्वयोर्लोकयोर्गंता वनेषाट् वने काष्ठानामभिभविताग्निरव स्यति । अवसन्नो भवति यागार्थं । यच्च योऽग्निरूर्ध्वोन्मुखा श्रेणिर्न शिशुः शंसनीयो मक्षु शीघ्रं दन् शत्रून्दमयति तमिमं स्थिरं निश्चलं शेवृधं सुखस्य वर्धकं मातारणिः सूत । यज्ञे जनयामास ॥

॥ इत्यष्टमस्य प्रथम एकोनत्रिंशो वर्गः ॥

॥ अथैकविंशी ॥

अधा गाव उपमातिं कनाया अनु श्वांतस्य कस्य चित्परेयुः ।
श्रुधि त्वं सुद्रविणो नस्त्वं याळाश्वघ्नस्य वावृधे सूनृताभिः ॥२१॥

अर्ध। गार्वः। उप॑ऽमातिं। कनायाः। अनु। श्वांतस्य। कस्यं। चित्। परां। ईयुः।
श्रुधि। त्वं। सुऽद्रविणः। नः। त्वं। याट्। आश्वऽघ्नस्यं। ववृधे। सूनृताभिः ॥२१॥

अध संप्रति कस्य चिच्छ्रांतस्य प्रवृद्धस्य श्रांतस्य वा। आत्मनो निर्देशः। ईदृशस्य नाभानेदिष्ठस्य कनायाः कमनीयायाः स्तुतेर्गावो वाचः। यद्वा वाचः स्तुतयः कनायाः कमनीयायाः स्तुतेरुपमातिमुपमानभूतमिंद्रमनु परेयुः। अनु परागच्छंति। हे सुद्रविणः सुधनाग्ने त्वं श्रुधि। शृणु। नोऽस्माकमिममिंद्रं याट्। अयाट्। यज। त्वं चाश्वघ्नस्य। अश्वघ्नोऽश्वमेधयाजी मनुः। तस्य पुत्रस्य मम सूनृताभिः स्तुतिभिर्ववृधे। वर्धसे। पुरुषव्यत्ययः। अथवायं वर्धत इति परोक्षेण निर्देशः॥

॥ अथ द्वाविंशी ॥

अध त्वमिंद्र विद्ध्य१स्मान्महो राये नृपते वज्रबाहुः।
रक्षा च नो मघोनः पाहि सूरीननेहसस्ते हरिवो अभिष्टौ ॥२२॥

अर्ध। त्वं। इंद्र। विद्धि। अस्मान्। महः। राये। नृऽपते। वज्रंऽबाहुः।
रक्षं। च। नः। मघोनः। पाहि। सूरीन्। अनेहसः। ते। हरिऽवः। अभिष्टौ ॥२२॥

हे इंद्र अधाधुना वज्रबाहुस्त्वमस्मान्महो महते राये धनाय विद्धि। जानीहि। हे इंद्र मघोनो हविष्मतः सूरीन् स्तुतिप्रेरकान्नोऽस्मान्रक्ष च। हे हरिवो हरिभ्यां तद्वन्निंद्र ते तवाभिष्टावभिगमनेऽनेहसोऽपापाः स्यामेति शेषः॥

॥ अथ त्रयोविंशी ॥

अध यद्राजाना गविष्टौ सरत्सरण्युः कारवे जरण्युः।
विप्रः प्रेष्ठः स ह्येषां बभूव परा च वक्षदुत पर्षदेनान् ॥२३॥

अर्ध। यत्। राजाना। गोऽइष्टौ। सरत्। सरण्युः। कारवे। जरण्युः।
विप्रः। प्रेष्ठः। सः। हि। एषां। बभूव। परा। च। वक्षत्। उत। पर्षत्। एनान् ॥२३॥

हे राजाना राजमानौ मित्रावरुणौ अधाधुना सत्रसमाप्तौ यद्यस्माद्गविष्टौ गवामेषणायां सत्यां सरण्युः सरणशीलो यमः सरत् गच्छति कारवे कर्माणि कुर्वतेऽगिरसां गणाय किमिच्छन्। जरण्युः। तस्मा अंगिरसां गणाय स्तुतिमिच्छन् तस्मात्स विप्रो नाभानेदिष्ठ एषामंगिरसां प्रेष्ठः प्रियतमो बभूव।

भवतु। हीति पूरणः। तेषां कर्तव्यं परा च वक्षत्। परावहतु। उतापि चैनानंगिरसः पर्षत् पारयत्वित्यात्मन एवाशास्ते ॥

॥ अथ चतुर्विंशी ॥

अधा न्वस्य जेन्यस्य पुष्टौ वृथा रेभंत ईमहे तदू नु।
सरण्युरस्य सूनुरश्वो विप्रश्चासि श्रवसश्च सातौ ॥२४॥

अध। नु। अस्य। जेन्यस्य। पुष्टौ। वृथा। रेभंतः। ईमहे। तत्। ऊं इति। नु।
सरण्युः। अस्य। सूनुः। अश्वः। विप्रः। च। असि। श्रवसः। च। सातौ ॥२४॥

अनया वरुणं पृथक् स्तौति। अधाथ नु क्षिप्रमस्य जेन्यस्य जयशीलस्य स्तुत्या जेतव्यस्य वा तत्स्वभूतं गवादिधनं पुष्टौ पोषे निमित्ते सति तस्य पुष्ट्यर्थं वा वृथानायासेन रेभंतः स्तुवंतो नु क्षिप्रमीमहे। याचामहे। सरण्युः शीघ्रसरणशीलोऽश्वोऽस्य वरुणस्य सूनुः पुत्रः। वरुणाद्ध्यश्व उत्पन्नः। अथ प्रत्यक्षकृतः। हे वरुण त्वं विप्रश्चासि विप्रवत्पूज्यः शुद्धो वा भवसि। श्रवसश्चान्नस्य सातौ लाभेऽस्माकमन्नलाभाय प्रवृत्तश्च भवसि ॥

॥ अथ पंचविंशी ॥

युवोर्यदि सख्यायास्मे शर्धाय स्तोमं जुजुषे नमस्वान्।
विश्वत्र यस्मिन्ना गिरः समीचीः पूर्वीव गातुर्दाशत्सूनृतायै ॥२५॥

युवोः। यदि। सख्याय। अस्मे इति। शर्धाय। स्तोमं। जुजुषे। नमस्वान्।
विश्वत्र। यस्मिन्। आ। गिरः। संऽईचीः। पूर्वीऽइव। गातुः। दाशत्। सूनृतायै ॥२५॥

हे मित्रावरुणौ युवोर्युवयोः शर्धाय बलवतेऽस्मे अस्माकं सख्याय। यद्वा युवयोः सख्यायास्मे अस्माकं शर्धाय बलाय च यदि नमस्वानन्नवानध्वर्युः स्तोत्रवान्होता वा स्तोमं जुजुषे सेवते। यस्मिन्सख्ये सिद्धे सति विश्वत्र विश्वस्मिञ्जनपदे गिरोऽंगिरसां संबंधिन्यः समीचीः समीच्य आ गच्छंतीति शेषः। उदाराणां गृह इदं गृहाणेदं गृहाणेत्येवंरूपाः श्रूयंत इत्यर्थः। यद्वा यागानुष्ठातॄणां स्तुतिगिर आगच्छंतीति। पूर्वीव गातुः प्राची दिगिव। सा यथा गच्छतां सुखं प्रयच्छति तद्वत्। यद्वा पूर्वी पुरा प्रसिद्धा पुरातनीव गातुः सरणिरिव। सा यथा गच्छतां सुखं प्रयच्छति तद्वत्सूनृतायै प्रियसत्यरूपायै स्तुतिवाचे दाशत्। प्रयच्छतु॥

॥ अथ षड्विंशी ॥

स गृणानो अद्भिर्देववानिति सुबंधुर्नमसा सूक्तैः ।
वर्धदुक्थैर्वचोभिरा हि नूनं व्यध्वैति पयस उस्रियायाः ॥२६॥

सः । गृणानः । अत्ऽभिः । देवऽवान् । इति । सुऽबंधुः । नमसा । सुऽउक्तैः ।
वर्धत् । उक्थैः । वचःऽभिः । आ । हि । नूनं । वि । अध्वा । एति । पयसः । उस्रियायाः ॥२६॥

देवताभिर्देववान् सुबंधुः शोभनबंधनः स वरुण इतीत्थंकृतप्रकारेण नमसा नमस्कारेण सूक्तैश्च गृणानः स्तूयमानः सन्वर्धत् । वर्धतां । उक्थैर्वचोभिरुच्यमानैः प्रशस्तैर्वा स्तुतिवचोभिर्नूनमिदानीमा गच्छत्विति शेषः । हीति पूरणः । तस्य यागार्थमुस्रियाया गोः पयसोऽध्वा मार्गो व्येति । स्तनाग्राणि क्षरंतीत्यर्थः ॥

॥ अथ सप्तविंशी ॥

त ऊ षु णो महो यजत्रा भूत देवास ऊतये सजोषाः ।
ये वाजाँ अनयता वियंतो ये स्था निचेतारो अमूराः ॥२७॥

ते । ऊं इति । सु । नः । महः । यजत्राः । भूत । देवासः । ऊतये । सऽजोषाः ।
ये । वाजान् । अनयत । विऽयंतः । ये । स्थ । निऽचेतारः । अमूराः ॥२७॥

अनयर्षिरंगिरस आशास्ते । हे यजत्रा यष्टव्या देवासो देवाः ते यूयं । ऊ इति पूरणः । महो महते नोऽस्माकमूतये रक्षणाय सजोषाः संगता भूत । भवत । ये च यूयमंगिरसो मह्यं वाजानन्नान्यनयत प्रापयत वियंतः सततमुक्थाय विविधं गच्छंतः संतः । ये च यूयममूराः षष्ठाहःप्रयोगमौढ्यरहिता इत्यर्थः । तादृशा निचेतारो गवां विवेक्तारः स्थ भवथ ते सजोषा भूतेति समन्वयः ॥

॥ इत्यष्टमस्य प्रथमे त्रिंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टकस्य प्रथमोऽध्यायः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥
व्याख्याय प्रथमं विद्वानष्टमस्याष्टकस्य सः।
अध्यायं सायणामात्यो द्वितीयं व्याचिकीर्षति ॥

तत्र ये यज्ञेनेत्येकादशर्चमनुवाकापेक्षया द्वितीयं सूक्तं। मानवस्य नाभानेदिष्ठस्यार्षं। आदितश्चतस्रो जगत्यः। पंचम्यनुष्टुप्। षष्ठी बृहती। सप्तमी सतोबृहती। अष्टमीनवम्यावनुष्टुभौ। दशमी गायत्री। एकादशी त्रिष्टुप्। आदितः षण्णां विश्वे देवा अंगिरसो वा देवता। सप्तमी वैश्वदेवी। अष्टम्याद्यासु चतसृषु सावर्णेर्महाराजस्य दानं स्तूयते। अतस्तास्तद्देवताकाः। तथा चानुक्रम्यते। ये यज्ञेनैकादशाद्याः षळंगिरसां स्तुतिर्वात्या त्रिष्टुप्पंचम्यनुष्टुप्प्रगाथोऽनुष्टुभौ गायत्री चतस्रोऽंत्याः सावर्णेर्दानस्तुतिरिति ॥ षष्ठेऽहनि वैश्वदेवशस्त्र एतत्सूक्तं। सूचितं च। इदमित्था रौद्रमिति प्रागुपोत्तमाया ये यज्ञेनेत्यावपते। आ॰८.१.। इति ॥

॥ तत्र प्रथमा ॥

ये य॒ज्ञेन॒ दक्षि॑णया॒ सम॑क्ता॒ इंद्र॑स्य स॒ख्यम॑मृत॒त्वमा॑न॒श।
तेभ्यो॑ भ॒द्रम॑ंगिरसो वो अस्तु॒ प्रति॑ गृभ्णीत मान॒वं सु॑मेधसः ॥१॥
ये। य॒ज्ञेन॑। दक्षि॑णया। सम्ऽअ॑क्ताः। इंद्र॑स्य। स॒ख्यं। अ॒मृ॒त॒ऽत्वं। आ॒न॒श।
तेभ्यः॑। भ॒द्रं। अं॒गि॒र॒सः॒। व॒ः। अ॒स्तु॒। प्रति॑। गृ॒भ्णी॒त॒। मा॒न॒वं। सु॒ऽमे॒ध॒सः॒ ॥१॥

नाभानेदिष्ठः स्वपित्रा मनुनाभ्यनुज्ञातः सत्त्रमासीनानंगिरसोऽभ्येत्य मां प्रतिगृह्णीत युष्मभ्यं यज्ञं प्रज्ञापयामीति यदुक्तवान् तदुच्यते। इतिहासस्त्विदमित्थेति पूर्वसूक्ते नाभानेदिष्ठं शंसति नाभानेदिष्ठं वै मानवमिति ब्राह्मणानुसारेण मनुः पुत्रेभ्यो दायं व्यभजदिति तैत्तिरीयब्राह्मणानुसारेण च सप्रपंचमभिहितः। तथा चास्या ऋचोऽयमर्थः। यज्ञेन यजनीयेन हविषा दक्षिणयर्त्विग्भ्यो देयया समक्ताः संगता येऽहीनैकाहसत्त्राणि कुर्वंतो यूयमिंद्रस्य सख्यं सखिकर्मात एवामृतत्वममरणधर्मं देवत्वमानशानशिध्वे प्राप्ताः स्थ। अश्नोतेर्लिटि मध्यमे व्यत्ययेन बहुवचनं। अश्नोतेश्चेति नुडागमः। यद्वृत्तयोगादनिघातः। हेऽंगिरसः तेभ्यो वो युष्मभ्यं भद्रं कल्याणं कर्मास्तु। हे सुमेधसः सुप्रज्ञा

हे अंगिरसः ते यूयमिदानीमागतं मानवं मनोः पुत्रं मां प्रति गृभ्णीत। प्रतिगृह्णीत। मयि प्रतिगृहीते सति यज्ञं साधु करिष्यामीति तदर्थं प्रतिगृह्णीत ॥

॥ अथ द्वितीया ॥

य उदाजन्पितरो गोमयं वस्वृतेनाभिंदन्परिवत्सरे वलं।
दीर्घायुत्वमंगिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥२॥

ये। उत्ऽआजन्। पितरः। गोऽमयं। वसु। ऋतेन। अभिंदन्। परिवत्सरे। वलं।
दीर्घायुऽत्वं। अंगिरसः। वः। अस्तु। प्रति। गृभ्णीत। मानवं। सुऽमेधसः ॥२॥

हे अंगिरसः पितरोऽस्माकं पूर्वजत्वेन पितृभूता ये यूयं गोमयं गवात्मकं पणिभिरपहृतं वसु धनमुदाजन् तैरधिष्ठितात्पर्वतादुद्गमयन्। किंच ऋतेन सत्यभूतेन यज्ञेन परिवत्सरे पर्यागते वत्सरे संपूर्णे। सत्रांत इत्यर्थः। तत्र वलं वलनामानं गवामपहर्तारमसुरमभिंदन् व्यनाशयन् तेभ्यो वो युष्मभ्यं दीर्घायुत्वं प्रभूतजीवनमस्तु। शेषं पूर्ववत् ॥

॥ अथ तृतीया ॥

य ऋतेन सूर्यमारोहयन् दिव्यप्रथयन्पृथिवीं मातरं वि।
सुप्रजास्त्वमंगिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥३॥

ये। ऋतेन। सूर्यं। आ। अरोहयन्। दिवि। अप्रथयन्। पृथिवीं। मातरं। वि।
सुप्रजाःऽत्वं। अंगिरसः। वः। अस्तु। प्रति। गृभ्णीत। मानवं। सुऽमेधसः ॥३॥

हे अंगिरसः ये भवंत ऋतेन सत्यभूतेन यज्ञेन दिवि द्युलोके सूर्यं सुष्ठु सर्वस्य प्रेरकमादित्यमारोहयन् अस्थापयन् किंच मातरं सर्वेषां निर्मात्रीं पृथिवीं व्यप्रथयन् प्रसिद्धामकुर्वन् सत्रादिकर्मकरणेन तेभ्यो युष्मभ्यं सुप्रजास्त्वं सुपुत्रत्वमस्तु। नित्यमसिच् प्रजामेधयोरित्यसिच्समासांतः। तस्माद्भावप्रत्ययः ॥

॥ अथ चतुर्थी ॥

अयं नाभा वदति वल्गु वो गृहे देवपुत्रा ऋषयस्तच्छृणोतन।
सुब्रह्मण्यमंगिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥४॥

अयं। नाभा। वदति। वल्गु। वः। गृहे। देवऽपुत्राः। ऋषयः। तत्। शृणोतन।
सुऽब्रह्मण्यं। अंगिरसः। वः। अस्तु। प्रति। गृभ्णीत। मानवं। सुऽमेधसः ॥४॥

हे देवपुत्रा देवानां पुत्रा अग्नेः पुत्रा ऋषयोऽतींद्रियार्थस्य द्रष्टारो हेऽंगिरसोऽयं नाभा नाभानेदिष्ठः पुरोवर्ती जनो वो युष्माकं गृहे गृहभूते यज्ञे वल्गु कल्याणं वचो वदति। तद्वाक्यं यूयं शृणोतन। महतादरेण शृणुत। श्रु श्रवणे। तप्तनप्तनथनाश्चेति तनबादेशः। तेभ्यो युष्मभ्यं सुब्रह्मण्यं शोभनं ब्रह्मवर्चसमस्तु। इदानीमागतं मानवं मां प्रति गृभ्णीत। प्रतिगृह्णीत ॥

॥ अथ पंचमी ॥

विरूपास इदृषयस्त इद्गंभीरवेपसः।

ते अंगिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥५॥

विऽरूपासः। इत्। ऋषयः। ते। इत्। गंभीरऽवेपसः।

ते। अंगिरसः। सूनवः। ते। अग्नेः। परि। जज्ञिरे ॥५॥

परोक्षतयर्षिराह। ऋषयः कर्मणां द्रष्टार एत ऋषयो विरूपास इदन्योन्यं वर्णतो रूपतश्च नानारूपा भवंति। त इत् त एवामी अंगिरसो गंभीरवेपसः। वेप इति कर्मनाम। गंभीरकर्माणो भवंति। त इमेऽंगिरसः सूनवः पुत्राः खलु। तदेवाह। त इमेऽंगिरसोऽग्नेः परि जज्ञिरे। सर्वतो जाताः प्रादुर्भूताः। येऽंगारा आसंस्तेऽंगिरसोऽभवन्निति ब्राह्मणं। अत्र निरुक्तं च द्रष्टव्यं ॥

॥ इत्यष्टमस्य द्वितीये प्रथमो वर्गः ॥

॥ अथ षष्ठी ॥

ये अग्नेः परि जज्ञिरे विरूपासो दिवस्परि।

नवग्वो नु दशग्वो अंगिरस्तमः सचा देवेषु मंहते ॥६॥

ये। अग्नेः। परि। जज्ञिरे। विऽरूपासः। दिवः। परि।

नवऽग्वः। नु। दशऽग्वः। अंगिरःऽतमः। सचा। देवेषु। मंहते ॥६॥

विरूपासो विविधरूपा येऽंगिरसो दिवस्परि द्युलोकादग्नेः परि जज्ञिरे परितो जाताः। यद्वा दिवस्परि। परिः पंचम्यर्थद्योतकः। स्वतेजसा दीप्यमानादग्नेर्जाताः। तेषां मध्ये नवग्वो दशग्वश्चांगिरस्तमोऽंगिरसां वरिष्ठः। सत्रमासीनानामंगिरसां मध्ये केचन नवसु मास्सु कर्म कृत्वोदतिष्ठन् केचन दशसु मास्स्वित्येवमंगिरसामयनमुक्तं। तेषामग्निर्नवग्वश्च दशग्वश्चोक्तः। तादृशो देवेषु सचा सहावस्थितः सोऽग्निर्मंहते। मह्यं धनं प्रयच्छति। मंहतिर्दानकर्मा ॥

॥ अथ सप्तमी ॥

इंद्रेण युजा निः सृजंत वाघतो व्रजं गोमंतमश्विनं ।
सहस्रं मे ददतो अष्टकर्ण्य१ःश्रवो देवेष्वक्रत ॥७॥
इंद्रेण । युजा । निः । सृजंत । वाघतः । व्रजं । गोऽमंतं । अश्विनं ।
सहस्रं । मे । ददतः । अष्टऽकर्ण्यः । श्रवः । देवेषु । अक्रत ॥७॥

वाघतः कर्मणां वोढारो विश्वे देवा अंगिरसो वेंद्रेण युजा सहायेन निःसृजंत । निरगमयन् । किं । गोमंतं गोयुक्तमश्विनमश्ववंतं पणिभिरवरुद्धं व्रजं । ते मे मां प्रति सहस्रं सहस्रसंख्याकं धनं सत्त्रपरिवेषणमष्टकर्ण्यः । अष्ट इति अशू व्याप्तौ निष्ठायां रूपं । विस्तृतकर्णाः । उपलक्षनमेतत् । व्याप्तसर्वावयवा गाश्च ददतो मह्यं प्रयच्छंतो देवेष्विंद्रादिषु श्रवो हविर्लक्षणमन्नं कीर्तिं वाक्रत । अकृषत । करोतेर्लुङि मंत्रे घसेति च्लेर्लुक् । एवं नाभानेदिष्ठेनांगिरसः स्तुतास्तस्मै धनं प्रादुः । तदुक्तं शौनकेन । ऋषयोऽंगिरसस्तुष्टा यद्दुर्मानवाय तु । तत्पुण्याय च कर्माणि ये यज्ञेनेत्यकीर्तयत् ॥

उत्तराभिश्चतसृभिरस्मै मानवायर्षये सावर्णिना यद्दत्तं तत्प्रशस्यते । तदप्युक्तं शौनकेन । सावर्णिना च यद्दत्तं मानवाय महद्वसु । तदुक्तं सूक्तशेषेण प्र नूनं जायतामिति ॥

॥ अथाष्टमी ॥

प्र नूनं जायतामयं मनुस्तोक्मेव रोहतु ।
यः सहस्रं शताश्वं सद्यो दानाय मंहते ॥८॥
प्र । नूनं । जायतां । अयं । मनुः । तोक्मऽइव । रोहतु ।
यः । सहस्रं । शतऽअश्वं । सद्यः । दानाय । मंहते ॥८॥

अयं सावर्णिर्मनुर्नूनं क्षिप्रं प्र जायतां । प्रजातो भवतु धनादिभिः पुत्रादिभिश्च रोहतु । प्रादुर्भवतु । तत्र दृष्टांतः । तोक्मेव । यथा जलक्लिन्नं वीजं प्रादुर्भवत्येवं कर्मफलसंयुक्तः स मनुः पुत्रादिभी रोहतु । योऽयं मनुः शताश्वं बह्वश्वसंयुक्तं सहस्रं गवां सद्यस्तदानीमेव दानाय मंहते । अस्मा ऋषये दातुं प्रेरयति ॥

॥ अथ नवमी ॥

न तमश्नोति कश्चन दिव इव सान्वारभं ।

सावर्ण्यस्य दक्षिणा वि सिंधुरिव पप्रथे ॥ ९ ॥

न । तं । अश्नोति । कः । चन । दिवःऽइव । सानु । आऽरभं ।

सावर्ण्यस्य । दक्षिणा । वि । सिंधुःऽइव । पप्रथे ॥ ९ ॥

तं सावर्णिं मनुं कश्चन कश्चिदप्यारभमारब्धुं स्वकर्मणा नाश्नोति । न व्याप्नोति । यथा मनुः प्रयच्छति तथान्यो दातुं न शक्नोतीत्यर्थः । कथंस्थितं । दिव इव द्युलोकस्य सानु समुच्छ्रितं तेजसा कैश्चिदप्यप्रधृष्यमादित्यमिव स्थितं । आरभं । शकि णमुल्कमुलाविति कमुल् । तस्य सावर्ण्यस्य मनोरियं गवादिदक्षिणा सिंधुरिव स्यंदमाना नदीव पृथिव्यां पप्रथे । विप्रथते । विस्तीर्णा भवति ॥

॥ अथ दशमी ॥

उत दासा परिविषे स्मद्दिष्टी गोपरीणसा ।

यदुस्तुर्वश्च मामहे ॥ १० ॥

उत । दासा । परिऽविषे । स्मद्दिष्टी इति स्मत्ऽदिष्टी । गोऽपरीणसा ।

यदुः । तुर्वः । च । ममहे ॥ १० ॥

उतापि च स्मद्दिष्टी कल्याणादेशिनौ गोपरीणसा गोपरिणसौ गोभिः परिवृतौ बहुगवादियुक्तौ दासा दासवत्प्रेष्यवत्स्थितौ तेनाधिष्ठितौ यदुश्च तुर्वश्चैतन्नामकौ राजर्षी परिविषेऽस्य सावर्णेर्मनोर्भोजनाय ममहे । पशून्प्रयच्छतः । प्रत्येकमन्वयादेकवचनं ॥

॥ अथैकादशी ॥

सहस्रदा ग्रामणीर्मा रिषन्मनुः सूर्येणास्य यतमानैतु दक्षिणा ।

सावर्णेर्देवाः प्र तिरंत्वायुर्यस्मिन्नश्रांता असनाम वाजं ॥ ११ ॥

सहस्रऽदाः । ग्रामऽनीः । मा । रिषत् । मनुः । सूर्येण । अस्य । यतमाना । एतु । दक्षिणा ।

सावर्णेः । देवाः । प्र । तिरंतु । आयुः । यस्मिन् । अश्रांताः । असनाम । वाजं ॥ ११ ॥

सहस्रदा गवादीनां सहस्रस्य दाता ग्रामणीर्ग्रामाणां नेता कर्ता जनपदानामयं

मनुर्मा रिषत् न कैश्चिदपि रिष्टो हिंसितो भवतु। यद्वा कर्मनेतृनस्मान्मा हिनस्तु किंतु धनादिदानेन पूजयतु। अस्य यतमाना गच्छंती दक्षिणा सूर्येण सहैतु। संगच्छतां। त्रिषु लोकेषु प्रसिद्धा भवत्वित्यर्थः। तस्यास्य सावर्णेः सवर्णपुत्रस्य मनोर्देवा इंद्रादय आयुर्जीवनं प्र तिरंतु। प्रवर्धयंतु। अश्रांताः कर्मस्वनलसाः सर्वं कर्म कुर्वंतो वयं यस्मिन्मनौ वाजं गोलक्षणमन्नमसनाम। संभजेमहि। नाभानेदिष्ठोऽहमलभ इत्याशास्ते ॥

॥ इत्यष्टमस्य द्वितीये द्वितीयो वर्गः ॥

परावतो य इति सप्तदशर्चं तृतीयं सूक्तं प्लतेः पुत्रस्य गयस्यार्षं। षोडशीसप्तदश्यौ त्रिष्टुभौ। पंचदशी त्रिष्टुब्जगती वा। शिष्टाश्चतुर्दश जगत्यः। स्वस्ति नः पथ्यास्विति द्वे पथ्यास्वस्तिदेवताके। शिष्टा वैश्वदेव्यः। तथा चानुक्रांतं। परावतस्त्यूना गयः प्लातो द्वित्रिष्टुबंतं तु स्वस्ति नस्त्रिष्टुब्वा सह चोत्तरया पथ्यास्वस्तिदेवत्येति॥ पृष्ठ्याभिप्लवयोस्तृतीयेऽहनि वैश्वदेव एतत्सूक्तं वैश्वदेवं निविद्धानं। सूचितं च। अनश्वो जातः परावतो य इति वैश्वदेवं। आ॰ ७.७.। इति॥

॥ तत्र प्रथमा ॥

परावतो ये दिधिषंत आप्यं मनुंप्रीतासो जनिमा विवस्वंतः।
ययातेर्ये नंहुष्यस्य बर्हिषि देवा आसंते ते अधि ब्रुवंतु नः ॥१॥
पराऽवतः। ये। दिधिषंते। आप्यं। मनुंऽप्रीतासः। जनिम। विवस्वंतः।
ययातेः। ये। नहुष्यस्य। बर्हिषि। देवाः। आसंते। ते। अधि। ब्रुवंतु। नः ॥१॥

ये देवाः परावतो दूरदेशादागत्याप्यं ज्ञातेयं मनुष्यैः सह बंधुत्वं दिधिषंते धारयंति। यद्वा हविषां प्रदातृभिर्मनुष्यैः सह सख्यं कुर्म इति परस्परं शब्दायंते॥ धिष शब्दे। जौहोत्यादिकः। छांदसो ऱ्हस्यांतादेशः। धिष धारण इति केश्चिदप्युपगम्यते॥ उक्तार्थमेव विशिनष्टि। मनुप्रीतासो मनुष्यैः प्रीता देवा विवस्वतो विवस्वत्पुत्रस्य मनोर्जनिम जन्मानि मनुष्यान्धारयंति। किंच ये देवा नहुष्यस्य नहुषपुत्रस्य ययातेरेतन्नामकस्य राजर्षेर्बर्हिषि यज्ञ आसत उपविशंति ते देवा नोऽस्मानधि ब्रुवंतु। धनादिप्रदानेनास्मानधिकं वदंतु। पूजयंत्वित्यर्थः॥

॥ अथ द्वितीया ॥

विश्वा हि वो नमस्यानि वंद्या नामानि देवा उत यज्ञियानि वः ।
ये स्थ जाता अदितेरद्भ्यस्परि ये पृथिव्यास्ते म इह श्रुता हवं ॥२॥
विश्वा । हि । वः । नमस्यानि । वंद्या । नामानि । देवाः । उत । यज्ञियानि । वः ।
ये । स्थ । जाताः । अदितेः । अत्ऽभ्यः । परि । ये । पृथिव्याः । ते । मे । इह । श्रुत । हवं ॥२॥

हे देवा इंद्रादयः । हिरवधारणे । वो युष्माकमेव नामानि नमनीयानि विश्वा सर्वाणि शरीराणि नमस्यानि नमस्कारार्हाणि भवंति वंद्या वंद्यानि स्तोतव्यानि च भवंति । ये यूयमदितेरदीनाद्युलोकादद्भ्यः । अंतरिक्षनामैतत् । अंतरिक्षात् । परिः पंचम्यर्थद्योतकः । पृथिव्याश्च जाताः प्रादुर्भूताः स्थ भवथ ते यूयमिहास्मिन्यज्ञ आगत्य मे मदीयं हवमाह्वानं श्रुत । शृणुत ॥

अग्निष्टोमे वैश्वदेवशस्त्रे येभ्यो मातेत्येषा धाय्या । सूत्रितं च । अयं वेनश्चोदयत्पृश्निगर्भा येभ्यो माता मधुमत् । आ॰ ५.१८. । इति ॥

॥ सैषा सूक्ते तृतीया ॥

येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।
उक्थशुष्मान्वृषभरान्स्वप्नसस्ताँ आदित्याँ अनु मदा स्वस्तये ॥३॥
येभ्यः । माता । मधुऽमत् । पिन्वते । पयः । पीयूषं । द्यौः । अदितिः । अद्रिऽबर्हाः ।
उक्थऽशुष्मान् । वृषऽभरान् । सुऽअप्नसः । तान् । आदित्यान् । अनु । मद । स्वस्तये ॥३॥

माता सर्वस्य निर्मात्री पृथिवी येभ्यो देवेभ्यो देवार्थं मधुमन्माधुर्योपेतं पयः सारभूतं क्षीरं पिन्वते क्षरति । तथादितिरदीनाद्रिबर्हा मेघैः परिवृढा प्रवृद्धा परिवृद्धमेघा वा द्यौश्च पीयूषं पिन्वते । द्यावापृथिव्यौ हविरुत्पादयत इत्यर्थः । ऋषिरात्मानं संबोध्याह । उक्थशुष्मानतिबलान् वृषभरान्वृष्टेराहर्तॄन् । हृग्रहोर्भ इति भः । स्वप्नसः सुकर्मणस्तानादित्यानदितेः पुत्रान्देवान् स्वस्तयेऽविनाशायानु मद । अनुस्तुहि । माद्यतेर्लोटि व्यत्ययेन शप् । मंदतेर्वा स्तुत्यर्थस्यानित्यमागमशासनमिति नुमभावः ॥

॥ अथ चतुर्थी ॥

नृचक्षसो अनिमिषंतो अर्हणा बृहद्देवासो अमृतत्वमानशुः ।
ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥४॥
नृऽचक्षसः । अनिऽमिषंतः । अर्हणा । बृहत् । देवासः । अमृतऽत्वं । आनशुः ।
ज्योतिःऽरथाः । अहिऽमायाः । अनागसः । दिवः । वर्ष्माणं । वसते । स्वस्तये ॥४॥

नृचक्षसः कर्मनेतॄणां मनुष्याणां द्रष्टारोऽत एवानिमिषंतो निमेषमकुर्वाणाः सर्वदा जागरूका देवासो देवा अर्हणा लोकस्य परिचरणार्थं स्तोतव्यत्वाय बृहद्बृंहितममृतत्वममरणधर्ममानशुः । प्राप्ताः । देवाः खलु मनुष्यैः पूज्याः । तस्मात्पूजाहेतुं देवत्वमानशिरे । अत एव ज्योतीरथा दीप्यमानरथोपेता अहिमायाः कैश्चिदप्यहंतव्यप्रज्ञा अनागसः पापरहिता आदित्या दिवो द्युलोकस्य वर्ष्माणं नाभिस्थानं समुच्छ्रितं देशं स्वस्तयेऽविनाशाय लोकस्य क्षेमकरणार्थं वसते । अधिवसंति । यद्वा स्वतेजसाच्छादयंति ॥

॥ अथ पंचमी ॥

सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयं ।
ताँ आ विवास नमसा सुवृक्तिभिर्महो आदित्याँ अदितिं स्वस्तये ॥५॥
संऽराजः । ये । सुऽवृधः । यज्ञं । आऽययुः । अपरिऽह्वृताः । दधिरे । दिवि । क्षयं ।
तान् । आ । विवास । नमसा । सुवृक्तिऽभिः । महः । आदित्यान् । अदितिं । स्वस्तये ॥५॥

सम्राजः सर्वेषां राजानः स्वतेजोभिः सम्यग्राजमानाः सुवृधः सुवृद्धा ये देवा यज्ञमाययुरायांति सोमादिहविर्भक्षणार्थं । ततोऽपरिह्वृताः कैश्चिदप्यहिंसिता ये देवा दिवि द्युलोके क्षयं निवासं दधिरे विदधति कुर्वंति । ऋषिरात्मानमाह । महो महतो गुणाधिक्येनादित्यानदितेः पुत्रान् तान्प्रसिद्धान्देवान् अदितिं तेषां मातरमेतन्नामिकां च स्वस्तयेऽविनाशाय नमसा हवीरूपेणान्नेन सुवृक्तिभिः शोभनाभिः स्तुतिभिश्चा विवास । आभिमुख्येन परिचर । विवासतिः परिचरणकर्मा ॥

॥ इत्यष्टमस्य द्वितीये तृतीयो वर्गः ॥

॥ अथ षष्ठी ॥

को वः स्तोमं राधति यं जुजोषथ विश्वे देवासो मनुषो यति ष्ठन ।
को वोऽध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये ॥ ६ ॥
कः । वः । स्तोमं । राधति । यं । जुजोषथ । विश्वे । देवासः । मनुषः । यति । स्थन ।
कः । वः । अध्वरं । तुविऽजाताः । अरं । करत् । यः । नः । पर्षत् । अति । अंहः । स्वस्तये ॥ ६ ॥

ऋषिर्देवान्प्रति बहुधा वितर्कयति । हे देवा वो युष्माकं कः स्तोता स्तोमं त्रिवृत्पंचदशादिलक्षणं राधति संसाधयति । न कश्चिदस्तीत्यर्थः । यद्वा मदन्यः को वो युष्मभ्यं स्तोमं करोति यूयं यं स्तोतारं जुजोषथ । सेवध्वे । जुषी प्रीतिसेवनयोः । लेटि शपः श्लुः । अडागमः । किं च हे मनुषो मंतारो ज्ञातारो हे विश्वे देवासो देवा यूयं यति यत्संख्याः स्थन भवथ । यच्छब्दादपि छांदसो डतिर्द्रष्टव्यः । हे तुविजाता धात्रादिविभागेन बहुजनना हे देवा युष्मदर्थं को वा यजमानोऽध्वरं यज्ञमरं करत् अलंकरोति स्तुतिभिर्हविर्भिश्च । मदन्यो नास्तीत्यर्थः । यो यज्ञो नोऽस्मान् स्वस्तयेऽविनाशायांहः पापरूपं मार्गमवैदिकमति पर्षत् अतिपारयति तं यज्ञं को वालंकरोतीति ॥

॥ अथ सप्तमी ॥

येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्त होतृभिः ।
त आदित्या अभयं शर्म यच्छत सुगा नः कर्त सुपथा स्वस्तये ॥ ७ ॥
येभ्यः । होत्रां । प्रथमां । आऽयेजे । मनुः । समिद्धऽअग्निः । मनसा । सप्त । होतृऽभिः ।
ते । आदित्याः । अभयं । शर्म । यच्छत । सुऽगा । नः । कर्त । सुऽपथा । स्वस्तये ॥ ७ ॥

समिद्धाग्निर्हविर्भिः सम्यग्दीप्ताग्निर्मनुर्वैवस्वतो मनुष्याणां प्रथमभावी श्रद्धानेन मनसा सप्त सप्तसंख्याकैर्होतृभिर्वषट्कर्तृभिर्ऋत्विग्भिश्च सह येभ्यो युष्मभ्यं प्रथमां प्रथमं मुख्यं यद्वा सर्वेषां मनुष्याणामग्रे क्रियमाणत्वादाद्यं होत्रां । हूयंते हवींष्यत्रेति होत्रा यज्ञः । तं । यद्वाहूयंते देवाः स्तुतिभिरत्रेति तं यज्ञमायेज आभिमुख्येनेष्टवान् ॥ यजेर्लिटि रूपं । यद्वा लटि लोपस्त आत्मनेपदेष्विति तलोपः । यजिवप्योरलिट्येत्वं वक्तव्यं । पा॰ ६. ४. १२०. ४. । इति वचनादेकारः ॥ हे आदित्या अदितेः पुत्रा हे देवाः ते यूयं नोऽस्मभ्यमभयं शर्म च सुखं प्रयच्छत ।

किंच नोऽस्माकं स्वस्तये क्षेमाय सुपथा सुपथानि शोभनान्वैदिकमार्गान् सुगा सुष्ठु गंतव्यान् कर्त। कुरुत। करोतेर्लोटि बहुलं छंदसीति विकरणस्य लुक्। तबादेशः ॥

॥ अथाष्टमी ॥

य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मंतवः।

ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये ॥८॥

ये। ईशिरे। भुवनस्य। प्रऽचेतसः। विश्वस्य। स्थातुः। जगतः। च। मंतवः।

ते। नः। कृतात्। अकृतात्। एनसः। परि। अद्य। देवासः। पिपृत। स्वस्तये ॥८॥

प्रचेतसः प्रकृष्टज्ञाना मंतवः सर्वस्य वेदितारो ये देवाः स्थातुः स्थावरस्य जगतो जंगमस्य विश्वस्य सर्वस्य भुवनस्य लोकस्येशिर ईश्वरा भवंति। अथ प्रत्यक्षकृतः। हे देवासो देवा य उक्तगुणास्ते यूयं नोऽस्मान्कृतात्कायिकात्पापात् अकृतात्करचरणादिभिरकृतादेनसः किंतु मानसात्पापाच्चाद्यास्मिन्दिने स्वस्तयेऽविनाशायायुषोऽभिवृद्धये पिपृत। पारयत। पापरहितान्कुरुतेत्यर्थः ॥

॥ अथ नवमी ॥

भरेष्विंद्रं सुहवं हवामहेंऽहोमुचं सुकृतं दैव्यं जनं।

अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये ॥९॥

भरेषु। इंद्रं। सुऽहवं। हवामहे। अंहःऽमुचं। सुऽकृतं। दैव्यं। जनं।

अग्निं। मित्रं। वरुणं। सातये। भगं। द्यावापृथिवी इति। मरुतः। स्वस्तये ॥९॥

अंहोमुचमंहसः पापस्य मोचकं सुहवं शोभनाह्वानमिंद्रं भरेषु। भृणंति भर्जयंति विनाशयंति शत्रूनत्रेति भराः संग्रामाः। तेषु हवामहे। रक्षणायाह्वयामः। किंच सुकृतं सुकर्माणं दैव्यं देवसंबंधिनमन्यं जनं चाह्वयामहे। तं जनमुद्दिशति। अग्निं मित्रं वरुणं भगं भजनीयमेतन्नामानं देवं। द्यावापृथिवी द्यावापृथिव्यौ मरुतश्च सातयेऽन्नलाभाय स्वस्तयेऽविनाशाय रक्षणायाह्वयामहे ॥

अदितिदेवताकस्य पशोः सुत्रामाणमित्येषा वपायागस्य याज्या। सूचितं च। अदितिर्द्यौर्जनिष्ट सुत्रामाणं पृथिवीं द्यामनेहसं। आ॰ ३.८.। इति ॥ प्रायणीयेष्टावादित्यस्य हविष एषैवानुवाक्या सैवोदयनीयाया याज्या। सूचितं च। सुत्रामाणं

पृथिवीं द्यामनेहसं महीमू षु मातरं सुव्रतानां। आ०४.३.। इति ॥ प्रयाणेऽनयैव नावमारोहेत्। सूचितं च। सुत्रामाणं पृथिवीं द्यामनेहसमिति नावं। आ० गृ० २. ६.। इति ॥

॥ सैषा सूक्ते दशमी ॥

सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिं ।
दैवीं नावं स्वरित्रामनागसमस्रवंतीमा रुहेमा स्वस्तये ॥१०॥
सुऽत्रामाणं। पृथिवीं। द्यां। अनेहसं। सुऽशर्माणं। अदितिं। सुऽप्रनीतिं।
दैवीं। नावं। सुऽअरित्रां। अनागसं। अस्रवंतीं। आ। रुहेम। स्वस्तये ॥१०॥

द्युलोको नौरूपकतया स्तूयते। सुत्रामाणं सुष्ठु त्रायंतीं पृथिवीं विस्तृतामनेहसं पापरहितां सुशर्माणं शोभनसुखयुक्तामदितिमदीनां सुप्रणीतिं सुप्रणयनां सुष्ठु प्रणेत्रीं दैवीं देवसंबंधिनीं स्वरित्रां शोभनारित्रां जलाहरणशीलदारुयुक्तामनागसं पापरहितामस्रवंतीमगच्छंतीमविनश्वरीं नावं नावमिव स्थितां द्यां स्वस्तयेऽविनाशाय देवत्वप्राप्तय आ रुहेम। वयमारोहेम। रोहतेर्लिङि लिङ्याशिष्यङित्यङ्प्रत्ययः ॥

॥ इत्यष्टमस्य द्वितीये चतुर्थो वर्गः ॥

॥ अथैकादशी ॥

विश्वे यजत्रा अधि वोचतोतये त्रायध्वं नो दुरेवाया अभिहुतः ।
सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये ॥११॥
विश्वे। यजत्राः। अधि। वोचत। ऊतये। त्रायध्वं। नः। दुःऽएवायाः। अभिऽहुतः।
सत्यया। वः। देवऽहूत्या। हुवेम। शृण्वतः। देवाः। अवसे। स्वस्तये ॥११॥

हे यजत्रा यजनीया हे विश्वे सर्वे देवा यूयमूतये रक्षणार्थमधि वोचत। अस्मानधिब्रूत। आभाष्य चाभिहुतोऽभिहिंसित्र्या दुरेवाया दुर्गतेर्नोऽस्मान् त्रायध्वं। यद्येवं कुरुथ तर्हि हे देवाः शृण्वतः स्तोत्राण्यस्माभिरुक्तानि तादृशान्वो युष्मान् सत्यया यथार्थभूतया देवहूत्या। देवा हूयंतेऽनयेति देवहूतिः स्तुतिः। तया वयं हुवेम। आह्वयेम। किमर्थं। अवसे रक्षणाय शत्रुभ्यः स्वस्तये क्षेमाय जीवनाभिवृद्धये च ॥

॥ अथ द्वादशी ॥

अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायतः ।
आरे देवा द्वेषो अस्मद्युयोतनोरु णः शर्म यच्छता स्वस्तये ॥१२॥

अप । अमीवां । अप । विश्वां । अनाहुतिं । अप । अरातिं । दुःऽविदत्रां । अघऽयतः ।
आरे । देवाः । द्वेषः । अस्मत् । युयोतन । उरु । नः । शर्म । यच्छत । स्वस्तये ॥१२॥

हे देवा अमीवां रोगादिकं यद्वा रोगवद्बाधकं शत्रुमस्मत्तो दूरेऽप कुरुत । पृथक्कुरुत । तथा विश्वां सर्वामनाहुतिं देवानामनाह्वानबुद्धिं यद्वा देवानां महाशत्रुं पृथक्कुरुत । किंच अरातिमदानं लोभबुद्धिं यद्वा देवेभ्यो हविषामदातारं शत्रुमप गमयत । अपि च अघायतः पापमिच्छतः शत्रोर्दुर्विदत्रां दुर्विज्ञानं दुष्टां बुद्धिं इत्यं च द्वेषो द्वेष्टॄन् सर्वाञ्छत्रूनस्मदस्मत्त आरे दूरे युयोतन । पृथक्कुरुत । एवं सति यूयं नोऽस्मभ्यमुरु विस्तीर्णं शर्म सुखं स्वस्तये कल्याणाय प्रयच्छत ॥

॥ अथ त्रयोदशी ॥

अरिष्टः स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि ।
यमादित्यासो नयथा सुनीतिभिरति विश्वानि दुरिता स्वस्तये ॥१३॥

अरिष्टः । सः । मर्तः । विश्वः । एधते । प्र । प्रऽजाभिः । जायते । धर्मणः । परि ।
यं । आदित्यासः । नयथ । सुनीतिऽभिः । अति । विश्वानि । दुःऽइता । स्वस्तये ॥१३॥

हे विश्वे देवा विश्वः सर्वो मर्तो स मनुष्योऽरिष्टः कैश्चिदप्यहिंसितः सन् एधते पश्वादिभिर्वर्धते । तथा धर्मणस्परि धारकात्कर्मणोऽनंतरं स मनुष्यः प्रजाभिः पुत्रादिभिः प्र जायते । प्रकर्षेणाविर्भूतो भवति । हे आदित्यास आदित्या देवा यं मनुष्यं सुनीतिभिः सुनयनैर्विश्वानि सर्वाणि दुरिता दुरितानि पापानि तद्रूपाञ्शत्रून्वा स्वस्तये क्षेमायाति नयथ । अतीत्य सन्मार्गं नयथ । स वर्धत इति समन्वयः ॥

॥ अथ चतुर्दशी ॥

यं देवासोऽवथ वाजसातौ यं शूरसाता मरुतो हिते धने ।
प्रातर्यावाणं रथमिंद्र सानसिमरिषंतमा रुहेमा स्वस्तये ॥१४॥

यं । देवासः । अवंथ । वार्जऽसातौ । यं । शूरंऽसाता । मरुतः । हिते । धनें ।
प्रातःऽयावानं । रथं । इंद्र । सानसिं । अरिषंतं । आ । रुहेम । स्वस्तयें ॥१४॥

हे देवासो देवा वाजसातावन्नभजनेऽन्नलाभे वा यं रथमवथ रक्षथ हे मरुतः शूरसाता । संग्रामनामैतत् । शूराः स्यंति खिद्यंतेऽत्रेति शूराः सीयंते विनश्यंते योद्धृभिरत्रेति तस्मिन्युद्धे यं रथं हिते निहिते धने धनमुद्दिश्य । निमित्तात्कर्मसंयोग इति सप्तमी । तदुद्दिश्य रक्षथ । सर्वेषां देवानां मुख्यत्वादिंद्रमेवाभिलक्ष्य वदत्युत्तरार्धेन । हे इंद्र सर्वेषां मुख्य प्रातर्यावाणं । प्रातरेव युद्धं प्रति गंतारं सानसिं संभजनीयमरिषंतं कैश्चिदप्यहिंसितं । यद्वेंद्रसहायानां मरुतामबाधकं तं रथं स्वस्तयेऽस्माकं रक्षणाय वयमा रुहेम । आरोहेम ॥

प्रायणीयेष्टौ पथ्यास्वस्तेर्यागस्य स्वस्ति नः पथ्यास्वित्येषानुवाक्या उत्तरा याज्या । सूचितं च । स्वस्ति नः पथ्यासु धन्वस्विति इ अग्ने नय सुपथा राये अस्मानिति । उदयनीयायामेत एव विपर्यस्ते याज्यानुवाक्ये । सूचितं च । विपरीताश्च याज्यानुवाक्या इति ॥

॥ सैषा सूक्ते पंचदशी ॥

स्वस्ति नः पथ्यासु धन्वसु स्वस्त्य१प्सु वृजने स्वर्वति ।
स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ॥१५॥

स्वस्ति । नः । पथ्यासु । धन्वऽसु । स्वस्ति । अप्ऽसु । वृजनें । स्वःऽवति ।
स्वस्ति । नः । पुत्रऽकृथेषु । योनिषु । स्वस्ति । राये । मरुतः । दधातन ॥१५॥

हे मरुतो मितराविणो देवा नोऽस्माकं पथ्यासु पथियोग्येषु सोदकेषु देशेषु स्वस्ति कल्याणं कुरुत । तथा धन्वसु निरुदकेषु देशेषु स्वस्ति कल्याणमुदकजननलक्षणं कुरुत । तथाप्सूदकेषु स्वस्ति । तथा स्वर्वति सर्वैरायुधैर्युक्ते सेनालक्षणे वृजने शत्रूणामावर्जके बले च कल्याणं कुरुत । नोऽस्माकं पुत्रकृथेषु पुत्राणां कर्तृषूत्पादकेषु स्त्रीणां योनिषु स्वस्ति कल्याणं यथा गर्भा न पतंति तथा क्षेमं कुरुत । किंच नोऽस्माकं राये धनाय गवादिलक्षणाय स्वस्ति क्षेमं दधातन । धत्त । कुरुत ॥

॥ अथ षोडशी ॥

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥१६॥

स्वस्तिः । इत् । हि । प्रऽपथे । श्रेष्ठा । रेक्णस्वती । अभि । या । वामं । एति ।
सा । नः । अमा । सो इति । अरणे । नि । पातु । सुऽआवेशा । भवतु । देवऽगोपा ॥१६॥

या पृथिवी गंतुमुद्युक्तानां प्रपथे प्रकृष्टाय मार्गाय स्वस्तिरित् क्षेमकारिण्येव भवति श्रेष्ठा प्रशस्यतमा रेक्णस्वती धनवती या पृथिवी वामं वननीयं यज्ञमभ्येत्युत्तरवेद्यात्मना वाभिप्राप्नोति सा पृथिवी नोऽस्माकममा । गृहनामैतत् । गृहं रक्षतु । तथा सो सा उ सैवारणे गंतव्ये देशेऽरणेऽरमणेऽरण्यादिके देशे वा नोऽस्मान्नि पातु । नितरां रक्षतु । तथा देवगोपा देवा गोपायितारो यस्याः संति सा पृथिव्यस्माकं स्वावेशा शोभननिवासा भवतु ॥

॥ अथ सप्तदशी ॥

एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।
ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥१७॥

एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः । अदिते । मनीषी ।
ईशानासः । नरः । अमर्त्येन । अस्तावि । जनः । दिव्यः । गयेन ॥१७॥

हे विश्व आदित्याः सर्वे देवा हे अदिते देवानां मातरेतन्नामिके देवि वो युष्मान्मनीषी प्राज्ञः स्तोता प्लतेरेतन्नामकस्यर्षेः सूनुः पुत्रो गयो नाम एवैवमुक्तरीत्यावीवृधत् । स्तुतिभिरवर्धयत् । वर्धतेर्ण्यंतस्य लुङि रूपं । अमर्त्येन मनुष्यधर्मरहितेन स्तुतेन येन देवजनेन नरो मनुष्या ईशानासो धनस्येश्वराः स्वामिनो भवंति स दिव्यो दिवि भवो जनो देवगणो गयेनैतन्नामकेन मयास्तावि । अभिष्टुतोऽभूत् । स्तौतेः कर्मणि लुङि चङि रूपं ॥

॥ इत्यष्टमस्य द्वितीये पंचमो वर्गः ॥

कथेति सप्तदशर्चं चतुर्थं सूक्तं प्लातस्य गयस्यार्षं वैश्वदेवं । यां मे धियमित्येषा द्वादशी षोडशीसप्तदश्यौ च त्रिष्टुभः शेषा जगत्यः । तथा चानुक्रांतं । कथा यां मे त्रिष्टुबिति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

कथा देवानां कतमस्य यामनि सुमंतु नाम शृखतां मनामहे ।
को मृळाति कतमो नो मयस्करत्कतम ऊती अभ्या ववर्तति ॥१॥
कथा । देवानां । कतमस्य । यामनि । सुऽमंतु । नाम । शृखतां । मनामहे ।
कः । मृळाति । कतमः । नः । मयः । करत् । कतमः । ऊती । अभि । आ । ववर्तति ॥१॥

ऋषिर्बहुधात्मानं वितर्कयति । यामनि । यांति गच्छंत्यत्रेति यामा यज्ञः । तस्मिञ्शृखतामस्माभिरुक्तानि स्तोत्राणि देवानां मध्ये कतमस्य देवस्य सुमंतु सुष्ठु मननीयं स्तोतव्यं नाम कथा कथं मनामहे । उच्चारयामः । अस्मान्को वा मृळाति । मृळतिरुपदयाकर्मेति यास्कः । कृपां करोति । कतमो वा नोऽस्माकं मयः सुखं करत् । करोति । कतमो वोती । चतुर्थ्याः पूर्वसवर्णदीर्घः । ऊत्या अस्माकं रक्षणायाभ्या ववर्तति । अभ्यागच्छतीत्यर्थः ॥

॥ अथ द्वितीया ॥

क्रतूयंति क्रतवो हृत्सु धीतयो वेनंति वेनाः पतयंत्या दिशः ।
न मर्डिता विद्यते अन्य एभ्यो देवेषु मे अधि कामा अयंसत ॥२॥
क्रतुऽयंति । क्रतवः । हृत्ऽसु । धीतयः । वेनंति । वेनाः । पतयंति । आ । दिशः ।
न । मर्डिता । विद्यते । अन्यः । एभ्यः । देवेषु । मे । अधि । कामाः । अयंसत ॥२॥

हृत्सु हृदयेषु धीतयो निधातव्या निहिताः क्रतवः प्रज्ञाः क्रतूयंति । अग्निहोत्रादि कर्म कर्तुमिच्छंति । तदेवाह । वेनाः कांताः प्रज्ञा वेनंति । देवान्कामयंते । वेनो वेनतेः कांतिकर्मण इति यास्कः । तथा दिशोऽस्माभिर्निर्दिश्यमानाः प्रेर्यमाणाः कामा आ पतयंति । देवान्फलावाप्तय आगच्छंति । यत एभ्यो देवेभ्योऽन्यो देव एषां कामानां मर्डिता सुखयिता न विद्यते । किं बहुना । देवेष्वधि । अधिशब्दः सप्तम्यर्थद्योतकः । इंद्रादिषु देवेषु मे मदीयाः कामा अयंसत । नियम्यंते । यच्छतेः कर्मणि लुङि रूपं ॥

॥ अथ तृतीया ॥

नरा वा शंसं पूषणमगोह्यमग्निं देवेद्धमभ्यर्चसे गिरा ।
सूर्यामासा चंद्रमसा यमं दिवि त्रितं वातमुषसमक्तुमश्विना ॥३॥

नराशंसं। वा। पूषणं। अगोह्यं। अग्निं। देवऽइद्धं। अभि। अर्चसे। गिरा।
सूर्यामासा। चंद्रमसा। यमं। दिवि। त्रितं। वातं। उषसं। अक्तुं। अश्विना ॥३॥

ऋषिः स्वात्मानं संबोध्याह। नराशंसं। उभे वनस्पत्यादिषु युगपदित्युभयपदप्रकृतिस्वरत्वं। संहितायां विप्रकर्षश्छांदसः। नरैः शंसनीयमेतन्नामानं पूषणं स्तोतॄणां धनदानेन पोषकमेतन्नामानं। तथागोह्यमगूहितमन्यैर्गंतुमशक्यं देवेद्धं वामदेवादिभिर्ऋषिभिर्दीपितमग्निं च गिरा स्तुत्याभ्यर्चसे। अभिष्टुहि। तथा सूर्यामासा चंद्रमसा। मा इति चंद्रमसो विशेषणं। माति पक्षमिति माश्चंद्रमाः। तौ सूर्याचंद्रमसौ दिवि द्युलोके स्थितं यमं च त्रितं त्रिषु लोकेषु ततं स्वमहिम्ना विस्तृतं त्रिस्थानं वा तमिंद्रं वातं वायुमुषसमुषःकालमक्तुं रात्रिमश्विनाश्विनौ चैतान्देवांस्तत्तल्लिंगैः स्तोत्रैरभिष्टुहि ॥

॥ अथ चतुर्थी ॥

कथा कविस्तुवीरवान्कया गिरा बृहस्पतिर्वावृधते सुवृक्तिभिः।
अज एकपात्सुहवेभिर्ऋक्वभिरहिः शृणोतु बुध्न्यो३ हवीमनि ॥४॥
कथा। कविः। तुविऽरवान्। कया। गिरा। बृहस्पतिः। ववृधते। सुवृक्तिऽभिः।
अजः। एकऽपात्। सुऽहवेभिः। ऋक्वऽभिः। अहिः। शृणोतु। बुध्न्यः। हवीमनि ॥४॥

कविः क्रांतप्रज्ञोऽग्निः कथा कथं केन प्रकारेण तुवीरवान्बहुस्तोतृयुक्तो भवति। मत्वर्थीयप्रत्ययावृत्तिः। यद्वा तुविशब्दस्य रो मत्वर्थीयः। बाहुल्ययुक्तदेवैः सहितो भवति। कया वा गिरा स्तुत्या बहुमान्भवति। बृहस्पतिरेतन्नामको देवः सुवृक्तिभिः शोभनाभिः स्तुतिभिस्तया वावृधते। तथैकपात् एकोऽसहाय एव पतति गच्छतीत्येकपात् तादृशो दिवो धारयिताज एतन्नामको देवश्च सुहवेभिः शोभनाह्वानैर्ऋक्वभिर्मंत्रवद्भिः स्तोत्रैर्वावृधते। एते त्रयो देवा वर्धंते। त्रित्वापेक्षया बहुवचनं। वृधु वृद्धौ। व्यत्ययेन शपः श्लुः। अहिर्बुध्न्यश्चैतन्नामको देवश्च हवीमन्याह्वानेऽस्माञ्शृणोतु ॥

॥ अथ पंचमी ॥

दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि।
अतूर्तपंथाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ॥५॥

दक्षस्य । वा । अदिते । जन्मनि । व्रते । राजाना । मित्रावरुणा । आ । विवाससि ।
अतूर्तऽपंथाः । पुरुऽरथः । अर्यमा । सप्तऽहोता । विषुऽरूपेषु । जन्मऽसु ॥५॥

हे अदिते पृथिवि दक्षस्य सूर्यस्य जन्मनि तस्मिञ्जाते व्रते तस्य यज्ञकर्मणि राजाना राजंतौ मित्रावरुणौ विवाससि। वाशब्द उपमार्थः। यथा त्वं वेदिभूता सती तौ पर्यचर एवमिदानीमप्यस्मद्यज्ञे कुर्विति पृथिवीमाशास्ते। सोऽर्यमारीणां तमसां यंता नियंता सूर्यो विषुरूपेषु नानारूपेषु जन्मसु कर्मस्वन्वहमुद्यन् सप्तहोता। सप्त रश्मयो यस्मिन्नसाञ्जुह्वति प्रक्षिपंति स एतादृशो भवति। अतूर्तपंथाः। अतूर्तस्त्वरारहितः पंथा यस्य स। नियतगतित्वात्। त्वरमाणो ह्यनियतगतिर्भवति। पुरुरथः। रथो रंहतेः। प्रत्यहं भुक्तिभेदाद्बहुरंहणो भवति ॥ यद्वा हे अदिते प्रातस्तनि संध्ये दक्षस्यादित्यस्य जन्मन्युदयाख्ये जन्मनि कर्मणि। उद्यत्यादित्य इत्यर्थः। वाशब्दः श्रुतिसामर्थ्याद्दक्षस्य वा जन्मनि त्वत्तस्तव वा जन्मनि दक्षादिति। राजाना दीप्यमानौ मित्रावरुणा। अहर्वै मित्रो रात्रिर्वरुण इति श्रुतेरहोरात्रौ मित्रावरुणावुच्येते। तौ विवाससि। परिचरसि। कथं। तदनुप्रवेशेन। अर्धं हि संध्याया रात्रिमनुप्रविशत्यर्धमहरिति। उत्तरार्धः पूर्ववत्। सप्तहोता। ह्वयतेरर्चतिकर्मण इदं रूपं। सप्तर्षयो भरद्वाजादयो होतारः स्तोतारः संतीति। अथवा सप्तहोता। मलिम्लुचांहसस्पतिसहिताः सप्तर्तवो यस्य होतारो भवंति तादृशः। अत्र निरुक्तं। दक्षस्य वादिते जन्मनि कर्मणि व्रते राजानौ। नि॰ ११. २३.। इत्यादि ॥

॥ इत्यष्टमस्य द्वितीये षष्ठो वर्गः ॥

॥ अथ षष्ठी ॥

ते नो अर्वंतो हवनश्रुतो हवं विश्वे शृण्वंतु वाजिनो मितद्रवः।
सहस्रसा मेधसाताविव त्मना महो ये धनं समिथेषु जभ्रिरे ॥६॥
ते। नः। अर्वंतः। हवनऽश्रुतः। हवं। विश्वे। शृण्वंतु। वाजिनः। मितऽद्रवः।
सहस्रऽसाः। मेधसातौऽइव। त्मना। महः। ये। धनं। संऽइथेषु। जभ्रिरे ॥६॥

हवनश्रुत आह्वानं शृण्वंतो वाजिनो बलवंतो मितद्रवो मितमार्गा अध्वानं परिच्छिंदंतो विश्वे सर्वे प्रसिद्धा अर्वंतोऽश्वा इंद्रादीनां वाहनभूता हर्यादयो नोऽस्माकं हवमाह्वानं शृण्वंतु। कीदृशाः। मेधसाताविव। मेधाः स्तुतयः सायंते

संभज्यंतेऽत्रेति मेधसातिर्यज्ञः। तस्मिन्निव त्मनात्मनैव सहस्रसाः सहस्रसंख्याकधनस्य दातारः। ते शृण्वंतु येऽश्वाः समिथेषु। संग्रामनामैतत्। संप्राप्यते योद्धृभिरत्रेति। तेषु संग्रामेषु महो महद्धनं जभ्रिरे। शत्रुभ्य आहरंति॥ हृयहोर्भः॥

॥ अथ सप्तमी ॥

प्र वो॑ वा॒युं र॑थ॒युजं॒ पुरं॑धिं॒ स्तोमैः॑ कृणुध्वं स॒ख्याय॑ पू॒षण॑म्।

ते हि दे॒वस्य॑ सवि॒तुः सवी॑मनि॒ क्रतुं॑ सचं॑ते स॒चितः॒ सचे॑तसः॥७॥

प्र। वः॒। वा॒युं। र॒थ॒ऽयुजं॑। पुरं॑ऽधिं। स्तोमैः॑। कृ॒णु॒ध्वं॒। स॒ख्याय॑। पू॒षण॑म्।

ते। हि। दे॒वस्य॑। स॒वि॒तुः। सवी॑मनि। क्रतुं॑। सचं॑ते। स॒ऽचितः॑। स॒ऽचे॑तसः॥७॥

हे स्तोतारो वो यूयं वायुं रथयुजं रथस्य योक्तारं पुरंधिं बहुकर्माणमिंद्रं पूषणमेतन्नामानं च स्तोमैस्त्रिवृत्पंचदशादिलक्षणैः सख्याय सखिकर्मणे प्र कृणुध्वं। प्रकुरुध्वं। यथा तेऽस्माकं धनादिप्रदानेन सखायो भवंति तथा कुरुत। हि यस्मात्सचितो ज्ञानयुक्तास्ते देवाः सचेतसः परस्परं समानबुद्धयः संतः सवितुः सर्वप्रेरकस्य देवस्यादित्यस्य सवीमनि प्रसवेऽनुज्ञायां क्रतुं यज्ञं सचंते सेवंते तस्मात्प्रकुरुध्वं॥

॥ अथाष्टमी ॥

त्रिः स॒प्त स॒स्रा न॒द्यो॑ म॒हीर॒पो वन॒स्पती॒न्पर्व॑ताँ अ॒ग्निमू॒तये॑।

कृ॒शानु॒मस्तॄ॒न्तिष्यं॑ स॒धस्थ॒ आ रु॒द्रं रु॒द्रेषु॑ रु॒द्रियं॑ हवामहे॥८॥

त्रिः। स॒प्त। स॒स्राः। न॒द्यः॑। म॒हीः। अ॒पः। वन॒स्पती॑न्। पर्व॑तान्। अ॒ग्निं। ऊ॒तये॑।

कृ॒शानुं॑। अस्तॄ॑न्। ति॒ष्यं॑। स॒धऽस्थे॑। आ। रु॒द्रं। रु॒द्रेषु॑। रु॒द्रियं॑। ह॒वा॒म॒हे॒॥८॥

त्रिः सप्तैकविंशतिसंख्याकाः सस्राः सरंतीर्नद्यो नदीः। सरस्वती सरयुः सिंधुरिति त्रयाणां गणानां प्रधानभूताः। तदाद्या नदीर्महीर्महांत्यपस्तासामुदकानि सोमाभिषवार्थं वनस्पतीन्दारुमयांश्चमसादीन्पर्वतान्सोमाभिषवार्थं ग्राव्णोऽग्निं होमनिष्पादकं कृशानुं सोमपालमेतन्नामानं गंधर्वमस्तॄनिषूणां क्षेप्तॄंस्तदनुचरान्गंधर्वानूतये सोमरक्षणाय तिष्यं नक्षत्रं च रुद्रियं रुद्रस्तोमार्हं रुद्रं हविर्भागिनं रुद्रमेतन्नामानं यद्वा परिशिष्टस्वामिनं रुद्रं च एतान्सर्वान्सधस्थे। सह तिष्ठंत्यत्रेति सधस्थो यज्ञः। तस्मिन् रुद्रेषु स्तोत्रकारिषु तदर्थं हवामहे। स्तुत्यत्वेनाह्वयामहे॥

॥ अथ नवमी ॥

सरस्वती सरयुः सिंधुरूर्मिभिर्महो महीरवसा यंतु वक्षणीः ।
देवीरापो मातरः सूदयित्न्वो घृतवत्पयो मधुमन्नो अर्चत ॥९॥
सरस्वती । सरयुः । सिंधुः । ऊर्मिऽभिः । महः । महीः । अवसा । आ । यंतु । वक्षणीः ।
देवीः । आपः । मातरः । सूदयित्न्वः । घृतऽवत् । पयः । मधुऽमत् । नः । अर्चत ॥९॥

महो महतोऽपि महीर्महत्योऽत्यंतं महत्य ऊर्मिभिः सहिताः सरस्वती सरयुः सिंधुरेतदाद्या एकविंशतिसंख्याका वक्षणीरिमा नद्योऽवसा रक्षणेन हेतुना यंतु। अस्मदीयं यज्ञं प्रत्यागच्छंतु । ततो देवीर्देवनशीला मातरो मातृभूताः सूदयित्न्वः प्रेरयित्र्यस्तासामापो घृतवद्घृतयुक्तं मधुमन्मधुसहितमात्मीयं पयो नोऽस्मभ्यमर्चत । प्रयच्छत ॥

॥ अथ दशमी ॥

उत माता बृहद्दिवा शृणोतु नस्त्वष्टा देवेभिर्जनिभिः पिता वचः ।
ऋभुक्षा वाजो रथस्पतिर्भगो रण्वः शंसः शशमानस्य पातु नः ॥१०॥
उत । माता । बृहत्ऽदिवा । शृणोतु । नः । त्वष्टा । देवेभिः । जनिऽभिः । पिता । वचः ।
ऋभुक्षाः । वाजः । रथःपतिः । भगः । रण्वः । शंसः । शशमानस्य । पातु । नः ॥१०॥

उतापि च बृहद्दिवा । महद्दिवेति यास्कः । महती दिवा दीप्तिर्यस्याः सा माता देवमाता नोऽस्माकमाह्वानं शृणोतु । तथा देवेभिर्देवैरिंद्रादिभिर्जनिभिर्देवपत्नीभिश्च पिता सर्वेषां त्वष्टतन्नामकोऽस्मदीयं वचः शृणोतु । तथर्भुक्षा इंद्रो वाजस्तत्सहायो वाजो नाम सौधन्वः कनीयान् रथस्पती रथस्य पतिर्भगश्च तथा रण्वो रमणीयः शंसः स्तुत्यो मरुद्गणश्च ततः शशमानस्य शंसमानं स्तोतृन्नोऽस्मान्पातु । रक्षतु ॥

॥ इत्यष्टमस्य द्वितीये सप्तमो वर्गः ॥

॥ अथैकादशी ॥

रण्वः संदृष्टौ पितुमाँ इव क्षयो भद्रा रुद्राणां मरुतामुपस्तुतिः ।
गोभिः ष्याम यशसो जनेष्वा सदा देवास इळया सचेमहि ॥११॥

रण्वः। संऽदृष्टौ। पितुमान्ऽइव। क्षयः। भद्रा। रुद्राणां। मरुतां। उपऽस्तुतिः।
गोभिः। स्याम। यशसः। जनेषु। आ। सदा। देवासः। इळया। सचेमहि ॥११॥

संदृष्टौ संदर्शने रण्वो रमणीयो मरुद्गणः पितुमानिवान्नवानिव क्षयो निवासः स्तोतॄणां भवति। रुद्राणां रुद्रपुत्राणां तेषां मरुतामुपस्तुतिरनुग्रहबुद्धिर्भद्रा कल्याणी भवति। तस्माज्जनेषु जनानां मध्ये वयं गोभिर्गवादिभिर्यशसो यशस्विनः स्याम। भवेम। आ अनंतरं हे देवासो देवा युष्मान्सदा सर्वदेळयान्नेन हविर्लक्षणेन सचेमहि। सचेम। संगच्छेम ॥

॥ अथ द्वादशी ॥

यां मे धियं मरुत इंद्र देवा अददात वरुण मित्र यूयं।
तां पीपयत पयसेव धेनुं कुविद्गिरो अधि रथे वहाथ ॥१२॥
यां। मे। धियं। मरुतः। इंद्र। देवाः। अददात। वरुण। मित्र। यूयं।
तां। पीपयत। पयसाऽइव। धेनुं। कुवित्। गिरः। अधि। रथे। वहाथ ॥१२॥

हे मरुतो हे इंद्र देवा हे वरुण हे मित्र यूयं यां धियं यत्कर्म मे मह्यमददात दत्तवंतः स्थ। मरुत इत्यत्र वाक्यभेदादनिघातः। पूर्वपूर्वस्याविद्यमानत्वेनाद्युदात्तत्वं। तां धियं पीपयत। फलेनाप्याययत। तत्र दृष्टांतः। पयसेव धेनुं। नवप्रसूतिकां गां क्षीरेण यथाप्याययंति तद्वत्। किंच। गिरोऽस्मदीयाः स्तुतीरधि रथ आत्मीये रथे कुविद्बहुवारं वहाथ। प्राप्ताः स्थ। स्तुतेषु सत्सु यज्ञं प्रत्यागमनाय रथारूढा भवथ ॥

॥ अथ त्रयोदशी ॥

कुविदंग प्रति यथा चिदस्य नः सजात्यस्य मरुतो बुबोधथ।
नाभा यत्र प्रथमं संनसामहे तत्र जामित्वमदितिर्दधातु नः ॥१३॥
कुवित्। अंग। प्रति। यथा। चित्। अस्य। नः। सऽजात्यस्य। मरुतः। बुबोधथ।
नाभा। यत्र। प्रथमं। संऽनसामहे। तत्र। जामिऽत्वं। अदितिः। दधातु। नः ॥१३॥

अंगेति संबुद्धौ। हे मरुतो यूयं नोऽस्मान्कुविद्बहुवारं प्रति बुबोधथ तथा प्रतिबुध्यध्वं। कुविच्छब्दयोगादनिघातः। यथा नोऽस्मान्सजात्यस्यास्य बांधवस्य विषयभूतान्कुरुथ। तथा जानीथ। ततो नाभा पृथिव्या नाभिस्थाने यत्र यस्मिन्नुत्त-

रवेदिलक्षणे देशे प्रथममेव संनसामहे हविषा यत्र संगच्छेमहि तत्रैव देशेऽदितिर्देवानां माता नोऽस्माकं जामित्वं मनुष्यैः सह बांधवं दधातु । विदधातु ॥

॥ अथ चतुर्दशी ॥

ते हि द्यावापृथिवी मातरा मही देवी देवाञ्जन्मना यज्ञिये इतः ।
उभे बिभृत उभयं भरीमभिः पुरू रेतांसि पितृभिश्च सिंचतः ॥१४॥

ते इति । हि । द्यावापृथिवी इति । मातरा । मही इति । देवी इति । देवान् । जन्मना । यज्ञिये इति । इतः ।
उभे इति । बिभृतः । उभयं । भरीमऽभिः । पुरु । रेतांसि । पितृऽभिः । च । सिंचतः ॥१४॥

मातरा सर्वस्य जगतो निर्मात्र्यावत एव मही महत्यौ देवी देवनशीले यज्ञिये यज्ञार्हे ते द्यावापृथिवी द्यावापृथिव्यौ देवानिंद्रादीञ्जन्मनैवेतो हि । प्राप्नुतः खलु । इण् गतौ । लिटि रूपं । किंचोभे द्यावापृथिव्यौ भरीमभिर्भरणैर्नानाविधैरुभयं जनं देवान्मनुष्यांश्च बिभृतः । धारयतः पोषयतः । तथा पितृभिः पालकैर्देवैः संगते ते पुरु पुरूण्यात्मीयानि रेतांस्युदकानि सिंचतः । क्षरतः । प्रत्यक्षेण धारयतः ॥

॥ अथ पंचदशी ॥

वि षा होत्रा विश्वमश्नोति वार्यं बृहस्पतिररमतिः पनीयसी ।
ग्रावा यत्र मधुषुदुच्यते बृहदवीवशंत मतिभिर्मनीषिणः ॥१५॥

वि । सा । होत्रा । विश्वं । अश्नोति । वार्यं । बृहस्पतिः । अरमतिः । पनीयसी ।
ग्रावा । यत्र । मधुऽसुत् । उच्यते । बृहत् । अवीवशंत । मतिऽभिः । मनीषिणः ॥१५॥

होत्रा । वाङ्नामैतत् । आहूयंतेऽनया देवा इति । सा वाग्वार्यं वरणीयं विश्वं सर्वं पश्वादिसहितं धनं व्यश्नोति । विविधं व्याप्नुते । कीदृशी । बृहस्पतिः । बृहतां महतां पालयित्री । अरमतिः । पर्याप्तस्तुतिः । यद्वा कुत्राप्यनुपरता । पनीयसी । अत्यंतं देवानां स्तोत्रकारिणी । यत्र यस्यां होत्रायां मधुषुत् सोममभिषुण्वन्बृहन्महान्ग्रावोच्यतेऽभिधीयते । स्तूयत इत्यर्थः । तं स्तुतिमंतं यज्ञं मनीषिणो देवा मतिभिः स्तुतिभिः सहावीवशंत । कामयंते । वष्टेर्ण्यंतस्य लुङि रूपं । यद्वा मनीषिणः स्तोतारः स्तुतिभिर्देवान्यज्ञं कामयमानान्कुर्वंति ॥

॥ अथ षोडशी ॥

एवा कविस्तुवीरवाँ ऋतज्ञा द्रविणस्युर्द्रविणसश्चकानः ।
उक्थेभिरत्र मतिभिश्च विप्रोऽपीपयद्गयो दिव्यानि जन्म ॥१६॥
एव । कविः । तुविऽरवान् । ऋतऽज्ञाः । द्रविणस्युः । द्रविणसः । चकानः ।
उक्थेभिः । अत्र । मतिऽभिः । च । विप्रः । अपीपयत् । गयः । दिव्यानि । जन्म ॥१६॥

कविः क्रांतप्रज्ञस्तुवीरवान् । मत्वर्थीयप्रत्ययावृत्तिः । बहुस्तुतियुक्त ऋतज्ञा यज्ञस्य वेदिता द्रविणस्युर्धनकामः । सर्वप्रातिपदिकेभ्यो लालसायामिति सुगागमः । तस्यैव विशदवचनं । द्रविणसश्चकान इति । पश्वादिधनं कामयमान इत्यर्थः । विप्रो मेधावी गयो नामर्षिरेवमुक्तप्रकारेणात्र सूक्त उक्थेभिः शस्त्रैर्मतिभिः स्तुतिभिश्च दिव्या दिव्यानि दिवि जातानि जन्म जननानि देवानपीपयत् अवर्धयत् । अस्तावीदित्यर्थः ॥

॥ अथ सप्तदशी ॥

एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।
ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥१७॥
एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः । अदिते । मनीषी ।
ईशानासः । नरः । अमर्त्येन । अस्तावि । जनः । दिव्यः । गयेन ॥१७॥

इयं व्याख्याता ॥

॥ इत्यष्टमस्य द्वितीयेऽष्टमो वर्गः ॥

अग्निरिंद्र इति पंचदशर्चं पंचमं सूक्तं । वसुक्रपुत्रस्य वसुकर्णस्यार्षं वैश्वदेवं । पंचदशी त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रम्यते । अग्निरिंद्रः पंचोना वासुक्रो वसुकर्णस्त्रिष्टुबंतं त्विति ॥

॥ तत्र प्रथमा ॥

अग्निरिंद्रो वरुणो मित्रो अर्यमा वायुः पूषा सरस्वती सजोषसः ।
आदित्या विष्णुर्मरुतः स्वर्बृहत्सोमो रुद्रो अदितिर्ब्रह्मणस्पतिः ॥१॥
अग्निः । इंद्रः । वरुणः । मित्रः । अर्यमा । वायुः । पूषा । सरस्वती । सऽजोषसः ।
आदित्याः । विष्णुः । मरुतः । स्वः । बृहत् । सोमः । रुद्रः । अदितिः । ब्रह्मणः । पतिः ॥१॥

अग्न्यादय आदित्यादयो बृहद्बृहती स्वद्यौश्च सोमादय एते देवाः सजोषसः संहत्य ॥

॥ अथ द्वितीया ॥

इंद्राग्नी वृत्रहत्येषु सत्पती मिथो हिन्वाना तन्वा३ समोकसा ।
अंतरिक्षं मह्या पप्रुरोजसा सोमो घृतश्रीर्महिमानमीरयन् ॥२॥

इंद्राग्नी इति । वृत्रऽहत्येषु । सत्पती इति सत्ऽपती । मिथः । हिन्वाना । तन्वा । संऽओकसा ।
अंतरिक्षं । महि । आ । पप्रुः । ओजसा । सोमः । घृतऽश्रीः । महिमानं । ईरयन् ॥२॥

वृत्रहत्या युद्धानि । तेषु मिथः परस्परं तन्वा शरीरेण तत्रस्थेन बलेन शत्रून्हिन्वाना प्रेरयंतौ सत्पती सतां पती समोकसा समानस्थानाविंद्राग्नी । घृतश्रीरुदकं वसतीवर्याख्यं श्रयमाणो महिमानमात्मीयमीरयन् सर्वत्रोदीरयन् उन्नमयन् सोमश्च । एते सर्वे च महि महदंतरिक्षमोजसा स्वबलेना पप्रुः । आपूरयंति । प्रा पूरणे ॥

॥ अथ तृतीया ॥

तेषां हि मह्ना महतामनर्वणां स्तोमाँ इयर्म्यृतज्ञा ऋतावृधां ।
ये अप्सवमर्णवं चित्रराधसस्ते नो रासंतां महये सुमित्र्याः ॥३॥

तेषां । हि । मह्ना । महतां । अनर्वणां । स्तोमान् । इयर्मि । ऋतऽज्ञाः । ऋतऽवृधां ।
ये । अप्सवं । अर्णवं । चित्रऽराधसः । ते । नः । रासंतां । महये । सुऽमित्र्याः ॥३॥

मह्ना स्वमहत्त्वेन महतामनर्वणामन्यस्मिन्नप्रत्यृतानां शत्रुभिरनभिगंतव्यानामृतावृधां सत्यभूतेन यज्ञेन वृद्धानां तेषामग्न्यादीनां देवानामेवर्तज्ञा यज्ञस्य ज्ञाताहं स्तोमानियर्मि । प्रेरयामि । ऋ गतिप्रापणयोः । जौहोत्यादिकः । चित्रराधसश्चायनीयधनोपेता यद्वा पश्वादिलक्षणबहुधना ये देवा अप्सवं । अप्स इति रूपनाम । रूपवंतमर्णवं । अर्णसः सलोपश्चेति मत्वर्थीयो वप्रत्ययः । उदकवंतं मेघं वर्षंति ते सुमित्र्याः शोभनसखिकर्माणस्ते देवा नोऽस्मभ्यं महये जनेषु मध्ये पूजार्थं धनं रासंतां । प्रयच्छंतु । रासृ दाने ॥

॥ अथ चतुर्थी ॥

स्वर्णरमंतरिक्षाणि रोचना द्यावाभूमी पृथिवीं स्कंभुरोजसा ।
पृक्षा इव महयंतः सुरातयो देवाः स्तवंते मनुषाय सूरयः ॥४॥

स्वः॑ऽनरं । अंतरिक्षाणि । रोचना । द्यावाभूमी इति । पृथिवीं । स्कंभुः । ओजसा ।
पृक्षाःऽइव । महयंतः । सुऽरातयः । देवाः । स्तवंते । मनुषाय । सूरयः ॥४॥

स्वर्णरं सर्वस्य स्वस्वकर्मणि नेतारमादित्यमंतरिक्षाणि । द्यावापृथिव्योरंतरा मध्ये क्षियंति निवसंतीत्यंतरिक्षाणि मध्यस्थितानि रोचना रोचमानानि तेजांसि द्यावाभूमी द्यावापृथिव्यौ पृथिवीं विस्तीर्णमंतरिक्षं च एतानादित्यादीनोजसा स्वबलेनैव देवाः स्कंभुः । धारयंति । स्कंभ इति सौत्रो धातुः । लिटि रूपं । किंच पृक्षा इव । दरिद्रेषु धनानि संपर्चयंत इव । अत एव महयंतः स्तोतॄन्धनादिभिः पूजयंतः सुरातयः सुदाना मनुषाय मनुष्याय सूरयो धनानां प्रेरका एते देवाः स्तवंते । अस्मिन्यज्ञे स्तूयंते ॥

॥ अथ पंचमी ॥

मित्राय शिक्ष वरुणाय दाशुषे या सम्राजा मनसा न प्रयुच्छतः ।
ययोर्धाम धर्मणा रोचते बृहद्ययोरुभे रोदसी नाधसी वृतौ ॥५॥

मित्राय । शिक्ष । वरुणाय । दाशुषे । या । सम्ऽराजा । मनसा । न । प्रऽयुच्छतः ।
ययोः । धाम । धर्मणा । रोचते । बृहत् । ययोः । उभे इति । रोदसी इति । नाधसी इति ।
वृतौ ॥५॥

दाशुषे धनानि स्तोतृभ्यः प्रयच्छते मित्राय वरुणाय च शिक्ष । हवींषि प्रयच्छ । शिक्षतिर्दानकर्मा । सम्राजा सम्राजौ सर्वस्य या यौ मित्रावरुणौ मनसांतःकरणेनापि न प्रयुच्छतो न प्रमाद्यतः किमुत बाह्येन व्यापारेण । युच्छ प्रमादे । भौवादिकः । ययोर्मित्रावरुणयोर्बृहन्महद्धाम शरीरं धर्मणात्मीयेन लोकप्रकाशनादिलक्षणेन कर्मणा रोचते सम्यग्दीप्यते । ययोश्च नाधसी । णाधृ याच्ञोपतापैश्वर्याशीःषु । याचमाने उभे रोदसी द्यावापृथिव्यौ वृतौ वर्तमाने भवतः । यद्वा नाधसी देवमनुष्यैः समृद्धे द्यावापृथिव्यौ । तयोर्वृतौ वर्तमाने भवतः । तदधीने भवत इत्यर्थः ॥

॥ इत्यष्टमस्य द्वितीये नवमो वर्गः ॥

॥ अथ षष्ठी ॥

या गौर्वर्तनिं पर्येति निष्कृतं पयो दुहाना व्रतनीरवारतः ।
सा प्रब्रुवाणा वरुणाय दाशुषे देवेभ्यो दाशद्धविषा विवस्वते ॥६॥
या । गौः । वर्तनिं । परिऽएति । निःऽकृतं । पयः । दुहाना । व्रतऽनीः । अवारतः ।
सा । प्रऽब्रुवाणा । वरुणाय । दाशुषे । देवेभ्यः । दाशत् । हविषा । विवस्वते ॥६॥

येयं मदीया पयः क्षीरादिकं दुहाना व्रतनीराश्रयणपयःप्रदानेन कर्मणो नेत्री गौर्निष्कृतं संस्कृतं वर्तनिमावासस्थानं यज्ञमवारतोऽवरणेनाप्रार्थनेनैव पर्येति परिगच्छति । स्वयमेवागच्छति । प्रब्रुवाणा मया प्रस्तूयमाना सा गौर्दाशुषे हविर्दत्तवते वरुणाय देवेभ्योऽन्येभ्य इंद्रादिभ्यश्च हविषान्नेन विवस्वते देवान्परिचरते मह्यं मां रक्षितुं दाशत् । पयः प्रयच्छतु । दाशृ दाने । लेट्यडागमः । यद्वा गौरिति माध्यमिका वाक् या पय ऊर्जं दुहाना सा नो मंद्रेषमूर्जं दुहाना । ८.१००.११.। इत्यादिषु दृष्टत्वात् । तत्परतया पूर्ववद्योज्यं ॥

॥ अथ सप्तमी ॥

दिवक्षसो अग्निजिह्वा ऋतावृध ऋतस्य योनिं विमृशंत आसते ।
द्यां स्कभित्व्य१प आ चक्रुरोजसा यज्ञं जनित्वी तन्वी३नि मामृजुः ॥७॥
दिवक्षसः । अग्निऽजिह्वाः । ऋतऽवृधः । ऋतस्य । योनिं । विऽमृशंतः । आसते ।
द्यां । स्कभित्वी । अपः । आ । चक्रुः । ओजसा । यज्ञं । जनित्वी । तन्वि । नि । ममृजुः ॥७॥

दिवक्षसः स्वतेजसा दिवं व्याप्नुवंतः । अक्षू व्याप्तौ । असुनि रूपं । यद्वा दिवो वोढारोऽग्निजिह्वा अग्न्यास्याः । अग्निना हवींषि लिहंत्यास्वादयंतीति तन्मुखाः । ऋतावृधो यज्ञवृद्धा यज्ञस्य वर्धयितारो देवा वर्तस्य सत्यभूतस्य यज्ञस्य योनिं स्थानं विमृशंतो विचारयंतः प्रतीक्षमाणाः संत आसते । सर्वत्र तिष्ठंति । त इमे द्यां द्युलोकं स्कभित्वी स्कभित्वा तां धारयित्वौजसा स्वबलेनापोऽपेक्षितान्युदकान्या चक्रुः । आकुर्वंति । ततो यज्ञं यजनीयं हविश्च जनित्वा जनयित्वा तन्वि स्वशरीरे नि मामृजुः । निमृजंति । नितरामलंकुर्वंति । हविर्भक्षयंतीत्यर्थः ॥

॥ अथाष्टमी ॥

परिक्षिता पितरा पूर्वजावरी ऋतस्य योना क्षयतः समोकसा ।
द्यावापृथिवी वरुणाय सव्रते घृतवत्पयो महिषाय पिन्वतः ॥८॥

परिऽक्षिता । पितरा । पूर्वजावरी इति पूर्वऽजावरी । ऋतस्य । योना । क्षयतः । संऽओकसा ।

द्यावापृथिवी इति । वरुणाय । सव्रते इति सऽव्रते । घृतऽवत् । पयः । महिषाय । पिन्वतः ॥८॥

परिक्षिता परितो निवसंत्यौ सर्वत्र व्यापिन्यौ पितरा सर्वेषां मातापितृभूते अत एव पूर्वजावरी पूर्वं जाते समोकसा समाननिवासस्थाने एते द्यावापृथिव्यावृतस्य यज्ञस्य योना योनौ स्थाने क्षयतः । आहुत्यधिकरणत्वेन निवसतः । हविर्धानरूपे वा क्षियतः । किंच सव्रते समानकर्मणी ते महिषाय महते पूज्याय वा वरुणाय । तं यष्टुं । उपलक्षणमेतत् । अन्यान्देवानपि । घृतवद्धरणवत् पय उदकं पिन्वतः । सिंचतः । उदकेन ह्यन्नं जायते ॥

॥ अथ नवमी ॥

पर्जन्यावाता वृषभा पुरीषिणेंद्रवायू वरुणो मित्रो अर्यमा ।
देवाँ आदित्याँ अदितिं हवामहे ये पार्थिवासो दिव्यासो अप्सु ये ॥९॥

पर्जन्यावाता । वृषभा । पुरीषिणा । इंद्रवायू इति । वरुणः । मित्रः । अर्यमा ।
देवान् । आदित्यान् । अदितिं । हवामहे । ये । पार्थिवासः । दिव्यासः । अप्ऽसु । ये ॥९॥

पर्जन्यावाता पर्जन्यावातौ पर्जन्यावायू वृषभा वृषभौ कामानां सेक्तारौ पुरीषिणा पुरीषिणौ । पुरीषमुदकं । कर्तृत्वेन तद्वंतौ ताविंद्रवायू वरुणादयश्चैते स्वमहिम्ना सर्वत्र वर्तंते । वायोः पर्जन्येनेंद्रेण च तत्कार्यापेक्षया सहोपादानं । एतानादित्यान्देवानदितिं तेषां मातरं च हवामहे । अस्मिन्यज्ञे वयमाह्वयामः । किंच । ये देवाः पार्थिवासः पार्थिवाः पृथिव्यां भवा ये च दिव्या दिवि जाता ये चाप्स्वंतरिक्षे समुत्पन्नास्तानाह्वयामहे ॥

॥ अथ दशमी ॥

त्वष्टा॑रं वा॒युमृ॑भवो॒ य ओह॑ते॒ दैव्या॒ होता॑रा उ॒षसं॑ स्व॒स्तये॑ ।
बृह॒स्पतिं॑ वृत्रखा॒दं सु॒मेधस॑मिंद्रि॒यं सोमं॑ धन॒सा उ॑ ईमहे ॥१०॥

त्वष्टा॑रं । वा॒युं । ऋ॒भ॒वः॒ । यः । ओह॑ते । दैव्या॑ । होता॑रौ । उ॒षसं॑ । स्व॒स्तये॑ ।
बृह॒स्पतिं॑ । वृ॒त्र॒ऽखा॒दं । सु॒ऽमे॒धसं॑ । इं॒द्रि॒यं । सोमं॑ । ध॒न॒ऽसाः । ऊं इति॑ । ई॒म॒हे॒ ॥१०॥

हे ऋभवः । ऋतेन सत्येन भांतीत्यृभवः । उरु प्रभूतं स्वतेजसा भांतीति वा । हे मेधाविनः । यः सोमः स्वस्तये कल्याणाय युष्माकं मदाय त्वष्टृप्रभृतीनोहते । ओहिर्गत्यर्थः । भौवादिकः । आवहति प्राप्नोति । तथा बृहस्पतिं सुमेधसं सुप्रज्ञं वृत्रखादं वृत्रस्यासुरस्य खादितारमिंद्रं च प्राप्नोति धनसा धनं संभजमाना वयमिंद्रियमिंद्रजुष्टं तं सोममीमहे । धनं याचामहे । ईमह इति याच्ञाकर्मा । ईङ् गतौ । दैवादिकः । बहुलं छंदसीति विकरणस्य लुक् ॥

॥ इत्यष्टमस्य द्वितीये दशमो वर्गः ॥

॥ अथैकादशी ॥

ब्रह्म॒ गामश्वं॑ ज॒नयं॑त॒ ओष॑धी॒र्वन॒स्पतीं॑न्पृथि॒वीं पर्व॑ताँ अ॒पः ।
सूर्यं॑ दि॒वि रो॒हयं॑तः सु॒दान॑व॒ आर्या॑ व्र॒ता वि॑सृ॒जंतो॒ अधि॒ क्षमि॑ ॥११॥

ब्रह्म॑ । गां । अश्वं॑ । ज॒नयं॑तः । ओष॑धीः । व॒नस्पतीन् । पृ॒थि॒वीं । पर्व॑तान् । अ॒पः ।
सूर्यं॑ । दि॒वि । रो॒हयं॑तः । सु॒ऽदान॑वः । आर्या॑ । व्र॒ता । वि॒ऽसृ॒जंतः॑ । अधि॑ । क्षमि॑ ॥११॥

ब्रह्म वर्धनसाधनमन्नं । अन्नेन हि सर्वाः प्रजा वर्धंते । गामश्वमेतत्प्रभृतीन्पशून् तथौषधीर्वनस्पतींश्च तथा पृथिवीं विस्तीर्णां भूमिं पर्वताञ्शिलोच्चयान् वृष्ट्या जगदापूरकान्मेघान्वा । अप उदकान्यंतरिक्षं वा । एताञ्जनयंत उत्पादयंतः । किंच दिवि द्युलोके सूर्यमादित्यं रोहयंतः सुदानवः शोभनदानास्तेऽमी देवा अधि क्षमि । आत इति योगविभागात् । पा॰ ६.४.१४०. । अकारलोपः । क्षमायां पृथिव्यामार्या श्रेष्ठानि कल्याणानि व्रतानि कर्माणि यागादीनि विसृजंतः प्रसारयंतः सर्वत्र वर्तंते । तान्वयं धनं याचामह इति शेषः ॥

॥ अथ द्वादशी ॥

भुज्युमंहसः पिपृथो निरश्विना श्यावं पुत्रं वध्रिमत्या अजिन्वतं ।
कमद्युवं विमदायोहथुर्युवं विष्णाप्वं१ विश्वकायाव सृजथः ॥१२॥
भुज्युं । अंहसः । पिपृथः । निः । अश्विना । श्यावं । पुत्रं । वध्रिऽमत्याः । अजिन्वतं ।
कमऽद्युवं । विऽमदाय । ऊहथुः । युवं । विष्णाप्वं । विश्वकाय । अव । सृजथः ॥१२॥

हे अश्विनाश्ववंतौ सर्वं व्याप्नुवंतौ वैतन्नामकौ हे देवौ अंहस उपद्रवकारिणः समुद्राद्भुज्यं तुग्रपुत्रमेतन्नामानं निः पिपृथः । निःपारयथः । नितरां रक्षथः । पृ पालनपूरणयोः । जौहोत्यादिकः । निष्टौग्र्यं पारयथः समुद्रात् । १. ११८. ६. । इति निगमः । तथा श्यावं हिरण्यहस्तनामानं पुत्रं वध्रिमत्या एतन्नामिकाया अजिन्वतं । अप्रीणयतं । अदत्तं । हिरण्यहस्तमश्विना रराणा । १. ११७. २४. । इत्यादि निगमः । तथा कमद्युवं कामस्य दीपनीं वेनपुत्रीं जायां विमदायर्षये युवमूहथुः । प्रापयथः । युवं रथेन विमदाय । १०. ३९. ७. । इति निगमः । तथा विष्णाप्वमेतन्नामानं विनष्टं पुत्रं विश्वकायर्षय आनीयाव सृजथः । अदत्तं । पश्चुं न नष्टमिव दर्शनाय । १. ११६. २३. । इति निगमः ॥

॥ अथ त्रयोदशी ॥

पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिंधुरापः समुद्रियः ।
विश्वे देवासः शृणवन्वचांसि मे सरस्वती सह धीभिः पुरंध्या ॥१३॥
पावीरवी । तन्यतुः । एकऽपात् । अजः । दिवः । धर्ता । सिंधुः । आपः । समुद्रियः ।
विश्वे । देवासः । शृणवन् । वचांसि । मे । सरस्वती । सह । धीभिः । पुरंऽध्या ॥१३॥

पावीरव्यायुधवती तन्यतुः स्तनयित्री वाग्माध्यमिका तथा दिवो द्युलोकस्य धर्ता धारयिताज एकपात् । एक एव पद्यते गच्छतीति न जायत इत्येतत्संज्ञको देवः सिंधुश्च समुद्रियः । समुद्रमंतरिक्षं । तत्रभवा आपश्च । समुद्राभ्राद्घ इति भावार्थे घप्रत्ययः । विश्वे देवाश्च धीभिः कर्मभिर्युक्ताः पुरंध्या बहुविधया प्रज्ञया सहिता सरस्वती च मे मदीयानि वचांसि वक्तव्यानि स्तोत्राणि शृणवन् । शृण्वंतु ॥ पविः शल्यो भवति यद्विपुनाति कायमित्यादि निरुक्तमनुसंधेयं । नि० १२. ३०. ॥

॥ अथ चतुर्दशी ॥

विश्वे देवाः सह धीभिः पुरंध्या मनोर्यजत्रा अमृता ऋतज्ञाः ।
रातिषाचो अभिषाचः स्वर्विदः स्व१र्गिरो ब्रह्म सूक्तं जुषेरत ॥१४॥

विश्वे । देवाः । सह । धीभिः । पुरंऽध्या । मनोः । यजत्राः । अमृताः । ऋतऽज्ञाः ।
रातिऽसाचः । अभिऽसाचः । स्वःऽविदः । स्वः । गिरः । ब्रह्म । सुऽउक्तं । जुषेरत ॥१४॥

धीभिः कर्मभिः सहिताः पुरंध्या प्रज्ञानेन युक्ता मनोर्मनुष्यस्य यज्ञे यजत्रा यष्टव्या अमृता मरणधर्मरहिता ऋतज्ञाः सत्यविदो रातिषाचो दीयमानं हविः सेवमाना अभिषाच आभिमुख्येन यज्ञं समवयंतः संगतवंतः स्वर्विदः सर्वस्य लंभका विश्वे सर्व इंद्रादयो देवाः स्वः सर्वा गिरोऽस्मदीयाः स्तुतीर्ब्रह्म महत्त्वात्वं सूक्तं सुष्ठु वक्तव्यं स्तोमं । यद्वा सुष्ठु मंत्रेण सह दत्तमन्नं जुषेरत । सेवंतां । जुषी प्रीतिसेवनयोः । तौदादिकः । अनुदात्तेत् । लिङि झस्य रनादेशाभावश्छांदसः । बहुलं छंदसीति रुडागमः ॥

॥ अथ पंचदशी ॥

देवान्वसिष्ठो अमृतान्ववंदे ये विश्वा भुवनाभि प्रतस्थुः ।
ते नो रासंतामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥१५॥

देवान् । वसिष्ठः । अमृतान् । ववंदे । ये । विश्वा । भुवना । अभि । प्रऽतस्थुः ।
ते । नः । रासंतां । उरुऽगायं । अद्य । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥१५॥

वसिष्ठो वसिष्ठकुलजोऽयमृषिरमृतान्मरणरहितान्देवान्ववंदे । एवमस्तावीत् । ये देवा विश्वा विश्वानि भुवनानि लोकानभि प्रतस्थुः । स्वतेजसाभिभवंति । अभितः प्रतिष्ठंतीति वा । प्रपूर्वात्तिष्ठतेर्लिटि रूपं । समासस्वरः । ते देवा अद्यास्मिन्दिने नोऽस्मभ्यमुरुगायं प्रभूतयशस्कमन्नं रासंतां । प्रयच्छंतु । हे देवा यूयं स्वस्तिभिः कल्याणीभिरूतिभिर्नोऽस्मान्सदा सर्वदा पात । रक्षत ॥

॥ इत्यष्टमस्य द्वितीय एकादशो वर्गः ॥

देवान्हुव इति पंचदशर्चं षष्ठं सूक्तं । ऋष्याद्याः पूर्ववत् । देवान्हुव इत्यनुक्रांतं ॥ पृष्ठ्याभिप्लवषडहयोः पंचमेऽहनीदं वैश्वदेवनिविद्धानं । सूचितं च । इहेह व इति चतस्रो देवान्हुव इति वैश्वदेवं । आ० ७.५. । इति ॥

॥ तत्र प्रथमा ॥

देवान्हुवे बृहच्छ्रवसः स्वस्तये ज्योतिष्कृतो अध्वरस्य प्रचेतसः ।
ये वावृधुः प्रतरं विश्ववेदस इंद्रज्येष्ठासो अमृता ऋतावृधः ॥१॥

देवान् । हुवे । बृहत्ऽश्रवसः । स्वस्तये । ज्योतिःऽकृतः । अध्वरस्य । प्रऽचेतसः ।
ये । ववृधुः । प्रऽतरं । विश्वऽवेदसः । इंद्रऽज्येष्ठासः । अमृताः । ऋतऽवृधः ॥१॥

बृहच्छ्रवसः प्रभूतान्नाञ्ज्योतिष्कृत आदित्याख्यस्य तेजसः कर्तॄन्प्रचेतसः प्रकृष्टज्ञानांस्तान्देवानध्वरस्यास्य यज्ञस्य स्वस्तयेऽविनाशाय निर्विघ्नेन यज्ञपरिसमाप्तये हुवे । आह्वयामि । विश्ववेदसः सर्वधना इंद्रज्येष्ठासः । इंद्रो ज्येष्ठः प्रधानो येषां । इंद्रनेतृका इत्यर्थः । अमृता मरणधर्मरहिता ऋतावृधो यज्ञेन प्रवृद्धा ये देवाः प्रतरमत्यंतं ववृधुः । वर्धंते ॥

॥ अथ द्वितीया ॥

इंद्रप्रसूता वरुणप्रशिष्टा ये सूर्यस्य ज्योतिषो भागमानशुः ।
मरुद्गणे वृजने मन्म धीमहि माघोने यज्ञं जनयंत सूरयः ॥२॥

इंद्रऽप्रसूताः । वरुणऽप्रशिष्टाः । ये । सूर्यस्य । ज्योतिषः । भागं । आनशुः ।
मरुत्ऽगणे । वृजने । मन्म । धीमहि । माघोने । यज्ञं । जनयंत । सूरयः ॥२॥

इंद्रप्रसूता इंद्रेण तत्कार्येषु प्रेरिता वरुणप्रशिष्टा वरुणेनानुशिष्टा अनुमोदिता ये मरुतो ज्योतिषो द्योतमानस्य सूर्यस्य स्वस्वकर्मणि सर्वस्य प्रेरकस्यामुष्यादित्यस्य भागं भजनीयं लोकमानशुरानशिरे व्याप्नवंतः । सूर्यमधिष्ठाय वर्तंत इत्यर्थः । वृजने शत्रूणां छेदके माघोने मघवत इंद्रस्य संबंधिनि मरुद्गणे । तेषां मरुतां गणे मन्म मननीयं स्तोत्रं धीमहि । दध्मः । कुर्मः । किंच । सूरयः प्राज्ञा यजमानास्तन्निमित्तमेव यज्ञं जनयंत । जनयंति । तेषां हविःप्रदानाय कुर्वंति ॥

॥ अथ तृतीया ॥

इंद्रो वसुभिः परि पातु नो गयमादित्यैर्नो अदितिः शर्म यच्छतु ।
रुद्रो रुद्रेभिर्देवो मृळयाति नस्त्वष्टा नो ग्नाभिः सुविताय जिन्वतु ॥३॥

इंद्रः। वसुऽभिः। परि। पातु। नः। गयं। आदित्यैः। नः। अदितिः। शर्म। यच्छतु।
रुद्रः। रुद्रेभिः। देवः। मृळयाति। नः। त्वष्टा। नः। ग्नाभिः। सुवितायं। जिन्वतु॥३॥

वसुभिरेतन्नामकैरष्टभिर्देवैः सहित इंद्रो नोऽस्मदीयं गयं। गृहनामैतत्। प्राप्तव्यं गायते शब्द्यतेऽत्रेति वा गृहं गयं। परि पातु। परिरक्षतु। तथादितिर्देवमातादित्यैर्देवैः सह नोऽस्मभ्यं शर्म सुखं प्रयच्छतु। किंच देवो दीप्यमानो रुद्रो रुद्रेभिः स्वपुत्रैर्मरुद्भिः सह नोऽस्मान्मृळयाति। सुखयतु। मृड सुखने। लेट्याडागमः। अपि च त्वष्टा प्रजापतिर्ग्नाभिर्देवपत्नीभिश्छंदोभिः सुविताय सुष्ठु प्राप्तव्यायाभ्युदयाय नोऽस्माञ्जिन्वतु। प्रीणयतु॥

॥ अथ चतुर्थी ॥

अदितिर्द्यावापृथिवी ऋतं महदिंद्राविष्णू मरुतः स्वर्बृहत्।
देवाँ आदित्याँ अवसे हवामहे वसून्रुद्रान्त्सवितारं सुदंससं॥४॥

अदितिः। द्यावापृथिवी इति। ऋतं। महत्। इंद्राविष्णू इति। मरुतः। स्वः। बृहत्।
देवान्। आदित्यान्। अवसे। हवामहे। वसून्। रुद्रान्। सवितारं। सुऽदंससं॥४॥

अदितिर्द्यावापृथिवी द्यावापृथिव्यौ महन्महान् ऋतं सत्यभूतोऽग्निरिंद्राविष्णू मरुतश्च बृहत्परिवृढः स्वरादित्य एते देवाः सर्वत्र स्वमहिम्ना वर्तंते। एतान्देवानादित्यादीन्सुदंससं सुकर्माणं सवितारमेतन्नामानं चावसे रक्षणाय हवामहे। वयमाह्वयामहे॥

॥ अथ पंचमी ॥

सरस्वान्धीभिर्वरुणो धृतव्रतः पूषा विष्णुर्महिमा वायुरश्विना।
ब्रह्मकृतो अमृता विश्ववेदसः शर्म नो यंसन् त्रिवरूथमंहसः॥५॥

सरस्वान्। धीभिः। वरुणः। धृतऽव्रतः। पूषा। विष्णुः। महिमा। वायुः। अश्विना।
ब्रह्मऽकृतः। अमृताः। विश्वऽवेदसः। शर्म। नः। यंसन्। त्रिऽवरूथं। अंहसः॥५॥

धीभिः प्रज्ञाभिर्युक्तः सरस्वानेतन्नामा धृतव्रतो धृतकर्मा वरुणश्च पूषा महिमा महत्त्वेन युक्तो विष्णुश्च वायुरश्विनाश्विनौ ब्रह्मकृतः कर्मकृतः स्तोतॄणामन्नदातारो वा विश्ववेदसः सर्वधना व्याप्तज्ञाना वांहसः पापरूपाणां शत्रूणां हंतारोऽमृता एते देवा नोऽस्मभ्यं त्रिवरूथं त्रिष्कभं त्रिकक्ष्यं शर्म गृहं। यद्वा त्रिवरूथं। द्रोण-

धवनीयपूतभृत्संज्ञकानि त्रीणि पात्राणि यत्र व्रियंते संभज्यंते तद्यज्ञसाधनं गृहं यंसन्। प्रयच्छंतु। यच्छतेर्लेटि सिप्यडागमः ॥

॥ इत्यष्टमस्य द्वितीये द्वादशो वर्गः ॥

॥ अथ षष्ठी ॥

वृषा॑ य॒ज्ञो वृष॑णः संतु य॒ज्ञिया॒ वृष॑णो दे॒वा वृष॑णो ह॒वि॒ष्कृतः॑।

वृष॑णा॒ द्यावा॑पृथि॒वी ऋ॒तावरी॑ वृषा॑ प॒र्जन्यो॒ वृष॑णो वृष॒स्तुभः॑ ॥६॥

वृषा॑। य॒ज्ञः। वृष॑णः। सं॒तु। य॒ज्ञियाः॑। वृष॑णः। दे॒वाः। वृष॑णः। ह॒वि॒ःऽकृतः॑।

वृष॑णा। द्यावा॑पृथि॒वी इति॑। ऋ॒तव॑री॒ इत्यृ॒तऽव॑री। वृषा॑। प॒र्जन्यः॑। वृष॑णः।
वृ॒ष॒ऽस्तुभः॑ ॥६॥

यज्ञ एषोऽस्मदीयो वृषा कामानां वर्षितास्तु। तथा यज्ञियाः यज्ञार्हा देवाश्च वृषणः संतु। किंच देवाः स्तुतिकारिण ऋत्विजो वृषणो धनवर्षणे कारणानि संतु साधुस्तुतिकरणेन। तथा हविष्कृतो हविषां कर्तारोऽध्वर्य्वादयो वृषणोऽव्यग्रतया मंत्रसाहित्येन च हविःप्रदानेन। अपि च ऋतावरी यज्ञवत्यौ द्यावापृथिवी द्यावापृथिव्यौ वृषणा हविरुत्पादनेन कामानां वर्षयित्र्यौ भवतां। तथा पर्जन्य इंद्रो वृषापां वर्षिता भवतु। वृषस्तुभो वर्षणशीलस्तुतिभिर्देवान्स्तुवंतः सर्व ऋत्विजो वृषणो भवंतु ॥

॥ अथ सप्तमी ॥

अ॒ग्नीषोमा॒ वृष॑णा॒ वाज॑सातये पुरुप्रश॒स्ता वृष॑णा॒ उप॑ ब्रुवे।

यावी॑जि॒रे वृष॑णो देवय॒ज्यया॒ ता न॒ः शर्म॑ त्रि॒वरू॑थं॒ वि यं॑सतः ॥७॥

अ॒ग्नीषोमा॑। वृष॑णा। वाज॑ऽसातये। पु॒रु॒ऽप्र॒श॒स्ता। वृष॑णौ। उप॑। ब्रु॒वे॒।

यौ। ई॒जि॒रे। वृष॑णः। दे॒व॒ऽय॒ज्यया॑। ता। न॒ः। शर्म॑। त्रि॒ऽव॑रूथं। वि। यं॒स॒तः॒ ॥७॥

वृषणा वर्षणशीलौ पुरुप्रशस्ता बहुभिः प्रशस्तावग्नीषोमौ वाजसातयेऽन्नलाभायोप ब्रुवे। अहमुपस्तौमि। पुनर्वृषणावित्यादरार्थं। यौ देवौ वृषण ऋत्विजो देवयज्यया। देवा इज्यंतेऽनेति देवयज्या यज्ञः। छंदसि निष्टर्क्येति निपातितः। तेनेजिरे यजंते हविर्भिः पूजयंति ता तौ प्रसिद्धौ नोऽस्मभ्यं त्रिवरूथं त्रिष्कंभं शर्म गृहं वि यंसतः। विशेषेण प्रयच्छतां ॥

॥ अथाष्टमी ॥

धृतव्रताः क्षत्रिया यज्ञनिष्कृतो बृहद्दिवा अध्वराणामभिश्रियः ।
अग्निहोतार ऋतसापो अद्रुहोऽपो असृजन्ननु वृत्रतूर्ये ॥८॥

धृतऽव्रताः । क्षत्रियाः । यज्ञनिःऽकृतः । बृहत्ऽदिवाः । अध्वराणां । अभिऽश्रियः ।
अग्निऽहोतारः । ऋतऽसापः । अद्रुहः । अपः । असृजन् । अनु । वृत्रऽतूर्ये ॥८॥

धृतव्रता धृतकर्माणो जात्या क्षत्रियाः । यद्वा क्षत्रं बलं । तदर्हा यज्ञनिष्कृतः । यज्ञं प्रति निर्गमनं यज्ञनिः । तस्य कर्तारो बृहद्दिवा महातेजस्का अध्वराणां रक्षोभिरहिंसितानां यज्ञानामभिश्रियोऽभिसेवका अग्निहोतारोऽग्निर्होताह्वाता येषां तादृशा ऋतसापः । षप समवाये । सत्यभाजोऽत एवाद्रुहः केषांचिदप्यद्रोग्धारः । यद्वा द्रुहेः कर्मण्यौणादिकः क्विप् । केश्चिदप्यहिंस्या एवंप्रभावा देवा वृत्रतूर्ये । वृत्रस्तूर्यते हिंस्यतेऽत्रेति वृत्रतूर्यः संग्रामः । तस्मिन् अपामावरकशत्रुवधेऽप उदकान्यन्वसृजन् । अन्वसारयन् ॥

॥ अथ नवमी ॥

द्यावापृथिवी जनयन्नभि व्रताप ओषधीर्वनिनानि यज्ञिया ।
अंतरिक्षं स्व१रा पप्रुरूतये वशं देवासस्तन्वी३नि मामृजुः ॥९॥

द्यावापृथिवी इति । जनयन् । अभि । व्रता । आपः । ओषधीः । वनिनानि । यज्ञिया ।
अंतरिक्षं । स्वः । आ । पप्रुः । ऊतये । वशं । देवासः । तन्वि । नि । ममृजुः ॥९॥

देवासो देवा इंद्रादयो द्यावापृथिवी द्यावापृथिव्यावभ्यभिलक्ष्य व्रता व्रतेन स्वेन कर्मणापः । सुब्व्यत्ययः । अप उदकान्योषधीश्च तथा यज्ञिया यज्ञार्हान्वनिनानि वने भवान्पलाशादीन्वृक्षाञ्जनयन् । उदपादयन् । किंच ते देवाः स्वः सर्वमंतरिक्षमा पप्रुः । तेजसापूरयंति । किमर्थं । ऊतये रक्षणाय शत्रुभ्यो बाधाभावाय । अपि च वशं काम्यमानं । वशिरण्योरुपसंख्यानं । पा॰ ३.३.५८.३. । इत्यकर्तरि कारकेऽप् । तं यज्ञं तन्वि स्वशरीरे नि ममृजुः । नितरां शुद्धमलंकृतं चक्रुः ॥

॥ अथ दशमी ॥

धर्तारो दिव ऋभवः सुहस्ता वातापर्जन्या महिषस्य तन्यतोः ।
आप ओषधीः प्र तिरंतु नो गिरो भगो रातिर्वाजिनो यंतु मे हवं ॥१०॥

धर्तारः। दिवः। ऋभवः। सुऽहस्ताः। वातापर्जन्या। महिषस्य। तन्यतोः।
आपः। ओषधीः। प्र। तिरंतु। नः। गिरः। भगः। रातिः। वाजिनः। यंतु। मे। हवं॥१०॥

दिवो द्युलोकस्य धर्तारो धारयितार ऋभवः सत्येन भासमानाः सुहस्ताः शोभनवज्राद्यायुधयुक्तहस्ता देवास्तथा महिषस्य महतस्तन्यतोः शब्दस्य। तनु विस्तारे। ऋतन्यंजीति यतुच्प्रत्ययः। शब्दस्य कर्तारौ वातापर्जन्या वातश्च पर्जन्यश्च तत्कार्या आप ओषधीरोषधयश्च नोऽस्माकं गिरः स्तुतीः प्र तिरंतु। प्रवर्धयंतु। प्रपूर्वस्तिरति वृद्ध्यर्थः। तथा रातिर्दाता भगो भजनीयोऽर्यमा च वाजिनः। अग्निर्वायुः सूर्यस्ते वै वाजिन इति तैत्तिरीयब्राह्मणं। एते देवाश्च मे मदीयं हवमाह्वानं यंतु। अभिगच्छंतु॥

॥ इत्यष्टमस्य द्वितीये त्रयोदशो वर्गः॥

॥ अथैकादशी॥

समुद्रः सिंधू रजो अंतरिक्षमज एकपात्तनयित्नुरर्णवः।
अहिर्बुध्न्यः शृणवद्वचांसि मे विश्वे देवास उत सूरयो मम॥११॥

समुद्रः। सिंधुः। रजः। अंतरिक्षं। अजः। एकऽपात्। तनयित्नुः। अर्णवः।
अहिः। बुध्न्यः। शृणवत्। वचांसि। मे। विश्वे। देवासः। उत। सूरयः। मम॥११॥

समुद्रः समुंदनशीलः स्यंदमानोदकः सिंधुरेतन्नामकोऽंतरिक्षं द्यावापृथिव्योरंतरा मध्ये क्षितमुषितं रजो मध्यमलोकमज एकपात्। अजायमान एक एव पद्यते। एतत्संज्ञको देवोऽर्णव उदकवांस्तनयित्नुः स्तनयित्नुर्मेघो बुध्न्योऽंतरिक्षे भवोऽहिरेतत्संज्ञक एते देवा मे मम वचांसि वक्तव्यानि स्तोत्राणि शृणवत्। प्रत्येकं शृणोतु। उतापि च सूरयः प्राज्ञा विश्वे देवासो देवा मम स्तोत्राणि शृण्वंतु॥

॥ अथ द्वादशी॥

स्याम वो मनवो देववीतये प्रांचं नो यज्ञं प्र णयत साधुया।
आदित्या रुद्रा वसवः सुदानव इमा ब्रह्म शस्यमानानि जिन्वत॥१२॥

स्याम। वः। मनवः। देवऽवीतये। प्रांचं। नः। यज्ञं। प्र। नयत। साधुऽया।
आदित्याः। रुद्राः। वसवः। सुऽदानवः। इमा। ब्रह्म। शस्यमानानि। जिन्वत॥१२॥

हे देवा मनवो मनुष्या वयं वो युष्मदीयाय देववीतये। देवानां वीतिर्भक्षणं यस्मिन् स यज्ञः। तस्मै यज्ञाय स्याम यज्ञकर्तारो भवेम। ततो नोऽस्मदीयं यज्ञं साधुया। सुपो याजादेशः। साधु कल्याणं प्रांचं प्राचीनं प्रणयत। प्रकृष्टांचनं कुरुत। हे आदित्या हे रुद्रा रुद्रपुत्रा मरुतो हे सुदानवः शोभनदाना हे वसव इमेमानि शस्यमानानि ब्रह्म ब्रह्माणि स्तोत्राणि जिन्वत। प्रीणयत ॥

अप्तोर्यामेऽच्छावाकातिरिक्तोक्थस्य दैव्या होतारेत्येषा परिधानीया। सूचितं च। उभा उ नूनं दैव्या होतारा प्रथमा पुरोहितेति परिधानीया। आ॰ ९.११.। इति ॥

॥ सैषा सूक्ते त्रयोदशी ॥

दैव्या होतारा प्रथमा पुरोहित ऋतस्य पंथामन्वेमि साधुया।
क्षेत्रस्य पतिं प्रतिवेशमीमहे विश्वान्देवाँ अमृताँ अप्रयुच्छतः ॥१३॥

दैव्या। होतारा। प्रथमा। पुरःऽहिता। ऋतस्य। पंथां। अनु। एमि। साधुऽया।
क्षेत्रस्य। पतिं। प्रतिऽवेशं। ईमहे। विश्वान्। देवान्। अमृतान्। अप्रऽयुच्छतः॥१३॥

प्रथमा मुख्यौ पुरोहिता पुरोहितौ पुरतो निहितौ दैव्या देवसंबंधिनौ होतारा होतारावेतन्नामानावग्न्यादित्यावन्वेमि। हविर्भिरनुगच्छामि। तत ऋतस्य यज्ञस्य पंथां पंथानं साधुया कल्याणं विघ्नराहित्येनान्वेमि। अनुगच्छामि। अनंतरं प्रतिवेशं समीपे वर्तमानं क्षेत्रस्य पतिं पालयितारमेतन्नामानममृतान्मरणधर्मरहितानप्रयुच्छतोऽप्रमाद्यतो विश्वान्सर्वान्देवांश्चेमहे। धनं याचामहे ॥

॥ अथ चतुर्दशी ॥

वसिष्ठासः पितृवद्वाचमक्रत देवाँ ईळाना ऋषिवत्स्वस्तये।
प्रीता इव ज्ञातयः काममेत्यास्मे देवासोऽव धूनुता वसु ॥१४॥

वसिष्ठासः। पितृऽवत्। वाचं। अक्रत। देवान्। ईळानाः। ऋषिऽवत्। स्वस्तये।
प्रीताःऽइव। ज्ञातयः। कामं। आऽइत्य। अस्मे इति। देवासः। अव। धूनुत। वसु॥१४॥

ऋषिवत् पूर्वं ऋषय इव देवानीळानाः स्तुवंतो वसिष्ठासो वसिष्ठकुलजाता ऋषयः पितृवद्वसिष्ठवत्स्वस्तयेऽविनाशाय वाचं स्तोत्रमक्रत। कुर्वंति। करोतेर्लुङि मंत्रे घसेति च्लेर्लुक्। हे देवासो देवा यूयं काममस्मदभिलाषमेत्यागत्यास्मे

अस्मासु वसु गवादिलक्षणं धनमव धूनुत। अभिमुखं प्रेरयत। तत्र दृष्टांतः। प्रीता इव। यथा प्रीताः संहृष्टा ज्ञातयो बंधवः स्वजनस्य धनं प्रेरयंति तद्वद्धविर्दानेन स्तुतिकरणेन च बंधुष्वस्मासु धनं प्रेरयतेति भावः॥

॥ अथ पंचदशी ॥

देवान्वसिष्ठो अमृतान्ववंदे ये विश्वा भुवनाभि प्रतस्थुः।
ते नो रासंतामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः॥१५॥

देवान्। वसिष्ठः। अमृतान्। ववंदे। ये। विश्वा। भुवना। अभि। प्रऽतस्थुः।
ते। नः। रासंतां। उरुऽगायं। अद्य। यूयं। पात। स्वस्तिऽभिः। सदा। नः॥१५॥

एषर्क् पूर्वमेव व्याख्यायि॥

॥ इत्यष्टमस्य द्वितीये चतुर्दशो वर्गः॥

इमां धियमिति द्वादशर्चं सप्तमं सूक्तमांगिरसस्यायास्यस्यार्षं त्रैष्टुभं। इदमुत्तरं च बृहस्पतिदेवताकं। तथा चानुक्रांतं। इमां धियं द्वादशायास्यो बार्हस्पत्यं त्विति॥ आभिप्लविकेषूक्थ्येषु स्तोमवृद्धौ ब्राह्मणाच्छंसिन इदं सूक्तमावापार्थं। सूचितं च। इमां धियमिति ब्राह्मणाच्छंसी विष्णोर्नु कमिति सूक्ते। आ० ७.९.। इति॥

॥ तत्र प्रथमा ॥

इमां धियं सप्तशीर्ष्णीं पिता न ऋतप्रजातां बृहतीमविंदत्।
तुरीयं स्विज्जनयद्विश्वजन्योऽयास्य उक्थमिंद्राय शंसन्॥१॥

इमां। धियं। सप्तऽशीर्ष्णीं। पिता। नः। ऋतऽप्रजातां। बृहतीं। अविंदत्।
तुरीयं। स्वित्। जनयत्। विश्वऽजन्यः। अयास्यः। उक्थं। इंद्राय। शंसन्॥१॥

अत्रेतिहासमाचक्षते। पुरा किलांगिरा नामर्षिर्बृहस्पतिं पुत्रमलभत। स तु देवानां हितोपदेशनायेंद्रस्य पुरोहितोऽभवत्। कदाचित्तस्य गावः पणिनामकैरसुरैरपहृत्य वलपुरं प्रापय्य त्रिषु स्थानेषु तमसावृतेषु स्थापिता आसन्। अथ तासामन्वेषणायेंद्रेण प्रेरितो बृहस्पतिर्मरुद्भिः सह तत्रागत्य गवां गुहा स्थितानां दर्शनाय सूर्यं जनयित्वा वलनामानमसुरं तदनुचरान्पणींश्च हत्वा गा आजहारेति। तदत्र दर्शयिष्यते। तथा चास्या ऋचोऽयमर्थः। धियं कर्मणां धात्रीं सप्तशीर्ष्णीं

सप्तशिरस्कां सप्तभिः शिरःस्थानीयैस्तद्वत्प्रधानभूतैर्मरुद्गणैरुपेतां। यद्वा सप्तच्छंदोमयशिरस्कां। ऋतप्रजातां यज्ञार्थमुत्पन्नां बृहतीं महतीमिमां तनुं नोऽस्माकं पितांगिरा अविंदत्। लब्धवान्। कर्मणां ध्यातारं बृहस्पतिं पुत्रमलभतेत्यर्थः। येऽंगारा आसंस्तेऽंगिरसोऽभवन् यदंगाराः पुनरवशांता उददीप्यंत तद्बृहस्पतिरभवदिति ब्राह्मणं। ऐ॰ ब्रा॰ ३.३४.। तथा तुरीयं स्विच्चतुर्थमपि जनयदजनयद्विश्वजन्यः सर्वजनहित इंद्रायेश्वराय बृहस्पतय इंद्राय वोक्थं स्तोत्रं शंसन् अयमास्यो नामर्षिः। पूर्वमेव नोऽस्माकं पिताकार्षीदित्याह ॥

॥ अथ द्वितीया ॥

ऋतं शंसंत ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः।
विप्रं पदमंगिरसो दधाना यज्ञस्य धाम प्रथमं मनंत ॥२॥

ऋतं। शंसंतः। ऋजु। दीध्यानाः। दिवः। पुत्रासः। असुरस्य। वीराः।
विप्रं। पदं। अंगिरसः। दधानाः। यज्ञस्य। धाम। प्रथमं। मनंत ॥२॥

ऋतं सत्यभूतं स्तोत्रं शंसंतः स्तुवंत ऋजु कल्याणं दीध्यानाः कर्माणि ध्यायंतो दिवो दीप्तस्यासुरस्य प्रज्ञानवतोऽग्नेरंगिरसः पुत्राः। अंगिरसो ह्यऽंगारेभ्यो जाता इत्युक्तं। अंगारेष्वंगिरा इति। वीरा विक्रांतप्रज्ञा एतेऽंगिरसो विप्रं प्रज्ञापकं यज्ञस्य धाम धारकं पदं बृहस्पत्याख्यं दधानाः कर्मणा धारयंतः संतः प्रथममादित एव मनंत। स्तुवंति। प्रज्ञापकं ह्येतत्स्थानं यद्बृहस्पतिरिति ॥

देवसुवां हविःषु बृहस्पतये वाचस्पतय इत्यस्य याज्या हंसैरिवेत्येषा। सूत्रितं च। बृहस्पते प्रथमं वाचो अग्रं हंसैरिव सखिभिर्वावदद्भिः। आ॰ ४.११.। इति ॥

॥ सैषा तृतीया ॥

हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन्।
बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वाँ अगायत् ॥३॥

हंसैःऽइव। सखिऽभिः। वावदत्ऽभिः। अश्मन्ऽमयानि। नहना। विऽअस्यन्।
बृहस्पतिः। अभिऽकनिक्रदत्। गाः। उत। प्र। अस्तौत्। उत्। च। विद्वान्। अगायत् ॥३॥

हंसैरिव मधुरवाग्भिः सखिभिः सखिभूतैर्वावदद्भिरत्यंतं शब्दायमानैर्मरुद्भिरश्मन्मयान्यश्ममयानि नहना गवां बंधकान्यावरकाण्यसुराणां स्थानानि व्यस्यन्

विक्षिपन् शिथिलयन् अभिकनिक्रदद्दाभिमुख्येन शब्दयन् गाः पणिभिरपहृता- न्पशूनाजिहीर्षुः स बृहस्पतिर्वर्तते । यद्वा वावदद्भिरत्यंतं स्तुवद्भिः स्तोतृभिः सह गाः स्तोत्रलक्षणा वाचोऽभिकनिक्रदद्दाभिमुख्येनोच्चारयन् उतापि च प्रास्तौत्र- कर्मणि प्रवृत्तो यज्ञस्य सखिभिः सहासीनः साम गातुं प्रस्तौति । विद्वान् सर्वं जानानः स उद्गाता भूत्वोद्गायत् । देवानुद्गायति । अभिष्टौति ॥

॥ अथ चतुर्थी ॥

अवो द्वाभ्यां पर एकया गा गुहा तिष्ठंतीरनृतस्य सेतौ ।

बृहस्पतिस्तमसि ज्योतिरिच्छन्नुदुस्रा आकर्वि हि तिस्र आवः ॥४॥

अवः । द्वाभ्यां । परः । एकया । गाः । गुहा । तिष्ठंतीः । अनृतस्य । सेतौ ।

बृहस्पतिः । तमसि । ज्योतिः । इच्छन् । उत् । उस्राः । आ । अकः । वि । हि । तिस्रः । आवरित्यावः ॥४॥

पणयो गा आहृत्य त्रिषु स्थानेषु निदधुः । अवोऽवस्तात्स्थिता अनृतस्य तमसः सेतौ स्थाने गुहा गुहायां तिष्ठंतीर्गा द्वाभ्यां स्थानाभ्यामुदाजत् ततः परः पर- स्तादवस्थिता गा एकयैकेन स्थानेनोदगमयत् । तदेवाह । बृहस्पतिस्तस्मिंस्तमसि ज्योतिः कर्तुमिच्छन् तत्र स्थिता उस्रा गा उदाकः । उदकार्षीत् । प्रादुर्भूता अकार्षीत् । इत्थमयं तिस्रोऽसुराणां द्वारो व्यावः । विवृतवान्खलु । वृणोतेर्लुङि मंत्रे घसेति च्लेर्लुक् । बहुलं छंदसीत्यडागमः ॥

॥ अथ पंचमी ॥

विभिद्या पुरं शयथेमपाचीं निस्त्रीणि साकमुदधेरकृंतत् ।

बृहस्पतिरुषसं सूर्यं गामर्कं विवेद स्तनयन्निव द्यौः ॥५॥

विऽभिद्य । पुरं । शयथा । ईं । अपाचीं । निः । त्रीणि । साकं । उदऽधेः । अकृंतत् ।

बृहस्पतिः । उषसं । सूर्यं । गां । अर्कं । विवेद । स्तनयन्ऽइव । द्यौः ॥५॥

स बृहस्पतिः शयथोपशयेन स्थित्वापाचीं पराङ्मुखीमीमिमामसुरपुरीं विभिद्य विदार्योदधेर्वलाख्यमेघरूपादसुरात्साकं सह युगपत् त्रीण्युषसं सूर्यं गामेतानि त्रीणि निरकृंतत् । निर्गतमकार्षीत् । तमसावृतेषु स्थानेषूषःकालतः पश्चाद्भाविनं सूर्यं च जनयित्वा पशून्निरगमयदित्यर्थः । सोऽयमर्कमर्चनीयं मंत्रं सूर्यं विवेद प्रज्ञा- पयति । कथमिव । यथा स्तनयन् शब्दं कुर्वन् द्यौरिव स्थितः ॥

॥ अथ षष्ठी ॥

इंद्रो वलं रक्षितारं दुघानां करेणेव वि चकर्ता रवेण ।
स्वेदांजिभिराशिरमिच्छमानोऽरोदयत्पणिमा गा अमुष्णात् ॥ ६॥
इंद्रः । वलं । रक्षितारं । दुघानां । करेणऽइव । वि । चकर्त । रवेण ।
स्वेदांजिऽभिः। आऽशिरं। इच्छमानः। अरोदयत्। पणिं। आ। गाः। अमुष्णात् ॥ ६॥

इंद्र ईश्वरो बृहस्पतिर्दुघानां क्षीरस्य दोग्ध्रीणां गवां रक्षितारं वलमसुरं करेणेव सायुधकर इव स्थितेन रवेण शब्देन वलं वि चकर्त । विचिच्छेद । किंच स्वेदांजिभिः । स्वेदांजयो मरुतः क्षरदाभरणाः । तैः सहाशिरमाश्रयणं संयोगमिच्छमानः कामयमानः पणिं वलस्यानुचरमेतन्नामानमसुरमरोदयत् । व्यनाशयत् । ततस्तेनापहृता गा अमुष्णात् । आजहार ॥

॥ इत्यष्टमस्य द्वितीये पंचदशो वर्गः ॥

॥ अथ सप्तमी ॥

स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं वि धनसैरदर्दः ।
ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणं व्यानट् ॥ ७॥
सः। ईं। सत्येभिः। सखिऽभिः। शुचत्ऽभिः। गोऽधायसं। वि। धनऽसैः। अदर्दरित्यदर्दः।
ब्रह्मणः । पतिः । वृषऽभिः । वराहैः । घर्मऽस्वेदेभिः । द्रविणं । वि । आनट् ॥ ७॥

स बृहस्पतिः सत्येभिर्यथार्थबलैः सखिभिः सखिभूतैः शुचद्भिर्दीप्यमानैर्धनसैर्धनस्य संभक्तृभिर्मरुद्भिः सह गोधायसं गवां धारकमीमेनं वलं व्यदर्दः । व्यदारयत् । ततो ब्रह्मण ऋग्यजुःसामलक्षणस्य स्तोत्रस्य पतिरधिपतिः स वृषभिर्वर्षितृभिर्वराहैर्वराहारैर्वरस्य वरणीयस्योदकस्याहर्तृभिर्घर्मस्वेदेभिर्दीप्तागमनैर्यद्वा क्षरदुदकैः । अथवा घर्मो यज्ञः । तं प्रति गंतृभिर्मरुद्भिर्द्रविणं गोलक्षणं धनं व्यानट् । व्याप्नोत् ॥

॥ अथाष्टमी ॥

ते सत्येन मनसा गोपतिं गा इयानास इषणयंत धीभिः ।
बृहस्पतिर्मिथोअवद्यपेभिरुदुस्रिया असृजत स्वयुग्भिः ॥ ८॥

ते । सत्येन । मनसा । गोऽपतिं । गाः । इयानासः । इषणयंत । धीभिः ।
बृहस्पतिः । मिथःऽअवद्यपेभिः । उत् । उस्रियाः । असृजत । स्वयुक्ऽभिः ॥८॥

गाः पणिभिरपहृतान्पशूनियानासोऽभिगच्छंतः सत्येन यथार्थभूतेन मनसा युक्तास्ते मरुतो धीभिरात्मीयैः कर्मभिरेतं बृहस्पतिं गोपतिं तदाहरणेन गवां स्वामिनं कुर्म इतीषणयंत । ऐच्छन् । बृहस्पतिश्च मिथोअवद्यपेभिः । पातेः कर्मण्यौणादिकः प्रत्ययः । अवद्यरूपादसुराद्रक्षितव्या गावो येषु मरुत्सु परस्परं संगच्छंत इति ते तथोक्ताः । तैः स्वयुग्भिः स्वयमेव युक्तैर्मरुद्भिरुस्रिया गा उदसृजत । पर्वतान्निरगमयत् ॥

॥ अथ नवमी ॥

तं वर्धयंतो मतिभिः शिवाभिः सिंहमिव नानदतं सधस्थे ।
बृहस्पतिं वृषणं शूरसातौ भरेभरे अनु मदेम जिष्णुं ॥९॥
तं । वर्धयंतः । मतिऽभिः । शिवाभिः । सिंहंऽइव । नानदतं । सधऽस्थे ।
बृहस्पतिं । वृषणं । शूरऽसातौ । भरेऽभरे । अनु । मदेम । जिष्णुं ॥९॥

सधस्थे । सह तिष्ठंत्यत्र देवा इति सधस्थमंतरिक्षं । तस्मिन् सिंहमिव नानदतं पुनःपुनः शब्दायमानं वृषणं कामानां वर्षितारं जिष्णुं जयशीलं तं बृहस्पतिं वर्धयंतो मरुतो वयं शूरसातौ शूरैः संभजनीये भरे भरे संग्रामे शिवाभिः कल्याणीभिः स्तुतिभिरनु मदेम । अनुष्टुमः । स्तोतृपरत्वेन वा योजनीयं ॥

॥ अथ दशमी ॥

यदा वाजमसनद्विश्वरूपमा द्यामरुक्षदुत्तराणि सद्म ।
बृहस्पतिं वृषणं वर्धयंतो नाना संतो बिभ्रतो ज्योतिरासा ॥१०॥
यदा । वाजं । असनत् । विश्वऽरूपं । आ । द्यां । अरुक्षत् । उत्ऽतराणि । सद्म ।
बृहस्पतिं । वृषणं । वर्धयंतः । नाना । संतः । बिभ्रतः । ज्योतिः । आसा ॥१०॥

स बृहस्पतिर्यदा यस्मिन्काले विश्वरूपं नानारूपं वाजं गोलक्षणमन्नमसनद्भजते यदा वाहृतपशुकः सन् द्यां द्युलोकमरुक्षदारोहति । अथवोत्तराणि वा सद्म स्थानान्यारोहति । रुहेर्लुङि च्लेः शल् । इगुपधादनिटः क्सः । तदानीं वृषणं

वर्षितारं बृहस्पतिमासास्येन देवा वर्धयंतो भवंति। तथा नाना दिक्षु संतो भवंतो ज्योतिर्बिभ्रतो धारयंतो देवाश्च स्तुवंति ॥

॥ अथैकादशी ॥

सत्यामाशिषं कृणुता वयोधै कीरिं चिद्ध्यवथ स्वेभिरेवैः।

पश्चा मृधो अप भवंतु विश्वास्तद्रोदसी शृणुतं विश्वमिन्वे ॥११॥

सत्यां। आऽशिषं। कृणुत। वयःऽधै। कीरिं। चित्। हि। अवथ। स्वेभिः। एवैः।

पश्चा। मृधः। अप। भवंतु। विश्वाः। तत्। रोदसी इति। शृणुतं। विश्वमिन्वे इति विश्वंऽइन्वे ॥११॥

हे बृहस्पतिप्रभृतयो देवा वयोधा अन्नस्य ध्यानायास्मदीयामाशिषं स्तुतिं सत्यां यथार्थां कृणुत। कुरुत। तथा यूयं स्वेभिरात्मीयैरेवैर्गमनैः कीरिं स्तोतारं मामवथ। रक्षथ। हिरवधारणे। पश्चा। पश्चा च छंदसीति निपातितः। पश्चाद्विश्वाः सर्वा मृधो हिंसित्र्योऽप भवंतु। नश्यंतु। तदिदमस्माभिरुक्तं वचनं हे विश्वमिन्वे विश्वस्य प्रीणयित्र्यौ हे रोदसी द्यावापृथिव्यौ शृणुतं ॥

॥ अथ द्वादशी ॥

इंद्रो मह्ना महतो अर्णवस्य वि मूर्धानमभिनदर्बुदस्य।

अहन्नहिमरिणात्सप्त सिंधून्देवैर्द्यावापृथिवी प्रावतं नः ॥१२॥

इंद्रः। मह्ना। महतः। अर्णवस्य। वि। मूर्धानं। अभिनत्। अर्बुदस्य।

अहन्। अहिं। अरिणात्। सप्त। सिंधून्। देवैः। द्यावापृथिवी इति। प्र। अवतं। नः ॥१२॥

इंद्र ईश्वरो मह्ना महत्त्वेन युक्तो बृहस्पतिर्महतो अर्णवस्योदकवतोऽर्बुदस्यांबुदस्य मेघस्य मूर्धानं शिरो व्यभिनत्। व्यच्छिनत्। तदुच्यते। अहिमहंतव्यमपामावरकं शत्रुमहन्। अवधीत्। अतः सप्त सर्पणशीलाः सिंधून् स्यंदमाना अपः। यद्वा सप्तसंख्याका गंगाद्या नदीररिणात्। समुद्रं प्रत्यगमयत्। अथ प्रत्यक्षकृतः। हे द्यावापृथिव्यौ देवैः सह नोऽस्मान्प्रावतं। प्ररक्षतं ॥

॥ इत्यष्टमस्य द्वितीये षोडशो वर्गः ॥

उदप्रुत इति द्वादशर्चमष्टमं सूक्तं। ऋष्याद्याः पूर्ववत्। उदप्रुत इत्यनुक्रांतं।

उक्थे ब्राह्मणाच्छंसिन एतत्सूक्तं। सूचितं च। प्र मंहिष्ठायोदप्रुतोऽच्छा म इंद्रं। आ॰ ६.१.। इति ॥

॥ तत्र प्रथमा ॥

उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः।
गिरिभ्रजो नोर्मयो मदंतो बृहस्पतिमभ्य१र्का अनावन् ॥१॥
उदऽप्रुतः। न। वयः। रक्षमाणाः। वावदतः। अभ्रियस्यऽइव। घोषाः।
गिरिऽभ्रजः। न। ऊर्मयः। मदंतः। बृहस्पतिं। अभि। अर्काः। अनावन् ॥१॥

उदप्रुत उदकस्योन्नमयितारो वयः पक्षिणः। पक्वात्सस्याद्रक्षमाणाः कृषीवलाः। न उपमार्थे। यथा शब्दायंते। यथा च वावदतः पुनःपुनः शब्दायमानस्याभ्रियस्येवाभ्रसमूहस्य घोषाः शब्दा यथा भवंति। किंच गिरिभ्रजो गिरिभ्यो मेघेभ्यो भ्रष्टा निर्गता ऊर्मयोऽप्समूहा मदंतः शब्दायमाना भवंति तथार्का अर्चकाः स्तोतारो बृहस्पतिमभ्यनावन्। अभिष्टुवंति। नु स्तवने ॥

॥ अथ द्वितीया ॥

सं गोभिरांगिरसो नक्षमाणो भग इवेदर्यमणं निनाय।
जने मित्रो न दंपती अनक्ति बृहस्पते वाजयाशूँरिवाजौ ॥२॥
सं। गोभिः। आंगिरसः। नक्षमाणः। भगःऽइव। इत्। अर्यमणं। निनाय।
जने। मित्रः। न। दंपती इति दंऽपती। अनक्ति। बृहस्पते। वाजय। आशून्ऽइव।
आजौ ॥२॥

आंगिरसोऽंगिरसः पुत्रो नक्षमाणः स्वतेजसा व्याप्नुवन् भग इवेन्नगो देव इव स्थितो बृहस्पतिरेवार्यमणं स्तुतः प्रेरकं स्तोतारं गोभिः सह सं निनाय। नयति। संयोजयति। मित्रो न मित्रो यथा जने जनपदे स्वरश्मीन्संयोजयति तद्वद्दंपती जायापती अनक्ति। संगमयति। स्वसामर्थ्ये तत्र स्थापयतीत्यर्थः। हे बृहस्पत आशून्व्याप्तान्स्वरश्मीन्वाजय। तव स्तोतृषु गमय। स्थापय। आशूनिव व्याप्तानश्वानाजौ संग्रामे योद्धारो यथा संगमयंति तद्वत् ॥

॥ अथ तृतीया ॥

साध्वर्या अतिथिनीरिषिराः स्पार्हाः सुवर्णा अनवद्यरूपाः ।
बृहस्पतिः पर्वतेभ्यो वितूर्या निर्गा ऊपे यवमिव स्थिविभ्यः ॥३॥

साधुऽअर्याः । अतिथिनीः । इषिराः । स्पार्हाः । सुऽवर्णाः । अनवद्यऽरूपाः ।
बृहस्पतिः । पर्वतेभ्यः । विऽतूर्य । निः । गाः । ऊपे । यवंऽइव । स्थिविऽभ्यः ॥३॥

साध्वर्याः साधूनां कल्याणानां पयसां नेत्रीरतिथिनीः सततं गच्छंतीरिषिरा एषणीयाः स्पार्हाः स्पृहणीयाः सुवर्णाः शोभनशुक्लादिवर्णोपेता अनवद्यरूपाः प्रशस्यरूपा एता गाः पर्वतेभ्यो वलसंबंधिभ्यो वितूर्य निर्गमय्योपे । देवसमीपे निर्वपति । प्रापयति । तत्र दृष्टांतः । यवमिव । यथा यवं स्थिविभ्यः कुसीदेभ्य आदाय निर्वपति । डुवप् बीजसंताने । लिटि रूपं । यद्वा साधुनयनादिगुणयुक्ता गा अपः पर्वतेभ्यो मेघेभ्य आहृत्य सर्वत्र वर्षति ॥

॥ अथ चतुर्थी ॥

आप्रुषायन्मधुन ऋतस्य योनिमवक्षिपन्नर्क उल्कामिव द्योः ।
बृहस्पतिरुद्धरन्नश्मनो गा भूम्या उद्नेव वि त्वचं बिभेद ॥४॥

आऽप्रुषायन् । मधुना । ऋतस्य । योनिं । अवऽक्षिपन् । अर्कः । उल्कांऽइव । द्योः ।
बृहस्पतिः । उद्धरन् । अश्मनः । गाः । भूम्याः । उद्नाऽइव । वि । त्वचं । बिभेद ॥४॥

मधुनोदकेनाप्रुषायन् पृथिवीमाभिमुख्येन सिंचन् । प्रुष प्लुष स्नेहनसेचनपूरणेषु । व्यत्ययेन विकरणस्य शायजादेशः । ऋतस्योदकस्य योनिं मेघमवक्षिपन् वृष्ट्यर्थमवकिरन्नर्कोऽर्चनीयो बृहस्पतिर्द्योर्द्युलोकादुल्कामिवोल्कां यथोद्धरति तद्वदश्मनः शिलोच्चयाद्वलेनाधिष्ठितान्गाः पणिभिरपहृतान्पशूनुद्धरन् ऊर्ध्वं गमयन्भूम्यास्त्वचं तेषां शफैर्वि बिभेद । विभिन्नामकार्षीत् । सर्वत्र गा वितता अकार्षीदित्यर्थः । तत्र दृष्टांतः । उद्नेव यथा वृष्ट्युदकेन पर्जन्यो भूमित्वचं विभिनत्ति तद्वत् ॥

॥ अथ पंचमी ॥

अप ज्योतिषा तमो अंतरिक्षादुद्नः शीपालमिव वात आजत् ।
बृहस्पतिरनुमृश्या वलस्याभ्रमिव वात आ चक्र आ गाः ॥५॥

अप। ज्योतिषा। तमः। अंतरिक्षात्। उद्नः। शीपालंऽइव। वातः। आजत्।
बृहस्पतिः। अनुऽमृश्य। वलस्य। अभ्रंऽइव। वातः। आ। चक्रे। आ। गाः ॥५॥

स बृहस्पतिर्ज्योतिषा तमसावृते पर्वतविवरे कृतेन सूर्येणांतरिक्षात्तमोऽपाजत्। अपागमयत्। तत्र दृष्टांतः। उद्नः शीपालमिव। यथोदकाद्वातो वायुः शीपालं शैवालमपगमयति तद्वत्। ततः सोऽयमनुमृश्यात्र गावस्तिष्ठंतीति विचार्य निश्चित्य वलस्य स्वभूतस्य पर्वतस्यांतर्गता गा आ चक्रे। आ समंतादकार्षीत्। कथमिव। अभ्रमिव। यथा वायुरंतरिक्षस्थितमभ्रं मेघमाकिरति तद्वत्॥

॥ अथ षष्ठी ॥

यदा वलस्य पीयतो जसुं भेद्बृहस्पतिरग्नितपोभिरर्कैः।
दद्भिर्न जिह्वा परिविष्टमाददाविर्निधीरकृणोदुस्रियाणां ॥६॥
यदा। वलस्य। पीयतः। जसुं। भेत्। बृहस्पतिः। अग्नितपःऽभिः। अर्कैः।
दत्ऽभिः। न। जिह्वा। परिऽविष्टं। आदत्। आविः। निऽधीन्। अकृणोत्।
उस्रियाणां ॥६॥

पीयतः। पीयतिर्हिंसाकर्मा। हिंसकस्य वलस्य जसुमायुधं यदा यस्मिन्काले भेद् भिनत्ति। केन साधनेन। अग्नितपोभिरग्निवत्तपनशीलैरर्कैरर्चनीयै रश्मिभिः। अपि वा मंत्रैर्भिनत्ति। किंच दद्भिः। पद्दन्नोमासित्यादिना दंतशब्दस्य दद्भावः। यथा दंतैः परिविष्टं भक्ष्यं जिह्वा भक्षयति तद्वत्स परिविष्टं पर्वते पणिभिः परिवृतं वलनामानं यदाददभक्षयदवधीत् तदानीं तैरपहृतानामुस्रियाणां गवां निधीनाविरकृणोत्। आविर्भूतमकरोत्॥

॥ इत्यष्टमस्य द्वितीये सप्तदशो वर्गः ॥

॥ अथ सप्तमी ॥

बृहस्पतिरमत हि त्यदासां नाम स्वरीणां सदने गुहा यत्।
आंडेव भित्त्वा शकुनस्य गर्भमुदुस्रियाः पर्वतस्य त्मनाजत् ॥७॥
बृहस्पतिः। अमत। हि। त्यत्। आसां। नाम। स्वरीणां। सदने। गुहा। यत्।
आंडाऽइव। भित्त्वा। शकुनस्य। गर्भं। उत्। उस्रियाः। पर्वतस्य। त्मना। आजत्॥७॥

बृहस्पतिर्गुहा गुहायां सदने स्थाने स्वरीणां शब्दायमानानामासां गवां त्यत्तत्प्रसिद्धं नाम नामधेयं यद्यदामत हि ज्ञातवान्खलु ॥ मनु अवबोधने । लुङि तनादिभ्यस्तथासोरिति सिचो लुक् ॥ तदानीं पर्वतस्थिता उस्रिया गास्त्म-नात्मनैवासहायेन पर्वतं भित्त्वोदाजत् । उद्गमयत् । तत्र दृष्टांतः । आंडेव । यथा शकुनस्य पक्षिण आंडानि भित्त्वा तत्र स्थितं गर्भमुन्नमयति तद्वत् ॥

॥ अथाष्टमी ॥

अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियंतं ।
निष्टज्जभार चमसं न वृक्षाद्बृहस्पतिर्विरवेणा विकृत्य ॥८॥

अश्ना । अपिऽनद्धं । मधु । परि । अपश्यत् । मत्स्यं । न । दीने । उदनि । क्षियंतं ।
निः । तत् । जभार । चमसं । न । वृक्षात् । बृहस्पतिः । विऽरवेण । विऽकृत्य ॥८॥

बृहस्पतिरश्नाश्मना व्याप्तया शिलयापिनद्धं पिहितं मधु गोलक्षणं पर्यपश्यत् । परितोऽद्राक्षीत् । तत्र दृष्टांतः । मत्स्यं न । यथा दीने शुष्क उदनि । उदकशब्द-स्योदन्नादेशः । उदके क्षियंतं निवसंतं मत्स्यं यथा पश्यति तद्वत् । दृष्ट्वा च तद्गो-लक्षणं मधु विरवेण विविधेन शब्देन विकृत्य वलं छित्त्वा निर्जभार । कथमिव । चमसं न । चमंति भक्षयंत्यत्रेति चमसः सोमपात्रं । तं यथा वृक्षान्निर्हरति तद्वत् । हरतेर्लिटि रूपं । हृग्रहोर्भः ॥

॥ अथ नवमी ॥

सोषामविंदत्सः स्व१ः सो अग्निं सो अर्केण वि बबाधे तमांसि ।
बृहस्पतिर्गोवपुषो वलस्य निर्मज्जानं न पर्वणो जभार ॥९॥

सः । उषां । अविंदत् । सः । स्व१रिति स्वः । सः । अग्निं । सः । अर्केण । वि । बबाधे । तमांसि ।
बृहस्पतिः । गोऽवपुषः । वलस्य । निः । मज्जानं । न । पर्वणः । जभार ॥९॥

स बृहस्पतिस्तत्र पर्वतविवरे गवां दर्शनायोषामुषसमविंदत् । अलभत । स एव स्वरादित्यं सोऽग्निं लब्ध्वार्केणार्चनीयेन तेजसा तमांसि वि बबाधे । अत्यर्थं बाधितवान् । ततः स गोवपुषो गोरूपशरीरस्य पशुभिः परिवृतस्य वलस्य पर्वणः पर्वतात्ता गा निर्जभार । वलेन निर्जहार । वलादाहरणे दृष्टांतः । मज्जानं न पर्वणः । अस्थ्नो मज्जानं यथातिक्लेशेन निर्हरंति तद्वत् ॥

॥ अथ दशमी ॥

हिमेव पर्णा मुषिता वनानि बृहस्पतिनाकृपयद्वलो गाः ।

अनानुकृत्यमपुनश्चकार यात्सूर्यामासा मिथ उच्चरातः ॥१०॥

हिमाऽइव । पर्णा । मुषिता । वनानि । बृहस्पतिना । अकृपयत् । वलः । गाः ।

अननुऽकृत्यं । अपुनरिति । चकार । यात् । सूर्यामासा । मिथः । उत्ऽचरातः ॥१०॥

हिमेव यथा हिमेन पर्णा पर्णानि पद्मपत्राणि मुषिता मुषितानि भवंति तद्वद्वलेन वनानि वननीयानि गोधनानि मुषितान्यभूवन् । अथ गवामन्वेषणाय बृहस्पतिनागतेन हेतुना वलोऽकृपयत् । अस्मै ता मुषिता गाः प्रायच्छत् । तचाननुकृत्यमननुकरणीयमपुनःकर्तव्यं च तत्कर्म चकार । यथा तत्पश्चात्करणीयं न भवति यथा पुनरकरणीयं तथाकार्षीदित्यर्थः । किं तदित्याह । सूर्यामासा सूर्यचंद्रमसौ मिथः परस्परमहोरात्रयोरुच्चरात उच्चरत इति यात् तच्चकार । यादिति दीर्घश्छांदसः ॥

॥ अथैकादशी ॥

अभि श्यावं न कृशनेभिरश्वं नक्षत्रेभिः पितरो द्यामपिंशन् ।

रात्र्यां तमो अदधुर्ज्योतिरहन्बृहस्पतिर्भिनदद्रिं विदद्गाः ॥११॥

अभि । श्यावं । न । कृशनेभिः । अश्वं । नक्षत्रेभिः । पितरः । द्यां । अपिंशन् ।

रात्र्यां । तमः । अदधुः । ज्योतिः । अहन् । बृहस्पतिः । भिनत् । अद्रिं । विदत् । गाः ॥११॥

पितरः पालयितारो देवा द्यां द्युलोकं नक्षत्रेभिराश्विन्यादिभिरभ्यपिंशन् । अभितोऽदीपयन् । पिश अवयवे । अयं दीपनायां वर्तते । तत्र दृष्टांतः । श्यावं न । यथा श्याववर्णमश्वं कृशनेभिः सौवर्णैराभरणैरलंकुर्वंति तद्वत् । तथा रात्र्यां तमो निहितवंतः । किंचाहन् अह्नि ज्योतिरादित्याख्यमदधुः । अदधुरित्युत्तरवाक्येन संबंधः करणीयः । अन्यथा स्वरो न घटते । अत्र तु वाक्यभेदादनिघातः । यदा बृहस्पतिरद्रिं वलेनाधिष्ठितं शिलोच्चयं भिनदभिनत् विभिद्य च तत्र स्थितान्गाः पशून्विददविददलभत । विदेर्लुङि लृदित्त्वादङ् । तदा देवा एवमकार्षुरित्यर्थः ॥

॥ अथ द्वादशी ॥

इदमकर्म नमो अभ्रियाय यः पूर्वीरन्वानोनवीति ।

बृहस्पतिः स हि गोभिः सो अश्वैः स वीरेभिः स नृभिर्नो वयो धात् ॥१२॥

इ॒दं । अ॒क॒र्म॒ । नमः॑ । अ॒भ्रि॒याय॑ । यः । पू॒र्वीः । अनु॑ । आ॒ऽनोन॑वीति ।
बृह॒स्पतिः॑ । सः । हि । गोभिः॑ । सः । अश्वैः॑ । सः । वी॒रेभिः॑ । सः । नृऽभिः॑ । नः॒ । वयः॑ ।
धा॒त् ॥ १२ ॥

अभ्रियायाभ्रेषु भवायांतरिक्ष्याय मध्यमाय बृहस्पतय इदमुक्तं नमः स्तोत्रमकर्म । वयमकार्ष्म । यो बृहस्पतिः पूर्वीर्बह्वीर्ऋचोऽन्वनुक्रमेणानोनवीत्यत्यर्थमाभिमुख्येन ब्रवीति स बृहस्पतिरेव गोभिरश्वैश्च युक्तं वीरेभिः पुत्रैर्नृभिर्भृत्यादिभिश्च सहितं वयोऽन्नं नोऽस्मभ्यं स्तोतृभ्यो धात् । दधातु । प्रयच्छतु । तच्छब्दावृत्तिरादरार्था ॥

॥ इत्यष्टमस्य द्वितीयेऽष्टादशो वर्गः ॥

॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे दाशतय्या दशमे मंडले पंचमोऽनुवाकः ॥

षष्ठेऽनुवाके षोडश सूक्तानि । भद्रा इति द्वादशर्चं प्रथमं सूक्तं वध्र्यश्वपुत्रस्य सुमित्रस्यार्षं । आदितो द्वे जगत्यावथ दश त्रिष्टुभः । अग्निर्देवता । तथा चानुक्रम्यते । भद्राः सुमित्रो वाध्र्यश्व आग्नेयं द्विजगत्यादीति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

भ॒द्रा अ॒ग्नेर्व॑ध्र्य॒श्वस्य॑ सं॒दृशो॑ वा॒मी प्रणी॑तिः सु॒रणा॒ उपे॑तयः ।
यदीं॑ सुमि॒त्रा विशो॒ अग्र॑ इं॒धते॑ घृ॒तेनाहु॑तो जरते॒ दवि॑द्युतत् ॥ १ ॥

भ॒द्राः । अ॒ग्नेः । व॒ध्रि॒ऽअ॒श्वस्य॑ । सं॒ऽदृशः॑ । वा॒मी । प्रऽनी॑तिः । सु॒ऽरणाः॑ । उप॑ऽइतयः ।
यत् । ई॒म् । सु॒ऽमि॒त्राः । विशः॑ । अग्रे॑ । इं॒धते॑ । घृ॒तेन॑ । आऽहु॑तः । ज॒र॒ते॒ । दवि॑द्युतत् ॥ १ ॥

अग्नेर्वक्ष्यमाणगुणस्य संदृशः संदृष्टयो वध्र्यश्वस्यैतन्नामकस्य मम पितुर्भद्राः कल्याणकारिण्यो भवंतु । यद्वा वध्र्यश्वस्य वध्र्यश्वकुले जातस्याग्नेः संदृष्टयो भजनीया भवंतु । प्रणीतिस्तस्य प्रणयनं वामी कल्याणं च भवतु । तथोपेतयो यज्ञं प्रत्युपगतयः सुरणाः शोभनरमणा भवंतु । सुमित्रा एतन्नामधेया विशोऽमी मनुष्या ईमेनमग्निमग्रे प्रथमं यद्यदेंधते हविर्भिर्दीपयंति तदा घृतेनाहुतो हविर्भिश्च दविद्युतद्भृशं द्योतमानः । दाधर्तिदर्धर्तीत्यादिना निपातितः । सोऽग्निर्जरते । अस्माभिः स्तूयते ॥

॥ अथ द्वितीया ॥

घृतमग्नेर्वध्र्यश्वस्य वर्धनं घृतमन्नं घृतम्वस्य मेदनं ।
घृतेनाहुत उर्विया वि पप्रथे सूर्य इव रोचते सर्पिरासुतिः ॥२॥

घृतं । अग्नेः । वध्रिऽअश्वस्य । वर्धनं । घृतं । अन्नं । घृतं । ऊं इति । अस्य । मेदनं ।
घृतेन । आऽहुतः । उर्विया । वि । पप्रथे । सूर्यःऽइव । रोचते । सर्पिःऽआसुतिः ॥२॥

वध्र्यश्वस्य संबंधिनोऽग्नेर्घृतं दीयमानं हविर्वर्धनं भवतु । तथा घृतमन्नमदनीयं भवतु । तथास्याग्नेर्घृतमु घृतमेव मेदनं पुष्टिकरं भवतु । येनाग्निः पुष्टो भवति तन्मेदनं । तेन घृतेनाहुतोऽग्निरुर्वियोर्वत्यंतं वि पप्रथे । स्वतेजसा विप्रथितो भवति । तथा सर्पिरासुतिः सर्पिरासूयते यस्मिन्निति सोऽग्निः सूर्य इव रोचते । दीप्यते ॥

॥ अथ तृतीया ॥

यत्ते मनुर्यदनीकं सुमित्रः समीधे अग्ने तदिदं नवीयः ।
स रेवच्छोच स गिरो जुषस्व स वाजं दर्षि स इह श्रवो धाः ॥३॥

यत् । ते । मनुः । यत् । अनीकं । सुऽमित्रः । संऽईधे । अग्ने । तत् । इदं । नवीयः ।
सः । रेवत् । शोच । सः । गिरः । जुषस्व । सः । वाजं । दर्षि । सः । इह । श्रवः । धाः ॥३॥

हे अग्ने ते त्वदीयं यदनीकं रश्मिसंघं मनुरेतन्नामको यथा समीधे हविर्भिः सम्यग्दीपयति सुमित्र एतन्नामकोऽहं समीधे । सम्यग्दीपयामि ॥ ञिइंधी दीप्तौ । लिटींधिभवतिभ्यां चेति किस्वान्नलोपः ॥ तदिदं सोऽयं रश्मिसंघो नवीयो नवतरो भवतु । स त्वं रेवद्धनयुक्तं यथा भवति तथा शोच । प्रज्वल । स एव त्वं गिरोऽस्मदीयाः स्तुतीर्जुषस्व । सेवस्व । स त्वं वाजं शत्रुबलं दर्षि । विदारय । तथेह मयि श्रवोऽन्नं धाः । धेहि ॥

॥ अथ चतुर्थी ॥

यं त्वा पूर्वमीळितो वध्र्यश्वः समीधे अग्ने स इदं जुषस्व ।
स नः स्तिपा उत भवा तनूपा दात्रं रक्षस्व यदिदं ते अस्मे ॥४॥

यं । त्वा । पूर्वं । ईळितः । वध्रिऽअश्वः । संऽईधे । अग्ने । सः । इदं । जुषस्व ।
सः । नः । स्तिऽपाः । उत । भव । तनूऽपाः । दात्रं । रक्षस्व । यत् । इदं । ते ।
अस्मे इति ॥४॥

ईळितः । व्यत्ययेन कर्तरि क्तः । स्तोता वध्र्यश्वो मम पिता पूर्वं पूर्वस्मिन्काले संजातं यं त्वां समीधे हविर्भिः सम्यगदीपयत् स त्वमिदानीं मया क्रियमाणमिदं स्तोत्रं जुषस्व । सेवस्व । यद्वा वध्र्यश्वस्तस्य पुत्रोऽहं सम्यग्दीपितवानस्मि । स त्वं नोऽस्माकं स्तिपाः । पृषोदरादिः । पस्त्यं गृहं । तस्य रक्षको भव । यद्वोपस्थिताञ्ज्योतिष्टोमादीन्यागान्पालयतीति स्तिपाः । अस्मदीयानां यज्ञानां पालयिता भव । उतापि च तनूपाः स्वांगानां रक्षको भव । किंच दात्रं तद्धनं रक्षस्व यदिदं धनं ते तव स्वभूतेष्वस्मे अस्मासु तिष्ठति ॥

॥ अथ पंचमी ॥

भवा द्युम्नी वाध्र्यश्वोत गोपा मा त्वा तारीदभिमातिर्जनानां ।
शूर इव धृष्णुश्च्यवनः सुमित्रः प्र नु वोचं वाध्र्यश्वस्य नाम ॥५॥
भव । द्युम्नी । वाध्रिऽअश्व । उत । गोपाः । मा । त्वा । तारीत् । अभिऽमातिः । जनानां ।
शूरःऽइव । धृष्णुः । च्यवनः । सुऽमित्रः । प्र । नु । वोचं । वाध्रिऽअश्वस्य । नाम ॥५॥

हे वाध्र्यश्व वध्र्यश्वकुले जाताग्ने द्युम्नी । द्युम्नं द्योततेर्यशो वान्नं वा । तद्वान्भव । उतापि च गोपा गोपायिता भव । किंच त्वा त्वां कश्चिदपि मा तारीत् । मा हिनस्तु । यतो जनानां शत्रूणामभिमातिरभिभवनशीलमानयुक्तोऽभिभविता भवसि । किंच शूर इव बलवानिव धृष्णुः शत्रुधर्षणशीलस्तस्माच्च्यवनस्तेषां च्यावयिता भवसि । अथ वाध्र्यश्वस्याग्नेस्तव नामाग्निर्जातवेदा वैश्वानर इत्यादीनि नामानि नु क्षिप्रं सुमित्रोऽहं प्र वोचं । प्रब्रवीमि । तस्मान्मेऽन्नादियुक्तो भव ॥

॥ अथ षष्ठी ॥

समज्र्या पर्वत्या३ वसूनि दासा वृत्राण्यार्या जिगेथ ।
शूर इव धृष्णुश्च्यवनो जनानां त्वमग्ने पृतनायूँरभि ष्याः ॥६॥
सं । अज्र्या । पर्वत्या । वसूनि । दासा । वृत्राणि । आर्या । जिगेथ ।
शूरःऽइव । धृष्णुः । च्यवनः । जनानां । त्वं । अग्ने । पृतनाऽयून् । अभि । स्याः ॥६॥

हे अग्नेऽज्या । अजंति गच्छंतीत्यज्रयो जनाः । तेभ्यो हितानि पर्वत्या पर्वतभवानि वसूनि गवादिलक्षणानि सं जिगेथ । शत्रुभ्यः संजितवानसि । तथार्यो बलवद्भिः कृतान्दासा दासैरसुरैः कृतान्वृत्राण्युपद्रवान्सं जिगेथ । तान्हतवानसीत्यर्थः । जि जये । लिटि रूपं । शूर इव धृष्णुर्जनानां च्यवनस्त्वं पृतनायून्संग्राम-कामानभि ष्याः । अभिभव । पृतनायूनित्यत्र लोपाभावश्छांदसः । अश्वाघस्यादित्यात्वं विधीयमानमस्मादपि व्यत्ययेन भवति ॥

॥ इत्यष्टमस्य द्वितीय एकोनविंशो वर्गः ॥

॥ अथ सप्तमी ॥

दी॒र्घतं॑तुर्बृ॒हदु॑क्षा॒यम॒ग्निः स॒हस्र॑स्तरीः श॒तनी॑थ॒ ऋभ्वा॑ ।

द्यु॒मान् द्यु॒मत्सु॒ नृभि॑र्मृ॒ज्यमा॑नः सु॒मि॒त्रेषु॑ दीदयो देव॒यत्सु॑ ॥७॥

दी॒र्घऽतं॑तुः । बृ॒हत्ऽउ॑क्षा । अ॒यं । अ॒ग्निः । स॒हस्र॑ऽस्तरीः । श॒तऽनी॑थः । ऋभ्वा॑ ।

द्यु॒ऽमान् । द्यु॒मत्ऽसु॑ । नृ॒ऽभिः॑ । मृ॒ज्यमा॑नः । सु॒ऽमि॒त्रेषु॑ । दी॒द॒यः॒ । दे॒व॒यत्ऽसु॑ ॥७॥

दीर्घतंतुः । यैर्यज्ञं संतनोति ते तंतवः स्तोत्रादयः । प्रभूतस्तुतिमान्बृहदुक्षा । उक्षा सेचको रश्मिः । प्रभूतरश्मियुक्तः सहस्रस्तरीर्हवीरूपबह्वाच्छादनः शतनीथ आहवनीयादिद्वारेण बहुविधनयन ऋभ्वा महान्द्युमत्सु दीप्तिमत्सु मध्ये द्युमानतिशयेन दीप्तिमानयमग्निर्नृभिः कर्मनेतृभिर्ऋत्विग्भिर्मृज्यमानोऽलंक्रियमाणो भवति । मृजू शौचालंकारयोः । स त्वं देवयत्सु देवान्कामयमानेषु सुमित्रेष्वस्मासु दीदयः । दीप्यस्व । दीदयतिर्दीप्तिकर्मा ॥

॥ अथाष्टमी ॥

त्वे धे॒नुः सु॒दुघा॑ जातवेदोऽस॒श्चते॑व सम॒ना स॑ब॒र्धुक् ।

त्वं नृभि॒र्दक्षि॑णावद्भिरग्ने सुमि॒त्रेभि॑रिध्यसे देव॒यद्भिः॑ ॥८॥

त्वे इति॑ । धे॒नुः । सु॒ऽदुघा॑ । जा॒त॒ऽवे॒दः॒ । अ॒स॒श्चता॑ऽइव । स॒म॒ना । स॒बः॒ऽधुक् ।

त्वं । नृ॒ऽभिः॑ । दक्षि॑णावत्ऽभिः । अ॒ग्ने॒ । सु॒ऽमि॒त्रेभिः॑ । इ॒ध्य॒से॒ । दे॒व॒यत्ऽभिः॑ ॥८॥

हे जातवेदो जातप्रज्ञाग्ने त्वे त्वयि सुदुघा सुष्ठु पयसो दोग्ध्री काचिद्धोमसाधनभूता धेनुरस्ति । कीदृशी । असश्चतेव संगवर्जितेनैवैकत्र स्थित्यभावात्कुत्रापि न संयुक्तेनादित्येन समना संगता सबर्धुगमृतं दुहाना गोरूपा माध्यमिका वाग्वैद्युते

त्वय्यस्तीति भावः । तादृशस्त्वं नृभिः कर्मनेतृभिर्दक्षिणावद्भिर्ऋत्विग्भ्यो देयत्वेन तद्वद्भिर्देवयद्भिर्देवकामैः सुमित्रेभिरस्माभिरिध्यसे । हविर्भिर्दीप्यसे ॥

॥ अथ नवमी ॥

देवाश्चित्ते अमृता जातवेदो महिमानं वाध्र्यश्व प्र वोचन् ।
यत्संपृच्छं मानुषीर्विश आयन्त्वं नृभिरजयस्त्वावृधेभिः ॥९॥

देवाः । चित् । ते । अमृताः । जातऽवेदः । महिमानं । वाध्रिऽअश्व । प्र । वोचन् ।
यत् । संऽपृच्छं । मानुषीः । विशः । आयन् । त्वं । नृऽभिः । अजयः । त्वाऽवृधेभिः ॥९॥

हे जातवेदो हे वाध्र्यश्वाग्ने ते तव महिमानममृता देवाश्चिद्देवा अपि प्र वोचन् । प्रब्रुवंति । यद्यदा मानुषीर्मनुष्यसंबंधिन्यो विशः प्रजाः संपृच्छं देवैः सह को वा असुरान्हंतीत्येवमादिकं संप्रश्नमायन्प्राप्नवंतस्तदा त्वं नृभिः सर्वस्य नेतृभिस्त्वावृधेभिस्त्वया वर्धितैर्देवैः सह कर्मविघ्नकारिणस्तानजयः । जितवानसि ॥

॥ अथ दशमी ॥

पितेव पुत्रमबिभरुपस्थे त्वामग्ने वध्र्यश्वः सपर्यन् ।
जुषाणो अस्य समिधं यविष्ठोत पूर्वाँ अवनोर्व्राधतश्चित् ॥१०॥

पिताऽइव । पुत्रं । अबिभः । उपऽस्थे । त्वां । अग्ने । वध्रिऽअश्वः । सपर्यन् ।
जुषाणः । अस्य । संऽइधं । यविष्ठ । उत । पूर्वान् । अवनोः । व्राधतः । चित् ॥१०॥

हे अग्ने त्वामुपस्थे पृथिव्या उपस्थान उत्तरवेद्यां सपर्यन् परिचर्याकर्मा परिचरन्वध्र्यश्वो मम पिताबिभः । धृतवान् । हविर्भिः पोषितवान्वा । कथमिव । पितेव । यथा पिता समीपे पुत्रं स्थापयति पोषयति वा ॥ डुभृञ् धारणपोषणयोः । लङि तिपि गुणे कृते हल्ङ्यादिना तिपो लोपः ॥ हे यविष्ठ युवतमाग्ने उतापि चास्य वध्र्यश्वस्य पितुर्वा मम वा समिधं जुषाणः सेवमानः सन् पूर्वान्प्रत्नान्व्राधतश्चिद्बाधकानपि शत्रूनवनोः । अवधीः । वनतिर्हिंसायां । भौवादिकः । व्यत्ययेनोप्रत्ययः ॥

॥ अथैकादशी ॥

शश्वदग्निर्वध्र्यश्वस्य शत्रून्नृभिर्जिगाय सुतसोमवद्भिः ।
समनं चिददहश्चित्रभानोऽव व्राधंतमभिनद्वृधश्चित् ॥११॥

शश्वंत्। अग्निः। वध्रिऽअश्वस्यं। शत्रून्। नृऽभिः। जिगाय। सुतसौमवत्ऽभिः। समनं। चित्। अदहः। चित्रभानो इतिं चित्रऽभानो। अवं। व्राधंतं। अभिनत्। वृधः। चित्॥११॥

सोऽग्निर्वध्र्यश्वस्य सुतसोमवद्भिरभिषुतसोमैः। अनुवादको मत्वर्थीयः। तैर्नृभिर्ऋत्विग्भिः शश्वत् सर्वदा शत्रूञ्जिगाय। जितवान्। अथ प्रत्यक्षः। हे चित्रभानो नानातेजस्क चायनीयदीप्तिमन्नग्ने त्वं समनं चित्। समनमिति संग्रामनाम। तमप्यदहः स्वतेजोभिः। अथ तव स्तोता वाध्र्यश्वो वृधश्चित्स्वयं वृद्धो भवन्व्राधंतं वर्धमानं हिंसकं वावाभिनत्। अवाङ्मुखं कृत्वाच्छिनत्। यद्वा त्वमेव तमवाभिनत्। अवाङ्मुखं कृत्वाभिनः। अच्छिनः। प्रथममध्यमयोः समानमेतद्रूपं॥

॥ अथ द्वादशी ॥

अयमग्निर्वध्र्यश्वस्यं वृत्रहा संनकात्प्रेद्धो नमंसोपवाक्यः।
स नो अजाँमीरुत वा विजांमीनभि तिष्ठ शर्धतो वाध्र्यश्व ॥१२॥

अयं। अग्निः। वध्रिऽअश्वस्यं। वृत्रऽहा। सनकात्। प्रऽईद्धः। नमंसा। उपऽवाक्यः। सः। नः। अजांमीन्। उत। वा। विऽजांमीन्। अभि। तिष्ठ। शर्धतः। वाध्रिऽअश्व॥१२॥

वृत्रहा शत्रूणां हंतायमग्निः सनकाच्चिरादारभ्य वध्र्यश्वस्य हविषा प्रेद्धः प्रकर्षेण दीपितो भवति। तथा तस्य नमसा नमस्कारेण सहोपवाक्य उपस्तोतव्यो भवति। हे वाध्र्यश्व वध्र्यश्वकुले मथनेन समुत्पन्नाग्ने स त्वं नोऽस्माकमजामीनज्ञातीञ्शत्रून् उत वापिवा शर्धतो हिंसतो विजामीन्विविधाञ्ज्ञातीनप्यभि तिष्ठ। अभिभव॥

॥ इत्यष्टमस्य द्वितीये विंशो वर्गः ॥

इमां म इत्येकादशर्चं द्वितीयं सूक्तं। वाध्र्यश्वस्य सुमित्रस्यार्षं त्रैष्टुभं तनूनपाद्वर्जिताः सनराशंसाः समिदादयः प्रत्यृचं देवताः। तथा चानुक्रांतं। इमां म एकादशाप्रमिति॥ वध्र्यश्वगोत्राणां पशाविदमाप्रीसूक्तं। सूचितं च। समिद्धो अद्येति सर्वेषां यथर्षि वा। आ॰ ३.२.। इति॥

॥ तत्र प्रथमा ॥

इमां मे अग्ने समिधं जुषस्वेळस्पदे प्रति हर्या घृताचीं ।
वर्ष्मन्पृथिव्याः सुदिनत्वे अह्नामूर्ध्वो भव सुक्रतो देवयज्या ॥१॥

इमां । मे । अग्ने । संऽइधं । जुषस्व । इळः । पदे । प्रति । हर्य । घृताचीं ।
वर्ष्मन् । पृथिव्याः । सुदिनऽत्वे । अह्नां । ऊर्ध्वः । भव । सुक्रतो इति सुऽक्रतो ।
देवऽयज्या ॥१॥

हेऽग्न इळस्पद इळायास्पदे । एतद्वा इळायास्पदं यदुत्तरवेदिनाभिरिति ब्राह्मणं । उत्तरवेद्यामिमां मे मदीयां समिधं जुषस्व । सेवस्व । तथा घृताचीं घृतमंचंतीं स्रुचं प्रति हर्य । प्रतिकामयस्व । किंच हे सुक्रतो सुप्रज्ञ पृथिव्या वर्ष्मन्वर्ष्मणि समुच्छ्रिते पूर्वोक्ते देशेऽह्नां सुदिनत्वे तन्निमित्तं देवयज्या देवयागेन हेतुनोर्ध्वो ज्वालाभिरुन्नतो भव ॥

॥ अथ द्वितीया ॥

आ देवानामग्रयावेह यातु नराशंसो विश्वरूपेभिरश्वैः ।
ऋतस्य पथा नमसा मियेधो देवेभ्यो देवतमः सुषूदत् ॥२॥

आ । देवानां । अग्रऽयावा । इह । यातु । नराशंसः । विश्वऽरूपेभिः । अश्वैः ।
ऋतस्य । पथा । नमसा । मियेधः । देवेभ्यः । देवऽतमः । सुसूदत् ॥२॥

देवानामग्रयावाग्रे गंता नराशंसः । उभे वनस्पत्यादिषु युगपदिति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं । नरैः शंसनीय एतन्नामकोऽग्निर्विश्वरूपेभिर्नानारूपैरश्वै रोहिदाख्यैः सहेहास्मिन्यज्ञ आ यातु । आगत्य च मियेधो मेध्यो यज्ञहितः स्तुतियोग्यो वा देवतमो देवानां मुख्यः सोऽग्निर्हविर्नयनयोग्येनर्तस्य यज्ञस्य पथा मार्गेण नमसा स्तोत्रेण सह देवेभ्य इंद्रादिभ्यः सुषूदत् । हविः प्रेरयतु ॥

॥ अथ तृतीया ॥

शश्वत्तममीळते दूत्याय हविष्मंतो मनुष्यासो अग्निं ।
बर्हिष्ठैरश्वैः सुवृता रथेना देवान्वक्षि नि षदेह होता ॥३॥

शश्वत्ऽतमं । ईळते । दूत्याय । हविष्मंतः । मनुष्यासः । अग्निं ।
बर्हिष्ठैः । अश्वैः । सुऽवृता । रथेन । आ । देवान् । वक्षि । नि । सद । इह । होता ॥३॥

शश्वत्तममत्यंतं नित्यमग्निं हविष्मंतः संभृतहविष्का मनुष्यासो मनुष्या यजमाना दूत्याय। दूतस्य भागकर्मणी इति यत्प्रत्ययः। दूतकर्मणे हविर्वहनलक्षणाय तन्निमित्तमीळते। स्तुवंति। स त्वमेवं स्तुतो वहिष्ठैर्वोढृतमैरश्वैः सुवृता सुवर्तनेन रथेन च सह देवानिंद्रादीना वक्षि। अस्मदीयं यज्ञं प्रत्यावह। प्रापय। ततस्त्वं होता भवन् इहास्मिन्यज्ञे नि सद। निषीद ॥

॥ अथ चतुर्थी ॥

वि प्रथतां देवजुष्टं तिरश्चा दीर्घं द्राघ्मा सुरभि भूत्वस्मे।

अहेळता मनसा देव बर्हिरिंद्रज्येष्ठाँ उशतो यक्षि देवान् ॥४॥

वि। प्रथतां। देवऽजुष्टं। तिरश्चा। दीर्घं। द्राघ्मा। सुरभि। भूतु। अस्मे इति।

अहेळता। मनसा। देव। बर्हिः। इंद्रऽज्येष्ठान्। उशतः। यक्षि। देवान् ॥४॥

हे बर्हिर्नामकाग्ने देव जुष्टं देवैः सेवितं तिरश्चा तिरश्चीनं तिर्यगंचनमिदं बर्हिर्वि प्रथतां। विशेषेण विस्तृतं भवतु। तथा दीर्घं चेदं द्राघ्मा द्राघिम्ना। दीर्घशब्दस्य मनिचि प्रियस्थिरेत्यादिना द्राघिरादेशः। अकारस्येकारवर्णव्यापत्त्याः पश्चादल्लोपः। द्राघिम्ना युक्तं भवतु। अस्मे अस्मदीयं बर्हिः सुरभि सोमादिहविर्निधानेन सुगंधं भूतु। भवतु। हे देव द्योतमान हे बर्हिरेतन्नामकाग्नेऽहेळता। हेल इति क्रोधनाम। अक्रुध्यता मनसोशतो हवींषि कामयमानानिंद्रज्येष्ठानिंद्रप्रधानान्देवान्यक्षि यज। पूजय ॥

॥ अथ पंचमी ॥

दिवो वा सानु स्पृशता वरीयः पृथिव्या वा मात्रया वि श्रयध्वं।

उशतीर्द्वारो महिना महद्भिर्देवं रथं रथयुर्धारयध्वं ॥५॥

दिवः। वा। सानु। स्पृशत। वरीयः। पृथिव्या। वा। मात्रया। वि। श्रयध्वं।

उशतीः। द्वारः। महिना। महत्ऽभिः। देवं। रथं। रथऽयुः। धारयध्वं ॥५॥

हे द्वार एतन्नामधेया देव्यो यूयं दिवो वा। वाशब्दश्चार्थे। दिवश्च सानु समुच्छ्रितं वरीय उरुतरं स्थानं स्पृशत। उन्नता भवतेत्यर्थः। वायोगे प्रथमेति न निघातः। पृथिव्याश्च यावती मात्रास्ति तावत्या मात्रया वि श्रयध्वं। विस्तृता भवत। उशतीर्देवान्कामयमाना यूयं रथयुः। सुपां सुलुगिति जसः सुः। रथकामाः सत्यो

महिना महिम्ना महद्भिर्देवैरधिष्ठितमत एव देवं द्योतमानं रथं रमणसाधनं धारयध्वं। धारयत ॥

॥ इत्यष्टमस्य द्वितीय एकविंशो वर्गः ॥

॥ अथ षष्ठी ॥

देवी दिवो दुहितरा सुशिल्पे उषासानक्ता सदतां नि योनौ ।
आ वां देवास उशती उशंत उरौ सीदंतु सुभगे उपस्थे ॥६॥

देवी इति। दिवः। दुहितरा। सुशिल्पे इति सुऽशिल्पे। उषसानक्ता। सदतां। नि। योनौ।
आ। वां। देवासः। उशती इति। उशंतः। उरौ। सीदंतु। सुभगे इति सुऽभगे। उपऽस्थे ॥६॥

देवी द्योतमाने दिवो द्युलोकस्य दुहितरा दुहितरौ सुशिल्पे शोभनरूपे उषासानक्तोषाश्च नक्तं चाहोरात्रौ योनौ यज्ञस्य स्थाने नि सदतां। निषीदतां। हे उशती उशत्यौ कामयमाने हे सुभगे शोभनधने हे देव्यौ वां युवयोरुरौ विस्तीर्णे उपस्थे समीपस्थे स्थान उशंतो हवींषि कामयमाना देवासो देवा आ सीदंतु। उपविशंतु ॥

॥ अथ सप्तमी ॥

ऊर्ध्वो ग्रावा बृहदग्निः समिद्धः प्रिया धामान्यदितेरुपस्थे ।
पुरोहितावृत्विजा यज्ञे अस्मिन् विदुष्टरा द्रविणमा यजेथां ॥७॥

ऊर्ध्वः। ग्रावा। बृहत्। अग्निः। संऽइद्धः। प्रिया। धामानि। अदितेः। उपऽस्थे।
पुरःऽहितौ। ऋत्विजा। यज्ञे। अस्मिन्। विदुःऽतरा। द्रविणं। आ। यजेथां ॥७॥

ग्रावा सोमाभिषवाय यदोर्ध्व उन्नतो भवति यदा च बृहन्महानग्निः समिद्धो हविर्भिः सम्यग्दीप्तो भवति। तथा प्रियाणि देवानां सोमादिहविःप्रदानेन प्रीणयितॄणि धामानि हविषां धारकाणि यज्ञपात्राण्यदितेः पृथिव्या उपस्थे यज्ञसदने यदासादितानि भवंति तदानीं हे ऋत्विजौ देव्यौ पुरोहितौ होतारौ पुरतो निहितौ विदुष्टरा। छांदसं संप्रसारणं। विद्वत्तमौ युवामस्मिन्यज्ञे द्रविणं धनमा यजेथां। यजिर्दानार्थः। अस्मभ्यमाभिमुख्येन प्रयच्छतं ॥

॥ अथाष्टमी ॥

तिस्रो देवीर्बर्हिरिदं वरीय आ सीदत चकृमा वः स्योनं।

मनुष्वद्यज्ञं सुधिता हवींषीळा देवी घृतपदी जुषंत ॥८॥

तिस्रः। देवीः। बर्हिः। इदं। वरीयः। आ। सीदत। चकृम। वः। स्योनं।

मनुष्वत्। यज्ञं। सुऽधिता। हवींषि। इळा। देवी। घृतऽपदी। जुषंत ॥८॥

हे तिस्रो देवीरिळाद्यास्तिस्रो देव्यो वरीय उरुतरमिदं बर्हिरा सीदत। कालाध्वनोरिति द्वितीया। अत्यंतं तस्मिन्निषीदत। कुत एतत्तत्राह। वो युष्मदर्थं स्योनं विस्तीर्णमिदं चकृम। वयं कृतवंतः। वाक्यभेदादनिघातः। इळैतन्नामिका देवी द्योतमाना सरस्वती घृतपदी दीप्तपदोपेता भारती चैता मनुष्वन्मनोर्यज्ञे यथा हवींषसेवंत तद्वदस्मदीयं यज्ञं सुधिता सुष्ठु निहितानि हवींषि च जुषंत। सेवंतां ॥

त्वाष्ट्रस्य पशोर्वपायागस्य देव त्वष्टरिति याज्या। सूचितं च। देव त्वष्टर्यद्ध चारुत्वमानट् पिशंगरूपः सुभरो वयोधाः। आ॰ ३.८.। इति ॥

॥ सैषा सूक्ते नवमी ॥

देवं त्वष्टर्यद्ध चारुत्वमानड्यदंगिरसामभवः सचाभूः।

स देवानां पाथ उप प्र विद्वानुशन्यक्षि द्रविणोदः सुरत्नः ॥९॥

देवं। त्वष्टः। यत्। ह। चारुऽत्वं। आनट्। यत्। अंगिरसां। अभवः। सचाऽभूः।

सः। देवानां। पाथः। उप। प्र। विद्वान्। उशन्। यक्षि। द्रविणःऽदः। सुऽरत्नः ॥९॥

हे देव त्वष्टरेतन्नामक त्वं यच्चारुत्वं हविर्भिः कल्याणरूपत्वमानट् प्राप्तवान्। अश्नोतेर्लिटि प्रत्ययस्य लुक्। यच्च त्वमंगिरसामस्माकं सचाभूः सहभावी सखाभवः। हे द्रविणोदो धनस्य दातरत एव सुरत्नः सुधनः स त्वमुशन्हवींषि कामयमानः सन् विद्वान् अस्येदमस्येदमिति प्रजानन्देवानां पाथोऽन्नमुप यक्षि। उपयज। तेभ्यः प्रयच्छ ॥

वनस्पतिस्तोमे निष्केवल्ये वनस्पते रशनयेत्येषा सूक्तमुखीया। सूचितं च। देवेभ्यो वनस्पते हवींषि वनस्पते रशनया नियूयेति सूक्तमुखीयाः। आ॰ ९.५.। इति ॥

॥ सैषा दशमी ॥

वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान् ।
स्वदाति देवः कृणवद्धवींष्यवतां द्यावापृथिवी हवं मे ॥१०॥
वनस्पते । रशनया । निऽयूय । देवानां । पाथः । उप । वक्षि । विद्वान् ।
स्वदाति । देवः । कृणवत् । हवींषि । अवतां । द्यावापृथिवी इति । हवं । मे ॥१०॥

हे वनस्पते वनस्पतिविकार यूप विद्वाञ्जानानस्त्वं रशनया रज्ज्वा नियूय बद्ध्वा परिव्याय पाथोऽन्नं देवानामिंद्रादीनामुप वक्षि । उपवह । प्रापय । ततो देवो वनस्पतिः स्वदाति । हविःप्रापणेन स्वदयतु । तथा हवींष्यस्माभिर्दत्तानि कृणवत् । देवानां करोतु । तथा मे मदीयं हवं देवविषयाह्वानं द्यावापृथिवी द्यावापृथिव्यावतां । रक्षतां ॥

॥ अथैकादशी ॥

आग्ने वह वरुणमिष्टये न इंद्रं दिवो मरुतो अंतरिक्षात् ।
सीदंतु बर्हिर्विश्व आ यजत्राः स्वाहा देवा अमृता मादयंतां ॥११॥
आ । अग्ने । वह । वरुणं । इष्टये । नः । इंद्रं । दिवः । मरुतः । अंतरिक्षात् ।
सीदंतु । बर्हिः । विश्वे । आ । यजत्राः । स्वाहा । देवाः । अमृताः । मादयंतां ॥११॥

हे अग्ने त्वं नोऽस्माकमिष्टये यागायेंद्रं वरुणं च मरुतश्च दिवो द्युलोकादंतरिक्षाच्चास्मदीयं यज्ञमा वह । प्रापय । आगतास्ते यजत्रा यष्टव्या विश्वे सर्वे देवा बर्हिरा सीदंतु । तत्रासन्ना भवंतु । ततोऽमृता मरणधर्मरहिता देवाः स्वाहा स्वाहाकारेण दत्तैर्हविर्भिर्मादयंतां । आत्मानं मादयंतु ॥

॥ इत्यष्टमस्य द्वितीये द्वाविंशो वर्गः ॥

बृहस्पत इत्येकादशर्चं तृतीयं सूक्तं । आंगिरसस्य बृहस्पतेरार्षं नवमी जगती शिष्टा दश त्रिष्टुभः । अनेन सूक्तेनर्षिः परमपुरुषार्थसाधनं परब्रह्मज्ञानं स्तुतवान् । अतस्तद्देवत्यमिदं । उक्तं हि बृहद्देवतायां । यज्ज्योतिः परमं ब्रह्म यद्योगात् समुपाश्नुते । तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पतिरिति । अनुक्रांतं च । बृहस्पते बृहस्पतिर्ज्ञानं तुष्टाव नवमी जगती ॥ सूक्तविनियोगो गतः । देवसुवां हविःषु बृहस्पतिर्वाचस्पतिरित्यस्य प्रथमानुवाक्या । सूत्रितं च । बृहस्पते प्रथमं वाचो अग्रं हंसैरिव सखिभिर्वावदद्भिः । आ० ४. ११. । इति ॥

॥ तत्र प्रथमा ॥

बृह॑स्पते प्रथ॒मं वा॒चो अग्रं॒ यत्प्रैर॑त नाम॒धेयं॒ दधा॑नाः ।
यदे॑षां॒ श्रेष्ठं॒ यद॑रि॒प्रमासी॑त्प्रे॒णा तदे॑षां॒ निहि॑तं॒ गुहा॒विः ॥१॥

बृह॑स्पते । प्र॒थ॒मं । वा॒चः । अग्रं॑ । यत् । प्र । ऐर॑त । ना॒म॒ऽधेयं॑ । दधा॑नाः ।
यत् । ए॒षां॒ । श्रेष्ठं॑ । यत् । अ॒रि॒प्रं । आसी॑त् । प्रे॒णा । तत् । ए॒षां॒ । निऽहि॑तं । गुहा॑ । आ॒विः ॥१॥

बृहस्पतिरनेन सूक्तेन विदितवेदार्थान्बालान्दृष्ट्वा स्मयमानः स्वात्मानं संबोध्याह । हे बृहस्पतेऽंतरात्मन् प्रथममुत्पत्त्यनंतरमितरवागुच्चारणात्प्रागेव नामधेयं नाम दधानाः पदार्थेषु निदधाना बाला यत्प्रैरत प्रेरितवंतस्तद्वाचोऽग्रं भवति । यत्तत तातेत्यादिकं वाक्यं पूर्वमभिधाय पश्चादन्या वाचो वदिष्यंति खलु तस्माद्वाचोऽग्रं । अस्यां दशायामवस्थितान्बालान्पश्य । तथेदानीमेषां श्रेष्ठं प्रशस्यतमं यद्यच्चारिप्रं पापरहितं वेदार्थज्ञानमासीदेषां तज्ज्ञानं गुहा गुहायां निहितं गोप्यं तत्प्रेणा । मकारलोपश्छांदसः । प्रेम्णाविर्भवति । वेदाभ्यासकाले सरस्वती स्वार्थमेभ्यः प्रकाशयतीत्यर्थः । एवं विस्मये बृहस्पते प्रथमं वाचो अग्रमित्यादिकमारण्यकमनुसंधेयं । ऐ॰ आ॰ १.१४. ॥

॥ अथ द्वितीया ॥

सक्तु॑मिव॒ तित॑उना पु॒नंतो॒ यत्र॒ धीरा॒ मन॑सा॒ वाच॒मक्र॑त ।
अत्रा॒ सखा॑यः स॒ख्यानि॑ जानते भ॒द्रैषां॑ ल॒क्ष्मीर्निहि॒ताधि॑ वा॒चि ॥२॥

सक्तुं॑ऽइव । तित॑उना । पु॒नंतः॑ । यत्र॑ । धीराः॑ । मन॑सा । वाचं॑ । अक्र॑त ।
अत्र॑ । सखा॑यः । स॒ख्यानि॑ । जा॒न॒ते॒ । भ॒द्रा । ए॒षां॒ । ल॒क्ष्मीः । निऽहि॑ता । अधि॑ । वा॒चि ॥२॥

तितउना । परिपूयतेऽनेनेति । यद्वा तता विस्तृता भृष्टयवा अत्रेति तितउः ॥ तनोतेर्डउः सन्वच्च । उ॰ ५.५२. । इति डउप्रत्ययः । सन्वद्भावादित्वं ॥ उक्तनिर्वचनेन सूर्पेण सक्तुमिव । यथा कश्चित्सक्तुं दुर्धावं पुनाति तद्वत् प्रकृतितः प्रत्ययतश्च शब्दानुत्पुनंतो धीरा धीमंतो विद्वांसो यत्र यस्मिन्काले विद्वत्संघे वा मनसा प्रज्ञायुक्तेन वाचमक्रताकृषत कुर्वंति । करोतेर्लुङि रूपं । अत्र तत्र काले सखायः समानख्यानाः शास्त्रादिविषयज्ञानास्ते सख्यानि तेषु भवानि ज्ञानानि जानते । जानंति । यद्वा सखायो वाचा बद्धसख्यास्ते तस्यास्तस्या वाचः सख्यानि जानंति । वाक्ययुक्तानभ्युदयाँल्लभंत इत्यर्थः । तस्मादेषां वाचि भद्रा कल्याणी निहिता

लक्ष्मीर्भवति। अधिः सप्तम्यर्थद्योतकः। अर्थज्ञानं वाचि पश्याम इत्यर्थः। तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा सक्तुमिव तितउने-त्यादि निरुक्तमनुसंधेयं। नि॰४.१०.॥

वाग्देवत्यपशोर्वपापुरोडाशयोर्यज्ञेन वाच इत्यादिके द्वे क्रमेण याज्ये। सूचितं च। यज्ञेन वाचः पदवीयमायन्निति द्वे देवीं वाचमजनयंत देवाः। आ॰३.८.। इति॥

॥ सैषा तृतीया ॥

यज्ञेन वाचः पदवीयमायन्तामन्वविंदन्नृषिषु प्रविष्टां।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवंते ॥३॥
यज्ञेन। वाचः। पदऽवीयं। आयन्। तां। अनु। अविंदन्। ऋषिषु। प्रऽविष्टां।
तां। आऽभृत्य। वि। अदधुः। पुरुऽत्रा। तां। सप्त। रेभाः। अभि। सं। नवंते ॥३॥

विदितार्था धीराः पदवीयं। वेतेरचो यत्। संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणा-भावः। पदेन यातव्यः पंथाः पदवीयः। तं वाचो मार्गं यज्ञेनायन्। प्राप्तवंतः। ऋषिष्वतींद्रियार्थदर्शिषु प्रविष्टां तां वाचमविंदन्। अलभंत। अनंतरं तां वाच-माभृत्याहृत्य पुरुत्रा बहुषु देशेषु व्यदधुः। व्यकार्षुः। सर्वान्मनुष्यानध्यापयामासु-रित्यर्थः। एतादृशीं वाचं रेभाः शब्दायमानाः पक्षिणः पक्षिरूपाणि गायत्र्या-दीनि सप्त छंदांस्यभि सं नवंते। अभितः संगच्छंते॥

॥ अथ चतुर्थी ॥

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनां।
उतो त्वस्मै तन्वं१ वि सस्रे जायेव पत्य उशती सुवासाः ॥४॥
उत। त्वः। पश्यन्। न। ददर्श। वाचं। उत। त्वः। शृण्वन्। न। शृणोति। एनां।
उतो इति। त्वस्मै। तन्वं। वि। सस्रे। जायाऽइव। पत्ये। उशती। सुऽवासाः ॥४॥

त्वशब्द एकवाची। एकः। उतशब्दोऽप्यर्थे। पश्यन्नपि मनसा पर्यालोचयन्नपि वाचं न ददर्श। दर्शनफलाभावान्न पश्यति। त्व एकः शृण्वन्नप्येनां वाचं न शृणोति श्रवणफलाभावात्। इत्यनेनार्धेनाविद्वानभिहितः। तृतीयपादेन विदि-तवेदार्थमाह। त्वस्मा एकस्मा अपि तन्वमात्मीयं शरीरं वि सस्रे। स्वयं वाग्विवृणुते

गमयति। आत्मानं विवृणुते प्रकाशयतीत्यर्थः। तत्र दृष्टांतः। जायेव। यथोशती संभोगं कामयमाना सुवासाः शोभनवसना जाया पत्ये भर्त्रे ऋतुकाले संभोगार्थं स्वयमात्मानं विवृणुते तद्वदेनां पश्यति शृणोति चेति विदितवेदार्थस्य प्रशंसा। अप्येकः पश्यन्न पश्यति वाचमित्यादि निरुक्तमत्र द्रष्टव्यं। नि॰ १.१९.॥

॥ अथ पंचमी ॥

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वंत्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पां ॥५॥
उत। त्वं। सख्ये। स्थिरऽपीतं। आहुः। न। एनं। हिन्वंति। अपि। वाजिनेषु।
अधेन्वा। चरति। मायया। एषः। वाचं। शुश्रुऽवान्। अफलां। अपुष्पां ॥५॥

त्वमुतैकमपि सख्ये विदुषां संसदि। या सत्कथा सा सखिकर्मत्वात्सख्यमित्युच्यते। सा च वाचा क्रियते। अतो वाक्संबंधाद्वाक्सख्ये स्थिरपीतं। मधु यस्य हृदये स्थितं भवति। यद्वा स्थिरपीतं स्थिरप्राप्तिमाहुः। यद्वा तस्मिञ्ज्ञातार्थमाहुः। लोके यथा ज्ञातार्थं पुरुषं पीतार्थमिति वदंति। किंचैनं विज्ञातार्थं पुरुषं वाजिनेषु। वागिनेश्वरा येषां ते वाजिना अर्था वाच आयत्ताः खलु। वाग्ज्ञेयेष्वर्थेषु नापि हिन्वंति। अपिशब्दोऽन्वर्थे। केचिदपि नानुगच्छंति। अयमेवातिशयेन विद्वानित्यर्थः। यद्वा वाजिनेषु सारभूतेषु निरूपणीयेष्वर्थेष्वेनं न हिन्वंति। न वहिः कुर्वंति। एनं पुरस्कृत्यैव सर्वं वेदार्थं विचारयंतीत्यर्थः। इत्यर्थज्ञः प्रशस्तः। अनंतरमुत्तरार्धेन केवलपाठको निंद्यते। एषोऽविज्ञातार्थः पुरुषोऽधेन्वा धेनुत्वविवर्जितया कामानामदोग्ध्र्या देवमनुष्यस्थानेषु वाक्प्रतिरूपया मायया चरति। किं कुर्वन्। अफलामपुष्पां। वाचोऽर्थः पुष्पफलं। अर्थवर्जितां। यद्वा वाचोऽर्थो याज्ञदैवते। यज्ञे भवं ज्ञानं याज्ञं देवतासु भवं ज्ञानं दैवतं। तद्वर्जितां कर्मादिविषयज्ञानवर्जितां वाचं शुश्रुवान् श्रुतवान्। केवलं पाठमात्रेणैव श्रुतवान् स चरति। यथा वंध्या पीना गौः किं द्रोणमात्रं क्षीरं दोग्धीति मायामुत्पादयंती चरति यथा वंध्यो वृक्षोऽकाले पल्लवादियुक्तः सन्पुष्प्यति फलतीति भ्रांतिमुत्पादयंस्तिष्ठति तथा पाठं प्रब्रुवाणश्चरतीत्यर्थः। अप्येकं वाक्सख्ये स्थिरपीतमित्यादि निरुक्तमनुसंधेयं। नि॰ १.२०.॥

॥ इत्यष्टमस्य द्वितीये त्रयोविंशो वर्गः ॥

॥ अथ षष्ठी ॥

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पंथां ॥६॥
यः । तित्याज । सचिऽविदं । सखायं । न । तस्य । वाचि । अपि । भागः । अस्ति ।
यत् । ईं । शृणोति । अलकं । शृणोति । नहि । प्रऽवेद । सुऽकृतस्य । पंथां ॥६॥

सचिविदं । सचिशब्दः सखिवाची । सखिविदं । योऽध्येता स वेदस्य सखा संप्रदायोच्छेदनिवारकत्वेन वेदं प्रत्युपकारित्वात् । तादृशमुपकारिणमध्येतारं वेत्तीति सचिवित् । तमभिज्ञं सखायमध्येतॄणां पुरुषाणां स्वार्थबोधनेनोपकारित्वात्सखिभूतं वेदं यः पुमांस्तित्याज परार्थविनियोगेन परित्यजति । त्यजतेर्लिट्यपस्पृधेथामानृचुरित्यादिना निपातितः । तस्य पुरुषस्य वाचि सर्वस्यां लौकिक्यां शास्त्रीयायां वाच्यपि भागो भजनीयः कश्चिदर्थो नास्ति । ईमयं पुरुषो यद्वेदव्यतिरिक्तं शृणोति तदलकमलीकं व्यर्थमेव शृणोति । हि यस्मात्कारणात्सुकृतस्य पंथां पंथानं न प्रवेद । श्रद्धाराहित्यादनुष्ठानमार्गं न जानाति । तस्मात्तदीयश्रवणमपि निःफलमित्यर्थः । द्वितीयचतुर्थपादयोरभिप्राय आरण्यके दर्शितो न तस्यानूक्ते भागोऽस्तीत्यादिना । तथा तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाभ्युक्ता । तै० आ० २.१५. । इत्यध्वर्युभिश्च ॥

॥ अथ सप्तमी ॥

अक्षण्वंतः कर्णवंतः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥७॥
अक्षण्ऽवंतः । कर्णऽवंतः । सखायः । मनःऽजवेषु । असमाः । बभूवुः ।
आदघ्नासः । उपऽकक्षासः । ऊं इति । त्वे । ह्रदाःऽइव । स्नात्वाः । ऊं इति । त्वे । ददृश्रे ॥७॥

अक्षण्वंतोऽक्षिमंतः । छंदस्यपि दृश्यत इत्यक्षिशब्दादनङ् । अनो नुडिति नुट् । अनेन दृश्यते सर्वमित्यक्षि । यद्वा तैजसत्वादन्येभ्योऽंगेभ्यो व्यक्ततरं । तथा च श्रूयते । तस्मादेते व्यक्ततरे इवेति । तादृशाक्षियुक्ताः कर्णवंतः । कर्णौ निकृत्तद्वारः । गर्भावस्थायामेव केनापि निर्मितविल इत्यर्थः । यद्वा शरीरस्य शिरसो वोर्ध्वं गते उच्चैः स्थिते । कर्णविलक्षणाकाशवंतः । तथा चाम्नायते । ऋच्छंतीव खे उदगंता-

मिति। तादृशाः सखायः। समानं ख्यानं ज्ञानं येषामिति सखायः। तेषु वाक्येषु वाह्येष्विंद्रियेषु समानज्ञाना इत्यर्थः। ते मनोजवेषु। मनसा गम्यंते ज्ञायंत इति मनोजवाः प्रज्ञाद्याः। तेष्वसमा अतुल्या बभूवुः। भवंति। तेषु मध्ये केचिदादघ्नासः। आस्यशब्दस्य पृषोदरादित्वादाकारादेशः। आस्यदघ्ना आस्यप्रमाणोदका हृदा इवेति मध्यमप्रज्ञानाह। अथ त्व एके। सर्वनामत्वाज्जसः शीभावः। उपकक्षासः कक्षसमीपप्रमाणोदका हृदा इव। अल्पोदका इत्यर्थः। अनेनाल्पप्रज्ञानाह। तथा त्व एके स्नात्वाः। स्नातेः कृत्यार्थे त्वन्प्रत्ययः। पा॰ ३.४.१४.। स चार्हे कृत्यतृचश्च। पा॰ ३.३.१६९.। इत्यर्हार्थे च भवति। स्नानार्हा अक्षोभ्योदका हृदा इव ददृश्रे। दृश्यंते। अनेन महाप्रज्ञानाह। उः पूरणः। अक्षिमंतः कर्णवंतः सखायोऽक्षि चष्टेरित्यादिकं निरुक्तमत्र द्रष्टव्यं। नि॰ १.९.॥

॥ अथाष्टमी ॥

हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजंते सखायः।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरंत्यु त्वे ॥८॥

हृदा। तष्टेषु। मनसः। जवेषु। यत्। ब्राह्मणाः। संऽयजंते। सखायः।
अत्र। अह। त्वं। वि। जहुः। वेद्याभिः। ओहऽब्रह्माणः। वि। चरंति। ऊं इति। त्वे॥८॥

सखायः समानख्याना ब्राह्मणा हृदा बुद्धिमतां हृदयेन तष्टेषु निश्चितेषु परिकल्पितेषु मनसो जवेषु गंतव्येषु वेदार्थेषु गुणदोषनिरूपणा यद्यदा संयजंते संगच्छंते। यजिरत्र संगतिकरणवाची। अत्रास्मिन्ब्राह्मणसंघे त्वमविज्ञातार्थमेकं पुरुषं वेद्याभिर्वेदितव्याभिर्विद्याभिः प्रवृत्तिभिर्वा वि जहुः। विशेषेण परित्यजंति। अहेति विनिश्चये। ओहब्रह्माणः। ऊह्यमानं ब्रह्म विद्याश्रुतिमतिबुद्धिलक्षणं येषां ते तथोक्ताः। तादृशास्त्व एके विद्वांसो वि चरंति। यथाकामं वेदार्थेषु विनिश्चयार्थं प्रवर्तंते। उः प्रसिद्धौ। हृदा तष्टेषु मनसां जवेष्वित्यादिकं निरुक्तं द्रष्टव्यं। नि॰ १३.१३.॥

॥ अथ नवमी ॥

इमे ये नार्वाङ्न परश्चरंति न ब्राह्मणासो न सुतेकरासः।
त एते वाचमभिपद्य पापया सिरीस्तंत्रं तन्वते अप्रजज्ञयः ॥९॥

इमे। ये। न। अर्वाक्। न। परः। चरंति। न। ब्राह्मणासः। न। सुतेऽकरासः।
ते। एते। वाचं। अभिऽपद्य। पापया। सिरीः। तंत्रं। तन्वते। अप्रंऽजज्ञयः॥९॥

अनया वेदार्थानभिज्ञा निंद्यंते। इमे येऽविद्वांसोऽर्वागर्वाचीनमधोभाविन्यस्मिँल्लोके ब्राह्मणैः सह न चरंति ये परः परस्ताद्देवैः सह न चरंति ते ब्राह्मणासो ब्राह्मणा वेदार्थतत्परा न भवंति। तथा सुतेकरासः सोमं सुतमभिषुतं कुर्वंतीति सुतेकरा ऋत्विजः। तेऽपि न भवंति। अप्रजज्ञयः। जानातेराद्दगमहन इति किप्रत्ययः। अविद्वांसस्त एते मनुष्या वाचं लौकिकीमभिपद्य प्राप्य तया पापया पापकारिण्या वाचा युक्तास्ते सिरीः। छंदसीवनिपावितीप्रत्ययः। सुपां सुलुगिति जसः सुः। सीरिणो भूत्वा तंत्रं कृषिलक्षणं तन्वते। विस्तारयंति। कुर्वंतीत्यर्थः। सर्वथा वेदार्थो ज्ञेय इत्यभिप्रायः॥

सोमप्रवहणे सर्वे नंदंतीत्येषा। सूचितं च। सोम यास्ते मयोभुव इति तिस्रः सर्वे नंदंति यशसागतेन। आ॰४.४.। इति॥

॥ सैषा दशमी ॥

सर्वे॑ नं॒दंति य॒शसाग॑तेन सभासा॒हेन॒ सख्या॒ सखा॑यः।

कि॒ल्बि॒ष॒स्पृत्पि॑तु॒षणि॒र्ह्ये॑षा॒मरं॑ हि॒तो भव॑ति॒ वाजि॑नाय ॥१०॥

सर्वे॑। नं॒दंति॒। य॒शसा॑। आऽग॑तेन। स॒भा॒ऽस॒हेन॑। सख्या॑। सखा॑यः।

कि॒ल्बि॒ष॒ऽस्पृत्। पि॒तु॒ऽसनिः॑। हि। ए॒षा॒म्। अरं॑। हि॒तः। भव॑ति। वाजि॑नाय॥१०॥

सखायः समानख्यानाः समानज्ञानाः सर्वे सभ्या मनुष्याः सभासहेन सभां सोढुं शक्नुवता सख्यर्त्विजां प्रतिभूतेन यज्ञं प्रत्यागतेन यशसा यशस्विना सोमेन हेतुना नंदंति। हृष्टा भवंति। स हि स एव सोम एषां जनानां किल्बिषस्पृत्। यः स्वस्मादन्यः पुरुषः श्रेष्ठतामश्नुते स किल्बिषं भवति बाध्यत्वेन। यथा पापं सदाचारैर्बाधितव्यं भवति तद्वत्। पापरूपस्य शत्रोर्बाधकः। यद्वा। यज्ञे साध्वनुप्रवचनाकरणेन यत्किल्बिषं येषां संजायते तद्यो बाधते स किल्बिषस्पृत्। तथा त्वं पितुषणिः। पितुरित्यन्ननाम दक्षिणा वा। तमनेन सोमेन सनोति यजमानः संभजत इति तादृशः। तेषामन्नदक्षिणादातेत्यर्थः। किंच। हितः पात्रेषु निहितः सोमो वाजिनाय। इंद्रियं वीर्यं वाजिनं। तेषां वीर्याय तत्कर्तुमरमलं पर्याप्तः समर्थो भवति॥ सर्वे नंदंति यशसागतेनेत्यन्वाह यशो वै सोमो राजेत्यादिकमिंद्रियं वै वीर्यं वाजिनमाजरसं हास्मै वाजिनं नापच्छिद्यत इत्यंतं ब्राह्मणमत्रानुसंधेयं। ऐ॰ ब्रा॰ १.१३.॥

॥ अथैकादशी ॥

ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्करीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥११॥

ऋचां । त्वः । पोषं । आस्ते । पुपुष्वान् । गायत्रं । त्वः । गायति । शक्करीषु ।
ब्रह्मा । त्वः । वदति । जातऽविद्यां । यज्ञस्य । मात्रां । वि । मिमीते । ऊं इति । त्वः ॥११॥

अनया होत्राद्यृत्विक्कर्मणां विनियोगमाचष्टे । त्व एको होतर्चां पोषं यथाविधि कर्मणि प्रयोगं पुपुष्वान् । एको धातुरनुवादार्थः । बह्वीर्ऋचः पुष्यन् शंसन्नास्ते । त्व एक उद्गाता शक्करीषु । शक्कर्य ऋचः । आभिर्ऋग्भिर्वृत्रं हंतुमिंद्रः समर्थोऽभूदिति शक्कर्यः । तासु गायत्रं साम गायति । त्व एको ब्रह्मा च जातविद्यां जाते जाते कर्तव्ये प्रायश्चित्तादौ वेदयित्रीं वाचं वदति । ब्रह्मा हि सर्वं वेदितुं योग्यो भवति खलु । चादिलोपे विभाषेति न निघातः । त्व एकोऽध्वर्युश्च यज्ञस्य मात्रां । यज्ञो यया मीयतेऽभिषवग्रहणादिकया क्रियया तां मात्रां यज्ञशरीरं वि मिमीते । अत्यर्थं निर्मिमीते । ऋचामेकः पोषमास्ते पुपुष्वान होतर्गर्चेनीत्यादिनिरुक्तानुसारेणार्थोऽभ्यधायि । एवं बृहस्पतिर्विदितवेदार्थं तुष्टाव ॥

॥ इत्यष्टमस्य द्वितीये चतुर्विंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरसायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्येऽष्टमाष्टके द्वितीयोऽध्यायः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥
प्राज्ञः श्रीसायणाचार्यो व्याख्याय चरमेऽष्टके।
स्फुटं द्वितीयमध्यायं तृतीयं वक्तुमुद्यतः ॥

तत्र देवानामिति नवर्चमनुवाकापेक्षया चतुर्थं सूक्तं। आनुष्टुभं देवदेवत्यं। लोकनाम्नः पुत्रो बृहस्पतिरांगिरस एव वा बृहस्पतिर्ऋषिः। अथवा दक्षस्य दुहितादितिर्ऋषिः। तथा चानुक्रांतं। देवानां नव लौक्यो वा बृहस्पतिर्दाक्षायण्यदितिर्वा दैवमानुष्टुभमिति। गतः सूक्तविनियोगः ॥

॥ तत्र प्रथमा ॥

देवानां नु वयं जाना प्र वोचाम विपन्यया।
उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे ॥१॥
देवानां। नु। वयं। जाना। प्र। वोचाम। विपन्यया।
उक्थेषु। शस्यमानेषु। यः। पश्यात्। उत्ऽतरे। युगे ॥१॥

अदितिर्दाक्षायण्यनेन सूक्तेन स्वयं यथादित्यानजनयत्तद्ब्रवीति। बृहस्पत्यृषिपक्षे स ऋषिरदितेः सकाशादादित्योत्पत्तिप्रकारमाह। वयं देवानामादित्यानां जाना जन्मानि प्र वोचाम। प्रकथयाम। विपन्यया विस्पष्टया वाचा। वयमिति वोचामेति चोभयत्र पूजार्थं बहुवचनं। अथैकवदाह। यो देवानां गणः पूर्वे युग उत्पन्नोऽप्युक्थेषु शस्यमानेषु यागे शस्त्रेष्वनुष्ठीयमानेषूत्तरे युगे वर्तमानं स्तुवंतं स्तोतारं पश्यात् पश्यति। अनेकेष्वपि युगेषु गतेषु कर्मसु स्तूयमानो वर्तत इत्यर्थः ॥

॥ अथ द्वितीया ॥

ब्रह्मणस्पतिरेता सं कर्मार इवाधमत्।
देवानां पूर्व्ये युगेऽसतः सदजायत ॥२॥
ब्रह्मणः। पतिः। एता। सं। कर्मारःऽइव। अधमत्।
देवानां। पूर्व्ये। युगे। असतः। सत्। अजायत ॥२॥

ब्रह्मणोऽन्नस्य पतिरदितिरेतैतानि देवानां जन्मानि कर्मार इव स यथा भस्त्रयाग्निमुपधमति प्रज्वलनार्थमेवं समधमत्। उदपादयदित्यर्थः। देवानां पूर्वे युगे। आदिसृष्टावित्यर्थः। तेषामुपादानकारणादसतो नामरूपवर्जितत्वेनासत्समानाद्ब्रह्मणः सकाशात्सन्नामरूपविशिष्टं देवादिकमजायत। प्रादुरभूत्॥ असद्वा इदमग्र आसीत्ततो वै सदजायतेति हि श्रुतिः। न सदात्मकस्य प्रपंचस्यासत्कारणत्वं युक्तमिति वाच्यं छंदोगैः कथमसतः सज्जायेतेत्यसत्कारणत्वमाक्षिप्य सदेव सोम्येदमग्र आसीदित्यवधारितत्वात्। छां॰ उ॰ ६.२.। तर्ह्यसत्कारणप्रतिपादकवाक्यानां का गतिरिति चेत् तेषामव्याकृतत्वाभिप्रायत्वात् तद्धेदं तर्ह्यव्याकृतमासीदिति श्रुतेः। यद्येवं तर्ह्यदितेः सकाशात्कथं देवाद्युत्पत्तिः। वायोरग्निरित्यादिवत् अधिष्ठानसकाशादुत्पत्तेः। यद्वा देवानां कारणभूतं सदसतो ब्रह्मणः सकाशादुत्पन्नमिति योजनादुक्तन्यायोऽस्मिन्पक्षेऽपि समान एव॥

॥ अथ तृतीया ॥

देवानां युगे प्रथमेऽसतः सदजायत।
तदाशा अन्वजायंत तदुत्तानपदस्परि॥३॥
देवानां। युगे। प्रथमे। असतः। सत्। अजायत।
तत्। आशाः। अनु। अजायंत। तत्। उत्तानऽपदः। परि॥३॥

पूर्वार्धमुक्तं। तदन्वाशा दिशोऽजायंत। तत्परि तदन्वित्यर्थः। उत्तानपदः। उत्तानमूर्ध्वतानं पद्यंत इत्युत्तानपदो वृक्षाः। तेऽजायंत। प्रादुरभवन्॥

॥ अथ चतुर्थी ॥

भूर्जज्ञ उत्तानपदो भुव आशा अजायंत।
अदितेर्दक्षो अजायत दक्षाद्वदितिः परि॥४॥
भूः। जज्ञे। उत्तानऽपदः। भुवः। आशाः। अजायंत।
अदितेः। दक्षः। अजायत। दक्षात्। ऊं इति। अदितिः। परि॥४॥

भूरुत्तानपदो वृक्षाज्जज्ञे। तथा भुवः सकाशादाशा अजायंत। तथादितेर्दक्षोऽजायत। उत्पन्नः। दक्षादु दक्षादप्यदितिः पर्यजायत। न स्वोत्पन्नं कार्यं स्वस्यैव कारणमपि भवतीति विप्रतिषिद्धमिति वाच्यं। यास्काचार्य इदमेव वाक्य-

मुदाहृत्य विरोधमाशंक्य पर्यहरत्। तथा हि। अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति च तत्कथमुपपद्येत। समानजन्मानौ स्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती। नि॰ ११.२३.। इति ॥

अदितिदेवताके पशावदितिर्ह्यजनिष्टेत्येषा हविषोऽनुवाक्या। सूचितं च। अदितिर्ह्यजनिष्ट सुत्रामाणं पृथिवीं द्यामनेहसं। आ॰ ३.८.। इति ॥

॥ सैषा पंचमी ॥

अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव।
तां देवा अन्वजायंत भद्रा अमृतबंधवः ॥५॥

अदितिः। हि। अजनिष्ट। दक्ष। या। दुहिता। तव।
तां। देवाः। अनु। अजायंत। भद्राः। अमृतऽबंधवः ॥५॥

हे दक्ष तव या दुहिताभूत्सादितिरजनिष्ट हि पुत्रानादित्यान्। तदेवाह। तां देवा अन्वजायंत भद्राः स्तुत्या भजनीया अमृतबंधवोऽमरणबंधनाः ॥

॥ इत्यष्टमस्य तृतीये प्रथमो वर्गः ॥

॥ अथ षष्ठी ॥

यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत।
अत्रा वो नृत्यतामिव तीव्रो रेणुरपायत ॥६॥

यत्। देवाः। अदः। सलिले। सुऽसंरब्धाः। अतिष्ठत।
अत्र। वः। नृत्यतांऽइव। तीव्रः। रेणुः। अप। आयत ॥६॥

अनयोत्तरेण चादित्याः स्तूयंते। यद्यदा हे देवा अदोऽमुष्मिन्सलिले यूयं सुसंरब्धाः सुष्ठु लब्धात्मानोऽतिष्ठत स्थितवंतः। आपो वा इदं सर्वमप एव ससर्जादाविति श्रुतिस्मृती। अत्रास्मिन्सलिले नृत्यतामिव वो युष्माकं संबंधी तीव्रो दुःसहो रेणुरंशभूत एकोऽपायत। अपागच्छत्। दिवं प्रति गत इति सूर्याभिप्रायं। परा मार्तांडमास्यदिति वक्ष्यति ॥

॥ अथ सप्तमी ॥

यद्देवा यतयो यथा भुवनान्यपिन्वत।
अत्रा समुद्र आ गूळ्हमा सूर्यमजभर्तन ॥७॥

यत्। देवाः। यतयः। यथा। भुवनानि। अपिन्वत।
अत्र। समुद्रे। आ। गूळ्हं। आ। सूर्यं। अजभर्तन ॥७॥

यद्यदा हे देवा यतयो यथा। वृष्ट्या नियमयंतीति वा वर्षणेन यातयंतीति वा यतयो मेघाः। ते यथोदकैर्भुवनानि लोकं पूरयंति तद्वत्स्वतेजोभिरपिन्वत पूरितवंतोऽत्र समुद्रेऽप्स्वा गूळ्हं निगूळ्हं सूर्यं प्रातरुदयायाजभर्तन। आहृतवंतः॥

॥ अथाष्टमी ॥

अष्टौ पुत्रासो अदितेर्ये जातास्तन्व१स्परि।
देवाँ उप प्रैत्सप्तभिः परा मार्तांडमास्यत् ॥८॥

अष्टौ। पुत्रासः। अदितेः। ये। जाताः। तन्वः। परि।
देवान्। उप। प्र। ऐत्। सप्तऽभिः। परा। मार्तांडं। आस्यत् ॥८॥

अष्टौ पुत्रासः पुत्रा मित्रादयोऽदितेर्भवंति। येऽदितेस्तन्वः परि शरीराज्जाता उत्पन्नाः। अदितेरष्टौ पुत्रा अध्वर्युब्राह्मणे परिगणिताः। तथा हि।ताननुक्रमिष्यामो मित्रश्च वरुणश्च धाता चार्यमा चांशश्च भगश्च विवस्वानादित्यश्चेति। तथा तत्रैव प्रदेशांतरेऽदितिं प्रस्तुत्याम्नातं। तस्या उच्छेषणमददुस्तत्प्राश्नात् सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायंत सा द्वितीयमपचदित्यष्टानामादित्यानामुत्पत्तिर्वर्णिता। तै० सं० ६.५.६.१.। सादितिः सप्तभिः पुत्रैर्देवानुप प्रैत्। उपागच्छत्। अष्टमं पुत्रं मार्तांडं सूर्यं परास्यत्। उपरि प्राक्षिपदित्यर्थः॥

॥ अथ नवमी ॥

सप्तभिः पुत्रैरदितिरुप प्रैत्पूर्व्यं युगं।
प्रजायै मृत्यवे त्वत्पुनर्मार्तांडमाभरत् ॥९॥

सप्तऽभिः। पुत्रैः। अदितिः। उप। प्र। ऐत्। पूर्व्यं। युगं।
प्रऽजायै। मृत्यवे। त्वत्। पुनः। मार्तांडं। आ। अभरत् ॥९॥

पूर्वमंत्रोक्त एवार्थः पुनरत्रोच्यते। सप्तभिर्मार्तांडव्यतिरिक्तैर्मित्रादिभिरदितिः पूर्व्यं पुराणं युगमुप प्रैत्। उपगता। अथ प्रजायै प्राणिनामुत्पत्तये मृत्यवे तेषां मरणाय मार्तांडं। मृताद्मृडादंडाज्जातं मार्तांडनामानं सूर्यं पुनराभरत्। आहरत्।

द्युलोकेऽधारयत्। प्राणिमरणजननादीनां सूर्योदयास्तमयायत्तता स्फुटा। तस्यै व्यृद्धमांडमजायतेत्यादि ब्राह्मणं। तै° सं° ६.५.६.१.॥

॥ इत्यष्टमस्य तृतीये द्वितीयो वर्गः ॥

जनिष्ठा इत्येकादशर्चं पंचमं सूक्तं शक्तिपुत्रस्य गौरिवीतेरार्षं मारुतं त्रैष्टुभं। तथा चानुक्रांतं। जनिष्ठा एकादश गौरिवीतिरिति ॥ अग्निष्टोमे मरुत्वतीयशस्त्र इदं सूक्तं निविद्धानं। सूत्रितं च। जनिष्ठा उग्र इत्येकभूयसीः शस्त्वा मरुत्वतीयां निविदं दध्यात्। आ° ५.१४.। इति ॥ सौमिकचातुर्मास्येषु वैश्वदेवेऽप्येतन्मरुत्वतीयं निविद्धानं। सूत्रितं च। जनिष्ठा उग्र उग्रो जज्ञ इति माध्यंदिनः। आ° ९.२.। इति ॥ महाव्रतेऽपि निष्केवल्य एतत्सूक्तं। तथैव पंचमारण्यके सूत्रितं जनिष्ठा उग्रः सहसे तुरायेति निविद्धानमिति ॥

॥ तत्र प्रथमा ॥

जनिष्ठा उग्रः सहसे तुराय मंद्र ओजिष्ठो बहुलाभिमानः।
अवर्धन्निंद्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥१॥

जनिष्ठाः। उग्रः। सहसे। तुराय। मंद्रः। ओजिष्ठः। बहुलऽअभिमानः।
अवर्धन्। इंद्रं। मरुतः। चित्। अत्र। माता। यत्। वीरं। दधनत्। धनिष्ठा ॥१॥

हे इंद्र सहसे बलाय तुराय शत्रूणां हिंसनाय त्वमुग्र उद्गूर्णबलो जनिष्ठाः। अजायथाः। कीदृशस्त्वं। मंद्रः स्तुत्य ओजिष्ठः। ओजः शरीरबलं। अतिशयेन तद्वान् बहुलाभिमानी भूयिष्ठाभिमानी। इदृशं महानुभावमिंद्रमत्र वृत्रवधे मरुतश्चिन्मरुतोऽप्यवर्धन्। स्तुत्या साहाय्येन वा वर्धितवंतः। यद्यदा धनिष्ठा धारयित्रींद्रमाता वीरं दधनत्। अधारयत् ॥

॥ अथ द्वितीया ॥

द्रुहो निषत्ता पृशनी चिदेवैः पुरू शंसेन वावृधुष्ट इंद्रं।
अभीवृतेव ता महापदेन ध्वांतात्प्रपित्वादुदरंत गर्भाः ॥२॥

द्रुहः। निऽसत्ता। पृशनी। चित्। एवैः। पुरु। शंसेन। ववृधुः। ते। इंद्रं।
अभिवृताऽइव। ता। महाऽपदेन। ध्वांतात्। प्रऽपित्वात्। उत्। अरंत। गर्भाः ॥२॥

द्रुहो द्रोग्धुरिंद्रस्य पृशनी चित् सेनापि निषत्ता। तत्संनिधौ निषण्णाभूत्।

एवैर्गंतृभिर्मरुद्भिः सहितमिंद्रं निषसेति संबंधः। तेऽपि मरुतः पुरु प्रभूतेन शंसेन स्तोत्रेणेंद्रं ववृधुः। अवर्धत वृत्रं जिघांसंतं। अथ महापदेन महता व्रजेनाभीवृतेव परिवृतानीव गवादीनि तानि यथावरणापगमे निर्गच्छंति तद्वत्तान्युदकानि ध्वांतादंधकाररूपात्मपित्वादासन्नात्माप्राद्वृत्राद्गर्भा गर्भभूतान्युदकान्युदरंत। उदगच्छन्॥

॥ अथ तृतीया ॥

ऋष्वा ते पादा प्र यज्जिगास्यवर्धन्वाजा उत ये चिदत्र।

त्वमिंद्र सालावृकान्त्सहस्रमासन्दधिषे अश्विना ववृत्याः ॥३॥

ऋष्वा। ते। पादा। प्र। यत्। जिगासि। अवर्धन्। वाजाः। उत। ये। चित्। अत्र।

त्वं। इंद्र। सालावृकान्। सहस्रं। आसन्। दधिषे। अश्विना। आ। ववृत्याः ॥३॥

हे इंद्र ते पादावृष्वा। महांतौ। तादृशस्त्वं यद्यदा जिगासि गच्छसि तदानीं वाजा ऋभवोऽवर्धन्। अवर्धयन्। उतापि च ये चिद्ये केचिद्देवाः संति तेऽप्यवर्धयन्। हे इंद्र त्वं सहस्रं सालावृकानासन्नास्ये दधिषे। धारयसि। तदानीमश्विनाश्विनावप्या ववृत्याः। आवर्तयेः ॥

॥ अथ चतुर्थी ॥

समना तूर्णिरुप यासि यज्ञमा नासत्या सख्याय वक्षि।

वसाव्यामिंद्र धारयः सहस्राश्विना शूर ददतुर्मघानि ॥४॥

समना। तूर्णिः। उप। यासि। यज्ञं। आ। नासत्या। सख्याय। वक्षि।

वसाव्यां। इंद्र। धारयः। सहस्रा। अश्विना। शूर। ददतुः। मघानि ॥४॥

हे इंद्र समना संग्रामे तूर्णिस्त्वरमाणोऽपि यज्ञमुप यासि। उपगच्छसि। तदानीं नासत्याश्विनौ सख्याय वक्षि। वहसि। हे इंद्र वसाव्यां वसुसमूहं सहस्रा सहस्रां बहुसंख्यां धारयः। धारयस्यस्माकमर्थाय। हे शूराश्विनाश्विनावपि तवानुचरौ मघानि धनानि ददतुः। अस्मभ्यं प्रयच्छतः॥

॥ अथ पंचमी ॥

मंदमान ऋतादधि प्रजायै सखिभिरिंद्र इषिरेभिरर्थं।

आभिर्हि माया उप दस्युमागान्मिहः प्र तम्रा अवपत्तमांसि ॥५॥

मंदमानः। ऋतात्। अधि। प्रऽजायै। सखिऽभिः। इंद्रः। इषिरेभिः। अर्थं।

आ। आभिः। हि। मायाः। उप। दस्युं। आ। अगात्। मिहः। प्र। तम्राः। अवपत्। तमांसि॥५॥

इंद्र ऋताद्यज्ञादधीषिरेभिर्गमनशीलैः सखिभिर्मरुद्भिः सह मंदमानो माद्यन्प्रजायै यजमानायार्थं धनं प्रयच्छति। स चेंद्र आभिः प्रजाभिर्निमित्तभूताभिर्मायाः दस्युसंबंधिनीर्विनाशयितुं दस्युमुपागात्। स इंद्रस्तम्रा अवर्षणेन ग्लापयित्रीर्मिहो वृष्टीः प्रावपत्। तमांसि च प्रावपत्। व्यनाशयदित्यर्थः ॥

॥ इत्यष्टमस्य तृतीये तृतीयो वर्गः ॥

॥ अथ षष्ठी ॥

सनामाना चिद्ध्वसयो न्यस्मा अवाहन्निंद्र उषसो यथानः।

ऋष्वैरगच्छः सखिभिर्निकामैः साकं प्रतिष्ठा हृद्या जघंथ ॥६॥

सऽनामाना। चित्। ध्वसयः। नि। अस्मै। अव। अहन्। इंद्रः। उषसः। यथा। अनः।

ऋष्वैः। अगच्छः। सखिऽभिः। निऽकामैः। साकं। प्रतिऽस्था। हृद्या। जघंथ ॥६॥

अयमिंद्रो वृत्रं हंतुं सनामाना चित् समाननामानौ नि ध्वसयः। न्यगमयत्। अथेंद्रस्त्वं वृत्रमवाहन्। अवहतवान्। यथोषसोऽनः शकटमवनाशितवान् तद्वत्। अथ प्रत्यक्षेणोच्यते। हे इंद्र त्वमृष्वैर्दीप्तैर्महद्भिर्वा निकामैर्नितरां वृत्रवधं कामयमानैः सखिभिर्मरुद्भिः साकं वृत्रं हंतुमगच्छः। आगत्य च प्रतिष्ठा प्रतिष्ठानानि शरीराणि हृद्या हृद्यानि रमणीयानि जघंथ। हतवानसि। हंतेस्थल्युपदेशेऽत्वत इतीट्प्रतिषेधः ॥

॥ अथ सप्तमी ॥

त्वं जघंथ नमुचिं मखस्युं दासं कृण्वान ऋषये विमायं।

त्वं चकर्थ मनवे स्योनान्पथो देवत्रांजसेव यानान् ॥७॥

त्वं। जघंथ। नमुचिं। मखस्युं। दासं। कृण्वानः। ऋषये। विऽमायं।

त्वं। चकर्थ। मनवे। स्योनान्। पथः। देवऽत्रा। अंजसाऽइव। यानान् ॥७॥

हे इंद्र त्वं नमुचिमेतत्संज्ञकमसुरं जघंथ। हतवानसि। कीदृशं। मखस्युं। ऋषेर्यज्ञं विधातुमिच्छंतं यद्वा त्वदीयं धनमिच्छंतं। किं कुर्वन्। दासमुपक्षपयितारं नमुचिमसुरमृषये मनवे विमायं विगतमायं कृण्वानः कुर्वन्। किंच देवत्रा देवेषु

मध्ये मनव ऋषये सामान्येन मनुष्याय वा पथो मार्गान्स्योनांश्चकर्थ । कृतवानसि । अथवा देवत्रा देवेषु मध्ये गंतव्यान्मार्गानिति वा संबंधः । स्योनांश्चकर्थेत्युक्तमेव विवृणोति । अंजसेव यानानिति । इवेत्येवकारार्थे । अंजसैवाकुटिलेनैव यानान्गंतॄन्मार्गानकरोः । अथवा मार्गेनाकुटिलेनैव गंतॄंश्चकर्थ । यथा लोके शीघ्रं गतो मार्ग इति मार्गस्य गंतृत्वोपचारस्तद्वद्त्रापि यातृत्वं द्रष्टव्यं ॥

॥ अथाष्टमी ॥

त्वमेतानि पप्रिषे वि नामेशान इंद्र दधिषे गभस्तौ ।

अनु त्वा देवाः शवसा मदंत्युपरिबुध्नान्वनिनश्चकर्थ ॥८॥

त्वं । एतानि । पप्रिषे । वि । नाम । ईशानः । इंद्र । दधिषे । गभस्तौ ।

अनु । त्वा । देवाः । शवसा । मदंति । उपरिऽबुध्नान् । वनिनः । चकर्थ ॥८॥

हे इंद्र त्वमेतानि नाम नामानि नामकान्युदकानि वि पप्रिषे । विपूरयसि । हे इंद्र ईशानः सर्वस्येश्वरस्त्वं गभस्तौ हस्ते दधिषे धारयसि वज्रं धनं वा । किंच त्वा त्वां शवसा बलेनोपेतं देवाः सर्वेऽनुमदंति । अनुष्टुवंति । स त्वं वनिन उदकवतो मेघान्रश्मीन्वोपरिबुध्नानुपरिमूलानधोमुखांश्चकर्थ । कृतवानसि ॥

॥ अथ नवमी ॥

चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।

पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥९॥

चक्रं । यत् । अस्य । अप्ऽसु । आ । निऽसत्तं । उतो इति । तत् । अस्मै । मधु । इत् । चच्छद्यात् ।

पृथिव्यां । अतिऽसितं । यत् । ऊधः । पयः । गोषु । अदधाः । ओषधीषु ॥९॥

॥ अथ दशमी ॥

अश्वादियायेति यद्वदंत्योजसो जातमुत मन्य एनं ।

मन्योरियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इंद्रो अस्य वेद ॥१०॥

अश्वात् । इयाय । इति । यत् । वदंति । ओजसः । जातं । उत । मन्ये । एनं ।

मन्योः । इयाय । हर्म्येषु । तस्थौ । यतः । प्रऽजज्ञे । इंद्रः । अस्य । वेद ॥१०॥

इंद्रसामर्थ्यं दृष्ट्वा केचिदेनमश्वादादित्यादियायोदितवानिति वदंति यद्यद्यपि उत तथाप्यहमेनमोजसो बलाज्जातं मन्ये। जानामि। अस्य तेजस्वित्वं दृष्ट्वा सूर्यादुत्पन्न इति तेषां मतिः। अहं त्वोजःपदार्थाज्जात इति मन्ये यतोऽयं वृत्रादीन्हतवानिति। अथवायं मन्योः क्रोधादियायोदितवान्। अतो हर्म्येषु शत्रुसंबंधिषु युद्धेषु हर्म्येष्वेव वा तस्थौ। तिष्ठति। यतोऽयं प्रजज्ञ उत्पन्न इतींद्र एवास्य। स्वस्येत्यर्थः। सामर्थ्यं वेद। जानाति। न ह्यन्यो ज्ञातुमीष्टे ॥

॥ अथैकादशी ॥

वयः सुपर्णा उप सेदुरिंद्रं प्रियमेधा ऋषयो नाधमानाः।

अप ध्वांतमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान् ॥११॥

वयः। सुऽपर्णाः। उप। सेदुः। इंद्रं। प्रियऽमेधाः। ऋषयः। नाधमानाः।

अप। ध्वांतं। ऊर्णुहि। पूर्धि। चक्षुः। मुमुग्धि। अस्मान्। निधयाऽइव। बद्धान् ॥११॥

वयो गंतारः सुपर्णाः सुपतना आदित्यरश्मय इंद्रमुप सेदुः। उपसन्ना अभवन्। कीदृशाः। प्रियमेधाः प्रिययज्ञा ऋषयो द्रष्टारो नाधमानाः प्रज्ञां याचमानाः। याचनप्रकार उच्यते। हे इंद्र ध्वांतमंधकारमपोर्णुहि। परिहर। पूर्धि पूरय च चक्षुस्तेजः। मुमुग्धि मोचय चास्मान् निधयेव बद्धान्। निधा पाश्या भवति। पाश्या पाशसमूहः। पाशसमूहेन बद्धान्यथा मुंचंति तद्वत्। अत्र वयो वेर्बहुवचनमित्यादि निरुक्तं द्रष्टव्यं। नि॰ ४.३.॥

॥ इत्यष्टमस्य तृतीये चतुर्थो वर्गः ॥

वसूनामिति षड्टचं षष्ठं सूक्तं। ऋष्याद्याः पूर्ववत्। वसूनां षळित्यनुक्रांतं ॥ गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

वसूनां वा चर्कृष इयक्षन्धिया वा यज्ञैर्वा रोदस्योः।

अर्वंतो वा ये रयिमंतः सातौ वनुं वा ये सुश्रुणं सुश्रुतो धुः ॥१॥

वसूनां। वा। चर्कृषे। इयक्षन्। धिया। वा। यज्ञैः। वा। रोदस्योः।

अर्वंतः। वा। ये। रयिऽमंतः। सातौ। वनुं। वा। ये। सुऽश्रुणं। सुऽश्रुतः। धुरिति धुः ॥१॥

इयक्षन् धनानि दातुमिच्छन्निंद्रो वसूनां धनानां लाभाय वा चर्कृषे। अपकृष्यते। धिया वा। धीः कर्म धार्यमाणत्वात्। युद्धादिकर्मणा वा निमित्तेनाकृष्यते। यज्ञैर्वा निमित्तभूतैः कृष्यते। कैरित्युच्यते। रोदस्योर्द्यावापृथिव्योः संबंधिभिर्देवैर्मनुष्यैश्चेत्यर्थः। सातौ संग्रामे जेतव्ये सति येऽर्वंतो वा गच्छंतो रयिमंतो भवंति तैरप्याकृष्यते। ये वनुं वा हिंसां वा सुश्रुणं सुप्रसिद्धामत्यंतदुर्जयविषयां सुश्रुतः सुश्रवसः प्रसिद्धाः कुर्वंति तैरपींद्र आकृष्यत इति ॥

॥ अथ द्वितीया ॥

हवं एषामसुरो नक्षत द्यां श्रवस्यता मनसा निंसत क्षां।

चक्षाणा यत्र सुवितायं देवा द्यौर्न वारेभिः कृणवंत स्वैः ॥२॥

हवः। एषां। असुरः। नक्षत। द्यां। श्रवस्यता। मनसा। निंसत। क्षां।

चक्षाणाः। यत्र। सुवितायं। देवाः। द्यौः। न। वारेभिः। कृणवंत। स्वैः ॥२॥

एषामनुष्ठातॄणामंगिरसां हव आह्वानशब्दोऽसुर इंद्रस्य प्रेरको द्यां दिवं नक्षत। व्याप्नोत्। तत्रत्या इंद्रसंबंधिनो देवाः श्रवस्यतान्नमिच्छता मनसा क्षां पृथिवीं निंसत। प्राप्नवंतः। यत्र यस्यां पृथिव्यां चक्षाणाः पणिभिरपहृता गाः पश्यंतो देवाः सुविताय सुष्ठु हिताय स्वात्मनोऽभ्युदयाय द्यौर्नादित्य इव वारेभिर्वरणीयैः स्वैस्तेजोभिः कृणवंत। प्रकाशमकुर्वन्। गवां प्रदानायांधकारमपनेतुमिति शेषः॥ अथवा एषां यज्विनामपहृतानां गवां हवोऽसुर इंद्रस्य प्रेरयिता सन्नक्षत। इंद्रप्रेरिता अंगिरसः श्रवस्यतान्नं कीर्तिं वेच्छता मनसा क्षां भूमिं निंसत। अनुष्ठातॄणां गाः प्रदर्शयितुमित्यर्थः। इतरत्समानं ॥

॥ अथ तृतीया ॥

इयमेषाममृतानां गीः सर्वताता ये कृपणंत रत्नं।

धियं च यज्ञं च साधंतस्ते नो धांतु वसव्य१मसामि ॥३॥

इयं। एषां। अमृतानां। गीः। सर्वऽताता। ये। कृपणंत। रत्नं।

धियं। च। यज्ञं। च। साधंतः। ते। नः। धांतु। वसव्यं। असामि ॥३॥

इयमेषाममृतानां यष्टव्यानां देवानां गीः स्तुतिः क्रियत इति शेषः। ये देवाः सर्वताता सर्वतातौ यज्ञे कृपणंत प्रयच्छंति याच्यंते वा रत्नं रमणीयं धनं। धियं

चास्मदीयां स्तुतिं च यज्ञं च साधंतः साधयंतस्ते नोऽस्मभ्यं वसव्यं वसुसमूहमसाम्यनल्पमसाधारणं वा धांतु । प्रयच्छंतु ॥

॥ अथ चतुर्थी ॥

आ तत्त इंद्रायवः पनंताभि य ऊर्वं गोमंतं तितृत्सान् ।
सकृत्स्वं१ये पुरुपुत्रां महीं सहस्रधारां बृहतीं दुदुक्षन् ॥४॥

आ । तत् । ते । इंद्र । आयवः । पनंत । अभि । ये । ऊर्वं । गोऽमंतं । तितृत्सान् ।
सकृत्ऽस्वं । ये । पुरुऽपुत्रां । महीं । सहस्रऽधारां । बृहतीं । दुदुक्षन् ॥४॥

हे इंद्र ते तवायवो मनुष्या अंगिरसस्तत्तदा पनंत । आ सर्वतः पनंत । स्तूयंते । येऽंगिरसो गोमंतमूर्वं संघं पणिभिरपहृतं प्राप्तं तितृत्सान् हिंसितुमैच्छन् । तृदेर्हिंसार्थस्य सनंतस्य लेट्याडागमः । यद्योगादनिघातः । अभ्यस्तस्वरः । ये चांगिरसः सकृत्स्वं । या सकृत्सूते सा सकृत्सूः । तां सकृत्प्रजातां पुरुपुत्रां बह्वोषधिवनस्पतिरूपपुत्रां सहस्रधारां बहुलकामानामुत्पादयित्रीं बृहतीं विस्तृतां महीं भूमिं । यद्वा पुरुपुत्रां बह्वोषधिवनस्पतिरूपपुत्रां सहस्रधारां बहुकामवर्षित्रीं महीं महतीं पूज्यां वा बृहतीं परिमाणरहितां दिवं दुधुक्षन् दुदुहुः । ते पनंतेति संबंधः । सकृद्ध द्यौरजायतेत्याद्युक्तं । ऋ॰ सं॰ ६. ४८. २२. ॥

॥ अथ पंचमी ॥

शचीव इंद्रमवसे कृणुध्वमनानतं दमयंतं पृतन्यून् ।
ऋभुक्षणं मघवानं सुवृक्तिं भर्ता यो वज्रं नर्यं पुरुक्षुः ॥५॥

शचीऽवः । इंद्रं । अवसे । कृणुध्वं । अनानतं । दमयंतं । पृतन्यून् ।
ऋभुक्षणं । मघऽवानं । सुऽवृक्तिं । भर्ता । यः । वज्रं । नर्यं । पुरुऽक्षुः ॥५॥

हे शचीवः कर्मवंतो यजमानाः । व्यत्ययेनैकवचनं । इंद्रमवसे रक्षणाय कृणुध्वं । कुरुध्वं । कीदृशमिंद्रं । अनानतं । कदाचिदपि परेषामनवनतं । पृतन्यून्पृतना इच्छतः शत्रून्दमयंतं वशं प्रापयंतं । ऋभुक्षणं महांतं मघवानं धनवंतं सुवृक्तिं सुष्टुतिं । यः पुरुक्षुर्बहुशब्द इंद्रो नर्यं नरेभ्यो हितमसुरविघातित्वात् । तादृशं वज्रं भर्ता बिभर्ति तमिंद्रमवसे कृणुध्वमिति ॥

निष्केवल्ये यद्वावानेत्येषा धाय्या । सूत्रितं च । यद्वावानेति धाय्या पिबा

सुतस्य रसिन इति सामप्रगाथः । आ॰ ५. १५. । इति ॥ महाव्रतेऽप्येषा । तथैव पंचमारण्यके सूचितं च । यद्वावानेति धाय्या सूददोहा इति ॥

॥ सैषा षष्ठी ॥

यद्वावान पुरुतमं पुराषाळा वृत्रहेंद्रो नामान्यप्राः ।
अचेति प्रासहस्पतिस्तुविष्मान्यदीमुश्मसि कर्तवे करत्तत् ॥ ६ ॥
यत् । ववान । पुरुऽतमं । पुराषाट् । आ । वृत्रऽहा । इंद्रः । नामानि । अप्राः ।
अचेति । प्रऽसहः । पतिः । तुविष्मान् । यत् । ईं । उश्मसि । कर्तवे । करत् । तत् ॥ ६ ॥

यद्यदा पुरुतममत्यंतं प्रवृद्धतमं वृत्रं ववान हंति पुराषाट् शत्रुपुराणामभिभवितेंद्रस्तदानीमानंतरमेव वृत्रहेंद्रो नामान्युदकान्यप्राः। पूरयति। व्यत्ययेन मध्यमः। सोऽयमिंद्रः प्रासहः शत्रूणां प्रकर्षेणाभिभविता पतिः सर्वस्य स्वामी तुविष्मान्। तुवीति बहुनाम तत्सामर्थ्याद्धनं परिगृह्यते । बहुधन इत्यर्थः। ईदृशः सन्नचेति। सर्वैः प्रज्ञातः। स महानिंद्रो यदीं यदेतत्कर्मोश्मसि वयं कामयामहे तत्करत्। करोत्येव। इदं भवत्विदं भवत्विति यत्कामयामहे तत्तदानीमेव करोत्येव नोदास्त इत्यर्थः। सैतदेव प्रत्यपद्यत यद्वावान पुरुतमं पुराषाळित्यादिकं ब्राह्मणमत्र द्रष्टव्यं । ऐ॰ ब्रा॰ ३. २२. ॥

॥ इत्यष्टमस्य तृतीये पंचमो वर्गः ॥

प्र सु व इति नवर्चं सप्तमं सूक्तं । प्रियमेधपुत्रस्य सिंधुक्षित आर्षं जागतं नदीदेवताकं । तथा चानुक्रांतं । प्र सु नव सिंधुक्षित्प्रैयमेधो नदीस्तुतिर्जागतं त्विति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

प्र सु वं आपो महिमानमुत्तमं कारुर्वोचाति सदने विवस्वतः ।
प्र सप्तसप्त त्रेधा हि चक्रमुः प्र सृत्वरीणामति सिंधुरोजसा ॥ १ ॥
प्र । सु । वः । आपः । महिमानं । उत्ऽतमं । कारुः । वोचाति । सदने । विवस्वतः ।
प्र । सप्तऽसप्त । त्रेधा । हि । चक्रमुः । प्र । सृत्वरीणां । अति । सिंधुः । ओजसा ॥ १ ॥

हे आपो वो युष्माकं महिमानं महत्त्वं स्तोत्रमुत्तममुत्कृष्टतमं कारुः स्तोता सिंधुक्षिदहं विवस्वतः परिचरणवतो यजमानस्य सदने यज्ञगृहे सु सुष्ठु प्र वो-

चाति। प्रब्रवीमि। ता नद्यः सप्तसप्त भूत्वा त्रेधा पृथिव्यामंतरिक्षे दिवि चेति त्रेधा त्रिःप्रकारं चक्रमुः। प्रावहन्। सृत्वरीणामासां मध्ये सिंधुरेतन्नामिका नद्योजसा स्वबलेनाति सर्वा अपि नदीरतिक्रम्य प्रवहतीति शेषः॥

॥ अथ द्वितीया ॥

प्र तेऽरदद्वरुणो यातवे पथः सिंधो यद्वाजाँ अभ्यद्रवस्त्वं।
भूम्या अधि प्रवता यासि सानुना यदेषामग्रं जगतामिरज्यसि ॥२॥

प्र। ते। अरदत्। वरुणः। यातवे। पथः। सिंधो इति। यत्। वाजान्। अभि। अद्रवः। त्वं।
भूम्याः। अधि। प्रऽवता। यासि। सानुना। यत्। एषां। अग्रं। जगतां। इरज्यसि ॥२॥

हे सिंधो देवि ते तव यातवे गमनाय वरुणो देवः पथो मार्गान्प्रारदत्। प्राचीनं व्यलिखत्। सा हि प्राक् प्रवहति। अथवा प्रकृष्टमितरनदीभ्योऽपत्यंतं विस्तृतं व्यदारयत् यद्यस्माद्धे सिंधो वाजानन्नान्यभिलक्ष्य त्वमभ्यद्रवः। अभ्यगच्छः। किंच त्वं भूम्या अध्युपरि सानुना समुच्छ्रितेन प्रवता मार्गेण यासि। गच्छसि। सिंधुः खलु पर्वतान्विभिद्य गता। यद्येन समुच्छ्रितेन मार्गेण गच्छंती त्वमेषां सर्वेषां जगतां जंगमानां प्राणिनामग्रं प्रत्यक्षमिरज्यसि। ईशिषे॥

॥ अथ तृतीया ॥

दिवि स्वनो यतते भूम्योपर्यनंतं शुष्ममुदियर्ति भानुना।
अभ्रादिव प्र स्तनयंति वृष्टयः सिंधुर्यदेति वृषभो न रोरुवत् ॥३॥

दिवि। स्वनः। यतते। भूम्याः। उपरि। अनंतं। शुष्मं। उत्। इयर्ति। भानुना।
अभ्रातऽइव। प्र। स्तनयंति। वृष्टयः। सिंधुः। यत्। एति। वृषभः। न। रोरुवत् ॥३॥

भूम्योपरि भूमेरुपरि प्रवर्तमानः स्वनो दिवि यतते। गच्छति। दिवं प्राप्नोति। सेयं सिंधुरनंतमपर्यंतं शुष्मं वेगं भानुना दीप्तेनोर्मिणोदियर्ति। उद्गमयति। अभ्रादिवांतरिक्षाद्यथा वृष्टयः प्र स्तनयंति तद्वदस्याः शब्दाः प्रादुर्भवंति। यद्यदा सिंधुरियं रोरुवद्भृशं शब्दयन् वृषभो न वृषभ इवेति गच्छति तदेवं भवति॥

॥ अथ चतुर्थी ॥

अभि त्वा सिंधो शिशुमिन्न मातरो वाश्रा अर्षति पयसेव धेनवः।
राजेव युध्वा नयसि त्वमित्सिचौ यदासामग्रं प्रवतामिनक्षसि ॥४॥

अभि। त्वा। सिंधो इति। शिशुं। इत्। न। मातरः। वाश्राः। अर्षंति। पयसाऽइव। धेनवः।
राजाऽइव। युध्वा। नयसि। त्वं। इत्। सिचौ। यत्। आसां। अग्रं। प्रऽवतां। इनक्षसि॥४॥

हे सिंधो त्वा त्वां शिशुमिन्न मातरः पुत्रमिव वाश्राः शब्दयंत्य इतरा नद्यो ऽभ्यर्षंति। अभिगच्छंति। पयसेव धेनवः पयसा युक्ता नवप्रसूतिका गाव इव। किंच युध्वा युद्धकृद्राजेव त्वमित्त्वमेव सिचौ सिच्यमानौ भटौ नयसि। यद्यदासां प्रवतां त्वया सह गच्छंतीनामग्रमग्र इनक्षसि। व्याप्नोषि। सर्वासां पुरतो गच्छसि॥

॥ अथ पंचमी ॥

इमं मे गंगे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया॥५॥

इमं। मे। गंगे। यमुने। सरस्वति। शुतुद्रि। स्तोमं। सचत। परुष्णि। आ।
असिक्न्या। मरुत्ऽवृधे। वितस्तया। आर्जीकीये। शृणुहि। आ। सुऽसोमया॥५॥

अत्र प्रधानभूताः सप्त नद्यस्तदवयवभूता नद्यस्तिस्रः स्तूयंते। हे गंगे हे यमुने हे सरस्वति हे शुतुद्रि हे परुष्णि। हे असिक्न्यावयवभूतया सहिते मरुद्वृधे हे वितस्तया सुषोमया च सहित आर्जीकीये त्वं च एवं सप्त नद्यो यूयं मे स्तोमं स्तोत्रमस्मदीयमा सचत। आसेवध्वं। शृणुहि। शृणुत। आर्जीकीयाया वितस्तया सुषोमया च साहित्यं निरुक्त उक्तं। वितस्तया चार्जीकीय आ शृणुहि सुषोमया चेति। अत्र गंगा गमनादित्यादि निरुक्तं द्रष्टव्यं। ९.२६.॥

॥ इत्यष्टमस्य तृतीये षष्ठो वर्गः ॥

॥ अथ षष्ठी ॥

तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या।
त्वं सिंधो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे॥६॥

तृष्टऽअमया। प्रथमं। यातवे। सऽजूः। सुऽसर्त्वा। रसया। श्वेत्या। त्या।
त्वं। सिंधो इति। कुभया। गोऽमतीं। क्रुमुं। मेहत्न्वा। सऽरथं। याभिः। ईयसे॥६॥

हे सिंधो त्वं क्रुमुं क्रमणशीलां गोमतीं नदीं यातवे प्रतियातुं पर्वतादवरूढा

प्रथमं तृष्टामया नद्या सजूः संगतासि। पश्चात्सुसर्त्वा रसया श्वेत्या त्या कुभया मेहत्न्वा च सह सजूर्भव याभिस्त्वं सरथं समानं रथमारुह्येयसे। गच्छसि ॥

॥ अथ सप्तमी ॥

ऋजीत्येनी रुशती महित्वा परि ज्रयांसि भरते रजांसि।

अदब्धा सिंधुरपसामपस्तमाश्वा न चित्रा वपुषीव दर्शता ॥७॥

ऋजीती। एनी। रुशती। महिऽत्वा। परि। ज्रयांसि। भरते। रजांसि।

अदब्धा। सिंधुः। अपसां। अपःऽतमा। अश्वा। न। चित्रा। वपुषीऽइव। दर्शता॥७॥

ऋजीत्यृजुगामिन्येनी श्वेतवर्णा रुशती दीप्यमाना सिंधुर्ज्रयांसि वेगवंति रजांस्युदकानि परि भरते। प्रभरति। तादृश्यदब्धाहिंसिता सिंधुरपसां कर्मवतीनां मध्येऽपस्तमा वेगाख्यकर्मवती भवति। अश्वा न वडवेव चित्रा चायनीया वपुषी वपुष्मती योषिदिव दर्शता दर्शनीया भवति ॥

॥ अथाष्टमी ॥

स्वश्वा सिंधुः सुरथा सुवासा हिरण्ययी सुकृता वाजिनीवती।

ऊर्णावती युवतिः सीलमावत्युताधि वस्ते सुभगा मधुवृधं ॥८॥

सुऽअश्वा। सिंधुः। सुऽरथा। सुऽवासाः। हिरण्ययी। सुऽकृता। वाजिनीऽवती।

ऊर्णाऽवती। युवतिः। सीलमाऽवती। उत। अधि। वस्ते। सुऽभगा। मधुऽवृधं॥८॥

सेयं सिंधुः स्वश्वा शोभनाश्वोपेता सुरथा शोभनरथा सुवासाः शोभनवस्त्रोपेता हिरण्ययी हिरण्मयाभरणा सुकृता वाजिनीवत्यन्नवत्यूर्णावती। तस्याः समीपदेशे हि संत्यूर्णा यासां रोमभिः कंबलाः क्रियंते। युवतिर्नित्यतरुणी सर्वदाहीनोदका सीलमावती। सीराणि ययोषध्या रज्जुभूतया बध्यंते सा सीलमेति निगद्यते कृषीवलैः। तादृगोषध्युपेता। उतापि च सुभगा सिंधुर्मधुवृधं मधुवर्धकं निर्गुंड्यादिकमधि वस्ते। आच्छादयति। तस्यास्तीरे निर्गुंड्यादीनि बहूनि संति ॥

॥ अथ नवमी ॥

सुखं रथं युयुजे सिंधुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ।

महान्ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥९॥

सुऽखं। रथं। युयुजे। सिंधुः। अश्विनं। तेन। वाजं। सनिषत्। अस्मिन्। आजौ।
महान्। हि। अस्य। महिमा। पनस्यते। अदब्धस्य। स्वऽयशसः। विऽरप्शिनः॥९॥

सिंधुर्देवता सुखं सुखकरं शोभनद्वारं वाश्विनमश्ववंतं रथं युयुजे। युनक्ति। तेन रथेन वाजमन्नं सनिषत्। प्रयच्छतु। अस्मिन्नाजौ संग्रामे यज्ञे वास्य सिंधुरथस्य महिमा महान्हि पनस्यते। स्तूयते। कीदृशस्यास्य। अदब्धस्यान्यैरहिंस्यस्य स्वयशसः स्वायत्तकीर्तेर्विरप्शिनः। महन्नामैतत्। महतः॥

॥ इत्यष्टमस्य तृतीये सप्तमो वर्गः॥

आ व इत्यष्टर्चमष्टमं सूक्तं। इरावतः पुत्रस्य सर्पजातेर्जरत्कर्णनाम्न आर्षं। जागतं। सोमाभिषवार्था ये ग्रावाणस्तद्देवत्यं। तथा चानुक्रांतं। आ वोऽष्टौ सर्प ऐरावतो जरत्कर्णो ग्राव्णोऽस्तौदिति॥ ग्रावस्तोत्र एतत्सूक्तं। सूचितं च। आ व ऋंजसे प्र वो ग्रावाण इति सूक्तयोरंतरोपरिष्टात्पुरस्ताद्वा। आ॰ ५.५.। इति॥

॥ तत्र प्रथमा॥

आ वं ऋंजस ऊर्जां व्युष्टिष्विंद्रं मरुतो रोदसी अनक्तन।
उभे यथा नो अहनी सचाभुवा सदःसदो वरिवस्यात उद्भिदा॥१॥

आ। वः। ऋंजसे। ऊर्जा। विऽउष्टिषु। इंद्रं। मरुतः। रोदसी इति। अनक्तन।
उभे इति। यथा। नः। अहनी इति। सचाऽभुवा। सदःऽसदः। वरिवस्यातः।
उत्ऽभिदा॥१॥

हे ग्रावाणो वो युष्मानूर्जां सारभूतानामन्नवतीनां वोषसां व्युष्टिषु विभातेषु सत्स्वा ऋंजसे। आप्रसाधयामि। यूयं सोमेनेंद्रं मरुतो रोदसी द्यावापृथिव्यौ चानक्तन। व्यंजयत। नोऽस्मानुभे सचाभुवा सहोत्पन्ने अहनी द्यावापृथिव्यौ सदःसदः सर्वेषु यागगृहेषु वरिवस्यातः। परिचरतः। उद्भिदोद्भेदकेन धनेन पूरयतामिति॥

॥ अथ द्वितीया॥

तदु श्रेष्ठं सवनं सुनोतनात्यो न हस्तयतो अद्रिः सोतरि।
विदद्ध्य१र्यो अभिभूति पौंस्यं महो राये चित्तरुते यदर्वतः॥२॥

तत्। ऊं इति। श्रेष्ठं। सवनं। सुनोतन। अत्यः। न। हस्तऽयतः। अद्रिः। सोतरि।
विदत्। हि। अर्यः। अभिऽभूति। पौंस्यं। महः। राये। चित्। तरुते। यत्। अर्वतः॥२॥

हे ग्रावाणो यूयं तदु तमेव श्रेष्ठं प्रशस्यं सवनं सोमं सुनोतन। अभिषुणुत। अथैकवदाह। अद्रिरभिषवग्रावा हस्तयतो हस्ताभ्यां गृहीतः सन् अत्यो न धृतोऽश्व इव भवति सोतर्यभिषवकर्तर्यध्वर्यौ। स यथा हस्ताभ्यां गृहीतोऽपि बलवान् तद्वत्। अर्यो ग्राव्णामभिषवाय प्रेरको यजमानोऽभिभूति शत्रूणामभिभावुकं पौंस्यं बलं विददि। लभते खलु देवेभ्यः। यद्वाभिषवायाध्वर्य्वादेः प्रेरितो ग्रावाभिभूति पौंस्यं विदद्यजमानार्थं। किंच महे महते राये चिद्धनायापि यद्यो ग्रावार्वतोऽश्वांस्तरुते। तनुते। प्रयच्छति॥

॥ अथ तृतीया ॥

तदिद्ध्यस्य सवनं विवेरपो यथा पुरा मनवे गातुमश्रेत्।
गोअर्णसि त्वाष्ट्रे अश्वनिर्णिजि प्रेमध्वरेष्वध्वराँ अशिश्रयुः ॥३॥

तत्। इत्। हि। अस्य। सवनं। विवेः। अपः। यथा। पुरा। मनवे। गातुं। अश्रेत्।
गोऽअर्णसि। त्वाष्ट्रे। अश्वऽनिर्निजि। प्र। ईं। अध्वरेषु। अध्वरान्। अशिश्रयुः ॥३॥

इदिति पूरणः। अस्य ग्राव्णस्तत्सवनमभिषवोपेतमस्मदीयं सोमयागाख्यमपः कर्म विवेः। व्याप्नोतु। विपूर्वस्य वेतेर्लेड्यदादित्वाच्छपो लुक्। वेतेर्विपूर्वस्य वा छांदसे श्रौ वापररूपमिति संदेहादनवग्रहः। समासस्वरः। यथा पुरा मनवे राज्ञे गातुं गमनमश्रेदाजगाम तद्वद्व्याप्नोतु। किंच गोअर्णसि गोरूपेऽपहृतैर्गोभिः परिवृते तथाश्वनिर्णिजि। निर्णिगिति रूपनाम। अश्वरूपे। अपहृतैरश्वैर्वृत इत्यर्थः। ईदृशे त्वाष्ट्रे त्वष्टुः पुत्रे हंतव्ये सतीति शेषः। ईमेतानध्वरानसुरैरहिंस्यानध्वरसाधकान्वोपलानध्वरेष्वशिश्रयुः। आश्रयंति पूर्वे यजमानाः॥

॥ अथ चतुर्थी ॥

अप हत रक्षसो भंगुरावतः स्कभायत निर्ऋतिं सेधतामतिं।
आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः ॥४॥

अप। हत। रक्षसः। भंगुरऽवतः। स्कभायत। निःऽऋतिं। सेधत। अमतिं।
आ। नः। रयिं। सर्वऽवीरं। सुनोतन। देवऽअव्यं। भरत। श्लोकं। अद्रयः ॥४॥

हे अद्रयो यूयमप हत विनाशयत रक्षसो राक्षसान्। कीदृशान्। भंगुरावतः। भंजकेन कर्मणा तद्वतः। तथा स्कभायत। दूरे परिहरत निर्ऋतिं पापदेवतां।

यथामुं यज्ञं नागच्छति तथा। किंच सेधत निषेधतामतिं हिंसामतिं रक्षःप्रभृतिं। किंच नोऽस्माकं सर्ववीरं बहुपुत्राद्युपेतं रयिं धनमा सुनोतन। अभिषवेन पुत्रधनादीनां लाभादेवमुक्तं। किंच देवाव्यं देवप्रीणनं श्लोकं भरत। संपादयत ॥

॥ अथ पंचमी ॥

दिवश्चिदा वोऽमवत्तरेभ्यो विभ्वना चिदाश्वपस्तरेभ्यः।

वायोश्चिदा सोमरभस्तरेभ्योऽग्नेश्चिदर्च पितुकृत्तरेभ्यः ॥५॥

दिवः। चित्। आ। वः। अमवत्ऽतरेभ्यः। विऽभ्वना। चित्। आश्वपःऽतरेभ्यः।

वायोः। चित्। आ। सोमरभःऽतरेभ्यः। अग्नेः। चित्। अर्च। पितुकृत्ऽतरेभ्यः ॥५॥

दिवश्चिदादित्यादप्यमवत्तरेभ्योऽत्यंतं बलवद्भ्यो वो युष्मभ्यमार्च। अस्तौदध्वर्युः। यद्वा हेऽध्वर्य्वादयो वो यूयमुच्यमानलक्षणेभ्यो ग्रावभ्य आ सर्वतोऽर्च। अर्चतेत्येवं प्रतिवाक्यं योज्यं। विभ्वना चित्। विभ्वा सुधन्वनः पुत्रः। तेनाप्याश्वपस्तरेभ्यः। शीघ्रकर्मभ्य इत्यर्थः। विभ्वादीनां त्रयाणां चमसादिशीघ्रकर्म प्रसिद्धं। वायोश्चिद्वायोरपि सोमरभस्तरेभ्यः सोमाभिषवार्थेनात्यंतेन वेगेन युक्तेभ्यः। वायोरपि ग्रावाणो वेगवंतो भवंति सोमाभिषवार्थं। अग्नेश्चिदग्नेरपि पितुकृत्तरेभ्योऽत्यंतमन्नसाधकेभ्यः। ईदृशेभ्यो ग्रावभ्यः प्रीणनाय यूयमर्चतेति ॥

॥ इत्यष्टमस्य तृतीयेऽष्टमो वर्गः ॥

॥ अथ षष्ठी ॥

भुरंतु नो यशसः सोत्वंधसो ग्रावाणो वाचा दिविता दिवित्मता।

नरो यत्र दुहते काम्यं मध्वाघोषयंतो अभितो मिथस्तुरः ॥६॥

भुरंतु। नः। यशसः। सोतु। अंधसः। ग्रावाणः। वाचा। दिविता। दिवित्मता।

नरः। यत्र। दुहते। काम्यं। मधु। आऽघोषयंतः। अभितः। मिथःऽतुरः ॥६॥

यशसो यशस्विनो ग्रावाणो नोऽस्मभ्यं सोतु सुतमंधसः सोमस्य रसं भुरंतु। भरंतु। संपादयंतु। उकारश्छांदसः। किंच दिवित्मता दीप्तिमत्या। लिंगव्यत्ययः। वाचा स्तुतिवाचा दिविता दिवितायां दीप्तिमत्तायां वास्मान्कुर्वंतु। सोमयागे स्थापयंत्वित्यर्थः। क्वैषा दीप्तिमत्तेत्युच्यते। नरो नेतार ऋत्विजो यत्र यागे काम्यं कमनीयं मधु सोमरसं दुहते। किं कुर्वंतः। आघोषयंतः सर्वतोऽभिषवशब्दं

स्तोत्रशस्त्रादिरूपं वा शब्दं कुर्वंतः। अभितः सर्वतो मिथस्तुरस्त्वरमाणाः। सा दीप्तिमत्तेति ॥

॥ अथ सप्तमी ॥

सुन्वंति सोमं रथिरासो अद्रयो निरस्य रसं गविषो दुहंति ते।

दुहंत्यूधरुपसेचनाय कं नरो हव्या न मर्जयंत आसभिः ॥७॥

सुन्वंति। सोमं। रथिरासः। अद्रयः। निः। अस्य। रसं। गोऽइषः। दुहंति। ते।

दुहंति। ऊधः। उपऽसेचनाय। कं। नरः। हव्या। न। मर्जयंते। आसऽभिः ॥७॥

रथिरासो रथवंतो रंहणवंतोऽद्रयो ग्रावाणः सोमं सुन्वंति। ग्रावाणोऽस्य सोमस्य रसं निर्दुहंति। निःशेषेण दुहंति गविषः स्तुतिवाचमिच्छंतः संतः। दुहंत्यूधा रसं सोमसंबंधिनं। किमर्थं। उपसेचनायाग्नेः। कमिति पादपूरणः। नरो नेतारोऽभिषवकर्तार ऋत्विजो हव्या हवींषि चाग्न्युपसेचनानंतरमासभिः स्वास्यैर्मर्जयंते। शोधयंति। शेषभक्षणेन शुद्धीकुर्वंति। यद्वाग्नौ होतुर्दशापवित्रात्पुरासभिरास्योपलक्षितैः स्तोत्रैर्मर्जयंते ॥

॥ अथाष्टमी ॥

एते नरः स्वपसो अभूतन य इंद्राय सुनुथ सोममद्रयः।

वामंवामं वो दिव्याय धाम्ने वसुवसु वः पार्थिवाय सुन्वते ॥८॥

एते। नरः। सुऽअपसः। अभूतन। ये। इंद्राय। सुनुथ। सोमं। अद्रयः।

वामंऽवामं। वः। दिव्याय। धाम्ने। वसुऽवसु। वः। पार्थिवाय। सुन्वते ॥८॥

हे नरो नेतारो हेऽद्रय एते यूयं स्वपसोऽभूतन। शोभनाभिषवकर्माणो भवत। ये यूयमिंद्राय सोमं सुनुथ वो यूयं वामंवामं यद्यद्वननीयं धनमस्ति तत्तद्दिव्याय धाम्ने तेजसे कुरुत। तथा वसुवसु यद्यद्वासयोग्यं धनमस्ति तद्वो यूयं पार्थिवाय सुन्वते यजमानाय कुरुत ॥

॥ इत्यष्टमस्य तृतीये नवमो वर्गः ॥

अभ्रप्रुष इत्यष्टर्चं नवमं सूक्तं भृगुगोत्रस्य स्यूमरश्मेरार्षं मरुद्देवताकं। पंचमी जगती शिष्टाः सप्त त्रिष्टुभः। तथा चानुक्रांतं ॥ अभ्रप्रुषः स्यूमरश्मिर्भार्गवो मारुतं तु पंचमी जगतीति। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

अभ्रप्रुषो न वाचा प्रुषा वसु हविष्मंतो न यज्ञा विजानुषः ।
सुमारुतं न ब्रह्माणमर्हसे गणमस्तोष्येषां न शोभसे ॥१॥

अभ्रऽप्रुषः । न । वाचा । प्रुष । वसु । हविष्मंतः । न । यज्ञाः । विऽजानुषः ।
सुऽमारुतं । न । ब्रह्माणं । अर्हसे । गणं । अस्तोषि । एषां । न । शोभसे ॥१॥

अभ्रप्रुषो न मेघान्निर्गच्छंत उदकबिंदव इव वाचा स्तुत्या प्रीता मरुतो वसु धनं प्रुष । सिंचंति । व्यत्ययेन बहुवचनं । किंच हविष्मंतो न यज्ञा हविर्भिर्युक्ता यागा इव विजानुषो जगतो विजनयितारो भवंति । अथ समुदायेनाह । तेषामेषां सुमारुतं शोभमानानां मरुतां ब्रह्माणं महांतं गणमर्हसे पूजार्थं नास्तोषि । नास्तौषं । न स्तुतवानस्मीतः पूर्वं । तथा शोभसे शोभार्थमपि मारुतं गणं नास्तौषि । अत इदानीं नूतनेन स्तोत्रेण स्तौमीत्यर्थः ॥

॥ अथ द्वितीया ॥

श्रिये मर्यासो अंजीँरकृण्वत सुमारुतं न पूर्वीरति क्षपः ।
दिवस्पुत्रास एता न येतिर आदित्यासस्ते अक्रा न वावृधुः ॥२॥

श्रिये । मर्यासः । अंजीन् । अकृण्वत । सुऽमारुतं । न । पूर्वीः । अति । क्षपः ।
दिवः । पुत्रासः । एताः । न । येतिरे । आदित्यासः । ते । अक्राः । न । ववृधुः ॥२॥

श्रिये शोभार्थं मर्यासो मारका मनुष्यरूपा वा मरुतः । पूर्वं मनुष्याः संतः पश्चात्सुकृतविशेषेण ह्यमरा आसन् । तेऽंजीनंजकान्याभरणान्यकृण्वत । कुर्वंति । किमर्थं । श्रिये । स्वशरीरशोभनार्थं । सुमारुतं शोभमानानां मरुतां गणं पूर्वीर्बह्व्यः क्षपः क्षपयित्र्यः सेना नाति । न पराभावयंतीति शेषः । किंच दिवो द्युदेवतायाः पुत्रासः पुत्रा एता गंतारो न येतिरे । निर्गच्छंति । त आदित्यासोऽदितेः पुत्रा अक्रा आक्रमणशीला मरुतो न वावृधुः । न वर्धंते । यतोऽस्माभिर्न स्तुता अत इति भावः ॥

॥ अथ तृतीया ॥

प्र ये दिवः पृथिव्या न बर्हणा त्मना रिरिच्रे अभ्रान्न सूर्यः ।
पाजस्वंतो न वीराः पनस्यवो रिशादसो न मर्या अभिद्यवः ॥३॥

प्र। ये। दिवः। पृथिव्याः। न। बर्हणा। त्मना। रिरिच्रे। अभ्रात्। न। सूर्यः।
पाजस्वंतः। न। वीराः। पनस्यवः। रिशादसः। न। मर्याः। अभिऽद्यवः ॥३॥

ये मरुतो दिवः पृथिव्या न पृथिव्याश्च। नेति चार्थे। बर्हणा महत्त्वेन त्मनात्मनैव रिरिच्रे। अतिरिक्ता अभवन्स्वशरीरेण। अभ्रान्नाभ्रादिव सूर्यः। किंच पाजस्वंतो न वीरा बलवंतो वीरा इव पनस्यवः स्तुतिकामा भवंति। किंच रिशादसो न मर्या रिशतामसितारो मनुष्या इवाभिद्यवोऽभिगतदीप्तयो भवंति॥

॥ अथ चतुर्थी ॥

युष्माकं बुध्ने अपां न यामनि विथुर्यति न मही श्रथर्यति।
विश्वप्सुर्यज्ञो अर्वागयं सु वः प्रयस्वंतो न सत्राच आ गत ॥४॥
युष्माकं। बुध्ने। अपां। न। यामनि। विथुर्यति। न। मही। श्रथर्यति।
विश्वऽप्सुः। यज्ञः। अर्वाक्। अयं। सु। वः। प्रयस्वंतः। न। सत्राचः। आ। गत ॥४॥

हे मरुतो युष्माकं बुध्ने परस्परसंघातेऽपां न यामनि प्रवृद्धानामुदकानां गमन इव मही महती भूर्न विथुर्यति। न व्यथते। नापि श्रथर्यति। न विशीर्णा भवति। शीघ्रगतयोऽपि यूयमेनां न पीडयध्वमित्यर्थः। विश्वप्सुर्विश्वरूपोऽयं यज्ञो यागसाधनं हविर्वो युष्माकमर्वागभिमुखं सु सुष्ठु गच्छति। प्रयस्वंतो नान्नवंतः परिष्कर्तार इव सुखप्रदाः संतः सत्राचः सहांचना आ गत। आगच्छत। संघाकारेणागच्छतेत्यर्थः। सप्त गणा वै मरुत इति श्रुतेः॥

॥ अथ पंचमी ॥

यूयं धूर्षु प्रयुजो न रश्मिभिर्ज्योतिष्मंतो न भासा व्युष्टिषु।
श्येनासो न स्वयशसो रिशादसः प्रवासो न प्रसितासः परिप्रुषः ॥५॥
यूयं। धूःऽसु। प्रऽयुजः। न। रश्मिऽभिः। ज्योतिष्मंतः। न। भासा। विऽउष्टिषु।
श्येनासः। न। स्वऽयशसः। रिशादसः। प्रवासः। न। प्रऽसितासः। परिऽप्रुषः ॥५॥

हे मरुतो यूयं धूर्षु रथसंबंधिनीषु रश्मिभिर्योक्त्रैः प्रयुजः प्रयुक्ता बद्धा अश्वा इव परिप्रुषः परितो गंतारः स्थ। तथा ज्योतिष्मंतो न तेजोवंत आदित्यादय इव भासा युक्ता भवथ व्युष्टिषूषःसूदितासु। किंच श्येनासो न श्येना इव स्वयशसः

स्वायत्तयशसः। ते यथा रिशादसो रिशतामसितारस्तद्वद्रिशादसः स्वायत्तयशसश्च। किंच प्रवासो न प्रवासिन इव पथिका इव प्रसितासः प्रसिद्धयानाः। उक्तरूपा मरुतः परिप्रुषः परितो गंतारो भवथ ॥

॥ इत्यष्टमस्य तृतीये दशमो वर्गः ॥

॥ अथ षष्ठी ॥

प्र यद्वहध्वे मरुतः पराकाद्यूयं महः संवरणस्य वस्वः।
विदानासो वसवो राध्यस्याराच्चिद्द्वेषः सनुतर्युयोत ॥६॥

प्र। यत्। वहध्वे। मरुतः। पराकात्। यूयं। महः। संऽवरणस्य। वस्वः।
विदानासः। वसवः। राध्यस्य। आरात्। चित्। द्वेषः। सनुतः। युयोत ॥६॥

हे मरुतो यूयं यद्यदा पराकादत्यंतं दूरदेशाद्वहध्व आगच्छथ तदानीं महो महत्संवरणस्य संवरणीयं राध्यस्य संराधनीयं वस्वो वसु धनं विदानासः प्रयच्छंतो हे वसवो यूयमाराच्चिद्दूरादेव युयोत। पृथक्कुरुत। कानित्युच्यते। द्वेषो द्वेष्टॄन् सनुतरंतर्हितान्। निगूढानित्यर्थः। सनुतरित्यंतर्हितनाम ॥

॥ अथ सप्तमी ॥

य उदृचि यज्ञे अध्वरेष्ठा मरुद्भ्यो न मानुषो ददाशत्।
रेवत्स वयो दधते सुवीरं स देवानामपि गोपीथे अस्तु ॥७॥

यः। उत्ऽऋचि। यज्ञे। अध्वरेऽस्थाः। मरुत्ऽभ्यः। न। मानुषः। ददाशत्।
रेवत्। सः। वयः। दधते। सुऽवीरं। सः। देवानां। अपि। गोऽपीथे। अस्तु ॥७॥

अध्वरेष्ठा यागे सीदन्मानुषो यो यजमानो यज्ञ उदृचि सति। ऋक्शब्देन स्तोत्रमुपलक्ष्यते। यज्ञे समाप्तस्तुतिके सति संपूर्णे सति मरुद्भ्यो न मरुद्भ्य इवान्येषामध्वर्युभ्य ऋत्विगादिभ्यो ददाशद्द्यात्। यद्वा यज्ञ उदृच्युपक्रांत इत्यर्थः। तस्मिन्यज्ञे मरुद्भ्य इवान्यस्मा इंद्राय ददाशद्ददाति स यजमानो रेवद्धनवत्सुवीरं शोभनपुत्राद्युपेतं वयोऽन्नं दधते। धारयति। व्यत्ययेनैकवचनं। स देवानामिंद्रादीनामपि गोपीथे सोमपानेऽस्तु। भवतु ॥

॥ अथाष्टमी ॥

ते हि यज्ञेषु यज्ञियास ऊमा आदित्येन नाम्ना शंभविष्ठाः ।
ते नोऽवंतु रथतूर्मनीषां महश्च यामन्नध्वरे चकानाः ॥८॥

ते । हि । यज्ञेषु । यज्ञियासः । ऊमाः । आदित्येन । नाम्ना । शंऽभविष्ठाः ।
ते । नः । अवंतु । रथऽतूः । मनीषां । महः । च । यामन् । अध्वरे । चकानाः ॥८॥

ते हि ते खलु यज्ञेषु यागेषु यज्ञियासो यज्ञार्हा यष्टव्या ऊमा अवितार आदित्येन नाम्नादित्यसंबंधिनोदकेन शंभविष्ठाः सुखस्य भावयितारः । यद्वादित्याख्येन नाम्नादित्यनामकेन देवेन सह शंभविष्ठाः । ते मरुतो नोऽस्मानवंतु । रथतू रथतुरो रथस्य यज्ञगमनसाधनस्य त्वरयितारः संतो मनीषां स्तुतिमवंतु । रक्षंतु । कीदृशास्ते । अध्वरे यामन्यामनि गमने महो महद्धविश्चकानाः कामयमानाः ॥

॥ इत्यष्टमस्य तृतीय एकादशो वर्गः ॥

विप्रास इत्यष्टर्चं दशमं सूक्तं । पंचम्याद्यास्तिस्रो द्वितीया चेति चतस्रो जगत्यः । शिष्टाश्चतस्रस्त्रिष्टुभः । पूर्ववदृषिदेवते । तथा चानुक्रांतं । विप्रासो द्वितीया पंचम्याद्याश्च तिस्रो जगत्य इति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

विप्रासो न मन्मभिः स्वाध्यो देवाव्यो३न यज्ञैः स्वप्नसः ।
राजानो न चित्राः सुसंदृशः क्षितीनां न मर्या अरेपसः ॥१॥

विप्रासः । न । मन्मऽभिः । सुऽआध्यः । देवऽअव्यः । न । यज्ञैः । सुऽअप्नसः ।
राजानः । न । चित्राः । सुऽसंदृशः । क्षितीनां । न । मर्याः । अरेपसः ॥१॥

विप्रासो न विप्रा ब्राह्मणा इव । ते यथा मन्मभिः स्तुतिभिः स्वाध्यः शोभनाध्याना भवंत्येवं मरुतोऽप्यस्मदीयैर्मन्मभिर्मननीयैः स्तोत्रैः स्वाध्यः सुमनसो भवंति । अथवा मन्मभिः स्तोत्रैर्युक्ता विप्रासो न मेधाविनः स्तोतार इव स्वाध्यो यज्ञे यजमाने वा सुध्याना इत्यर्थः । तथा यज्ञैर्यागैर्देवाव्यो न देवानां तर्पयितारो ये यजमाना इव स्वप्नसः । अप्न इति कर्मनाम । शोभनकर्माणः । ते यथा कर्मसु व्यापृता भवंति तद्वद्वृष्टिप्रदानादिकर्मसु व्यापृता भवंति । राजानो न मूर्धाभिषिक्ताः क्षितिपतय इव चित्राश्चायनीयाः पूजनीयाः । यद्वा चित्राभरणाः । तथा सुसंदृशः

सुष्ठु दर्शनीयाः। तथा क्षितीनां निवासानां स्वामिनो मर्या न मनुष्या इवारेपसोऽपापाः। यथा प्रतिग्रहार्थमन्यत्रागत्वा स्वगृह एवानुतिष्ठंतो निर्दोषा भवंति तादृशा इत्यर्थः। ईदृशाः शोभंत इत्यर्थः॥

॥ अथ द्वितीया ॥

अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्यऊतयः।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते ॥२॥

अग्निः। न। ये। भ्राजसा। रुक्मऽवक्षसः। वातासः। न। स्वऽयुजः। सद्यःऽऊतयः।
प्रऽज्ञातारः। न। ज्येष्ठाः। सुऽनीतयः। सुऽशर्माणः। न। सोमाः। ऋतं। यते ॥२॥

ये मरुतोऽग्निर्नाग्निरिव। स यथा भ्राजसा तेजसा शोभते तद्वद्भ्राजसा युक्ताः। किंच रुक्मवक्षसो रुक्मालंकृतवक्षस्का वातासो न प्रत्यक्षवाता इव स्वयुजः स्वयंयुज्यमानाः सद्यऊतयः सद्योगमनाः प्रज्ञातारो न प्रकर्षेण ज्ञातारो ज्ञानिन इव ज्येष्ठाः पूज्याः सुनीतयः सुनयनाः सुशर्माणो न सोमाः सुसुखाः सोमा इव ते यूयमृतं यते यज्ञं गच्छते यजमानाय गच्छतेति॥

॥ अथ तृतीया ॥

वातासो न ये धुनयो जिगत्नवोऽग्नीनां न जिह्वा विरोकिणः।
वर्मण्वंतो न योधाः शिमीवंतः पितॄणां न शंसाः सुरातयः ॥३॥

वातासः। न। ये। धुनयः। जिगत्नवः। अग्नीनां। न। जिह्वाः। विऽरोकिणः।
वर्मण्ऽवंतः। न। योधाः। शिमीऽवंतः। पितॄणां। न। शंसाः। सुऽरातयः ॥३॥

ये मरुतो वातासो न वायव इव धुनयः शत्रूणां कंपयितारो जिगत्नवो गमनशीलाः। अत्र मारुते सूक्ते मरुतामेव दृष्टांतकथनं संचरणस्वभाववायुपदार्थतदभिमानिदेवताभेदेनाविरुद्धं। तथाग्नीनां न जिह्वा अग्नीनां ज्वाला इव विरोकिणो विरोचनशीलमुखाः। तथा वर्मण्वंतो न योधाः कवचिनो योद्धार इव शिमीवंतः शौर्यकर्मवंतः। तथा पितॄणां न शंसाः पितॄणां जनकानां शंसा वाच इव सुरातयः सुदानाः। एवं महानुभावा एते मरुतोऽस्मद्यज्ञमागच्छंतु॥

॥ अथ चतुर्थी ॥

रथानां न येऽराः सनाभयो जिगीवांसो न शूरा अभिद्यवः ।
वरेयवो न मर्या घृतप्रुषोऽभिस्वर्तारो अर्कं न सुष्टुभः ॥४॥
रथानां । न । ये । अराः । सऽनाभयः । जिगीवांसः । न । शूराः । अभिऽद्यवः ।
वरेऽयवः । न । मर्याः । घृतऽप्रुषः । अभिऽस्वर्तारः । अर्कं । न । सुऽस्तुभः ॥४॥

रथानां न रथचक्राणामिवाराः । ते यथा बहवोऽपि सनाभयः समाननाभयो भवंति तद्वद्ये परस्परं सनाभयः समानबंधना एकस्मिन्नेवांतरिक्षे वर्तमानाः । परस्परं बंधुभूता इत्यर्थः । जिगीवांसो न शूरा जयशीलाः शूरा इवाभिद्यवोऽभिगतदीप्तयः । किंच वरेयवो न मर्याः । वृतं वरं परस्मै प्रदातुमिच्छंतो मनुष्या इव घृतप्रुष उदकसेक्तारः । उदकपूर्वं हि वराणि वसूनि दीयंते नियमेन । वृष्ट्युदकप्रदा इत्यर्थः । किंचाभिस्वर्तारोऽर्कं न । अर्कमर्चनीयं स्तोत्रमभिस्वर्तारोऽभितः शब्दयितारो वंदिन इव सुष्टुभः सुशब्दाः ॥

॥ अथ पंचमी ॥

अश्वासो न ये ज्येष्ठास आशवो दिधिषवो न रथ्यः सुदानवः ।
आपो न निम्नैरुदभिर्जिगत्नवो विश्वरूपा अंगिरसो न सामभिः ॥५॥
अश्वासः । न । ये । ज्येष्ठासः । आशवः । दिधिषवः । न । रथ्यः । सुऽदानवः ।
आपः । न । निम्नैः । उदऽभिः । जिगत्नवः । विश्वऽरूपाः । अंगिरसः । न । सामऽभिः ॥५॥

ये मरुतोऽश्वासो नाश्वा इव ज्येष्ठाः प्रशस्यतमा आशवः शीघ्रगमनाः । तथा दिधिषवो न वसूनां धारका इव रथ्यो रथस्वामिनः सुदानवः सुदानाः । तथापो नाप इव निम्नैः प्रवणगैरुदभिरुदकैः सह जिगत्नवो गमनशीलाः । तथा विश्वरूपा नानारूपाः सामभिर्युक्ता अंगिरसो नांगिरस इव सर्वदा सामगा इत्यर्थः ॥

॥ इत्यष्टमस्य तृतीये द्वादशो वर्गः ॥

॥ अथ षष्ठी ॥

ग्रावाणो न सूरयः सिंधुमातर आदर्दिरासो अद्रयो न विश्वहा ।
शिशूला न क्रीळयः सुमातरो महाग्रामो न यामन्नुत त्विषा ॥६॥

ग्रावाणः। न। सूरयः। सिंधुऽमातरः। आऽदर्दिरासः। अद्रयः। न। विश्वहा।
शिशूलाः। न। क्रीळयः। सुऽमातरः। महाऽग्रामः। न। यामन्। उत। त्विषा॥६॥

सूरय उदकस्य प्रेरका ग्रावाणो न मेघा इव सिंधुमातरो नदीनिर्मातारः। आदर्दिरास आदरणशीलान्यद्रयो न वज्राद्यायुधानीव विश्वहा सर्वदा शत्रूणां हंतार इत्यर्थः। यद्वा सर्वदाद्रयो न वज्रा इव शत्रूणामादर्दिरास आदरणशीलाः। सुमातरः शोभनमातृकाः शिशूला न शिशव इव क्रीळयो विहर्तारः। उतापि च महाग्रामो न महाजनसंघ इव यामन्यामनि गमने त्विषा दीप्त्या युक्ता भवंति। तेऽस्मद्यज्ञमागच्छंतु॥

॥ अथ सप्तमी ॥

उषसां न केतवोऽध्वरश्रियः शुभंयवो नांजिभिर्व्यश्वितन्।
सिंधवो न ययियो भ्राजदृष्टयः परावतो न योजनानि ममिरे॥७॥

उषसां। न। केतवः। अध्वरऽश्रियः। शुभंऽयवः। न। अंजिऽभिः। वि। अश्वितन्।
सिंधवः। न। ययियः। भ्राजत्ऽऋष्टयः। पराऽवतः। न। योजनानि। ममिरे॥७॥

ये मरुत उषसां न केतव उषसां रश्मय इवाध्वरश्रियो यज्ञस्याश्रयितारो भवंति। तथा शुभंयवो न कल्याणकामा वरा इवांजिभिराभरणैर्व्यश्वितन्दीप्यंते। श्विता वर्णे। लङि रूपं। तथा सिंधवो न नद्य इव ययियो गमनशीला भ्राजदृष्टयो दीप्यमानायुधाः परावतो न दूराध्वानीना वडवा इव योजनानि दूरदेशान्ममिरे। परिच्छिंदंति। तेऽस्मद्यज्ञमागच्छंत्विति॥

॥ अथाष्टमी ॥

सुभागान्नो देवाः कृणुता सुरत्नानस्मान्स्तोतॄन्मरुतो वावृधानाः।
अधि स्तोत्रस्य सख्यस्य गात सनाद्धि वो रत्नधेयानि संति॥८॥

सुऽभागान्। नः। देवाः। कृणुत। सुऽरत्नान्। अस्मान्। स्तोतॄन्। मरुतः। ववृधानाः।
अधि। स्तोत्रस्य। सख्यस्य। गात। सनात्। हि। वः। रत्नऽधेयानि। संति॥८॥

अनया स्तुतिमुपसंहरति। हे मरुतो देवा ववृधानाः स्तुत्या वर्धमाना यूयं स्तोतॄन्नोऽस्मान्सुभागान्सुधनान्कृणुत। कुरुत। तथा सुरत्नाञ्शोभनरत्नान्कृणुत। यद्वा सुरत्नाञ्शोभनरमणीयस्तोत्रानस्मानिति संबंधनीयं। किंच यूयं सख्यस्य स्तोत्रस्य

सखिभूतं स्तोत्रमधि गात। अधिगच्छत। वो युष्माकं रत्नधेयानि रत्नदानान्यस्म-द्विषयाणि सनाद्धि चिरकालादारभ्य खलु संति ॥

॥ इत्यष्टमस्य तृतीये त्रयोदशो वर्गः ॥

अपश्यमिति सप्तर्चमेकादशं सूक्तमाग्नेयं त्रैष्टुभं। सौचीकगुणोऽग्निर्ऋषिः। वैश्वानरगुणो वाथवा सप्तिर्नाम वाजंभरपुत्रः। तथा चानुक्रांतं। अपश्यं सप्त सौचीकोऽग्निर्वैश्वानरो वा सप्तिर्वा वाजंभर आग्नेयं त्विति ॥ प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छंदसीदमादिके द्वे सूक्ते। सूचितं च। अपश्यमस्य महत इति सूक्ते। आ० ४.१३.। इति ॥

॥ तत्र प्रथमा ॥

अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु।
नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः ॥१॥

अपश्यं। अस्य। महतः। महिऽत्वं। अमर्त्यस्य। मर्त्यासु। विक्षु।
नाना। हनू इति। विभृते इति विऽभृते। सं। भरेते इति। असिन्वती इति।
बप्सती इति। भूरि। अत्तः ॥१॥

अस्याग्नेर्महतो मंहनीयस्य महित्वं महत्त्वमपश्यं। पश्यामि। कीदृशस्यास्य। मर्त्यासु विक्षु मनुष्यरूपासु प्रजासु तासां हृदयेऽमर्त्यस्यामरणस्वभावस्य वैश्वानररूपेण वर्तमानस्य। यद्वा मर्त्यासु विक्षुवृत्विग्यजमानरूपासु प्रजास्वमर्त्यस्य सर्वदा जागरितस्य। अथ दावाग्निरूपोऽग्निरुच्यते। अस्याग्नेर्हनू शिप्रे नाना विभृते विभिन्ने सं भरेते। संभरतो दंतैः। तथा कृत्वासिन्वती असंखादंत्यौ स्तोतारं बप्सती भक्षयंत्यौ भूरि प्रभूतं काष्ठमरण्ये वर्तमानमत्तः। भक्षयतः ॥

॥ अथ द्वितीया ॥

गुहा शिरो निहितमृधगक्षी असिन्वन्नत्ति जिह्वया वनानि।
अत्राण्यस्मै पड्भिः सं भरंत्युत्तानहस्ता नमसाधि विक्षु ॥२॥

गुहा। शिरः। निऽहितं। ऋधक्। अक्षी इति। असिन्वन्। अत्ति। जिह्वया। वनानि।
अत्राणि। अस्मै। पट्ऽभिः। सं। भरंति। उत्तानऽहस्ताः। नमसा। अधि। विक्षु ॥२॥

अस्याग्नेः शिरो मूर्धा गुहायां निहितं मनुष्योदरेषु वर्तते। अस्याक्षी अक्षिणी

ऋधक् पृथग्निहितं निहिते चंद्रसूर्यात्मना। तावेवाक्षिणी इत्यर्थः। ईदृशो योऽग्नि-
रसिन्वन्दंतैरसंखादञ्जिह्वया वनान्यत्ति काष्ठानि भक्षयति दाहभूतोऽस्मा अग्न-
येऽध्वर्य्वादयः पद्भिः पादैरभिगत्यान्नाणि सं भरंति। संपादयंति हवींषि। कथंभूताः।
उत्तानहस्ताः। पात्रधारणार्थमुन्नतकराः। नमसा नमस्कारेण युक्ताः। कुत्र। अधि
विक्षु। प्रजासु। ऋत्विक्षु मध्ये॥

॥ अथ तृतीया ॥

प्र मातुः प्रतरं गुह्यमिच्छन्कुमारो न वीरुधः सर्पदुर्वीः।
ससं न पक्वमविदच्छुचंतं रिरिह्वांसं रिप उपस्थे अंतः॥३॥

प्र। मातुः। प्रऽतरं। गुह्यं। इच्छन्। कुमारः। न। वीरुधः। सर्पत्। उर्वीः।
ससं। न। पक्वं। अविदत्। शुचंतं। रिरिह्वांसं। रिपः। उपऽस्थे। अंतरिति॥३॥

अयमग्निर्मातुः पृथिव्याः संबंधिनीरुर्वीर्बह्वीर्वीरुधो लता इच्छन् तथा प्रतरं
प्रकृष्टतरं गुह्यं गोप्यं तासां वीरुधां मूलमपीच्छन्कामयमानः प्र सर्पत् प्रसर्पति
प्रसरति। किमिव। कुमारो न। कुमार इव। स यथा स्तन्यं पातुं जानुभ्यां सर्पति
तद्वत्। ससं न पक्वं पक्वमन्नमिव शुचंतं दीप्यमानं नीरसं वृक्षं रिपः पृथिव्या
उपस्थेऽंतरुत्संगेऽंतरविदत्। विंदति। पुनः कीदृशं। रिरिह्वांसं। आकाशमास्वाद-
यंतं। यद्वा मूलैर्मातरं पृथिवीं रिरिह्वांसं॥

॥ अथ चतुर्थी ॥

तद्वामृतं रोदसी प्र ब्रवीमि जायमानो मातरा गर्भो अत्ति।
नाहं देवस्य मर्त्यश्चिकेताग्निरंग विचेताः स प्रचेताः॥४॥

तत्। वां। ऋतं। रोदसी इति। प्र। ब्रवीमि। जायमानः। मातरा। गर्भः। अत्ति।
न। अहं। देवस्य। मर्त्यः। चिकेत। अग्निः। अंग। विऽचेताः। सः। प्रऽचेताः॥४॥

हे रोदसी द्यावापृथिव्यौ वां युवां तद्दतं सत्यं प्र ब्रवीमि यदरणीभ्यां जायमान
उत्पन्नो गर्भो गर्भस्थानीयोऽग्निर्मातरावरणी अत्ति। भक्षयति। देवस्य द्योतनादि-
गुणस्याग्नेर्वर्तनं मर्त्यो मनुष्योऽहं न चिकेत। न जानामि। हे अंग वैश्वानर
अग्निररणीभ्यामुत्पन्नो विचेता विविधज्ञानवान् स प्रचेताः प्रकृष्टज्ञानः। अतो न
जानामीत्यर्थः। अथवांगेत्यात्मानमेव संबोध्य ब्रवीमि। अग्निरेव विचेता बहुधा
जानाति स प्रचेताः स एव जानाति। स्वमहिमानं नाहं स्तोतुं प्रभवामीत्यर्थः॥

॥ अथ पंचमी ॥

यो अस्मा अन्नं तृष्वा३दधात्याज्यैर्घृतैर्जुहोति पुष्यति ।
तस्मै सहस्रमक्षभिर्वि चक्षेऽग्ने विश्वतः प्रत्यङ्ङसि त्वं ॥५॥
यः । अस्मै । अन्नं । तृषु । आऽदधाति । आज्यैः । घृतैः । जुहोति । पुष्यति ।
तस्मै । सहस्रं । अक्षऽभिः । वि । चक्षे । अग्ने । विश्वतः । प्रत्यङ् । असि । त्वं ॥५॥

यो यजमानोऽस्मा अग्नये तृषु क्षिप्रमन्नमादधाति करोत्याज्यैर्घृतैः क्षरद्रूपैर्दीप्तैर्वा सोमरसैर्जुहोति पुष्यति पुष्णाति चैनं काष्ठैः । तस्मै तमित्यर्थः । तं सहस्रं सहस्रसंख्याकैरक्षभिरक्षिस्थानीयाभिरपरिमिताभिर्ज्वालाभिर्वि चक्षे । विचष्टे । विपश्यति । अथ प्रत्यक्षकृतः । हे अग्ने त्वं विश्वतः सर्वतः प्रत्यङ्ङसि । प्रत्यगंचनो भवसि । अस्मदानुकूल्येन प्रवर्तमानो भवसि ॥

॥ अथ षष्ठी ॥

किं देवेषु त्यज एनश्चकर्थाग्ने पृच्छामि नु त्वामविद्वान् ।
अक्रीळन् क्रीळन्हरिरत्तवेऽदन्वि पर्वशश्चकर्त गामिवासिः ॥६॥
किं । देवेषु । त्यजः । एनः । चकर्थ । अग्ने । पृच्छामि । नु । त्वां । अविद्वान् ।
अक्रीळन् । क्रीळन् । हरिः । अत्तवे । अदन् । वि । पर्वऽशः । चकर्त । गांऽइव । असिः ॥६॥

हे अग्ने त्वां नु क्षिप्रं देवेषु किं त्यजः क्रोधमेनः पापं च चकर्थ कृतवानसीत्यविद्वानहं पृच्छामि खांडवं दहंतमग्निं पृच्छामि । किंचाक्रीळन् क्वचिद्देशेऽविहरन् क्रीळन् क्वचिद्देशे विनोदयन् लीलया दहन्हरिर्हरितवर्णः सन् अत्तवेऽत्तव्यमदन् अन्नकाष्ठादिकं पर्वशः संधौ संधौ वि चकर्थ । विविधं करोषि । गामिवासिः । गां यथासिः स्वधितिः पर्वशश्छिनत्ति तद्वत् ॥

॥ अथ सप्तमी ॥

विषूचो अश्वान्युयुजे वनेजा ऋजीतिभी रशनाभिर्गृभीतान् ।
चक्षदे मित्रो वसुभिः सुजातः समानृधे पर्वभिर्वावृधानः ॥७॥
विषूचः । अश्वान् । युयुजे । वनेऽजाः । ऋजीतिऽभिः । रशनाभिः । गृभीतान् ।
चक्षदे । मित्रः । वसुऽभिः । सुऽजातः । सं । आनृधे । पर्वऽभिः । ववृधानः ॥७॥

अयमग्निर्विषूचो विष्वगंचनानश्वान्व्याप्तान्महतो वृक्षान्सर्वतो गंतॄनश्वानेव वा युयुजे युंक्ते वनेजा वने प्रवृद्धः संपन्नः सन्। कीदृशानश्वान्। ऋजीतिभिर्ऋजुगामिनीभी रशनाभी रशनास्थानीयाभिर्लताभिर्गृभीतान्परिगृहीतान्वेष्टितान्। साक्षादश्वपक्ष ऋजुगतिभिः प्रसिद्धाभी रशनाभिर्गृभीतान्गृहीतान्स्वकीयानश्वान् शीघ्रदाहाय रथे योजितवानित्यर्थः। तादृशोऽग्निश्चक्षदे चक्षाद शकलीकरोति वसूनि। मित्रोऽस्माकं मित्रभूतो वसुभिर्वासकै रश्मिभिः सुजातः सुष्ठु प्रवृद्धः सन्। किंच समानृधे सम्यग्वर्धते पर्वभिः काष्ठखंडैर्वावृधानो वर्धमानः॥

॥ इत्यष्टमस्य तृतीये चतुर्दशो वर्गः॥

अग्निः सप्तिमिति सप्तर्चं द्वादशं सूक्तं सौचीकस्य वैश्वानरस्याग्नेरार्षं त्रैष्टुभमाग्नेयं। अग्निः सप्तिमित्यनुक्रांतं॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

॥ तत्र प्रथमा ॥

अग्निः सप्तिं वाजंभरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्ठां।
अग्नी रोदसी वि चरत्समंजन्नग्निर्नारीं वीरकुक्षिं पुरंधिं॥१॥
अग्निः। सप्तिं। वाजंऽभरं। ददाति। अग्निः। वीरं। श्रुत्यं। कर्मनिःऽस्थां।
अग्निः। रोदसी इति। वि। चरत्। संऽअंजन्। अग्निः। नारीं। वीरऽकुक्षिं। पुरंऽधिं॥१॥

अयमग्निः सप्तिं सर्पणस्वभावमश्वं वाजंभरं युद्धे शत्रूञ्जित्वान्नसंपादकं ददाति स्तोतृभ्यः। तथाग्निर्वीरं वीर्यवंतं पुत्रं श्रुत्यं पितृव्यपदेशकं कर्मनिःष्ठां यागेऽनन्यचित्तं ददाति। अग्नी रोदसी द्यावापृथिव्यौ समंजन् सम्यगंजयन्वि चरत्। विविधं चरति। अयमग्निर्नारीं योषितं वीरकुक्षिं वीरप्रसवकुक्षिं पुरंधिं च करोति॥

॥ अथ द्वितीया ॥

अग्नेरप्नसः समिदस्तु भद्राग्निर्मही रोदसी आ विवेश।
अग्निरेकं चोदयत्समत्स्वग्निर्वृत्राणि दयते पुरूणि॥२॥
अग्नेः। अप्नसः। संऽइत्। अस्तु। भद्रा। अग्निः। मही इति। रोदसी इति। आ। विवेश।
अग्निः। एकं। चोदयत्। समत्ऽसु। अग्निः। वृत्राणि। दयते। पुरूणि॥२॥

अप्नसः कर्मवतोऽग्नेः समिद्भद्रास्तु। अयमग्निर्मही महत्यौ रोदसी द्यावापृथिव्यावा विवेश। आविष्टवान्स्वतेजसा। तथायमग्निरेकमसहायमेव चोदयच्चोदयति

प्रेरयति समत्सु संग्रामेषु। युद्धे स्वभक्तं स्वयं सहायः सन् जयिनं करोतीत्यर्थः। तथाग्निर्वृत्राणि पुरूणि बहूञ्छत्रून्दयते। हंति ॥

॥ अथ तृतीया ॥

अग्निर्ह त्यं जरतः कर्णमावाग्निरद्भ्यो निरदहज्जरूथं।
अग्निरत्रिं घर्म उरुष्यदंतरग्निर्नृमेधं प्रजयासृजत्सं ॥३॥

अग्निः। ह। त्यं। जरतः। कर्णं। आव। अग्निः। अत्ऽभ्यः। निः। अदहत्। जरूथं।
अग्निः। अत्रिं। घर्मे। उरुष्यत्। अंतः। अग्निः। नृऽमेधं। प्रऽजया। अमृजत्। सं ॥३॥

अग्निर्हायमग्निः खलु त्यं तं प्रसिद्धं जरतः कर्णं जरत्कर्णनामानमृषिमाव। ररक्ष। तथायमग्निरद्भ्यो जरूथमेतन्नामानमसुरं निरदहत्। निर्दग्धवान्। तथाग्निरत्रिं महर्षिं घर्मेऽतर्त्रृबीसेऽवस्थितमुरुष्यत्। ररक्ष। तथायमग्निर्नृमेधमेतन्नामकमृषिं प्रजया पुत्रादिलक्षणया समसृजत्। संयुयोज ॥

॥ अथ चतुर्थी ॥

अग्निर्दाद्द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति।
अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा ॥४॥

अग्निः। दात्। द्रविणं। वीरऽपेशाः। अग्निः। ऋषिं। यः। सहस्रा। सनोति।
अग्निः। दिवि। हव्यं। आ। ततान। अग्नेः। धामानि। विऽभृता। पुरुऽत्रा ॥४॥

अयमग्निर्वीरपेशाः प्रेरकज्वालारूपो द्रविणं धनं दात्। ददाति। तथाग्निर्ऋषिं मंत्रद्रष्टारं पुत्रं प्रयच्छतीति शेषः। ऋषिर्विशेष्यते। य ऋषिः सहस्रा गवां सहस्राणि सनोति भजते दक्षिणात्वेन तमृषिं ददातीति। तथाग्निर्दिवि द्युलोके हव्यं यजमानैर्हुतमा ततान। देवेषु विस्तारयति। तथाग्नेर्धामानि शरीराणि विभृता विभृतानि पुरुत्रा बहुषु स्थानेष्वाहवनीयधिष्ण्यादिषु क्षित्यादिषु वा ॥

॥ अथ पंचमी ॥

अग्निमुक्थैर्ऋषयो वि ह्वयंतेऽग्निं नरो यामनि बाधितासः।
अग्निं वयो अंतरिक्षे पतंतोऽग्निः सहस्रा परि याति गोनां ॥५॥

अग्निं । उक्थैः । ऋषयः । वि । ह्वयंते । अग्निं । नरः । यामनि । बाधितासः ।
अग्निं । वयः । अंतरिक्षे । पतंतः । अग्निः । सहस्रा । परि । याति । गोनां ॥५॥

अग्निमुक्थैः शस्त्रैर्ऋषयः पूर्वे वि ह्वयंते । विविधमाह्वयंति यज्ञे स्वीये । अग्निं नरो मनुष्या यामनि संग्रामे । यातिर्वधकर्मसु पठितः । बाधितासः शत्रुभ्यो बाधिताः प्राप्नुवंति जयार्थं । तथाग्निं वयः पक्षिणोऽतंरिक्षे पतंतः पश्यंति रात्रिषु । तस्मादिमां वयांसि नक्तं नाध्यासत इति ब्राह्मणं । यद्वा दावभूतमग्निमंतरिक्षगा वयः पतंति । तथाग्निर्गोनां सहस्रा सहस्राणि परि परितो याति । गच्छति ॥

॥ अथ षष्ठी ॥

अग्निं विश ईळते मानुषीर्या अग्निं मनुषो नहुषो वि जाताः ।
अग्निर्गांधर्वीं पथ्यामृतस्याग्नेर्गव्यूतिर्घृत आ निषत्ता ॥६॥
अग्निं । विशः । ईळते । मानुषीः । याः । अग्निं । मनुषः । नहुषः । वि । जाताः ।
अग्निः । गांधर्वीं । पथ्यां । ऋतस्य । अग्नेः । गव्यूतिः । घृते । आ । निऽसत्ता ॥६॥

अग्निं विशः प्रजा ऋत्विग्यजमानलक्षणा ईळते । स्तुवंति । या मानुषीर्मानुष्यो मनुष्याज्जातास्ता ईळते । तथाग्निं मनुषो मनुष्या नहुषो राज्ञः सकाशाज्जाताः प्रजा विविधं स्तुवंतीति । अग्निर्गांधर्वीं । वाङ्नामैतत् । वाचं शृणोति । कीदृशीं गांधर्वीं । ऋतस्य यज्ञस्य पथ्यां पथि हितां । अग्नेर्महात्मनो गव्यूतिर्मार्गो घृत आज्य आ निषत्ता सर्वतो निषण्णो भवति ॥

॥ अथ सप्तमी ॥

अग्नये ब्रह्म ऋभवस्ततक्षुरग्निं महामवोचामा सुवृक्तिं ।
अग्ने प्राव जरितारं यविष्ठाग्ने महि द्रविणमा यजस्व ॥७॥
अग्नये । ब्रह्म । ऋभवः । ततक्षुः । अग्निं । महां । अवोचाम । सुऽवृक्तिं ।
अग्ने । प्र । अव । जरितारं । यविष्ठ । अग्ने । महिं । द्रविणं । आ । यजस्व ॥७॥

अग्नये ब्रह्म स्तोत्रमृभवो मेधाविनस्ततक्षुः । अकुर्वन् । वयं च महां महांतमग्निं प्रति सुवृक्तिं स्तुतिमवोचाम । हे यविष्ठ युवतमाग्ने जरितारं स्तोतारं प्राव । प्ररक्ष ।

हे अग्ने महि महद्द्रविणं धनमा यजस्व। प्रयच्छेत्यर्थः। अत्र प्रतिवाक्यमग्न्यभिधानं तस्य स्तुत्यत्वप्रदर्शनार्थं ॥

॥ इत्यष्टमस्य तृतीये पंचदशो वर्गः ॥

य इमेति सप्तर्चं त्रयोदशं सूक्तं भुवनपुत्रस्य विश्वकर्मण आर्षं त्रैष्टुभं विश्वकर्मदैवत्यं। तथा चानुक्रांतं। य इमा विश्वकर्मा भौवनो वैश्वकर्मणं त्विति। गतः सूक्तविनियोगः। अत्र वाजसनेयकं। ब्रह्म वै स्वयंभूस्तपोऽतप्यत। तदैक्षत न वै तपस्यानंत्यमस्ति हंताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्वात्मानं हुत्वेत्यादि। श॰ ब्रा॰ १३.७.१.॥

॥ तत्र प्रथमा ॥

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॥१॥
यः। इमा। विश्वा। भुवनानि। जुह्वत्। ऋषिः। होता। नि। असीदत्। पिता। नः।
सः। आऽशिषा। द्रविणं। इच्छमानः। प्रथमऽछत्। अवरान्। आ। विवेश ॥१॥

अत्र निरुक्तं। विश्वकर्मा सर्वमेधे सर्वाणि भूतानि जुहवांचकार स आत्मानमप्यंततो जुहवांचकार। तदभिवादिन्येषर्ग्भवति य इमा विश्वा भुवनानि जुह्वदिति। नि॰ १०.२६.। इति॥ यो विश्वकर्मेतन्नामक ऋषिर्भुवनपुत्रो होता होमनिष्पादकः सन्विश्वा सर्वाणि भुवनानि जुह्वद्धोमं कुर्वन्। प्रथमं सर्वं जगद्धुत्वेत्यर्थः। पश्चादग्नौ न्यसीदत् पिता जनकः। आत्मकृतेन कर्मणा देहोत्पत्तेः। न चैकस्य जन्यजनकभावो विरुध्यते तपोबलेन शरीरद्वयस्वीकारात्। स एकधा भवतीत्यादिश्रुतेः। स ऋषिराशिषाशिःप्रतिपादकेन सूक्तवाकादिना द्रविणं धनं स्वर्गाख्यमिच्छमानः कामयमानः प्रथमच्छत् प्रथममग्नेर्भुवनैराच्छादयितावरान्विप्रकृष्टान्भूतान्स्वात्मनाहुताना विवेश। आविष्टवानग्निमित्युक्तार्थ एव पुनर्विशेषेणोक्तः। एवमुत्तरत्राधियज्ञपरतया योज्यं॥ अथाध्यात्मप्रसिद्ध्योच्यते। यो विश्वकर्मा परमेश्वर इमा विश्वा भुवनानि जुह्वत्प्रलयकाले पृथिव्यादीनिमान्सप्त लोकान्स्वात्मन्याहुतिप्रक्षेपवत्संहरन् ऋषिरतींद्रियद्रष्टा सर्वज्ञो होता संहाररूपस्य होमस्य कर्ता नोऽस्माकं पिता जनको निषसाद स्वयं स्थितवान्। अयमर्थः। प्रलयकाले प्राप्ते सति सर्वाँल्लोकान्संहृत्यास्माकमपि संहर्ता पुनः स्रष्टा च सन् सर्वज्ञो यः परमेश्वरः

स्वयमेक एवासीत्। तथा हि श्रुतयः। आत्मा वा इदमेक एवाग्र आसीत् सदेव सोम्येदमग्र आसीदित्यादिकाः। स तादृशः परमेश्वर आशिषा बहुः स्यां प्रजायेयेत्येवंरूपया पुनःपुनः सिसृक्षया द्रविणमिच्छमानः धनोपलक्षितं जगद्भोगमाकांक्षमाणः प्रथमच्छत्प्रथमं मुख्यं निःप्रपंचं पारमार्थिकं रूपमावृण्वन् अवरान्स्वसृष्टान्प्राणिहृदयप्रदेशाना विवेश। आविष्टवान् जीवरूपेण। तथा च श्रूयते। सोऽकामयत बहुः स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत यदिदं किंच तत्सृष्ट्वा तदेवानुप्राविशदिति। एवमन्या अप्युपनिषद उदाहार्याः॥

वैश्वदेवस्य पशोर्वपाया अनुवाक्या किं स्विदित्येषा। सूचितं च। किं स्विदासीदधिष्ठानं यो नः पिता जनिता। आ॰ ३.८.। इति॥

॥ सैषा द्वितीया ॥

किं स्विदासीदधिष्ठानमारंभणं कतमत्स्वित्कथासीत्।

यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः॥२॥

किं। स्वित्। आसीत्। अधिऽस्थानं। आऽरंभणं। कतमत्। स्वित्। कथा। आसीत्।

यतः। भूमिं। जनयन्। विश्वऽकर्मा। वि। द्यां। और्णोत्। महिना। विश्वऽचक्षाः॥२॥

पूर्वमंत्रे जगत्प्रलयकाले संहृत्य पश्चात्सिसृक्षायां सर्वं सृष्ट्वा तत्र प्रविष्ट इत्युक्तं। तत्र तस्य द्वितीयस्याधिष्ठानजगदुपादानकारणाद्यसंभवात्सृष्टिरनुपपन्नेत्याक्षिपति। लोके हि घटं चिकीर्षुः कुलालो गृहादिकं किंचित्स्थानमधिष्ठाय मृद्रूपेणारंभद्रव्येण चक्रादिरूपैरुपकरणैर्घटं निष्पादयति। तद्वदीश्वरस्य जगदाश्रयद्यावापृथिव्योरुत्पादनवेलायामधिष्ठानं किं स्विदासीत्। किं नामाभूत्। न किंचिदित्यर्थः। तथा तयोरारंभणं कतमत्स्वित्। आरभ्यतेऽनेनेत्यारंभणमुपादानकारणं। तदपि कतमद्भवेत्। तदपि नेत्यर्थः। यद्यपि संभवेदारंभणं कथासीत्। कथमभूत्। किं स्वयं सदसद्वा भवेदित्यर्थः। उभयमपि नोपपद्यते। सच्चेदद्वैतभंगप्रसंगः। असच्चेत्सदात्मकयोर्द्यावापृथिव्योरुपादानानर्हत्वात्। नान्यत्किंच न मिषदिति श्रुतेश्चेत्यभिप्रायः। यतो यस्मादधिष्ठानादारंभणाच्च विश्वचक्षाः सर्वद्रष्टा विश्वकर्मा परमेश्वरो भूमिं जनयन्वर्तते। तथा द्यां दिवं व्यौर्णोत् व्यवृणोत् सृष्टवान् महिना स्वमहत्त्वेन। किं स्विदासीदिति॥

॥ अथ तृतीया ॥

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥३॥

विश्वतःऽचक्षुः । उत । विश्वतःऽमुखः । विश्वतःऽबाहुः । उत । विश्वतःऽपात् ।
सं । बाहुऽभ्यां । धमति । सं । पतत्रैः । द्यावाभूमी इति । जनयन् । देवः । एकः ॥३॥

अनया सर्वात्मकत्वेन कुलालादिविलक्षणत्वादधिष्ठानाद्यभावेऽपि स्रष्टुं शक्नोतीत्याह । विश्वतश्चक्षुः सर्वतो व्याप्तचक्षुः । उतापि च विश्वतोमुखः । तथा विश्वतोबाहुः । उतापि च विश्वतस्पात् स एवंविधः परमेश्वरः स्वस्मिंस्त्रैलोक्यमुत्पादयतीत्यर्थः । कथमित्युच्यते । बाहुभ्यां दिवं सं धमति । धमतिर्गतिकर्मा । सम्यक् प्रेरयति । तथा पतत्रैर्गमनशीलैः पादैः पृथिवीं संधमतीति । उभयोरेव श्रवणं प्राधान्याभिप्रायं । एवं द्यावाभूमी जनयन् दिवं च पृथिवीं चोत्पादयन्देवो द्योतमानः स्वयंप्रकाशः परमेश्वर एकोऽसहाय एव वर्तते ॥

॥ अथ चतुर्थी ॥

किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥४॥

किं । स्वित् । वनं । कः । ऊं इति । सः । वृक्षः । आस । यतः । द्यावापृथिवी इति । निःऽततक्षुः ।
मनीषिणः । मनसा । पृच्छत । इत् । ऊं इति । तत् । यत् । अधिऽअतिष्ठत् । भुवनानि । धारयन् ॥४॥

पूर्वस्यामृच्युक्तं ब्रह्मैव भूम्यादिकारणमिति । तदेवानया प्रश्नकथनव्याजेनोच्यते । लोके हि प्रौढं प्रसादं निर्मिमाणः कस्मिंश्चित्प्रौढे वने कंचिन्महांतं वृक्षं छित्त्वा तक्षणादिना स्तंभादिकं संपादयति । इह तु परमेश्वरप्रेरिता जगत्स्रष्टारो यतो यस्माद्वनाद्यं वृक्षमादाय द्यावापृथिवी निष्टतक्षुस्तक्षणेन द्यावापृथिव्यौ निष्पादितवंतस्तद्वनं किं स्वित् किं नाम स्यात् । तथा क उ स वृक्ष आस कस्तादृशो महान्वृक्षोऽभूत् । हे मनीषिणो मनस ईश्वरास्तदुभयं मनसा जिज्ञासायुक्तेन पृच्छ-

तेदु। पृच्छतैव। किंचेश्वरो भुवनानि धारयन्यत्स्थानमध्यतिष्ठत् तदपि पृच्छत। एतस्य सर्वस्याप्युत्तरं ब्रह्म स वृक्ष आसीदित्यादिकमुत्तरं॥

साकमेधेषु वैश्वकर्मण एककपालस्य या ते धामानीत्येषा याज्या। सूचितं च। विश्वकर्मन्हविषा वावृधानो या ते धामानि परमाणि यावमा। आ॰ २.१८.। इति॥ पूर्वोक्तस्य पशोर्हविष एषैव याज्या। सूचितं च। या ते धामानि परमाणि यावमा य इमे द्यावापृथिवी जनित्री। आ॰ ३.८.। इति॥

॥ सैषा सूक्ते पंचमी॥

या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः॥५॥

या। ते। धामानि। परमाणि। या। अवमा। या। मध्यमा। विश्वऽकर्मन्। उत। इमा।
शिक्ष। सखिऽभ्यः। हविषि। स्वधाऽवः। स्वयं। यजस्व। तन्वं। वृधानः॥५॥

अनया भौवनो विश्वकर्मा जगत्कारणं विश्वकर्मदेवं स्तौति। हे विश्वकर्मन् या यानि ते तव परमाणि धामानि शरीराणि संति या यानि च मध्यमानि शरीराणि संति उतापि च या यान्यवमावमानि धामानि शरीराणि संति उतापि च तानीमानि सर्वाणि शरीराणि सखिभ्योऽस्मभ्यं यष्टुं हविषि मयि हविर्भूते सति शिक्ष। देहि। हे स्वधावो हविर्लक्षणान्नवन् स्वयमेव त्वं तन्वं स्वकीयं पूर्वोक्तं त्रिविधं शरीरं वृधानो हविषा वर्धमानः सन्। अनेन धामत्रैविध्योपन्यासेनोत्तमभूतानि देवादिशरीराणि मध्यमभूतानि मनुष्यादिशरीराणि निकृष्टभूतानि कृमिकीटादिशरीराणि च परिगृहीतानि। किं बहुना सर्वं जगदुपात्तं भवति। उक्तव्यतिरेकेण निरवयवस्य परमेश्वरस्य विग्रहाभावात् तदैक्षत बहुः स्यां प्रजायेयेत्यादिश्रुतिभ्यः परमेश्वरस्यैव देवादिभेदेन बहुभावावगमात्॥

तस्मिन्नेव वैश्वकर्मणपशौ वपापुरोडाशयोर्विश्वकर्मन्हविषेति क्रमेण द्वे अनुवाक्ये। सूचितं च। विश्वकर्मन्हविषा वावृधान इति द्वे विश्वकर्मा विमना आद्विहायाः। आ॰ ३.८.। इति॥ साकमेधेषु वैश्वकर्मणस्य विश्वकर्मन्हविषेत्येषैवानुवाक्या। सूत्रं तु पूर्वमुदाहृतं॥

॥ सैषा षष्ठी ॥

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्यां ।
मुह्यंत्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ ६॥
विश्वऽकर्मन् । हविषा । ववृधानः । स्वयं । यजस्व । पृथिवीं । उत । द्यां ।
मुह्यंतु । अन्ये । अभितः । जनासः । इह । अस्माकं । मघऽवा । सूरिः । अस्तु ॥ ६॥

हे विश्वकर्मन् विश्वविषयकर्मन् एतन्नामक परमेश्वर हविषा हविर्भूतेन मया विश्वकर्मणा मया दत्तेन वा हविषा ववृधानो वर्धमानः । विश्वकर्मा सर्वाणि भूतानि जुहवांचकार स आत्मानमप्यंततो जुहवांचकारेति हि निरुक्तं पूर्वमुदाहृतं । स्वयमेव पृथिवीमुतापि च द्यां दिवं च स्वसृष्टे द्यावापृथिव्यौ स्वयं प्रवृद्धः सन्यजस्व । पूजय । अन्ये मत्तोऽन्ये जनासो जना अयष्टारोऽस्मद्यागविरोधिनो वा मुह्यंतु । मुग्धा भवंत्वभितः सर्वतः । अथ परोक्षकृतः । इहास्मिन्यागेऽस्माकं मघवास्मत्प्रत्तेन हविर्लक्षणेन धनेन धनवान् स सूरिः स्वर्गादिफलस्य प्रेरकोऽस्तु । भवतु । अत्र विश्वकर्मन्हविषा वर्धमान इत्यादि निरुक्तमनुसंधेयं । १०. २७. ॥

॥ अथ सप्तमी ॥

वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद्विश्वशंभूरवसे साधुकर्मा ॥ ७॥
वाचः । पतिं । विश्वऽकर्माणं । ऊतये । मनःऽजुवं । वाजे । अद्य । हुवेम ।
सः । नः । विश्वानि । हवनानि । जोषत् । विश्वऽशंभूः । अवसे । साधुऽकर्मा ॥ ७॥

वाचस्पतिं मंत्रात्मकस्य वचसः स्वामिनं विश्वकर्माणं विश्वकर्तारं मनोजुवं मनोवेगगमनं वाजे यज्ञेऽद्यास्मिन्दिन ऊतये तर्पणाय हुवेम । आह्वयाम । स देवो नोऽस्माकं विश्वानि सर्वाणि हवनानि जोषत् । सेवतां । किमर्थं । अवसे । अस्माकं रक्षणाय । स विशेष्यते । विश्वशंभूः । विश्वस्य सुखस्योत्पादकः साधुकर्मा च ॥

॥ इत्यष्टमस्य तृतीये षोडशो वर्गः ॥

चक्षुष इति सप्तर्चं चतुर्दशं सूक्तं । ऋष्याद्याः पूर्ववत् । चक्षुष इत्यनुक्रांतं । गतः सूक्तविनियोगः ॥

॥ तत्र प्रथमा ॥

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने ।
यदेदंता अदृहंत पूर्व आदिद्द्यावापृथिवी अप्रथेतां ॥१॥

चक्षुषः । पिता । मनसा । हि । धीरः । घृतं । एने इति । अजनत् । नम्नमाने इति ।
यदा । इत् । अंताः । अदृहंत । पूर्वे । आत् । इत् । द्यावापृथिवी इति । अप्रथेतां ॥१॥

चक्षुषश्चक्षुरुपलक्षितस्येंद्रियसंघात्मकस्य शरीरस्य पितोत्पादयिता। यद्वा चक्षुः ख्यापकं तेजः। तस्योत्पादयिता मनसा न हि मत्समोऽस्ति कश्चिदिति बुद्ध्या हि खलु धीरो धृष्टो विश्वकर्मा प्रथमं घृतमुदकमजनत्। अजनयत्। आपो वा इदमग्रेऽप एव ससर्जादावित्यादिश्रुतिस्मृती स्यातां। पश्चादेने द्यावापृथिव्यौ नम्नमाने तस्मिन्नुदक इतस्ततश्चलंत्यौ योऽजनयत्। अथ यदेद्यदैवांताः पर्यंतप्रदेशाः पूर्वे पुराणा द्यावापृथिव्योः संबंधिनोऽदृहंत दृढा अभवन्। विश्वकर्मणा दृढाः संपादिता इत्यर्थः। आदिदनंतरमेव द्यावापृथिवी द्यावापृथिव्यावप्रथेतां। यथाकामं प्रथिते अभूतां॥

वैश्वकर्मणस्य पशोर्हविष एषानुवाक्या। विश्वकर्मा विमना आद्विहायाः किं स्विदासीदधिष्ठानमिति सूचितं॥

॥ सैषा द्वितीया ॥

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् ।
तेषामिष्टानि समिषा मदंति यत्रा सप्तऋषीन्पर एकमाहुः ॥२॥

विश्वऽकर्मा । विऽमनाः । आत् । विऽहायाः । धाता । विऽधाता । परमा । उत । संऽदृक् ।
तेषां । इष्टानि । सं । इषा । मदंति । यत्र । सप्तऽऋषीन् । परः । एकं । आहुः ॥२॥

अयं मंत्रोऽधियज्ञाध्यात्मयोर्भेदेन द्विधा व्याख्येयः। तत्र प्रथमं दैवतमधिकृत्योच्यते। विश्वकर्मा बहुविधप्रकाशवृष्टिप्रदानादिकर्मणां कर्तादित्यः स च विमना विभूतमनाः। आदित्यनर्थकः सर्वत इत्यर्थे वा। विहाया विविधमाप्ता। महानित्यर्थः। धाता वृष्ट्यादिकर्ता च विधाता जगतः कर्ता च परमा परमः संदृक् संद्रष्टा च भूतानां। तेषां सप्तर्षीणां। ज्योतिषां रश्मीनामित्यर्थः। चरमपादे वक्ष्यमाणत्वात्। इष्टानि स्थानानि शरीराणि वेषोदकेन सं मदंति संमोदंते यत्र

यस्मिन्नादित्ये तं देवं सप्तर्षीन्। सप्तर्षिभ्य इत्यर्थः। तेभ्यः परः परस्तादेकमेवादित्यमाहुर्मंत्रविदः ॥ अध्यात्मपक्ष उच्यते। विश्वकर्मा यः परमात्मा प्राणप्रकाशाभ्यामुपेतः सन् बहुकर्मा भवति स च विमना विभूतमना विहाया वस्तुतो महान् विशेषेण सुकृतदुःकृतफलस्याप्ता धाता विधाता च परमोत संदृक् परमश्च सद्रष्टेंद्रियाणां। तेषां सप्तर्षीणां द्रष्टॄणामिंद्रियाणामिष्टानि स्वरूपाणीषान्नेन सह सं मदंति संमोदंते यत्र यस्मिन्नात्मनि तमात्मानं सप्तर्षीन्सप्तसंख्याकेभ्यः सर्पणस्वभावेभ्यो वा परः परस्ताद्वर्तमानमिंद्रियाद्यतीतमेकं परमात्मानमाहुस्तत्त्वविदः ॥ अत्र विश्वकर्मा विभूतमना व्याप्तेत्यादि निरुक्तमनुसंधेयं। १०.२६.॥

पूर्वोक्त एव पशौ पुरोडाशस्य यो नः पितेत्येषा याज्या। सूत्रितं च। यो नः पिता जनिता यो विधाता या ते धामानि परमाणि यावमा। आ॰ ३.८.। इति ॥

॥ सैषा तृतीया ॥

यो नः॑ पि॒ता ज॑नि॒ता यो वि॑धा॒ता धामा॑नि॒ वे॑द॒ भुव॑नानि॒ विश्वा॑।

यो दे॒वानां॑ नाम॒धा एक॑ ए॒व तं सं॑प्र॒श्नं भुव॑ना यं॒त्य॒न्या ॥३॥

यः। नः॒। पि॒ता। ज॒नि॒ता। यः। वि॒ऽधा॒ता। धामा॑नि। वेद॑। भुव॑नानि। विश्वा॑।

यः। दे॒वानां॑। ना॒म॒ऽधाः। एकः॑। ए॒व। तं। सं॒ऽप्र॒श्नं। भुव॑ना। यं॒ति॒। अ॒न्या ॥३॥

यो विश्वकर्मा नोऽस्माकं पिता पालयिता। न केवलं पालकः किंतु जनितोत्पादकः। किमनेनास्माकमुत्पादक इति संकोचेन यो विधाता सर्वस्य जगत उत्पादको यो विश्वकर्मा नोऽस्माकमुत्पन्नानि धामानि देवानां तेजःस्थानानि वेद वेत्ति। किं बहुना। विश्वा विश्वानि भुवना भूतजातानि वेद वेत्ति। यश्च देवानामग्निवाय्वादीनां नामधा नाम्नां धाता। इंद्रादीन्निर्माय तेषामिंद्रादि नाम कृत्वा तत्तत्यदेवेषु स्थापयिता। एक एव तं देवमन्यानि भुवना भूतजातानि प्रश्नं कः परमेश्वर इति पृच्छां यंति। प्राप्नुवंति ॥

॥ अथ चतुर्थी ॥

त आय॑जंत॒ द्रवि॑णं॒ सम॑स्मा॒ ऋष॑यः पूर्वे॑ ज॒रि॒तारो॒ न भू॒ना।

अ॒सूर्ते॒ सूर्ते॒ रज॑सि निष॒त्ते ये भू॒तानि॑ स॒मकृ॑ण्वन्नि॒मानि॑ ॥४॥

ते। आ। अ॒य॒जं॒त। द्रवि॑णं। सं। अ॒स्मै॒। ऋष॑यः। पूर्वे॑। ज॒रि॒तारः॑। न। भू॒ना।

अ॒सूर्ते॑। सूर्ते॑। रज॑सि। नि॒ऽस॒त्ते। ये। भू॒तानि॑। सं॒ऽअकृ॑ण्वन्। इ॒मानि॑ ॥४॥

ते पूर्वे ऋषयोऽस्मै विश्वकर्मणे द्रविणं चरुपुरोडाशादिलक्षणं धनं सं सम्यगायजंत। सर्वतो यजंते। जरितारो न भूना। स्तोतारो यथा भूम्ना महता स्तोत्रेण यजंति तद्वत्। ये महर्षयोऽसूर्ते सरणवर्जिते सूर्ते सरणसहिते स्थावरजंगमात्मके रजसि लोके निषत्ते निषण्णे निश्चलमवस्थित इमानि भूतानि भुवनानि। प्राणिन इत्यर्थः। समकृण्वन् सम्यग्धनादिनापूजयन्। अथवायमर्थः। ये स्थावरजंगमात्मके जगति वर्तमानानेतान्प्राणिनस्तेजसा समकृण्वन् ते पूर्वे ऋषयो द्रष्टारो रश्मयोऽस्मा आदित्यात्मकाय विश्वकर्मणे द्रविणं तेज आयजंत ॥

॥ अथ पंचमी ॥

परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति।
कं स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यंत विश्वे ॥५॥
परः। दिवा। परः। एना। पृथिव्या। परः। देवेभिः। असुरैः। यत्। अस्ति।
कं। स्वित्। गर्भं। प्रथमं। दध्रे। आपः। यत्र। देवाः। संऽअपश्यंत। विश्वे ॥५॥

यदीश्वरतत्त्वं दिवा परो द्युलोकादपि परस्ताद्वर्तमानं तथैनास्याः पृथिव्याः परः परस्ताद्वर्तमानं तथा देवेभिर्देवैः परस्ताद्वर्तमानमसुरैश्च यत्परः परस्ताद्वर्तमानं गुहायामवस्थितं कं स्विद्गर्भं गर्भवत्सर्वस्य ग्राहकं तत्त्वमापः प्रथमं दध्रे। धृतवत्यः। यत्र यस्मिन्गर्भे देवा इंद्रादयो विश्वे सर्वेऽपि समपश्यंत। संगताः परस्परं पश्यंति। एवं जानन्नेव कश्चित्तत्त्ववित्प्रश्नं करोति ॥

॥ अथ षष्ठी ॥

तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छंत विश्वे।
अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ॥६॥
तं। इत्। गर्भं। प्रथमं। दध्रे। आपः। यत्र। देवाः। संऽअगच्छंत। विश्वे।
अजस्य। नाभौ। अधि। एकं। अर्पितं। यस्मिन्। विश्वानि। भुवनानि। तस्थुः ॥६॥

अनया पूर्वमंत्रोक्तस्य प्रश्नस्योत्तरमभिधीयते। तमित्तमेव विश्वकर्माणं गर्भं गर्भस्थानीयं प्रथममितरसृष्टेः पूर्वमापो दध्रे। धृतवत्यः। यत्र गर्भे विश्वे सर्वे देवा इंद्रादयः समगच्छंत संगता भवंति। तस्याजस्य नाभावधि नाभौ। अधीति सप्तम्यर्थानुवादी। एकमर्पितमित्यंडाभिप्रायेणोक्तं। अंडं हि प्राक्सर्गान्नाभिस्थाने तिष्ठ-

ति । यस्मिन्नंडे विश्वानि भुवनानि सर्वाणि भूतजातानि तस्थुः । तिष्ठंति । अथवाजस्य जन्मरहितस्य ब्रह्मणः स्वसृष्टे जले शयानस्य नाभौ सर्वजगद्बंधक उदक एकं ब्रह्मांडमर्पितं स्थापितं । शिष्टं समानं ॥ अथास्मिन्नर्थे स्मृतिः । अप एव ससर्जादौ तासु वीर्यमवाकिरत् । तदंडमभवद्धैमं सूर्यकोटिसमप्रभं ॥

॥ अथ सप्तमी ॥

न तं विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरंति ॥७॥

न । तं । विदाथ । यः । इमा । जजान । अन्यत् । युष्माकं । अंतरं । बभूव ।
नीहारेण । प्रावृताः । जल्प्या । च । असुऽतृपः । उक्थऽशसः । चरंति ॥७॥

हे नरास्तं विश्वकर्माणं न विदाथ न जानीथ य इमेमानि भूतानि जजान । उत्पादितवान् । देवदत्तोऽहं यज्ञदत्तोऽहमिति वयमात्मानं विश्वकर्माणं जानीम इति यदुच्येत तदसत् न ह्यहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य तत्त्वं किंतु युष्माकमहंप्रत्ययगम्यानां जीवानामंतरमन्यदहंप्रत्ययगम्यादतिरिक्तं सर्ववेदांतवेद्यमीश्वरतत्त्वं बभूव । भवति । विद्यते । जीवरूपवत्तदपि कुतो न विद्म इति चेत् श्रूयतां । नीहारेण प्रावृता यूयं नीहारसदृशेनाज्ञानेनाच्छन्नाः । अतो न जानीथ । यथा नीहारो नात्यंतमसदृष्टेरावरकत्वात् नात्यंतं सत्काष्ठपाषाणादिवत्संबोद्धुमयोग्यत्वात् एवमज्ञानमपि नात्यंतमसदीश्वरतत्त्वावरकत्वात् नापि सद्बोधमात्रनिवर्त्यत्वात् । ईदृशेनाज्ञानेन सर्वे जीवाः प्रावृताः । न केवलं प्रावृतत्वं किंतु जल्प्या च देवोऽहं मनुष्योऽहमित्याद्यनृतजल्पनेन प्रावृताः । किंचासुतृपः केनाप्युपायेनासून्प्राणांस्तृपंतः । उदरंभरा इत्यर्थः । न तु पारमेश्वरं तत्त्वं विचारितवंतः । न केवलमिहलोकभोगमात्रतृप्ता उक्थशासो नानाविधेषु यज्ञेषूक्थं प्रउगनिष्केवल्यादिकं शंसंतश्चरंति । पृथिव्यां वर्तंते । केवलमैहिकामुष्मिकभोगपरा वर्तध्वेऽतो विश्वकर्माणं देवं न जानीथेत्यर्थः ॥

॥ इत्यष्टमस्य तृतीये सप्तदशो वर्गः ॥

यस्ते मन्यो इति सप्तर्चं पंचदशं सूक्तं । मन्युर्नाम तपसः पुत्र ऋषिः । आद्या जगती शिष्टास्त्रिष्टुभः । इदमुत्तरं च मन्युदैवतं । तथा चानुक्रांतं । यस्ते मन्युस्तापसो मान्यवं तु जगत्यादीति ॥ अजिरनाम्न्यभिचारसाधने यज्ञ एतत्सूक्तं निविद्धानं । सूचितं च । त्वया मन्यो यस्ते मन्यो । आ° ९.७. । इति ॥

॥ तत्र प्रथमा ॥

यस्ते॑ म॒न्योऽवि॑धद्वज्र सायक॒ सह॒ ओजः॑ पुष्यति॒ विश्व॑मानु॒षक् ।
सा॒ह्याम॒ दास॒मार्यं॒ त्वया॑ यु॒जा सह॑स्कृतेन॒ सह॑सा॒ सह॑स्वता ॥१॥
यः । ते॒ । म॒न्यो॒ इति॑ । अवि॑धत् । व॒ज्र॒ । सा॒य॒क॒ । सहः॑ । ओजः॑ । पु॒ष्य॒ति॒ । विश्व॑म् । आ॒नु॒षक् ।
स॒ह्याम॑ । दास॑म् । आर्य॑म् । त्वया॑ । यु॒जा । सहः॑ऽकृतेन । सह॑सा । सह॑स्वता ॥१॥

हे मन्यो क्रोधाभिमानिन्देव । मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वेति निरुक्तं ।१०.२९.। यो यजमानस्ते तुभ्यमविधत् परिचरति हे वज्र वज्रवत्सारभूत सायक सायकवच्छत्रूणां हिंसक स मनुष्यः सहो बलं बाह्यमोजः शारीरं बलं चानुषगनुषक्तं पुष्यति त्वदनुग्रहात्संग्रामे । यस्मादेवं तस्माद्वयं दासमुपक्षयकर्तारमार्यमस्मत्तोऽधिकं चोभयविधं शत्रुं साह्याम । अभिभवेम । केन साधनेनेति तदुच्यते । त्वया युजा । त्वया सहायेन । सहायो विशेष्यते । सहस्कृतेन बलोत्पादितेन सहसा सहमानेन परान् सहस्वता बलवता । ईदृशेन त्वया सहायेनेत्यर्थः ॥

॥ अथ द्वितीया ॥

म॒न्युरिंद्रो॑ म॒न्युरे॒वास॑ दे॒वो म॒न्युर्होता॒ वरु॑णो जा॒तवे॑दाः ।
म॒न्युं विश॑ ईळते॒ मानु॑षी॒र्याः पा॒हि नो॑ मन्यो॒ तप॑सा स॒जोषाः॑ ॥२॥
म॒न्युः । इंद्रः॑ । म॒न्युः । ए॒व । आ॒स॒ । दे॒वः । म॒न्युः । होता॑ । वरु॑णः । जा॒तऽवे॑दाः ।
म॒न्युम् । विशः॑ । ई॒ळ॒ते॒ । मानु॑षीः । याः । पा॒हि । नः॒ । म॒न्यो॒ इति॑ । तप॑सा । स॒ऽजोषाः॑ ॥२॥

अयं मन्युरिंद्रो मन्युरेव देवः सर्वोऽपि मन्युरेवास । अभवत् । मन्युरेव होता होमनिष्पादकोऽग्निः । तथा मन्युर्वरुणोऽपि जातवेदा जातप्रज्ञो वरुणश्च । सर्वेष्वपि तेजस्विषु मन्युसद्भावात् । या मानुषीर्मनुषोऽपत्यभूता विशः प्रजाः संति ता मन्युमेव देवमीळते । स्तुवंति । हे मन्यो तपसैतन्नामकेनास्मत्प्रिया सजोषाः समानप्रीतिस्त्वं पाहि । रक्ष ॥

॥ अथ तृतीया ॥

अ॒भी॑हि मन्यो त॒वस॒स्तवी॑या॒न्तप॑सा यु॒जा वि ज॑हि॒ शत्रू॑न् ।
अ॒मि॒त्र॒हा वृ॑त्र॒हा द॑स्यु॒हा च॒ विश्वा॒ वसू॒न्या भ॑रा॒ त्वं नः॑ ॥३॥

अभि। इहि। मन्यो इति। तवसः। तवीयान्। तपसा। युजा। वि। जहि। शत्रून्। अमित्रऽहा। वृत्रऽहा। दस्युऽहा। च। विश्वा। वसूनि। आ। भर। त्वं। नः ॥३॥

हे मन्यो त्वमभीहि। अभिगच्छास्मद्यज्ञं। कीदृशस्त्वं। तवसो बलवतोऽपि तवीयान् अत्यंतं बलवान्। स त्वं तपसास्मत्पित्रा युजा सहायेन शत्रून्वि जहि। किंचामित्रहामित्राणां हंता। अमित्रोऽस्निग्धः। तथा वृत्रहावरकाणां शत्रूणां हंता तथा दस्युहा च। दस्युरुपक्षयकारी शत्रुः। तादृश मन्युदेव त्वं विश्वा सर्वाणि वसूनि धनानि नोऽस्मभ्यमा भर। आहर॥

॥ अथ चतुर्थी ॥

त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमातिषाहः।
विश्वचर्षणिः सहुरिः सहावानस्मास्वोजः पृतनासु धेहि ॥४॥

त्वं। हि। मन्यो इति। अभिभूतिऽओजाः। स्वयंऽभूः। भामः। अभिमातिऽसहः। विश्वऽचर्षणिः। सहुरिः। सहावान्। अस्मासु। ओजः। पृतनासु। धेहि ॥४॥

हे मन्यो त्वमभिभूत्योजाः परेषामभिभावुकबलः स्वयंभूः स्वयमेवोत्पन्नो भामः क्रुद्धोऽभिमातिषाहः। अभितो हिंसंतीत्यभिमातयः शत्रवः। तेषामभिभविता विश्वचर्षणिः सर्वेषां द्रष्टा सहुरिः सहनशीलः सहावान् सहनवान् ईदृशस्त्वमस्मासु पृतनासु संग्रामेष्वोजो बलं धेहि। देहि॥

॥ अथ पंचमी ॥

अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः।
तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वा तनूर्बलदेयाय मेहि ॥५॥

अभागः। सन्। अप। पराऽइतः। अस्मि। तव। क्रत्वा। तविषस्य। प्रचेत इति प्रऽचेतः। तं। त्वा। मन्यो इति। अक्रतुः। जिहीळ। अहं। स्वा। तनूः। बलऽदेयाय। मा। आ। इहि ॥५॥

हे प्रचेतः प्रकृष्टज्ञान मन्यो तविषस्य महतस्तव क्रत्वा कर्मणाभागो भागरहितः सन्। त्वां यज्ञेऽयाजकः सन्नित्यर्थः। त्वदनुकूलरहितोऽहमप परेतोऽस्मि। युद्धे शत्रुभिरभिभूतः सन् दूरं गतोऽस्मि। तं तादृशं भागरहितं त्वा त्वां हे मन्यो अक्रतुः

कर्मरहितोऽहं जिहीळ। क्रुद्धं कृतवानित्यर्थः। यद्वा अहमेव त्वत्सहायमेव क्रोधितवान्। अथेदानीं त्वा तनूर्मम शरीरभूतस्त्वं बलदेयाय बलदानाय मेहि। मां प्राप्नुहि॥

॥ अथ षष्ठी ॥

अयं ते अस्म्युप मेह्यर्वाङ् प्रतीचीनः सहुरे विश्वधायः।
मन्यो वज्रिन्नभि मामा ववृत्स्व हनाव दस्यूँरुत बोध्यापेः॥६॥

अयं। ते। अस्मि। उप। मा। आ। इहि। अर्वाङ्। प्रतीचीनः। सहुरे। विश्वऽधायः।
मन्यो इति। वज्रिन्। अभि। मां। आ। ववृत्स्व। हनाव। दस्यून्। उत। बोधि। आपेः॥६॥

हे सहुरे शत्रूणां सहनशील विश्वधायो विश्वस्य धर्तर्मन्यो अयं जनोऽहं ते तवास्मि कर्मकृत्। यत एवमतः प्रतीचीनः प्रतिगंतार्वाङस्मदभिमुखं मा मामुपेहि। उपागच्छ। हे मन्यो वज्रिन् मामभ्या ववृत्स्व। अभ्यावर्तस्व। किमर्थमभ्यागमनमिति चेत् उच्यते। हनावावां दस्यूञ्शत्रून्। उतापि चापेर्बंधुं बोधि। बुध्यस्व॥

॥ अथ सप्तमी ॥

अभि प्रेहि दक्षिणतो भवा मेऽधा वृत्राणि जंघनाव भूरि।
जुहोमि ते धरुणं मध्वो अग्रमुभा उपांशु प्रथमा पिबाव॥७॥

अभि। प्र। इहि। दक्षिणतः। भव। मे। अध। वृत्राणि। जंघनाव। भूरि।
जुहोमि। ते। धरुणं। मध्वः। अग्रं। उभौ। उपऽअंशु। प्रथमा। पिबाव॥७॥

हे मन्यो अभि प्रेहि। अभिगच्छ। मम युद्धं गत्वा च मे मम दक्षिणतो भव। अधाथावां वृत्राणि शत्रून्भूरि प्रभूतं जंघनाव। हनाव। ते तुभ्यमग्रं श्रेष्ठं मध्वो मधु सोमरसं जुहोमि। उभौ त्वं चाहं चोपांश्वप्रकाशं प्रथमा प्रथमौ संतौ पिबाव॥

॥ इत्यष्टमस्य तृतीयेऽष्टादशो वर्गः॥

त्वया मन्यो इति सप्तर्चं षोडशं सूक्तं। आदितस्तिस्रस्त्रिष्टुभस्ततश्चतस्रो जगत्यः। पूर्ववदृषिदेवते। तथा चानुक्रांतं। त्वया मन्यो चतुर्जगत्यंतमिति॥ अजिरनाम्न्येकाह इदं सूक्तं मरुत्वतीयशस्त्रे निविद्धानं। सूत्रं पूर्वसूक्त एवोदाहृतं। विनुत्त्यभिभूतिषु वज्रेषुष्वेकाहेष्वेते सूक्ते मरुत्वतीयनिष्केवल्ययोः शस्ये। सूचितं च। विनुत्त्यभिभूत्योरिषुवज्रयोश्च मन्युसूक्ते। आ॰ ९.८.। इति॥

॥ तत्र प्रथमा ॥

त्वया मन्यो सरथमारुजंतो हर्षमाणासो धृषिता मरुत्वः ।
तिग्मेषव आयुधा संशिशाना अभि प्र यंतु नरो अग्निरूपाः ॥१॥

त्वया । मन्यो इति । सऽरथं । आऽरुजंतः । हर्षमाणासः । धृषिताः । मरुत्वः ।
तिग्मऽइषवः । आयुधा । संऽशिशानाः । अभि । प्र । यंतु । नरः । अग्निऽरूपाः ॥१॥

हे मन्यो हे मरुत्वस्त्वया सरथं समानमेकमेव रथमारुह्येति शेषः । आरुजंतो गच्छंतो हर्षमाणासो हृष्टा धृषिता धृष्टास्तिग्मेषवस्तीक्ष्णबाणा आयुधायुधानि संशिशानाः सम्यग्निश्यंतो नरो युद्धस्य नेतार इंद्रादयो देवास्त्वदनुचरा वाग्निरूपा अग्निवत्तीक्ष्णदाहादिकर्माणः । यद्वा संनद्धाः कवचिनोऽभि प्रयंतु युद्धे सहायार्थं । अत्र त्वया मन्यो सरथमारुह्य रुजंत इत्यादि निरुक्तमनुसंधेयं ।१०.३०.॥

॥ अथ द्वितीया ॥

अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
हत्वाय शत्रून्वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व ॥२॥

अग्निःऽइव । मन्यो इति । त्विषितः । सहस्व । सेनाऽनीः । नः । सहुरे । हूतः । एधि ।
हत्वाय । शत्रून् । वि । भजस्व । वेदः । ओजः । मिमानः । वि । मृधः । नुदस्व ॥२॥

हे मन्यो अग्निरिव त्विषितो ज्वलितः सहस्वाभिभव शत्रून् । हे सहुरे सहनशील सेनानीरेधि भव नोऽस्माकं संग्रामे हूतः सन् । किंच हत्वाय हत्वा शत्रून्वि भजस्व प्रयच्छास्माकं वेदो धनं शत्रुसंबंधि । किंच ओजो मिमानोऽस्माकं बलं कुर्वन्मृधः शत्रून्वि नुदस्व । घातयेत्यर्थः ॥

॥ अथ तृतीया ॥

सहस्व मन्यो अभिमातिमस्मे रुजन्मृणन्प्रमृणन्प्रेहि शत्रून् ।
उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वं ॥३॥

सहस्व । मन्यो इति । अभिऽमातिं । अस्मे इति । रुजन् । मृणन् । प्रऽमृणन् । प्र । इहि । शत्रून् ।
उग्रं । ते । पाजः । ननु । आ । रुरुध्रे । वशी । वशं । नयसे । एकऽज । त्वं ॥३॥

हे मन्यो अस्मे अस्माकमभिमातिमभिगंतारं शत्रुं सहस्व । अभिभव । रुजन् हिंसन् मृणन् प्रमृणन् प्रकर्षेण हिंसन् यथा पुनर्न जीवेत्तथा कुर्वंस्त्वं शत्रून्प्रति प्रेहि । ते तव पाजो बलमुग्रमुद्गूर्णं के नन्वा रुरुध्रे । आरुंधंति । न तथा संभवति । हे एकज त्वमसहाय वशी त्वं वशं नयसे प्रापयसि शत्रुं ॥

॥ अथ चतुर्थी ॥

एको॑ बहू॒नाम॑सि मन्यवीळि॒तो विशं॑विशं यु॒धये॒ सं शि॑शाधि ।

अकृ॑त्तरु॒क्त्वया॑ यु॒जा व॒यं द्यु॒मंतं॒ घोषं॑ विज॒याय॑ कृण्महे ॥४॥

एकः॑ । ब॒हू॒नां । अ॒सि॒ । म॒न्यो॒ इति॑ । ई॒ळि॒तः । विशं॑ऽविशं । यु॒धये॑ । सं । शि॒शा॒धि॒ ।

अकृ॑त्तऽरुक् । त्वया॑ । यु॒जा । व॒यं । द्यु॒ऽमंतं॑ । घोषं॑ । वि॒ऽज॒याय॑ । कृ॒ण्म॒हे॒ ॥४॥

हे मन्यो ईळितः स्तुतस्त्वमेक एवासहाय एव बहूनां शत्रूणामसि । भवसि पर्याप्तो हंतुं । अतो विशं विशं तां तामस्मद्विरोधिनीं प्रजां युधये युद्धाय सं शिशाधि । सम्यक् तीक्ष्णीकुरु । किंच हे अकृत्तरुगच्छिन्नदीप्ते त्वया युजा सहायेन वयं द्युमंतं दीप्तिमंतं घोषं सिंहनादवंतं विजयाय विशिष्टजयार्थं कृण्महे । कुर्मः ॥

॥ अथ पंचमी ॥

वि॒जे॒ष॒कृदिंद्र॑ इवानवब्र॒वो॒३॑स्माकं॑ मन्यो अधि॒पा भ॑वे॒ह ।

प्रि॒यं ते॒ नाम॑ सहुरे गृणीमसि वि॒द्मा तमु॒त्सं॒ यत॑ आब॒भूथ॑ ॥५॥

वि॒जे॒ष॒ऽकृत् । इंद्रः॑ऽइव । अ॒न॒व॒ऽब्र॒वः । अ॒स्माकं॑ । म॒न्यो॒ इति॑ । अ॒धि॒ऽपाः । भ॒व॒ । इ॒ह ।

प्रि॒यं । ते॒ । नाम॑ । स॒हु॒रे॒ । गृ॒णी॒म॒सि॒ । वि॒द्म । तं । उत्सं॑ । यतः॑ । आ॒ऽब॒भूथ॑ ॥५॥

हे मन्यो इंद्र इव विजेषकृद्विजयकर्ता तथानवब्रवोऽनिंदितवचनः । अनवब्रवोऽनवक्षिप्तवचन इति यास्कः । ६. २९. । ईदृशस्त्वमस्माकमधिपा अधिकं पाता रक्षिता भवेहास्मिन्यज्ञे । हे सहुरे शत्रूणां सहनशील ते प्रियं नाम स्तोत्रं गृणीमसि । गृणीमः स्तुमः । यतो नाम्नः स्तोत्रात्त्वमाबभूथाभवसि प्रवृद्धो भवसि तमुत्सं बलस्योद्गमयितारं विद्म । जानीमः ॥

॥ अथ षष्ठी ॥

आभू॑त्या सह॒जा व॑ज्र सायक॒ सहो॑ बिभर्ष्यभिभूत॒ उत्त॑रं ।

क्रत्वा॑ नो मन्यो स॒ह मे॒द्ये॑धि महाध॒नस्य॑ पुरुहूत सं॒सृजि॑ ॥६॥

आऽभूत्या । सहऽजाः । वज्र । सायक । सहः । बिभर्षि । अभिऽभूते । उत्ऽतरं ।
क्रत्वा । नः । मन्यो इति । सह । मेदी । एधि । महाऽधनस्य । पुरुऽहूत । संऽसृजि ॥६॥

हे वज्र वज्रवत्सारभूत हे सायक शत्रूणामंतकराभिभूते शत्रूणामभिभावुक मन्यो आभूत्या । आभूतिरभिभवः । तेन सहजाः सहैवोत्पन्नस्त्वमुत्तरमुत्कृष्टतरं सहो बलं बिभर्षि । धारयसि । हे मन्यो क्रत्वा कर्मणा सह नोऽस्माकं मेद्येधि । स्निग्धो भव । कुत्रेति तदुच्यते । महाधनस्य । संग्रामनामैतत् । संग्रामस्य संसृजि सर्गे । हे पुरुहूत बहुभिराहूतेति मन्युसंबोधनं ॥

॥ अथ सप्तमी ॥

संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयंतां ॥७॥
संऽसृष्टं । धनं । उभयं । संऽआकृतं । अस्मभ्यं । दत्तां । वरुणः । च । मन्युः ।
भियं । दधानाः । हृदयेषु । शत्रवः । पराऽजितासः । अप । नि । लयंतां ॥७॥

संसृष्टमविभागमापन्नमुभयमुभयविधं धनं समाकृतं सम्यगानीतमस्मभ्यं दत्तां । कः । वरुणश्च देवो मन्युश्च । भियं भयं हृदये दधानाः शत्रवोऽस्मद्विरोधिनः पराजितासः पराजिता अप नि लयंतां । अपनिलीना भवंतु ॥

॥ इत्यष्टमस्य तृतीये एकोनविंशो वर्गः ॥

॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे दशमे मंडले षष्ठोऽनुवाकः ॥

सप्तमेऽनुवाके षट् सूक्तानि । तत्र सत्येनेति सप्तचत्वारिंशदृचं प्रथमं सूक्तं सवितृसुतायाः सूर्याया आर्षं । नवो नव इति तिस्रोऽनृक्षरा इति द्वे गृभ्णामीति द्वे यदश्विना पृच्छमानावित्येषा पूषा त्वेतो नयत्वित्येकाघोरचक्षुरिति चैवमेता दशर्चस्त्रिष्टुभः । तृष्टमेतदित्येषोरोबृहत्यष्टकद्वादशद्यष्टकवती । पूर्वापरं चरत इह प्रियं प्रजया नः प्रजां जनयत्वित्येतास्तिस्रो जगत्यः । शिष्टास्त्रयस्त्रिंशदनुष्टुभः । आदितः पंचानामृचां सोमो देवता । तत एकादशभिः सूर्या स्वविवाहं स्तुतवती । अतस्तत्र योऽर्थः प्रतिपाद्यते स एव देवतात्वेन विज्ञेयः । या तेनोच्यते सा देवतेति न्यायात् । सप्तदश्या देवा देवता । अष्टादश्याः सोमार्कौ । एकोनविंश्याश्चंद्रमाः । सुकिंशुकमित्याद्या नवर्चो विवाहमंत्रा आशिषः प्रतिपादकाः । अतस्तत्र तत्र प्रतिपा-

द्यौऽर्यो देवता। परा देह्यश्रीरा तनूरिति द्वे वध्वा विवाहकाले परिहितस्य वाससः संस्पर्शनिंदयित्र्यौ। ये वध्वश्चंद्रमिति दंपत्योः क्षयरोगस्य नाशिनी। अतस्तद्देवताका। परिशिष्टानां षोडशानां सूर्या देवता॥ तथा चानुक्रांतं। सत्येन सप्तचत्वारिंशत् सर्वमनुक्रांतं। सूक्तविनियोगो लैंगिकः॥

॥ तत्र प्रथमा ॥

सत्येनोत्तंभिता भूमिः सूर्येणोत्तंभिता द्यौः।
ऋतेनादित्यास्तिष्ठंति दिवि सोमो अधि श्रितः॥१॥
सत्येन। उत्तंभिता। भूमिः। सूर्येण। उत्तंभिता। द्यौः।
ऋतेन। आदित्याः। तिष्ठंति। दिवि। सोमः। अधि। श्रितः॥१॥

सत्येन ब्रह्मणानंतात्मना। ब्रह्मा खलु देवानां मध्ये सत्यभूतः। तेनाधःस्थितेन भूमिरुत्तभिता। उपरि स्तंभिता। यथाधो न पतेत्तथा कृता। यद्वा सत्येनानृतप्रतियोगिना धर्मेण भूमिरुत्तभितोद्धृता फलिता भवतीत्यर्थः। असति सत्ये भूम्यां सस्यादयो न फलंति। तथा सूर्येण देवेन द्यौरुत्तभिता। सूर्यो हि द्युस्थानत्वाद्दिवं दधार। ऋतेन यज्ञेनादित्या अदितेः पुत्रा देवास्तिष्ठंति। यज्ञेन यजमानदत्तेन खल्वाहुत्या देवा उपजीवंति। दिवि द्युलोके सोमो देवानामाप्यायनकारी वल्लीरूपो देवतारूपश्चाधि श्रितः। अधितिष्ठति। इति स्वपतिं सोमं सूर्या स्तौति॥

॥ अथ द्वितीया ॥

सोमेनादित्या बलिनः सोमेन पृथिवी मही।
अथो नक्षत्राणामेषामुपस्थे सोम आहितः॥२॥
सोमेन। आदित्याः। बलिनः। सोमेन। पृथिवी। मही।
अथो इति। नक्षत्राणां। एषां। उपऽस्थे। सोमः। आऽहितः॥२॥

सोमेनादित्या अदितेः पुत्रा इंद्रादयो बलिनो भवंति। ऐंद्रवायवादिग्रहपरिग्रहादिति भावः। तथा सोमेनाहुत्यात्मनाग्नौ हुतेन पृथिवी भूमिर्मही महती भवति। आहुत्या वृष्टिद्वारेण सस्यादिसंपत्तेः। अथो अपि चायं सोमो नक्षत्राणामेषां। न क्षं चायंत इति नक्षत्रा ग्रहचमसादयः। तेषामेषामुपस्थे सोमो रसात्मक आहितः। यद्वा सिद्धानामेव नक्षत्राणामुपस्थ उपस्थाने द्युलोके सोम आहितः। तृतीयस्या-

मितो दिवि सोम आसीत्तं गायत्र्याहरदित्यादिश्रुतेः ॥ देवतारूपसोमपक्षे सोमेनादित्या देवा बलिनो बलवंतो भवंति तस्यैकैककलास्वादनात्। प्रथमां पिबते वह्निर्द्वितीयां पिबते रविरित्यादिस्मृतेः। सोमेन पृथिवी मही। अमृतसेकेनौषध्याद्यभिवृद्ध्या पृथिव्या बलवत्त्वं। चंद्रस्य नक्षत्राणामुपस्थे स्थितिः प्रसिद्धा ॥

॥ अथ तृतीया ॥

सोमं मन्यते पपिवान्यत्संपिंषंत्योषधिं।

सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥३॥

सोमं। मन्यते। पपिऽवान्। यत्। संऽपिंषंति। ओषधिं।

सोमं। यं। ब्रह्माणः। विदुः। न। तस्य। अश्नाति। कः। चन ॥३॥

सोमं मन्यते कः। यः पपिवान्। मैथुनकामार्थं चिकित्साद्यर्थं पीतः सोमो येन। यद्यमित्यर्थः। यं सोममोषधिं वल्लीरूपं संपिंषंति। सामर्थ्याद्रासायनिकाः। न च स साक्षात्सोमः। तर्हि कः। उच्यते। सोमं हि तं मन्यते यं ब्रह्माणः। यद्ब्रह्मशब्दो ब्राह्मणशब्दपर्यायोऽस्ति कुतो नु चरसि ब्रह्मन् तस्मै मा ब्रूया निधिपाय ब्रह्मन्नित्यादिप्रयोगात्। ब्राह्मणा इत्यर्थः। ते ऋत्विजो यजमानश्च यागसाधनभूतं संस्कर्तुं विदुर्जानंति तस्यांशं। यद्वा कर्मणि षष्ठी। तं सोमं कश्चन नाश्नाति। कश्चिदप्ययज्वेति शेषः। यज्वैनं भक्षयितुमर्हति नान्य इत्यर्थः। एवमोषधिपक्षे ॥ अथ चंद्रपक्ष उच्यते। तं सोमं मन्यते पपिवान् पीतवान्यजमानो यद्यमोषधिरूपं संपिंषंत्यभिषवग्रावभिरध्वर्य्वादयो यजमानश्च। न च स सोमः। कस्तर्हि। यं ब्रह्माणो ब्राह्मणा अभिज्ञा दैवज्ञा विदुः कथयंति चंद्रमसं न तस्याश्नाति कश्चनादेवो देवेभ्योऽन्यो मनुष्यादिः। देवा अग्न्यादयो रश्मयो वा। यद्वार्हसोमस्यासोमत्वं न निंदायै अपि त्वितरस्य स्तुत्या इति मंतव्यं। अपशवोऽन्ये गोअश्वेभ्य इत्यादिवत्। एवमत्र सोम्या उभयथा योज्याः ॥

॥ अथ चतुर्थी ॥

आच्छद्विधानैर्गुपितो बार्हतैः सोम रक्षितः।

ग्राव्णामिच्छृण्वन्तिष्ठसि न ते अश्नाति पार्थिवः ॥४॥

आच्छत्ऽविधानैः। गुपितः। बार्हतैः। सोम। रक्षितः।

ग्राव्णां। इत्। शृण्वन्। तिष्ठसि। न। ते। अश्नाति। पार्थिवः ॥४॥

हे सोम आच्छद्विधानैः। आच्छादयंति विधानानि येषां विद्यंते त आच्छद्विधानाः। तैर्गुपितः। तथा बार्हतैर्गुपितः। स्वानभ्राजांघार्यादिभिः सप्तभिः सोमपालै रक्षितस्त्वं। एते वा अमुष्मिँल्लोके सोममरक्षन्निति ब्राह्मणं। ग्राव्णामिच्छृण्वन् अभिषवग्राव्णां ध्वनिं शृण्वन्नेव तिष्ठसि। ते त्वां पार्थिवः पार्थिवो जनो नाश्नाति। न हि द्युस्थश्चंद्ररूपोऽन्यैः पानयोग्यो भवति। चंद्रमा वै सोमो देवानामन्नं तं पौर्णमास्यायामभिषुण्वंतीति वाजसनेयकं॥

॥ अथ पंचमी ॥

यत्त्वा देव प्रपिबंति तत आ प्यायसे पुनः।
वायुः सोमस्य रक्षिता समानां मास आकृतिः॥५॥
यत्। त्वा। देव। प्रऽपिबंति। ततः। आ। प्यायसे। पुनरिति।
वायुः। सोमस्य। रक्षिता। समानां। मासः। आऽकृतिः॥५॥

हे देव सोम यद्यदा त्वा त्वां प्रपिबंत्योषधिरूपं त्रिष्वपि सवनेषु ततोऽनंतरमेव पुनरा प्यायसे। आप्यायस्व समितीति प्रातःसवने सं ते पयांसीत्युत्तरयोः सवनयोराप्यायसे। किंच वायुस्तव सोमस्य रक्षिता। यथा न शुष्यति तथा। वायुः शोषकः प्रसिद्धो लोके। किंच मासः। परिमीयत इति मासः सोमः। स च समानां संवत्सराणामाकृतिराकर्ता व्यवच्छेदको भवति। संवत्सरे संवत्सरे वसंतादिकालेष्वनुष्ठीयमानत्वाद्वसंते वसंते ज्योतिषा यजेतेति श्रुतेः। यद्वा सोमाधारवनस्पतिविकारग्रहद्वारेण वायुः सोमरसस्य रक्षिता भवति। वायुगोपा वनस्पतय इति श्रुतेः। एवं वल्लीरूपसोमपक्षे योजना॥ चंद्रपक्षे तु हे देव सोम यद्यदा त्वा त्वां प्रपिबंति रश्मयोऽपरपक्षे ततोऽनंतरमेव पूर्वपक्षे पुनराप्यायसे। वायुश्च सोमस्य तव रक्षिता। वाय्वाधीनत्वाच्चंद्रगतेः। किंच समानां संवत्सराणां मासः। षष्ठ्येकवचनमेतत्। मासस्याकृतिश्च कर्ता त्वं चासि। एकैककलाक्षयसंवृद्धिभ्यां हि मासः पूर्यंते तैः संवत्सर इति॥

॥ इत्यष्टमस्य तृतीये विंशो वर्गः ॥

॥ अथ षष्ठी ॥

रैभ्यासीदनुदेयी नाराशंसी न्योचनी।
सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतं॥६॥

रैभी । आसीत् । अनुऽदेयी । नाराशंसी । निऽओचनी ।
सूर्यायाः । भद्रं । इत् । वासः । गाथया । एति । परिऽकृतं ॥ ६ ॥

आभिः सूर्या स्वविवाहमस्तौदित्युक्तं । सूर्या सावित्री ब्रूते । रैभी । रैभ्यः काश्वनर्चः । रैभीः शंसति रेभंतो वै देवाश्चर्षयश्च स्वर्गं लोकमायन्नित्यादिब्राह्मणविहिता रैभ्यः । ऐ० ब्रा० ६. ३२. । सा रैभ्यनुदेय्यासीत् । दीयमानवधूविनोदनायानुदीयमाना वयस्यासीत् । तथा नाराशंसी । प्राता रत्नमित्यादिका मनुष्याणां स्तुतयो नाराशंस्यः । सा नाराशंसी न्योचनी । उचतिः सेवाकर्मा । सा वधूशुश्रूषार्थं दीयमाना दास्यभवत् । सूर्याया मम भद्रं वासो विचित्रं दुकूलादिकमाच्छादनयोग्यं वस्त्रं गाथया परिष्कृतमलंकृतमेति । गाथा गीयत इत्यादिब्राह्मणोक्ता गाथा । तया गाथया यत्परिष्कृतमस्ति तद्वासोऽभवदिति ॥

॥ अथ सप्तमी ॥

चित्तिरा उपबर्हणं चक्षुरा अभ्यंजनं ।
द्यौर्भूमिः कोश आसीद्यदयात्सूर्या पतिं ॥ ७ ॥
चित्तिः । आः । उपऽबर्हणं । चक्षुः । आः । अभिऽअंजनं ।
द्यौः । भूमिः । कोशः । आसीत् । यत् । अयात् । सूर्या । पतिं ॥ ७ ॥

चित्तिर्देवतोपबर्हणमाः । आसीत् । चक्षुरभ्यंजनमाः । आसीत् । तथा हि वृत्रस्य कनीनिका परापतन्त्रिककुन्नामपर्वते । तेन त्रैककुदेनांजने सजातीयेन चक्षुषी अंजेत । तच्चक्षुरेवांजनमासीदिति । द्यौश्च भूमिश्च कोश आसीत् । कोशस्थानीये अभूतां । यद्यदा सूर्या पतिं स्वकीयं नवभर्तारं सोममयादगच्छत्तदैवमुपकरणान्यासन् ॥

॥ अथाष्टमी ॥

स्तोमा आसन्प्रतिधयः कुरीरं छंद ओपशः ।
सूर्याया अश्विना वराग्निरासीत्पुरोगवः ॥ ८ ॥
स्तोमाः । आसन् । प्रतिऽधयः । कुरीरं । छंदः । ओपशः ।
सूर्यायाः । अश्विना । वरा । अग्निः । आसीत् । पुरःऽगवः ॥ ८ ॥

सूर्याया रथस्य स्तोमास्त्रिवृदादयः प्रतिधय आसन्। प्रतिधीयंत इति प्रतिधय ईषातिर्यगायतकाष्ठादयः। तथा कुरीरं छंदः कुरीरनामकं छंदोऽनस ओपशोऽभवत्। येनोपशेरते स ओपशः। तादृशायाः सूर्याया अश्विनाश्विनौ वरा वरावास्तामिति शेषः। तस्या विवाहे पुरोगवः पुरोगंता पुरतो गंता। यः पूर्वमेव प्रस्तावार्थं गच्छति तत्स्थानीयोऽग्निरासीत्॥ प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्सूर्यां सावित्रीं तस्यै सर्वे देवा वरा आगच्छन्नित्यादि हि ब्राह्मणं। ऐ० ब्रा० ४.७.। अत्रायमभिप्रायः। प्रजापतिः सविता स्वदुहितरं सोमाय प्रायच्छत् सोमाय दास्यामीति मनीषामकरोत्। तस्मिन्समये पुत्र्या उपचारार्थं प्रदानान्युक्तान्यभवन्। तथा च सत्यश्विनौ प्रबलौ संतावाजिं पुरतो गत्वा तामलभेतामिति। उत्तरत्रापि सोमो वधूयुरभवदित्यादिनायमेवार्थः स्पष्टो भविष्यति। योषावृणीत जेन्येत्यादिकमुक्तं। १.११९.५.॥

॥ अथ नवमी ॥

सोमो॑ वधूयुर॑भवद॒श्विना॑स्तामु॒भा व॒रा ।

सू॒र्यां यत्पत्ये॒ शंस॑न्तीं॒ मन॑सा सवि॒ताद॑दात् ॥ ९॥

सोम॑ः । व॒धू॒ऽयुः । अ॒भ॒व॒त् । अ॒श्विना॑ । आ॒स्ता॒म् । उ॒भा । व॒रा ।

सू॒र्या॑म् । यत् । पत्ये॑ । शंस॑न्तीम् । मन॑सा । स॒वि॒ता । अद॑दात् ॥ ९॥

सोमो वधूयुर्वधूकामो वरोऽभवत्। तस्मिन्समयेऽश्विनाश्विनावुभोभौ वरा वरावास्तां। अभूतां। यद्यदा सूर्यां पत्ये शंसंतीं पतिं कामयमानां। पर्याप्तयौवनामित्यर्थः। सूर्यां मनसा सहिताय सोमाय वराय सविता तत्पितादात् प्रादात् दित्सां चकार॥

॥ अथ दशमी ॥

मनो॑ अ॒स्या॒ अन॑ आसी॒द्द्यौरा॑सीदु॒त छ॒दिः ।

शु॒क्राव॑न॒ड्वाहा॑वास्तां॒ यदया॑त्सू॒र्या गृ॒हम् ॥ १०॥

मन॑ः । अ॒स्याः॒ । अन॑ः । आ॒सी॒त् । द्यौः । आ॒सी॒त् । उ॒त । छ॒दिः ।

शु॒क्रौ । अ॒न॒ड्वाहौ॑ । आ॒स्ता॒म् । यत् । अया॑त् । सू॒र्या । गृ॒हम् ॥ १०॥

अस्याः सूर्यायाः पत्युर्गृहं गच्छंत्या अनो रथो मन आसीत्। या पतिगृहं त्वया गच्छामीति मतिरस्ति सान आसीत्। उतापि च तस्या अनसो द्यौर्द्युलोकश्छदि-

रुपर्यपिधानमासीत्। शुक्रौ दीप्तौ सूर्याचंद्रमसावनड्वाहौ रथस्य वोढारावास्तां। अभवतां। यद्यदा सूर्या गृहं सोममयादगात्॥

॥ इत्यष्टमस्य तृतीय एकविंशो वर्गः ॥

॥ अथैकादशी ॥

ऋक्सामाभ्यामभिहितौ गावौ ते सामनावितः।
श्रोत्रं ते चक्रे आस्तां दिवि पंथाश्चराचरः ॥११॥

ऋक्ऽसामाभ्यां। अभिऽहितौ। गावौ। ते। सामनौ। इतः।
श्रोत्रं। ते। चक्रे इति। आस्तां। दिवि। पंथाः। चराचरः ॥११॥

हे सूर्ये देवि ते तवर्क्सामाभ्यामभिधानीस्थानाभ्यामभिहितौ गावौ गोस्थानीयौ सूर्याचंद्रमसौ सामनौ सामानौ संतावितः। गच्छतः। अनोवाहौ पत्युर्गृहं प्रति गच्छतः। ते तव श्रोत्रं। श्रोत्रे इत्यर्थः। वरस्य गुणग्राहिणी श्रोत्रे एव चक्रे आस्तां। मनोरूपस्य रथस्य श्रोत्रे चक्रे अभवतामित्यर्थः। दिवि पंथाश्चराचरः। चलाचलः। अत्यंतं गमनसाधनभूतो मार्गोऽभूत्। रथसंचारप्रदेशो द्युलोक आसीत्॥

॥ अथ द्वादशी ॥

शुची ते चक्रे यात्या व्यानो अक्ष आहतः।
अनो मनस्मयं सूर्यारोहत्प्रयती पतिं ॥१२॥

शुची इति। ते। चक्रे इति। यात्याः। विऽआनः। अक्षः। आऽहतः।
अनः। मनस्मयं। सूर्या। आ। अरोहत्। प्रऽयती। पतिं ॥१२॥

यात्या गच्छंत्यास्ते तवानसश्चक्रे चंक्रमणशीले रथांगे शुची श्रोत्रे आस्तां। व्यानस्तव व्यानो वायुरक्षः। उभयरथचक्रच्छिद्रगामिनी या काष्ठा सा च रथस्य सर्वं भारं वहति। सोऽक्षो व्यानोऽभूत्। मनस्मयं मनोमयमनः शकटं सूर्या पतिं सोमं प्रति प्रयती प्रकर्षेण गच्छंत्यारोहत्। आरूढवती। पतिं प्रति जिगमिषोर्मनोरूपस्य रथस्य पत्युर्गुणश्राविणी श्रोत्रे एव चक्रे अभूतां व्यानो धारको वायुश्चेष्टकोऽक्षोऽभूदित्यर्थः॥

॥ अथ त्रयोदशी ॥

सूर्याया वहतुः प्रागात्सविता यमवासृजत् ।
अघासु हन्यंते गावोऽर्जुन्योः पर्युह्यते ॥१३॥
सूर्यायाः । वहतुः । प्र । अगात् । सविता । यं । अवऽअसृजत् ।
अघासु । हन्यंते । गावः । अर्जुन्योः । परि । उह्यते ॥१३॥

सोमाय प्रदित्सितायाः सूर्याया वहतुः । कन्याप्रियार्थं दातव्यो गवादिपदार्थो वहतुः । स च प्रागात् । तस्या अपि पूर्वमगच्छत् । यं वहतुं सवितास्याः पितावासृजत् अवसृष्टवान् । प्रादादित्यर्थः । कदा सागच्छत् कदा वहतुरित्युभयोः काल उच्यते । अघासु मघास्वित्यर्थः । मघानक्षत्रेषु गावः सवित्रा दत्ता गावः सोमगृहं प्रति हन्यंते । दंडैस्ताड्यंते प्रेरणार्थं । अर्जुन्योः । फल्गुन्योरित्यर्थः । तयोर्नक्षत्रयोः सवितुः सकाशात् परि सोमगृहं प्रत्युह्यते । नीयते रथेन ॥

॥ अथ चतुर्दशी ॥

यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्यायाः ।
विश्वे देवा अनु तद्वामजानन्पुत्रः पितरावृणीत पूषा ॥१४॥
यत् । अश्विना । पृच्छमानौ । अयातं । त्रिऽचक्रेण । वहतुं । सूर्यायाः ।
विश्वे । देवाः । अनु । तत् । वां । अजानन् । पुत्रः । पितरौ । अवृणीत । पूषा ॥१४॥

हे अश्विनाश्विनौ यद्यदा पृच्छमानौ सवितारं प्रष्टुमयातमगच्छतं । केन साधनेनायातं तदुच्यते । त्रिचक्रेण चक्रत्रययुक्तेन रथेन । किं पृच्छमानौ । सूर्याया वहतुं विवाहमित्यर्थः । तत्तदानीं वां युवां सवितारं प्रति गच्छंतौ विश्वे सर्वे देवा अन्वजानन् । अनुज्ञातवंतः । तथा पितरौ पुत्रोऽश्विनोः पुत्रः पूषावृणीत । वृतवान् ॥

॥ अथ पंचदशी ॥

यदयातं शुभस्पती वरेयं सूर्यामुप ।
क्वैकं चक्रं वामासीत्क्व देष्ट्राय तस्थथुः ॥१५॥
यत् । अयातं । शुभः । पती इति । वरेऽयं । सूर्यां । उप ।
क्व । एकं । चक्रं । वां । आसीत् । क्व । देष्ट्राय । तस्थथुः ॥१५॥

हे शुभस्पती उदकस्य स्वामिनौ यद्यावयातमगच्छतं। कं प्रति। वरेयं वरणीयायाः सूर्यायाः संबंधिनं वरेयोचितव्यं वा सवितारमित्यर्थः। किमर्थं। सूर्यामुप गंतुं। वां भवतोः संप्रति दृश्यमानमिदमेकं चक्रं क्वासीत्पुरा। क्व वां युवां देष्ट्राय दानाय प्रवृत्तौ तस्थथुरित्यश्विनोर्निवासं पृच्छति ॥

॥ इत्यष्टमस्य तृतीये द्वाविंशो वर्गः ॥

॥ अथ षोडशी ॥

द्वे ते॑ च॒क्रे सू॑र्ये ब्र॒ह्माण॑ ऋतु॒था वि॑दुः।
अथैकं॑ च॒क्रं यद्गुहा॒ तद॑द्धात॒य इद्वि॑दुः ॥१६॥
द्वे इति॑। ते॒। च॒क्रे इति॑। सू॒र्ये॒। ब्र॒ह्माणः॑। ऋ॒तु॒ऽथा। वि॒दुः॒।
अथ॑। एकं॑। च॒क्रं। यत्। गुहा॑। तत्। अ॒द्धा॒तयः॑। इत्। वि॒दुः॒ ॥१६॥

अथ स्वयमेव स्वात्मानं प्रति सूर्या वदति। हे सूर्ये ते तव द्वे चक्रे प्रज्ञाते पुरा दृष्टे द्वे एव चंद्रसूर्यात्मके ऋतुथा ऋतुषु विनिर्दिष्टे चक्रे ब्रह्माणो ब्राह्मणा विदुः। अथैकं चक्रं तृतीयं संवत्सरात्मकं गुहा गुहायां निहितं यदस्ति तदद्धातय इत्। एतन्मेधाविनामसु पठितं। मेधाविन एव विदुः। जानंति ॥

॥ अथ सप्तदशी ॥

सू॒र्यायै॑ दे॒वेभ्यो॑ मि॒त्राय॒ वरु॑णाय च।
ये भूत॒स्य॒ प्रचे॑तस इ॒दं तेभ्यो॑ऽकरं॒ नमः॑ ॥१७॥
सू॒र्यायै॑। दे॒वेभ्यः॑। मि॒त्राय॑। वरु॑णाय। च॒।
ये। भू॒तस्य॑। प्रऽचे॑तसः। इ॒दं। तेभ्यः॑। अ॒क॒र॒म्। नमः॑ ॥१७॥

सूर्यायै सूर्यस्य पत्न्यै देवेभ्योऽग्न्यादिभ्यो मित्राय वरुणाय च ये च भूतस्य भूतजातस्य प्रचेतसः सुमतयोऽभिमतप्रदा भवंति तेभ्यः सर्वेभ्य इदं नमो नमस्कारमकरं। करोमि ॥

॥ अथाष्टादशी ॥

पू॒र्वा॒प॒रं च॑रतो मा॒यये॒तौ शिशू॒ क्रीळ॑न्तौ॒ परि॑ यातो अध्व॒रं।
विश्वा॑न्य॒न्यो भुव॑नाभि॒चष्ट॑ ऋ॒तूँर॒न्यो वि॒दध॑ज्जायते॒ पुनः॑ ॥१८॥

पूर्वऽअपरं। चरतः। मायया। एतौ। शिशू इति। क्रीळंतौ। परि। यातः। अध्वरं।
विश्वानि। अन्यः। भुवना। अभिऽचष्टे। ऋतून्। अन्यः। विऽदधत्। जायते।
पुनरिति ॥१८॥

कश्चित्पूर्वं गच्छति सूर्यः। अन्यस्तमनुचरति चंद्रमाः। एवं पूर्वापरं पौर्वापर्येण मायया स्वप्रज्ञानेनैतावादित्यचंद्रौ चरतः। गच्छतो दिवि। तौ शिशू। शिशुवद्भ्रमणाज्जायमानत्वाद्वा शिशू इत्युच्येते। शिशू संतौ क्रीळंतावंतरिक्षे विहरंतावध्वरं परि यातः। यज्ञं प्रतिगच्छतः। तयोरन्य आदित्यो विश्वानि भुवनान्यभिचष्टे। अभिपश्यति। ऋतून्वसंतादीनन्यश्चंद्रमा विदधत्कुर्वन्मासानर्धमासांश्च कुर्वन्पुनर्जायते। यद्युभयोरपि पुनर्जातिरस्ति तथापि सूर्यस्य सर्वदा प्रवृद्धेरुदयो नाभिप्रेतः। चंद्रस्य तु ह्रासवृद्धिसद्भावात्पुनः पुनर्जायत इत्युक्तिर्युक्ता। चंद्रमा वै जायते पुनरित्यादिश्रुतेः॥

अतिमूर्तिनाम्न्येकाहे शुक्लपक्षे चांद्रमसीष्टिः। तत्र नवो नव इत्येषा याज्या। सूचितं च। नवो नवो भवति जायमानस्तरणिर्विश्वदर्शतः। आ॰ ९.८.। इति॥

॥ सैषैकोनविंशी॥

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रं।
भागं देवेभ्यो वि दधात्यायन्प्र चंद्रमास्तिरते दीर्घमायुः॥१९॥
नवःऽनवः। भवति। जायमानः। अह्नां। केतुः। उषसां। एति। अग्रं।
भागं। देवेभ्यः। वि। दधाति। आऽयन्। प्र। चंद्रमाः। तिरते। दीर्घं। आयुः॥१९॥

अयं चंद्रमा जायमानः प्रतिदिनं जायमान एकैककलाधिक्येनोत्पद्यमानः सन् नवोनवो भवति। प्रतिदिनं नूतन एव भवति। एतत्पूर्वपक्षाद्यभिप्रायं। तथाह्नां दिवसानां केतुः प्रज्ञापकः प्रतिपदादीनां तिथीनां चंद्रकलाह्रासवृद्ध्यधीनत्वात्। तादृशश्चंद्रमा उषसां प्रभातीनामग्रमेति। एतत्कृष्णपक्षांताभिप्रायं। केचनैतं पादमादित्यदैवत्यमाहुः। तस्मिन्पक्षेऽह्नां केतुत्वमुषसामग्रगतिश्च प्रसिद्धे। देवेभ्यो भागं हविर्भागं वि दधाति करोति उभयपक्षांते। किं कुर्वन्। आयन्। प्रतिदिनं ह्रासवृद्ध्या पक्षांतमभिगच्छन्। एतदर्धमासाभिप्रायं। चंद्रमा उक्तलक्षणो देवो दीर्घमायुस्तिरते। वर्धयति॥

॥ अथ विंशी ॥

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रं ।
आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥२०॥

सुऽकिंशुकं । शल्मलिं । विश्वऽरूपं । हिरण्यऽवर्णं । सुऽवृतं । सुऽचक्रं ।
आ । रोह । सूर्ये । अमृतस्य । लोकं । स्योनं । पत्ये । वहतुं । कृणुष्व ॥२०॥

सुकिंशुकं शोभनकिंशुकवृक्षनिर्मितं तथा शल्मलिं शल्मलिवृक्षनिर्मितं विश्वरूपं नानारूपं हिरण्यवर्णं हितरमणीयवर्णं हिरण्यालंकारयुक्तं वा सुवृतं सुष्ठुवर्तनं सुचक्रं शोभनचक्रोपेतं रथं हे सूर्ये आरोह । अमृतस्य लोकं स्थानं स्योनं सुखकरं पत्ये सोमाय वहतुं वहनमात्मनः प्रापणं कृणुष्व । कुरुष्व । अत्र निरुक्तं द्रष्टव्यं ॥

॥ इत्यष्टमस्य तृतीये त्रयोविंशो वर्गः ॥

॥ अथैकविंशी ॥

उदीर्ष्वातः पतिवती ह्ये३षा विश्वावसुं नमसा गीर्भिरीळे ।
अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ॥२१॥

उत् । ईर्ष्व । अतः । पतिऽवती । हि । एषा । विश्वऽवसुं । नमसा । गीःऽभिः । ईळे ।
अन्यां । इच्छ । पितृऽसदं । विऽअक्तां । सः । ते । भागः । जनुषा । तस्य । विद्धि ॥२१॥

आभिर्नृणां विवाहः स्तूयते । हे विश्वावसो अतः स्थानात्कन्यासमीपादुदीर्ष्व । उत्तिष्ठ । एषा कन्या पतिवती हि संजाता । अत उदीर्ष्वेति वातःशब्दो योज्यः । विश्वावसुमेतन्नामानं गंधर्वं नमसा नमस्कारेण गीर्भिः स्तुतिभिश्चेळे । स्तौमि । तर्ह्येनां विहाय कां स्वीकरोमीति यदि ब्रूषे तर्ह्यन्यां पितृषदं पितृकुले स्थितां व्यक्तामनूढेति परिस्फुटां विगतांजनां वा स्तनोद्गमादिराहित्येनाप्रौढामित्यर्थः । स तादृशः पदार्थस्ते तव भागः कल्पितः । तस्य तं भागं विद्धि । जानीहि जनुषा जन्मना लभस्वेत्यर्थः ॥

॥ अथ द्वाविंशी ॥

उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा ।
अन्यामिच्छ प्रफर्व्यं१सं जायां पत्या सृज ॥२२॥

उत्। ईर्ष्व। अतः। विश्वावसो इति विश्वऽवसो। नमसा। ईळामहे। त्वा।
अन्यां। इच्छ। प्रऽफर्व्यं। सं। जायां। पत्या। सृज ॥२२॥

अतोऽस्माच्छयनाद्धे विश्वावसो कन्यास्वामिन् गंधर्वोदीर्ष्व। उद्गच्छ। ईर गतौ। आदादिकः। अनुदात्तेत्। तस्य लोटि रूपं। विश्वावसुर्नाम गंधर्वः कन्यानामधिपतिर्यतः। लभामि तेन कन्यामिति हि मंत्रः। स तादृश देव त्वां नमसा नमस्कारेणेळामहे। स्तुमः। स त्वमन्यां प्रफर्व्यं बृहन्नितंबां कन्यामिच्छ। जायां मां पत्या सह पुनः सं सृज ॥

॥ अथ त्रयोविंशी ॥

अनृक्षरा ऋजवः संतु पंथा येभिः सखायो यंति नो वरेयं।
समर्यमा सं भगो नो निनीयात्सं जास्पत्यं सुयममस्तु देवाः ॥२३॥

अनृक्षराः। ऋजवः। संतु। पंथाः। येभिः। सखायः। यंति। नः। वरेऽयं।
सं। अर्यमा। सं। भगः। नः। निनीयात्। सं। जाः। पत्यं। सुऽयमं। अस्तु। देवाः ॥२३॥

हे देवाः पंथाः पंथानो मार्गा अनृक्षराः। ऋक्षरः कंटक उच्यते। कंटकरहिता ऋजवोऽकुटिलाश्च संतु येभिर्यैः पथिभिर्नोऽस्माकं सखायो वरप्रेषिता वरेयं वरैर्याचितव्यं पितरं प्रति यंति गच्छंति ते पंथा इति। किंचार्यमा देवो नोऽस्मान् सं निनीयात्। सम्यक् प्रापयेत्। तथा भगो देवः सं निनीयात्। हे देवा आसंगतमस्तु पतिकुलमिति शेषः। तथेदं जास्पत्यं जायापत्योर्युगलं सुयममस्तु। सुमिथुनमस्तु ॥

पत्न्या योक्त्रविमोचने प्र त्वा मुंचामीत्येषा। सूचितं च। अथास्या योक्त्रं विचृतेत्प्र त्वा मुंचामि वरुणस्य पाशादिति ॥

॥ सैषा चतुर्विंशी ॥

प्र त्वा मुंचामि वरुणस्य पाशाद्येन त्वाबध्नात्सविता सुशेवः।
ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि ॥२४॥

प्र। त्वा। मुंचामि। वरुणस्य। पाशात्। येन। त्वा। अबध्नात्। सविता। सुऽशेवः।
ऋतस्य। योनौ। सुऽकृतस्य। लोके। अरिष्टां। त्वा। सह। पत्या। दधामि ॥२४॥

जातं प्राणिनं सवित्रा प्रेरितो वरुण आत्मपाशैर्बध्नाति। तस्माद्वरुणस्य पाशात्

हे वधु त्वा त्वां प्र मुंचामि येन त्वा त्वां सविता वरुणस्य प्रेरकः सुशेवः सुखोऽबध्नात्। बंधनं कृतवान्। यज्ञांगपक्षे पत्नीं योक्त्रेण बध्नाति। बंधनस्य वरुणोऽभिमानी। अतो वरुणपाशाद्योक्त्रात्प्रमुंचामि। येन योक्त्रेण सविता कर्मणामनुज्ञाता देव ऋत्विक्पाशेनाबध्नात्। तं मोचयित्वा चर्तस्य यज्ञस्य योनौ स्थाने यागभूमौ सुकृतस्य लोके कर्मक्षेत्रे भूलोके चारिष्टामहिंसितां त्वां पुत्राद्यर्थं पत्या सह दधामि। स्थापयामि ॥

॥ अथ पंचविंशी ॥

प्रेतो मुंचामि नामुतः सुबद्धाममुतस्करं।
यथेयमिंद्र मीढ्वः सुपुत्रा सुभगासति ॥२५॥
प्र। इतः। मुंचामि। न। अमुतः। सुऽबद्धां। अमुतः। करं।
यथा। इयं। इंद्र। मीढ्वः। सुऽपुत्रा। सुऽभगा। असति ॥२५॥

इतः पितृकुलात्प्र मुंचामि त्वां नामुतो भर्तृगृहात्प्रमुंचामि। अमुतो भर्तृगृहे सुबद्धां करं। यथेयं कन्या हे इंद्र मीढ्वः सेक्तः सुपुत्रा सुभगा सुष्ठुभाग्या वासति भवति तथा कुरु ॥

॥ इत्यष्टमस्य तृतीये चतुर्विंशो वर्गः ॥

विवाहानंतरभाविनि प्रयाणे पूषा त्वेतो नयत्वित्यनया रथादियानमारोहयेत्। सूचितं च। पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेत्। आ॰ गृ॰ १.८.॥

॥ सैषा षड्विंशी ॥

पूषा त्वेतो नयतु हस्तगृह्याश्विना त्वा प्र वहतां रथेन।
गृहान्गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि ॥२६॥
पूषा। त्वा। इतः। नयतु। हस्तऽगृह्य। अश्विना। त्वा। प्र। वहतां। रथेन।
गृहान्। गच्छ। गृहऽपत्नी। यथा। असः। वशिनी। त्वं। विदथं। आ। वदासि॥२६॥

हस्तगृह्य ग्राह्यहस्तः पूषा त्वा त्वामितो नयतु। प्रापयतु। अश्विनाश्विनौ त्वा त्वां रथेन प्र वहतां। प्रगमयतां। गृहान् भर्तृसंबंधिनो गच्छ त्वं गृहपत्नी यथासो भवसि। स्वगृहस्वामिनी भवसि। वशिनी सर्वेषां गृहगतानां वशं प्रापयित्री पत्युर्वशे वर्तमाना वा। विदथं पतिगृहमा वदासि। आवदसि। गृहस्थितं भृत्यादिजनमावद ॥

इह प्रियमित्येषा वध्वा गृहप्रवेशिनी। सूचितं च। इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत्। आ॰गृ॰१.८.। इति ॥

॥ सैषा सप्तविंशी ॥

इह प्रियं प्रजया॑ ते॒ समृ॑ध्यताम॒स्मिन्गृ॒हे गार्ह॑पत्याय जागृहि।
ए॒ना पत्या॑ त॒न्वं१॒॑ सं सृ॑ज॒स्वाधा॒ जिव्री॑ वि॒दथ॒मा व॑दाथः ॥२७॥

इ॒ह। प्रि॒यं। प्र॒ऽजया॑। ते॒। सं। ऋ॒ध्य॒ता॒ं। अ॒स्मिन्। गृ॒हे। गार्ह॑ऽपत्याय। जा॒गृ॒हि॒।
ए॒ना। पत्या॑। त॒न्वं॑। सं। सृ॒ज॒स्व॒। अध॑। जिव्री॒ इति॑। वि॒दथं॑। आ। व॒दा॒थः॒ ॥२७॥

हे वधु ते तवेहास्मिन्पतिकुले प्रियं प्रजया सह समृध्यतां। अस्मिन्गृहे गार्हपत्याय गृहपतित्वाय जागृहि। बुध्यस्व। एनानेन पत्या सह तन्वं स्वीयं शरीरं संसृजस्व। संसृष्टा भव। अधाथ जिव्री जीर्णौ जायापती युवां विदथं गृहमा वदाथः। आभिमुख्येन वदतं ॥

॥ अथाष्टाविंशी ॥

नी॒ल॒लो॒हि॒तं भ॑वति कृ॒त्याස॒क्तिर्व्य॑ज्यते।
एध॑न्ते अस्या ज्ञा॒तय॒ः पति॑र्ब॒न्धेषु॑ बध्यते ॥२८॥

नी॒ल॒ऽलो॒हि॒तं। भ॒व॒ति॒। कृ॒त्या। आ॒स॒क्तिः। वि। अ॒ज्य॒ते॒।
एध॑न्ते। अ॒स्याः॒। ज्ञा॒तयः॑। पतिः॑। ब॒न्धेषु॑। ब॒ध्य॒ते॒ ॥२८॥

कृत्याभिचाराभिमानिनी देवता नीललोहितं भवति। नीलं च लोहितं च तस्या रूपं भवतीत्यर्थः। सा कृत्यासक्तिरासक्तास्यां संबद्धा व्यज्यते। त्यज्यत इत्यर्थः। तस्यां कृत्यायामपगतायामस्या वध्वा ज्ञातय एधंते। वर्धंते। पतिर्बंधेषु सांसारिकेषु बध्यते ॥

॥ अथैकोनत्रिंशी ॥

परा॑ देहि शामु॒ल्यं॑ ब्र॒ह्मभ्यो॒ वि भ॑जा॒ वसु॑।
कृ॒त्यैषा प॒द्वती॑ भू॒त्व्या जा॒या वि॑श॒ते॒ पति॑ं ॥२९॥

परा॑। दे॒हि॒। शा॒मु॒ल्यं॑। ब्र॒ह्मऽभ्यः॑। वि। भ॒ज॒। वसु॑।
कृ॒त्या। ए॒षा। प॒त्ऽवती॑। भू॒त्वी। आ। जा॒या। वि॒श॒ते॒। पति॑ं ॥२९॥

शामुल्यं शामुलमित्यर्थः। शमलं शारीरं मलं। शरीरावच्छन्नस्य मलस्य धारकं

वस्त्रं परा देहि। परात्यज। धृतप्रायश्चित्तार्थं ब्रह्मभ्यो ब्राह्मणेभ्यो वसु धनं वि भज। प्रयच्छेत्यर्थः। किमर्थं वधूवासःपरित्याग इति चेत् उच्यते। एषा कृत्या पद्वती पादवती सती जाया भूत्वी भूत्वा पतिं विशते। कृत्यारूपवासःप्रवेशात् कृत्या जाया भूत्वा विशत इत्युपचर्यते। अतस्तत्परित्यागे कृत्यैव त्यक्ता भवतीत्यर्थः। यदि वधूवासः स्वयं निधत्ते तदेवं भवतीति वधूवासःसंस्पर्शनं निंदायुक्तं ॥

॥ अथ त्रिंशी ॥

अश्रीरा तनूर्भवति रुशंती पापयामुया।
पतिर्यद्वध्वो३ वाससा स्वमंगमभिधित्सते ॥३०॥

अश्रीरा। तनूः। भवति। रुशंती। पापया। अमुया।
पतिः। यत्। वध्वः। वाससा। स्वं। अंगं। अभिऽधित्सते ॥३०॥

अत्रापि वधूवासःसंस्पर्शनिंदोच्यते। तनूर्वरस्य संबंधिन्यश्रीराश्रीका भवति। कथं स्यादित्युच्यते। रुशती। रुशदिति वर्णनाम। दीप्तयामुयानया पापरूपया कृत्यया युक्ता चेत्तनूः। तदेवाह। पतिर्यद्यदि वध्वो वाससा स्वमंगमभिधित्सते परिधातुमिच्छति ॥

॥ इत्यष्टमस्य तृतीये पंचविंशो वर्गः ॥

॥ अथैकत्रिंशी ॥

ये वध्वश्चंद्रं वहतुं यक्ष्मा यंति जनादनुं।
पुनस्तान्यज्ञिया देवा नयंतु यत आगताः ॥३१॥

ये। वध्वः। चंद्रं। वहतुं। यक्ष्माः। यंति। जनात्। अनुं।
पुनरिति। तान्। यज्ञियाः। देवाः। नयंतु। यतः। आऽगताः ॥३१॥

वध्वश्चंद्रं हिरण्यरूपं वहतुं ये यक्ष्मा व्याधयोऽनु यंति प्राप्नुवंति जनादस्मद्विरोधिनः सकाशात्। यद्वा जनाद्यमाख्यात्। तान्पुनर्नयंतु प्रापयंतु यज्ञिया यज्ञार्हा देवा इंद्रादयः। यत आगता यस्मात्ते यक्ष्मा आगतास्तत्र तान्नयंतु ॥

वध्वाः प्रयाणे मा विदन्नित्येषा याज्या। सूत्रितं च। कल्याणेषु देशवृक्षचतुष्पथेषु मा विदन्परिपंथिन इति जपेत्। आ० गृ० १.८.। इति ॥

॥ सैषा द्वात्रिंशी ॥

मा विंदन्परिपंथिनो य आसीदंति दंपती ।
सुगेभिर्दुर्गमतीतामप द्रांत्वरातयः ॥३२॥

मा । विदन् । परिऽपंथिनः । ये । आऽसीदंति । दंपती इति दंऽपती ।
सुऽगेभिः । दुःऽगं । अति । इतां । अप । द्रांतु । अरातयः ॥३२॥

परिपंथिनः पर्यवस्थातारः शत्रवो मा विदन् मा प्रापयन् ये परिपंथिनो दंपती आसीदंत्यभिगच्छंति । सुगेभिः सुगैर्मार्गैर्दुर्गं दुःखेन गंतुं शक्यं दुर्गमं देशमतीतां । अतिगच्छतां । अरातयोऽदातारः शत्रवोऽप द्रांतु । अपगच्छंतु ॥

॥ अथ त्रयस्त्रिंशी ॥

सुमंगलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वायाथास्तं वि परेतन ॥३३॥

सुऽमंगलीः । इयं । वधूः । इमां । संऽएत । पश्यत ।
सौभाग्यं । अस्यै । दत्त्वाय । अथ । अस्तं । वि । परा । इतन ॥३३॥

इयं वधूः सुमंगलीः शोभनमंगला । अत इमां सर्व आशीःकर्तारः समेत । संगच्छत । तां पश्यत च । तां संगताश्च दृष्ट्वास्या ऊढायै सौभाग्यं दत्त्वाय दत्त्वाथास्तं । गृहनामैतत् । स्वस्वसंबंधिनं वि परेतन । विविधं परागच्छत ॥

॥ अथ चतुस्त्रिंशी ॥

तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे ।
सूर्यां यो ब्रह्मा विद्यात्स इद्वाधूयमर्हति ॥३४॥

तृष्टं । एतत् । कटुकं । एतत् । अपाष्ठऽवत् । विषऽवत् । न । एतत् । अत्तवे ।
सूर्यां । यः । ब्रह्मा । विद्यात् । सः । इत् । वाधूऽयं । अर्हति ॥३४॥

अनयापि वधूवस्त्रपरित्यागः प्रतिपाद्यते । एतद्वस्त्रं तृष्टं दाहजनकं । तथैतत्कटुकं । तथापाष्ठवत् । अपाष्ठमपस्थितमृजीषं । तद्वत् । तथा विषवत् । नैतद्वस्त्रमत्तवे । अत्तव्यं । अनुपयोग्यं । यो ब्रह्मा ब्राह्मणः सूर्यामिदानीं प्रस्तुतां देवीं विद्यात् सम्यग्जानीयात् स इत् स एव वाधूयं वधूवस्त्रमर्हति ॥

॥ अथ पंचत्रिंशी ॥

आशसनं विशसनमथो अधिविकर्तनं ।

सूर्यायाः पश्य रूपाणि तानि ब्रह्मा तु शुंधति ॥३५॥

आऽशसनं । विऽशसनं । अथो इति । अधिऽविकर्तनं ।

सूर्यायाः । पश्य । रूपाणि । तानि । ब्रह्मा । तु । शुंधति ॥३५॥

आशसनं तूषाधानं । तच्चान्यवर्णं भवति विशसनं शिरसि निधीयमानं । तादृशं दशांते निधीयमानमधिविकर्तनं यत्त्रिधा वासो विकृंतंति । तान्याशसनादीनि वासांस्यवस्थितानि सूर्याया रूपाणि भवंति । तानि पश्य । एवंभूतान्याशसनादीनि पुरा सूर्यास्वशरीरे स्थितान्यमंगलानि वासांसि विधत्ते । तानि रूपाणि सूर्याविद्ब्रह्मा तु ब्राह्मण एव तस्माद्वाससः सकाशाच्छुंधति । अपनयति ॥

॥ इत्यष्टमस्य तृतीये षड्विंशो वर्गः ॥

विवाहे कन्याहस्तग्रहणे गृभ्णामीत्येषा । सूत्रितं च । गृभ्णामि ते सौभगत्वाय हस्तमित्यंगुष्ठमेव गृह्णीयात् । आ॰ १.७. । इति ॥

॥ सैषा षट्त्रिंशी ॥

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।

भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥३६॥

गृभ्णामि । ते । सौभगऽत्वाय । हस्तं । मया । पत्या । जरत्ऽअष्टिः । यथा । असः ।

भगः । अर्यमा । सविता । पुरंऽधिः । मह्यं । त्वा । अदुः । गार्हऽपत्याय । देवाः ॥३६॥

हे वधु ते तव हस्तमहं गृभ्णामि । गृह्णामि । किमर्थं । सौभगत्वाय सौभाग्याय । मया पत्या त्वं यथा जरदष्टिः प्राप्तवार्धक्यासो भवसि । भगोऽर्यमा सविता पुरंधिः पूषा । एते देवास्त्वा त्वां मह्यमदुः । दत्तवंतः । किमर्थं । गार्हपत्याय । यथाहं गृहपतिः स्यामिति ॥

॥ अथ सप्तत्रिंशी ॥

तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्याऽवपंति ।

या न ऊरू उशती विश्रयाते यस्यामुशंतः प्रहराम शेपं ॥३७॥

तां। पूषन्। शिवऽतमां। आ। ईरयस्व। यस्यां। बीजं। मनुष्याः। वपंति।
या। नः। ऊरू इति। उशती। विऽश्रयाते। यस्यां। उशंतः। प्रऽहराम। शेपं ॥३७॥

हे पूषन् पोषक एतन्नामक देव शिवतमामत्यंतमंगलभूतां तामेरयस्व। आ ईरय। सर्वतः प्रेरय। यस्यामूरौ बीजं रेतोलक्षणं मनुष्या वपंत्यादधते। या नोऽस्माकमूरू उशती कामयमाना विश्रयाते। यस्यामूरावुशंतः कामयमाना वयं शेपं स्पर्शनयोग्यं पुंस्प्रजननं प्रहराम। ऊरौ व्यंजनसंबंधं करवामेत्यर्थः ॥

॥ अथाष्टत्रिंशी ॥

तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह।
पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥३८॥

तुभ्यं। अग्रे। परि। अवहन्। सूर्यां। वहतुना। सह।
पुनरिति। पतिऽभ्यः। जायां। दाः। अग्ने। प्रऽजया। सह ॥३८॥

गंधर्वा हे अग्ने तुभ्यमग्रे पर्यवहन्। प्रायच्छन्नित्यर्थः। कां। सूर्यां। केन सह। वहतुना सह। त्वं च तां सूर्यां वहतुना सह सोमाय प्रायच्छः। तद्वदिदानीमपि हे अग्ने पुनः पतिभ्योऽस्मभ्यं जायां प्रजया सह दाः। देहि ॥

॥ अथैकोनचत्वारिंशी ॥

पुनः पत्नीमग्निरदादायुषा सह वर्चसा।
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतं ॥३९॥

पुनरिति। पत्नीं। अग्निः। अदात्। आयुषा। सह। वर्चसा।
दीर्घऽआयुः। अस्याः। यः। पतिः। जीवाति। शरदः। शतं ॥३९॥

पुनः स्वगृहीतां पत्नीमग्निरायुषा सह वर्चसा सहादात्। प्रायच्छत्। अस्या अग्निदत्ताया यः पतिः पुमान् स दीर्घायुः सन् शरदः शतं शतसंवत्सरं जीवाति। जीवतु ॥

॥ अथ चत्वारिंशी ॥

सोमः प्रथमो विविदे गंधर्वो विविद उत्तरः।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥४०॥

सोमः । प्रथमः । विविदे । गंधर्वः । विविदे । उत्ऽतरः ।
तृतीयः । अग्निः । ते । पतिः । तुरीयः । ते । मनुष्यऽजाः ॥४०॥

जातां कन्यां सोमः प्रथमभावी सन् विविदे। लब्धवान्। गंधर्व उत्तरः सन् विविदे। लब्धवान्। अग्निस्तृतीयः पतिस्ते तव। पश्चान्मनुष्यजाः पतिस्तुरीयश्चतुर्थः॥

॥ इत्यष्टमस्य तृतीये सप्तविंशो वर्गः ॥

॥ अथैकचत्वारिंशी ॥

सोमो ददद्गंधर्वाय गंधर्वो ददद्ग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमां ॥४१॥

सोमः । ददत् । गंधर्वाय । गंधर्वः । ददत् । अग्नये ।
रयिं । च । पुत्रान् । च । अदात् । अग्निः । मह्यं । अथो इति । इमां ॥४१॥

सोमो गंधर्वाय प्रथमं ददत्। प्रादात्। गंधर्वोऽग्नये प्रादात्। अथो अपि चाग्निरिमां कन्यां रयिं धनं पुत्रांश्च मह्यमदात् ॥

॥ अथ द्विचत्वारिंशी ॥

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतं ।
क्रीळंतौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥४२॥

इह । एव । स्तं । मा । वि । यौष्टं । विश्वं । आयुः । वि । अश्नुतं ।
क्रीळंतौ । पुत्रैः । नप्तृऽभिः । मोदमानौ । स्वे । गृहे ॥४२॥

इहैव स्तं। इहैवास्मिँल्लोके स्तं। भवतं। मा वि यौष्टं। मा पृथग्भूतं। विश्वमायुर्व्यश्नुतं। प्राप्नुतं। किंच पुत्रैर्नप्तृभिः पौत्रैः सह स्वे गृहे मोदमानौ भवतमिति शेषः॥

गृहप्रवेश आ नः प्रजां जनयत्वित्याद्याश्चतस्रो होमार्थाः। सूचितं च। आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा । आ० गृ० १.८.। इति। तासु प्रथमा सूक्ते त्रिचत्वारिंशी ॥

आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा ।
अदुर्मंगलीः पतिलोकमा विश शं नो भव द्विपदे शं चतुष्पदे ॥४३॥

आ। नः। प्रऽजां। जनयतु। प्रजाऽपतिः। आऽजरसाय। सं। अनक्तु। अर्यमा।
अदुःऽमंगलीः। पतिऽलोकं। आ। विश। शं। नः। भव। द्विऽपदे। शं। चतुःऽपदे ॥४३॥

प्रजापतिर्देवो नोऽस्माकं प्रजामा जनयतु। अर्यमा चाजरसाय जरापर्यंतं जीवनाय समनक्तु। संगमयतु। सा त्वमदुर्मंगलीर्दुर्मंगलरहिता सुमंगली। यद्वा या मंगलाचारान्दूषयति सा दुर्मंगली। ततोऽन्यादुर्मंगली। तादृशी सती पतिलोकं पतिसमीपमा विश। प्राप्नुहि। नोऽस्माकं द्विपदे शं भव। तथा च शं चतुष्पदे भव॥

॥ अथ चतुश्चत्वारिंशी ॥

अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः।
वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥४४॥

अघोरऽचक्षुः। अपतिऽघ्नी। एधि। शिवा। पशुऽभ्यः। सुऽमनाः। सुऽवर्चाः।
वीरऽसूः। देवऽकामा। स्योना। शं। नः। भव। द्विऽपदे। शं। चतुःऽपदे ॥४४॥

हे वधु त्वमघोरचक्षुः क्रोधादभयंकरचक्षुरेधि। भव। तथापतिघ्नी भव। तथा पशुभ्यः शिवा हितकरी भव सुमनाः सुवर्चाश्च भव। वीरसूः पुत्राणामेव प्रसवित्री देवकामा स्योना सुखकरा च भव ॥

॥ अथ पंचचत्वारिंशी ॥

इमां त्वमिंद्र मीढ्वः सुपुत्रां सुभगां कृणु।
दशास्यां पुत्राना धेहि पतिमेकादशं कृधि ॥४५॥

इमां। त्वं। इंद्र। मीढ्वः। सुऽपुत्रां। सुऽभगां। कृणु।
दश। अस्यां। पुत्रान्। आ। धेहि। पतिं। एकादशं। कृधि ॥४५॥

हे इंद्र त्वमिमां वधूं सुपुत्रां सुभगां च कृणु। कृधि। अस्यां वध्वां दश पुत्राना धेहि। पतिमेकादशं कृधि। दश पुत्राः पतिरेकादशो यथा स्यात्तथा कृधि। कृणु ॥

॥ अथ षट्चत्वारिंशी ॥

सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव।
ननांदरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥४६॥

सम्ऽराज्ञी । श्वशुरे । भव । सम्ऽराज्ञी । श्वश्र्वां । भव ।
ननांदरि । सम्ऽराज्ञी । भव । सम्ऽराज्ञी । अधि । देवृषु ॥४६॥

हे वधु श्वशुरादिषु त्वं सम्राज्ञी भव । देवृषु देवरेष्वित्यर्थः ॥

समंजंत्वित्येषा वरस्य दधिप्राशने वधूवरयोर्हृदयस्पर्शने वा विनियुक्ता । तथा च सूचितं । समंजंतु विश्वे देवा इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये । आ॰ गृ॰ १.८. । इति ॥

॥ सैषा सप्तचत्वारिंशी ॥

समंजंतु विश्वे देवाः समापो हृदयानि नौ ।
सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥४७॥
सं । अंजंतु । विश्वे । देवाः । सं । आपः । हृदयानि । नौ ।
सं । मातरिश्वा । सं । धाता । सं । ऊं इति । देष्ट्री । दधातु । नौ ॥४७॥

विश्वे देवाः सर्वे देवा नौ हृदयानि मानसानि समंजंतु । सम्यगंजंतु । अपगतदुःखादिक्लेशानि कृत्वा लौकिकवैदिकविषयेषु प्रकाशयुक्तानि कुर्वंत्वित्यर्थः । आपश्च समंजंतु । तथा मातरिश्वा नौ हृदयानि सं दधातु । आवयोर्बुद्धीः परस्परानुकूलाः करोत्वित्यर्थः । धाता च सं दधातु । देष्ट्री दात्री फलानां सरस्वतीत्यर्थः । सा च सं दधातु । संधानं करोतु ॥

॥ इत्यष्टमस्य तृतीयेऽष्टाविंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टके तृतीयोऽध्यायः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अष्टमाष्टकस्य चतुर्थोऽध्याय आरभ्यते। तत्र वि हीति त्रयोविंशत्यृचं द्वितीयं सूक्तं। वृषाकपिर्नामेंद्रस्य पुत्रः। स चेंद्राणींद्रश्चैते त्रयः संहताः संविवादं कृतवंतः। तत्र वि हि सोतोरसृक्षत किं सुबाहो स्वंगुर इंद्राणीमासु नारिष्विति द्वे उक्षणो हि मेऽयमेमीति चतस्र इत्येता नवर्चं इंद्रवाक्यानि। अतस्तासामिंद्र ऋषिः। परा हींद्रेति पंचावीरामिति द्वे वृषभो न तिग्मशृंग इत्याद्याश्चतस्र इत्येकादशर्च इंद्राण्या वाक्यानि। अतस्तासामिंद्राण्यृषिः। उवे अंब वृषाकपायि रेवति पर्शुर्ह नामेति तिस्रो वृषाकपेर्वाक्यानि। अतस्तासां वृषाकपिर्ऋषिः। सर्वं सूक्तमैंद्रं पंचपदापंक्तिच्छंदस्कं। तथा चानुक्रांतं। वि हि त्र्यधिकैंद्रो वृषाकपिरिंद्राणींद्रश्च समूदिरे पांक्तमिति ॥ षष्ठेऽहनि ब्राह्मणाच्छंसिन उक्थ्यशस्त्र एतत्सूक्तं। सूचितं च। अथ वृषाकपिं शंसेद्यथा होताज्याद्यां चतुर्थे। आ॰ ८.३.। इति ॥ यदि षष्ठेऽहन्युक्थस्तोत्राणि द्विपदासु न स्तुवीरन्सामगा यदि वेदमहरग्निष्टोमः स्यात्तदानीं ब्राह्मणाच्छंसी माध्यंदिने सवन आरंभणीयाभ्य ऊर्ध्वमेतत्सूक्तं शंसेद्विश्वजित्यपि। तथा च सूचितं। सुकीर्तिं ब्राह्मणाच्छंसी वृषाकपिं च पंक्तिशंसं। आ॰ ८.४.। इति ॥

॥ तत्र प्रथमा ॥

वि हि सोतोरसृक्षत नेंद्रं देवममंसत।
यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिंद्र उत्तरः ॥१॥
वि। हि। सोतोः। असृक्षत। न। इंद्रं। देवं। अमंसत।
यत्र। अमदत्। वृषाकपिः। अर्यः। पुष्टेषु। मत्ऽसखा। विश्वस्मात्। इंद्रः। उत्ऽतरः ॥१॥

सोतोः सोमाभिषवं कर्तुं व्यसृक्षत। यागं प्रति मया विसृष्टा अनुज्ञाताः स्तोतारो वृषाकपेर्यष्टारः। हीति पूरणः। तत्र देवं द्योतमानमिंद्रं मां नामंसत। मया प्रेरिताः संतोऽपि ते स्तोतारो न स्तुतवंतः। किंतु मम पुत्रं वृषाकपिमेव स्तुतवंतः। यत्र येषु पुष्टेषु सोमेन प्रवृद्धेषु यागेष्वर्यः स्वामी वृषाकपिर्मम पुत्रो मत्सखा मम सखिभूतः सन् अमदत् सोमपानेन हृष्टोऽभूत्। यद्यप्येवं तथापींद्रोऽहं विश्वस्मात्सर्वस्माज्जगत उत्तरः। उत्कृष्टतरः ॥ माधवभट्टास्तु वि हि सोतोरित्येषर्गिंद्राण्या

वाक्यमिति मन्यंते। तथा च तद्वचनं। इंद्राण्यै कल्पितं हविः कश्चिन्मृगोऽदूदुषदिंद्रपुत्रस्य वृषाकपेर्विषये वर्तमानः। तच्चेंद्रमिंद्राणी वदति। तस्मिन्पक्षे त्वस्या ऋचोऽयमर्थः। सोतोः सोमाभिषवं कर्तुं वि ह्यसृक्षत। उपरतसोमाभिषवा आसन्यजमाना इत्यर्थः। किंच मम पतिमिंद्रं देवं नामंसत। स्तोतारो न स्तुवंति। कुत्रेत्यत्राह। यत्र यस्मिन्देशे पुष्टेषु प्रवृद्धेषु धनेष्वर्यः स्वामी वृषाकपिरमदत्। मत्सखा मत्प्रियश्चेंद्रो विश्वस्मात्सर्वस्माज्जगत उत्तरः। उत्कृष्टतरः॥

॥ अथ द्वितीया ॥

परा हींद्र धावसि वृषाकपेरति व्यथिः।

नो अह प्र विंदस्यन्यत्र सोमपीतये विश्वस्मादिंद्र उत्तरः ॥२॥

परा। हि। इंद्र। धावसि। वृषाकपेः। अति। व्यथिः।

नो इति। अह। प्र। विंदसि। अन्यत्र। सोमऽपीतये। विश्वस्मात्। इंद्रः। उत्ऽतरः॥२॥

हे इंद्र त्वमत्यत्यंतं व्यथिश्चलितो वृषाकपेर्वृषाकपिं परा धावसि। प्रतिगच्छसि। अन्यत्र सोमपीतये सोमपानाय नो अह नैव च प्र विंदसि। प्रगच्छसीत्यर्थः। सोऽयमिंद्रो विश्वस्मादुत्तरः॥

॥ अथ तृतीया ॥

किमयं त्वां वृषाकपिश्चकार हरितो मृगः।

यस्मा इरस्यसीदु न्व१र्यो वा पुष्टिमद्वसु विश्वस्मादिंद्र उत्तरः ॥३॥

किं। अयं। त्वां। वृषाकपिः। चकार। हरितः। मृगः।

यस्मै। इरस्यसि। इत्। ऊं इति। नु। अर्यः। वा। पुष्टिऽमत्। वसु। विश्वस्मात्। इंद्रः।
उत्ऽतरः ॥३॥

हे इंद्र त्वां प्रति हरितो हरितवर्णो मृगो मृगभूतोऽयं वृषाकपिः। मृगजातिर्हि वृषाकपिः। किं प्रियं चकार। अकार्षीत्। यस्मै वृषाकपये पुष्टिमत्पोषयुक्तं वसु धनमर्यो वोदार इव स त्वं नु क्षिप्रमिरस्यसीत्। प्रयच्छस्येव। य इंद्रो विश्वस्मादुत्तरः॥

॥ अथ चतुर्थी ॥

यमिमं त्वं वृषाकपिं प्रियमिंद्राभिरक्षसि।

श्वा न्वस्य जंभिषदपि कर्णे वराहयुर्विश्वस्मादिंद्र उत्तरः ॥४॥

यं। इ॒मं। त्वं। वृ॒षाक॑पिं। प्रि॒यं। इं॒द्र॒। अ॒भि॒ऽरक्ष॑सि।

श्वा। नु। अ॒स्य॒। जं॒भि॒ष॒त्। अपि॑। कर्णे॑। व॒रा॒ह॒ऽयुः। विश्व॑स्मात्। इंद्रः॑। उत्ऽत॑रः॥४॥

हे इंद्र त्वं प्रियमिष्टं पुत्रं यमिमं वृषाकपिमभिरक्षसि परिपालयस्यस्यैनं वृषाकपिं। द्वितीयार्थे षष्ठी। वराहयुर्वराहमिच्छन् श्वा नु क्षिप्रं जंभिषत्। भक्षयतु। अपि च कर्णे गृह्णात्विति शेषः। श्वानो हि वराहमिच्छंति। सिद्धमन्यत्॥

॥ अथ पंचमी ॥

प्रि॒या त॒ष्टानि॑ मे क॒पिर्व्य॑क्ता॒ व्य॑दूदुषत्।

शिरो॒ न्व॑स्य राविषं॒ न सु॒गं दु॒ष्कृते॑ भुवं॒ विश्व॑स्मा॒दिंद्र॒ उत्त॑रः॥५॥

प्रि॒या। त॒ष्टानि॑। मे॒। क॒पिः। विऽअ॑क्ता। वि। अ॒दू॒दु॒ष॒त्।

शिरः॑। नु। अ॒स्य॒। रा॒वि॒षं॒। न। सु॒ऽगं। दुः॒ऽकृते॑। भु॒वं॒। विश्व॑स्मात्। इंद्रः॑। उत्ऽत॑रः॥५॥

मे मह्यमिंद्राण्यै तष्टा तष्टानि यजमानैः कल्पितानि प्रिया प्रियाणि व्यक्ता व्यक्तान्याज्यैर्विशेषेणाक्तानि हवींषि कश्चिद्वृषाकपेर्विषये वर्तमानः कपिर्व्यदूदुषत्। दूषयामास। ततोऽहमस्य तत्कपिस्वामिनो वृषाकपेः शिरो नु क्षिप्रं राविषं। लुनीयां। दुष्कृते दुष्टस्य कर्मणः कर्त्रे वृषाकपयेऽस्मै सुगं सुखं न भुवं। अहं न भवेयं। अस्मै सुखप्रदात्री न भवामीत्यर्थः। अस्या मम पतिरिंद्रो विश्वस्मादुत्तरः॥

॥ इत्यष्टमस्य चतुर्थे प्रथमो वर्गः ॥

॥ अथ षष्ठी ॥

न मत्स्त्री सु॑भ॒सत्त॑रा॒ न सु॒याशु॑तरा भुवत्।

न मत्प्रति॑च्यवीयसी॒ न सक्थ्युद्य॑मीयसी॒ विश्व॑स्मा॒दिंद्र॒ उत्त॑रः॥६॥

न। मत्। स्त्री। सु॒भ॒सत्ऽत॑रा। न। सु॒याशु॑ऽतरा। भु॒व॒त्।

न। मत्। प्रति॑ऽच्यवीयसी। न। सक्थि॑। उत्ऽय॑मीयसी। विश्व॑स्मात्। इंद्रः॑। उत्ऽत॑रः॥६॥

मन्मत्तोऽन्या स्त्री नारी सुभसत्तरातिशयेन सुभगा न भुवत्। न भवति। नास्तीत्यर्थः। किंच मत्तोऽन्या स्त्री सुयाशुतरातिशयेन सुसुखातिशयेन सुपुत्रा वा न भवति। तथा च मंत्रांतरं। ददाति मह्यं यादुरी याशूनां भोज्या शता। १. १२६. ६.।

इति। किंच मन्मत्तोऽन्या प्रतिच्यवीयसी पुमांसं प्रति शरीरस्यात्यंतं च्यावयित्री नास्ति। किंच मत्तोऽन्या स्त्री सक्थ्युद्यमीयसी संभोगेऽत्यंतमुत्क्षेप्त्री नास्ति। न मत्तोऽन्या काचिदपि नारी मैथुनेऽनुगुणं सक्थ्युद्यच्छतीत्यर्थः। मम पतिरिंद्रो विश्वस्मादुत्तरः। उत्कृष्टः॥

॥ अथ सप्तमी ॥

उवे अंब सुलाभिके यथेवांग भविष्यति।
भसन्मे अंब सक्थि मे शिरो मे वीव हृष्यति विश्वस्मादिंद्र उत्तरः ॥७॥

उवे। अंब। सुलाभिके। यथाऽइव। अंग। भविष्यति।
भसत्। मे। अंब। सक्थि। मे। शिरः। मे। विऽइव। हृष्यति। विश्वस्मात्। इंद्रः। उत्ऽतरः ॥७॥

एवमिंद्राण्या शप्तो वृषाकपिर्ब्रवीति। उवे इति संबोधनार्थो निपातः। हे अंब मातः सुलाभिके शोभनलाभे त्वया यथैव येन प्रकारेणैवोक्तं तथैव तदंग क्षिप्रं भविष्यति। भवतु। किमनेन त्वदनुप्रीतिकारिणा ग्रहेण मम प्रयोजनं। किंच मे मम पितुस्त्वदीयो भसद्भग उपयुज्यतां। किंच मम पितुस्त्वदीयं सक्थि चोपयुज्यतां। किंच मे मम पितरमिंद्रं त्वदीयं शिरश्च प्रियालापेन वीव यथा कोकिलादिः पक्षी तद्वद्धृष्यति। हर्षयतु। मम पितेंद्रो विश्वस्मादुत्तरः॥

॥ अथाष्टमी ॥

किं सुबाहो स्वंगुरे पृथुष्टो पृथुजाघने।
किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं विश्वस्मादिंद्र उत्तरः ॥८॥

किं। सुबाहो इति सुऽबाहो। सुऽअंगुरे। पृथुस्तो इति पृथुऽस्तो। पृथुऽजघने।
किं। शूरऽपत्नि। नः। त्वं। अभि। अमीषि। वृषाकपिं। विश्वस्मात्। इंद्रः। उत्ऽतरः॥८॥

क्रुद्धामिंद्र उपशमयति। हे सुबाहो हे शोभनबाहो स्वंगुरे शोभनांगुलिके पृथुष्टो पृथुकेशसंघाते पृथुजघने विस्तीर्णजघने शूरपत्नि वीरभार्ये हे इंद्राणि त्वं नोऽस्मदीयं वृषाकपिं किमर्थमभ्यमीषि। अभिक्रुध्यसि। एकः किंशब्दः। यस्य पितेंद्रोऽहं विश्वस्मादुत्तरः॥

॥ अथ नवमी ॥

अवीरामिव मामयं शरारुरभि मन्यते ।

उताहमस्मि वीरिणींद्रपत्नी मरुत्सखा विश्वस्मादिंद्र उत्तरः ॥ ९ ॥

अवीराऽइव । मां । अयं । शरारुः । अभि । मन्यते ।

उत । अहं । अस्मि । वीरिणी । इंद्रऽपत्नी । मरुत्ऽसखा । विश्वस्मात् । इंद्रः । उत्ऽतरः ॥ ९ ॥

पुनरिंद्रमिंद्राणी ब्रवीति । शरारुर्घातुको मृगोऽयं वृषाकपिर्मामिंद्राणीमवीरामिवाभि मन्यते । विजानाति । उतापि चेंद्रपत्नींद्रस्य भार्याहमिंद्राणी वीरिणी पुत्रवती मरुत्सखा मरुद्भिर्युक्ता चास्मि । भवामि । यस्या मम पतिरिंद्रो विश्वस्मादुत्तरः ॥

॥ अथ दशमी ॥

संहोत्रं स्म पुरा नारी समनं वाव गच्छति ।

वेधा ऋतस्य वीरिणींद्रपत्नी महीयते विश्वस्मादिंद्र उत्तरः ॥ १० ॥

संऽहोत्रं । स्म । पुरा । नारी । समनं । वा । अव । गच्छति ।

वेधाः । ऋतस्य । वीरिणी । इंद्रऽपत्नी । महीयते । विश्वस्मात् । इंद्रः । उत्ऽतरः ॥ १० ॥

नारी स्यृतस्य सत्यस्य वेधा विधात्री वीरिणी पुत्रवतींद्रपत्नींद्रस्य भार्येंद्राणी संहोत्रं स्म समीचीनं यज्ञं खलु समनं वा संग्रामं । समनमिति संग्रामनामसु पाठात् । अव प्रति पुरा गच्छति । महीयते स्तोतृभिः स्तूयते च । तस्या मम पतिरिंद्रो विश्वस्मादुत्तरः ॥

॥ इत्यष्टमस्य चतुर्थे द्वितीयो वर्गः ॥

॥ अथैकादशी ॥

इंद्राणीमासु नारिषु सुभगामहमश्रवं ।

नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिंद्र उत्तरः ॥ ११ ॥

इंद्राणीं । आसु । नारिषु । सुऽभगां । अहं । अश्रवं ।

नहि । अस्याः । अपरं । चन । जरसा । मरते । पतिः । विश्वस्मात् । इंद्रः । उत्ऽतरः ॥ ११ ॥

अथेंद्राणीमिंद्रः स्तौति । आसु सौभाग्यवत्तया प्रसिद्धासु नारिषु स्त्रीषु स्त्रीणां मध्य इंद्राणीं सुभगां सौभाग्यवतीमहमिंद्रोऽश्रवं । अश्रौषं । किंचास्या इंद्राण्याः

पतिः पालको विश्वस्मादुत्तर उत्कृष्टतर इंद्रोऽपरं चनान्यद्भूतजातमिव जरसा वयोहान्या न हि मरते। न खलु म्रियते। यद्वेदं वृषाकपेर्वाक्यं। तस्मिन्पक्षे त्वहमिति शब्दो वृषाकपिपरतया योज्यः। अन्यत्समानं॥

॥ अथ द्वादशी ॥

नाहमिंद्राणि रारण सख्युर्वृषाकपेर्ऋते।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिंद्र उत्तरः॥१२॥
न। अहं। इंद्राणि। रारण। सख्युः। वृषाकपेः। ऋते।
यस्य। इदं। अप्यं। हविः। प्रियं। देवेषु। गच्छति। विश्वस्मात्। इंद्रः। उत्ऽतरः॥१२॥

हे इंद्राणि अहमिंद्रः सख्युर्मम सखिभूताद्वृषाकपेर्ऋते प्रियं वृषाकपिं विना न रारण। न रमे। अयमप्सु भवमद्भिर्वा सुसंस्कृतं प्रियं प्रीतिकरमिदमुपस्थितं हविर्देवेषु देवानां मध्ये यस्य ममेंद्रस्य सकाशं गच्छति। यश्चाहमिंद्रः सर्वस्मादुत्तरः। यद्वायमर्थः। हे इंद्राणि वृषाकपेः सख्युरिंद्रादृतेऽहं वृषाकपिर्न रारण। न रमे। अन्यत्समानं॥

॥ अथ त्रयोदशी ॥

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे।
घसत्त इंद्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिंद्र उत्तरः॥१३॥
वृषाकपायि। रेवति। सुऽपुत्रे। आत्। ऊं इति। सुऽस्नुषे।
घसत्। ते। इंद्रः। उक्षणः। प्रियं। काचित्ऽकरं। हविः। विश्वस्मात्। इंद्रः। उत्ऽतरः॥१३॥

हे वृषाकपायि। कामानां वर्षकत्वादभीष्टदेशगमनाच्चेंद्रो वृषाकपिः। तस्य पत्नि। यद्वा वृषाकपेर्मम मातरित्यर्थः। रेवति धनवति सुपुत्रे शोभनपुत्रे सुस्नुषे शोभनस्नुषे हे इंद्राणि ते तवायमिंद्र उक्षणः सेचनसमर्थान् आदनंतरमेव। शीघ्रमेवेत्यर्थः। पशून्घसत्। प्राश्नातु। किंच काचित्करं। कं सुखं। तस्याचित् संघः। तत्करं हविः प्रियमिष्टं कुर्विति शेषः। किंच ते पतिरिंद्रो विश्वस्मादुत्तरः। तथा च यास्कः। वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा। स्नुषा साधुसादिनीति वा साधुसानिनीति वा। प्रियं कुरुष्व सुखाचयकरं हविः सर्वस्माद्य इंद्र उत्तरः। नि॰१२.९.। इति॥

॥ अथ चतुर्दशी ॥

उक्ष्णो हि मे पंचदश साकं पचंति विंशतिं ।
उताहमद्मि पीव इदुभा कुक्षी पृणंति मे विश्वस्मादिंद्र उत्तरः ॥१४॥
उक्ष्णः । हि । मे । पंचऽदश । साकं । पचंति । विंशतिं ।
उत । अहं । अद्मि । पीवः । इत् । उभा । कुक्षी इति । पृणंति । मे । विश्वस्मात् ।
इंद्रः । उत्ऽतरः ॥१४॥

अथेंद्रो ब्रवीति । मे मदर्थं पंचदश पंचदशसंख्याकान् विंशतिं विंशतिसंख्याकांश्चोक्ष्णो वृषभान् साकं सह मम भार्ययेंद्राण्या प्रेरिता यष्टारः पचंति । उतापि चाहमद्मि । तान्भक्षयामि । जग्ध्वा चाहं पीव इत् स्थूल एव भवामीति शेषः । किंच मे ममोभोभौ कुक्षी पृणंति । सोमेन पूरयंति यष्टारः । सोऽहमिंद्रः सर्वस्मादुत्तरः ॥

॥ अथ पंचदशी ॥

वृषभो न तिग्मशृंगोऽतर्यूथेषु रोरुवत् ।
मंथस्त इंद्र शं हृदे यं ते सुनोति भावयुर्विश्वस्मादिंद्र उत्तरः ॥१५॥
वृषभः । न । तिग्मऽशृंगः । अंतः । यूथेषु । रोरुवत् ।
मंथः । ते । इंद्र । शं । हृदे । यं । ते । सुनोति । भावयुः । विश्वस्मात् । इंद्रः । उत्ऽतरः ॥१५॥

अथेंद्राणी ब्रवीति । तिग्मशृंगस्तीक्ष्णशृंगो वृषभो न यथा वृषभो यूथेषु गोसंघेष्वंतर्मध्ये रोरुवच्छब्दं कुर्वन् गा अभिरमयति तथा हे इंद्र त्वं मामभिरमयेति शेषः । किंच । हे इंद्र ते तव हृदे हृदयाय मंथो दध्नो मथनवेलायां शब्दं कुर्वन् शं शंकरो भवत्विति शेषः । किंच । ते तुभ्यं यं सोमं भावयुर्भावमिच्छंतींद्राणी सुनोत्यभिषुणोति सोऽपि शंकरो भवत्वित्यर्थः । मम पतिरिंद्रो विश्वस्मादुत्तरः ॥

॥ इत्यष्टमस्य चतुर्थे तृतीयो वर्गः ॥

॥ अथ षोडशी ॥

न सेशे यस्य रंबतेऽतरा सक्थ्याऽकपृत् ।
सेदीशे यस्य रोमशं निषेदुषो विजृंभते विश्वस्मादिंद्र उत्तरः ॥१६॥

न । सः । ईशे । यस्यं । रंबंते । अंतरा । सक्थ्यां । कपृंत् ।

सः । इत् । ईशे । यस्यं । रोमशं । निऽसेदुषंः । विऽजृंभते । विश्वंस्मात् । इंद्रंः । उत्ऽतंरः ॥१६॥

हे इंद्र स जनो नेशे मैथुनं कर्तुं नेष्टे न शक्नोति यस्य जनस्य कपृच्छेपः सक्थ्या सक्थिनी अंतरा रंबते लंबते । सेत् स एव स्त्रीजन ईशे मैथुनं कर्तुं शक्नोति यस्य जनस्य निषेदुषः शयानस्य रोमशमुपस्थं विजृंभते विवृतं भवति । यस्य च पतिरिंद्रो विश्वस्मादुत्तरः ॥

॥ अथ सप्तदशी ॥

न सेशे यस्य रोमशं निषेदुषो विजृंभते ।

सेदीशे यस्य रंबतेऽंतरा सक्थ्या३ कपृद्विश्वंस्मादिंद्र उत्तरः ॥१७॥

न । सः । ईशे । यस्यं । रोमशं । निऽसेदुषंः । विऽजृंभते ।

सः । इत् । ईशे । यस्यं । रंबंते । अंतरा । सक्थ्यां । कपृंत् । विश्वंस्मात् । इंद्रंः । उत्ऽतंरः ॥१७॥

स जनो नेशे मैथुनं कर्तुं नेष्टे यस्य जनस्य निषेदुषः शयानस्य रोमशमुपस्थं विजृंभते विवृतं भवति । सेत् स एव जन ईशे मैथुनं कर्तुं शक्नोति यस्य जनस्य कपृत् प्रजननं सक्थ्या सक्थिनी अंतरा रंबते लंबते । सिद्धमन्यत् । पूर्वोक्तव्यतिरेकोऽत्र द्रष्टव्यः । पूर्वस्यामृचि यियप्सुरिंद्राणींद्रं वदति अत्र तयियप्सुरिंद्र इंद्राणीं वदतीत्यविरोधः ॥

॥ अथाष्टादशी ॥

अयमिंद्र वृषाकपिः परस्वंतं हतं विदत् ।

असिं सूनां नवं चरुमादेधस्यान आचितं विश्वंस्मादिंद्र उत्तरः ॥१८॥

अयं । इंद्र । वृषाकपिः । परस्वंतं । हतं । विदत् ।

असिं । सूनां । नवं । चरुं । आत् । एधंस्य । अनंः । आऽचितं । विश्वंस्मात् । इंद्रंः ।
उत्ऽतंरः ॥१८॥

हे इंद्र अयं वृषाकपिः परस्वंतं परस्वमात्मनो विषयेऽवर्तमानं हतं हिंसितं विदत् । विंदतु । तथा हतस्य विशसनायासिं शस्त्रं सूनामुद्धानं पाकार्थे नवं प्रत्यग्रं चरुं भांडमादनंतरमेधस्य काष्ठस्याचितं पूर्णमनः शकटं च विंदतु । मम पतिरिंद्रो विश्वस्मादुत्तरः ॥

॥ अथैकोनविंशी ॥

अयमेमि विचाकशद्विचिन्वन्दासमार्यं ।

पिबामि पाकसुत्वनोऽभि धीरमचाकशं विश्वस्मादिंद्र उत्तरः ॥१९॥

अयं । एमि । विऽचाकशत् । विऽचिन्वन् । दासं । आर्यं ।

पिबामि । पाकऽसुत्वनः । अभि । धीरं । अचाकशं । विश्वस्मात् । इंद्रः । उत्ऽतरः ॥१९॥

अथेंद्रो ब्रवीति । विचाकशत् पश्यन्यजमानान् दासमुपक्षपयितारमसुरमार्यमपि च विचिन्वन् पृथक्कुर्वन् अयमहमिंद्र एमि । यज्ञं प्रति गच्छामि । यज्ञं गत्वा च पाकसुत्वनः । पचतीति पाकः । सुनोतीति सुत्वा । हविषां पक्तुः सोमस्याभिषोतुर्यजमानस्य पाकेन विपक्केन मनसा सोमस्याभिषोतुर्वा यजमानस्य संबंधिनं सोमं पिबामि । तथा धीरं धीमंतं यजमानमभ्यचाकशं । अभिपश्यामि योऽहमिंद्रो विश्वस्मादुत्तरः ॥

॥ अथ विंशी ॥

धन्व च यत्कृंतत्रं च कति स्वित्ता वि योजना ।

नेदीयसो वृषाकपेऽस्तमेहि गृहाँ उप विश्वस्मादिंद्र उत्तरः ॥२०॥

धन्व । च । यत् । कृंतत्रं । च । कति । स्वित् । ता । वि । योजना ।

नेदीयसः । वृषाकपे । अस्तं । आ । इहि । गृहान् । उप । विश्वस्मात् । इंद्रः । उत्ऽतरः ॥२०॥

धन्व निरुदकोऽरण्यरहितो देशः । कृंतत्रं कर्तनीयमरण्यं । यद्यच्च धन्व च कृंतत्रं च भवति । मृगोद्वासमरण्यमेवंविधं भवति न त्वत्यंतविपिनं । तस्य शत्रुनिलयस्यास्मदीयगृहस्य च मध्ये कति स्वित्ता तानि योजना योजनानि स्थितानि । नात्यंतदूरे तद्भवतीत्यर्थः । अतो नेदीयसोऽतिशयेन समीपस्थाच्छत्रुनिलयात् हे वृषाकपे त्वमस्तमस्माकं गृहं व्येहि । विशेषेणागच्छ । आगत्य च गृहान्यज्ञगृहानुपगच्छ । यतोऽहमिंद्रः सर्वस्मादुत्कृष्टः ॥

॥ अथैकविंशी ॥

पुनरेहि वृषाकपे सुविता कल्पयावहै ।

य एषः स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिंद्र उत्तरः ॥२१॥

पुनः । आ । इहि । वृषाकपे । सुविता । कल्पयावहै ।

यः । एषः । स्वप्नऽनंशनः । अस्तं । एषि । पथा । पुनः । विश्वस्मात् । इंद्रः । उत्ऽतरः ॥२१॥

आगत्य प्रतिगतं वृषाकपिमिंद्रो ब्रवीति । हे वृषाकपे त्वं पुनरेहि । अस्मान्प्रत्यागच्छ । आगते च त्वयि सुविता सुवितानि कल्याणानि त्वच्चित्तप्रीतिकराणि कर्माणि कल्पयावहै । इंद्राण्यहं चावामुभौ पर्यालोच्य कुर्याव । किंच यः स्वप्ननंशन उदयेन सर्वस्य प्राणिनः स्वप्नानां नाशयितादित्यः स एष त्वं पथा मार्गेणास्तमात्मीयमावासं पुनरेषि । गच्छसि । यतोऽहमिंद्रो विश्वस्मादुत्तरः । तथा च यास्कः । सुप्रसूतानि वः कर्माणि कल्पयावहै य एषः स्वप्ननंशनः स्वप्नान्नाशयत्यादित्य उदयेन सोऽस्तमेषि पथा पुनः । नि॰ १२.२८. । इति ॥

॥ अथ द्वाविंशी ॥

यदुदंचो वृषाकपे गृहमिंद्राजगंतन ।

क्व१स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिंद्र उत्तरः ॥२२॥

यत् । उदंचः । वृषाकपे । गृहं । इंद्र । अजगंतन ।

क्व । स्यः । पुल्वघः । मृगः । कं । अगन् । जनऽयोपनः । विश्वस्मात् । इंद्रः । उत्ऽतरः ॥२२॥

गत्वा पुनरागतं वृषाकपिमिंद्रः पृच्छति । हे इंद्र परमैश्वर्यवन् हे वृषाकपे यूयमुदंच उद्गामिनः संतो मद्गृहमजगंतन । आगच्छ । एकस्यापि बहुवचनं पूजार्थं । तत्रभवतः संबंधी पुल्वघो बहूनां भौमरसानामत्ता स्यः स मृगः क्वाभूत् । जनयोपनो जनानां मोदयिता मृगः कं वा देशमगन् । अगच्छत् । सोऽहमिंद्रो विश्वस्मादुत्तरः ॥ यद्वेंद्राणीवाक्यमिदं । अत्र यास्कः । यदुदंचो वृषाकपे गृहमिंद्राजगमत् क्व स्य पुल्वघो मृगः क्व स बह्वादी मृगः । मृगो मार्ष्टेर्गतिकर्मणः । कमगमद्देशं जनयोपनः । नि॰ १३.३. । इति ॥

॥ अथ त्रयोविंशी ॥

पर्शुर्ह नाम मानवी साकं ससूव विंशतिं ।

भद्रं भल त्यस्या अभूद्यस्या उदरमामयद्विश्वस्मादिंद्र उत्तरः ॥२३॥

पर्शुः । ह । नाम । मानवी । साकं । ससूव । विंशतिं ।

भद्रं । भल । त्यस्यै । अभूत् । यस्याः । उदरं । आमयत् । विश्वस्मात् । इंद्रः । उत्ऽतरः ॥२३॥

इंद्रविसृज्यमानमनेन मंत्रेण वृषाकपिराशास्ते। हे भलेंद्रेण विसृज्यमान शर। भलतिर्भेदनकर्मा। पर्शुर्नाम मृगी। हेति पूरणः। मानवी मनोर्दुहितेयं विंशतिं विंशतिसंख्याकान्पुत्रान् साकं सह ससूव। अजीजनत्। त्यस्यै तस्यै भद्रं भजनीयं कल्याणमभूत्। भवतु। लोडर्थे लुङ्। यस्या उदरमामयत्। गर्भस्थैर्विंशतिभिः पुत्रैः पुष्टमासीत्। मम पितेंद्रो विश्वस्मादुत्तरः ॥

॥ इत्यष्टमस्य चतुर्थे चतुर्थो वर्गः ॥

रक्षोहणमिति पंचविंशत्यृचं तृतीयं सूक्तं। पायुर्नाम भारद्वाज ऋषिः। द्वाविंशाद्याश्चतस्रोऽनुष्टुभः। शिष्टा एकविंशतिस्त्रिष्टुभः। रक्षोहाग्निर्देवता। तथा चानुक्रांतं। रक्षोहणं पंचाधिका पायुराग्नेयं राक्षोघ्नं चतुरनुष्टुबंतमिति। गतः सूक्तविनियोगः। अंगाराभिविहरणे परि त्वाग्न इत्येषा जप्या। सूचितं च। धिष्ण्यावतामित्यादिना परि त्वाग्ने पुरं वयमित्यंतेन। आ॰ ५.१३.॥

॥ तत्र प्रथमा ॥

रक्षोहणं वाजिनमा जिंघर्मि मित्रं प्रथिष्ठमुप यामि शर्म।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तं ॥१॥
रक्षःऽहनं। वाजिनं। आ। जिघर्मि। मित्रं। प्रथिष्ठं। उप। यामि। शर्म।
शिशानः। अग्निः। क्रतुऽभिः। संऽइद्धः। सः। नः। दिवा। सः। रिषः। पातु। नक्तं ॥१॥

रक्षोहणं रक्षसां हंतारं वाजिनं बलवंतमन्नवंतं वाग्निमा जिघर्मि। घृतेनाजुहोमि। किंच। मित्रं यजमानानां सखायं प्रथिष्ठं पृथुतमं शर्म गृहमुप यामि। उपगच्छामि। सोऽयमग्निः शिशानो ज्वालास्तीक्ष्णीकुर्वन् क्रतुभिः कर्मपरैः पुरुषैः समिद्धः प्रज्वालितो भवति। किंच सोऽग्निर्नोऽस्मान्दिवाहनि रिषो हिंसकाद्रक्षसः पातु। रक्षतु। सोऽग्निर्नक्तं रात्रौ चास्मान्रक्षसः पातु ॥

॥ अथ द्वितीया ॥

अयोदंष्ट्रो अर्चिषा यातुधानानुप स्पृश जातवेदः समिद्धः।
आ जिह्वया मूरदेवान्रभस्व क्रव्यादो वृक्त्व्यपि धत्स्वासन् ॥२॥
अयःऽदंष्ट्रः। अर्चिषा। यातुऽधानान्। उप। स्पृश। जातऽवेदः। संऽइद्धः।
आ। जिह्वया। मूरऽदेवान्। रभस्व। क्रव्यऽअदः। वृक्त्वी। अपि। धत्स्व। आसन् ॥२॥

हे जातवेदो जातधन जातप्रज्ञ वा त्वं समिद्धः सम्यग्दीप्तोऽयोदंष्ट्रोऽयोमयदंष्ट्रः। तीक्ष्णदंष्ट्रः सन्नित्यर्थः। यातुधानान्राक्षसानर्चिषा ज्वालयोप स्पृश। संदहेत्यर्थः। किंच त्वं मूरदेवान् मूढदेवान्मारकव्यापारान्राक्षसाञ्जिह्वया ज्वालया रभस्व। मारयेत्यर्थः। मारयित्वा च क्रव्यादो मांसभक्षकान्राक्षसान्वृक्त्वी छित्त्वासन् आस्येऽपि धत्स्व। अपिधेहि। आच्छादयेत्यर्थः॥

॥ अथ तृतीया ॥

उभोभयाविन्नुप धेहि दंष्ट्रा हिंस्रः शिशानोऽवरं परं च।

उतांतरिक्षे परि याहि राजञ्जंभैः सं धेह्यभि यातुधानान्॥३॥

उभा। उभयाविन्। उप। धेहि। दंष्ट्रा। हिंस्रः। शिशानः। अवरं। परं। च।

उत। अंतरिक्षे। परि। याहि। राजन्। जंभैः। सं। धेहि। अभि। यातुऽधानान्॥३॥

हे उभयाविन् उभाभ्यां दंष्ट्राभ्यां युक्ताग्ने त्वं हिंस्रो राक्षसानां हिंसकस्त्वमुभोभे दंष्ट्रा दंष्ट्रे शिशानस्तीक्ष्णीकुर्वन्नुप धेहि। वधार्हेषु राक्षसेषु प्रतिष्ठापय। किंचावरं परं च जगद्रक्ष। उतापि च हे राजन् दीप्ताग्ने त्वमंतरिक्षे स्थितान्राक्षसान्परि याहि। परिगच्छ। परिगत्य च तान्यातुधानान्राक्षसाञ्जंभैर्भक्षणसाधनभूताभिर्दंष्ट्राभिरभि सं धेहि। संयोजय। भक्षयेत्यर्थः॥

॥ अथ चतुर्थी ॥

यज्ञैरिषूः संनममानो अग्ने वाचा शल्याँ अशनिभिर्दिहानः।

ताभिर्विध्य हृदये यातुधानान्प्रतीचो बाहून्प्रति भङ्ध्येषां॥४॥

यज्ञैः। इषूः। संऽनममानः। अग्ने। वाचा। शल्यान्। अशनिऽभिः। दिहानः।

ताभिः। विध्य। हृदये। यातुऽधानान्। प्रतीचः। बाहून्। प्रति। भङ्ग्धि। एषां॥४॥

हे अग्ने त्वं यज्ञैरस्मदीयैर्बलकरैर्यागैर्वाचास्मदीयया स्तुत्या चेषूर्वक्रान्बाणान् संनममानः संनमयन् शल्यान् तासां शल्यानशनिभिर्दीप्तिभिः दिहानस्तीक्ष्णीकुर्वन् ताभिरिषुभिर्यातुधानान्राक्षसान्हृदये विध्य। तत एषां यातुधानानां संबंधिनः प्रतीचो युद्धाय त्वां प्रतिगतान्बाहून्प्रति भङ्ग्धि। प्रत्यामर्दय॥

॥ अथ पंचमी ॥

अग्ने त्वचं यातुधानस्य भिंधि हिंस्राशनिर्हरसा हंत्वेनं ।

प्र पर्वाणि जातवेदः शृणीहि क्रव्यात्क्रविष्णुर्वि चिनोतु वृक्णं ॥५॥

अग्ने । त्वचं । यातुऽधानस्य । भिंधि । हिंस्रा । अशनिः । हरसा । हंतु । एनं ।

प्र । पर्वाणि । जातऽवेदः । शृणीहि । क्रव्यऽअत् । क्रविष्णुः । वि । चिनोतु । वृक्णं ॥५॥

हे जातवेदो जातधन जातप्रज्ञ वाग्ने त्वं यातुधानस्य राक्षसस्य त्वचं भिंधि । दारय । एनं भिन्नत्वचं यातुधानं हिंस्रा हिंसनशीलं तवाशनिर्वज्रं हरसा तापेन हंतु । हिनस्तु । हतस्य राक्षसस्य पर्वाणि शरीरपर्वाणि च प्र शृणीहि । छिंद्धीत्यर्थः । छिन्नेषु च शरीरसंबंधिषु सत्सु वृक्णं छिन्नसंधिमेनं यातुधानं क्रविष्णुर्मांसमिच्छन् क्रव्याद् मांसभक्षको वृकादिर्वि चिनोतु । भक्षयत्वित्यर्थः ॥

॥ इत्यष्टमस्य चतुर्थे पंचमो वर्गः ॥

॥ अथ षष्ठी ॥

यत्रेदानीं पश्यसि जातवेदस्तिष्ठंतमग्न उत वा चरंतं ।

यद्वांतरिक्षे पथिभिः पतंतं तमस्ता विध्य शर्वा शिशानः ॥६॥

यत्र । इदानीं । पश्यसि । जातऽवेदः । तिष्ठंतं । अग्ने । उत । वा । चरंतं ।

यत् । वा । अंतरिक्षे । पथिऽभिः । पतंतं । तं । अस्ता । विध्य । शर्वा । शिशानः ॥६॥

हे जातवेद उत्पन्नप्रज्ञाग्ने त्वं यत्र पृथिव्यां तिष्ठंतमुतापि च चरंतं यद्वांतरिक्षे पथिभिराकाशमार्गैः पतंतं गच्छंतं यातुधानमिदानीं संप्रति पश्यसि तं यातुधानमस्ता शराणां क्षेप्ता त्वं शिशानः शरांस्तीक्ष्णीकुर्वन् शर्वा शरेण विध्य ॥

॥ अथ सप्तमी ॥

उतालब्धं स्पृणुहि जातवेद आलेभानादृष्टिभिर्यातुधानात् ।

अग्ने पूर्वो नि जहि शोशुचान आमादः क्ष्विंकास्तमदंत्वेनीः ॥७॥

उत । आऽलब्धं । स्पृणुहि । जातऽवेदः । आऽलेभानात् । ऋष्टिऽभिः । यातुऽधानात् ।

अग्ने । पूर्वः । नि । जहि । शोशुचानः । आमऽअदः । क्ष्विंकाः । तं । अदंतु । एनीः ॥७॥

उतापि च हे जातवेदोऽग्ने त्वमालब्धं हंतुं हस्ताभ्यामारब्धं साधुं मां स्तोतारं

यष्टारं वालेभानादालभमानाद्यातुधानाद्राक्षसाद्धेतिभिरात्मीयैरायुधविशेषैः स्पृणुहि। पारय। रक्षेत्यर्थः। किंच पूर्वो मुख्यस्त्वं शोशुचानः प्रज्वलन् नि जहि। मां हंतुमुद्युक्तं यातुधानं मारय। किंच तं यातुधानमामादोऽपक्वस्य मांसस्य भक्षकाः क्ष्विंकाः शब्दकारिण्यः। ट्विक्ष्व शब्दे। यद्वा क्ष्विंका नाम पक्षिविशेषाः। एनीर्गच्योऽदंतु। भक्षयंतु॥

॥ अथाष्टमी ॥

इह प्र ब्रूहि यतमः सो अग्ने यो यातुधानो य इदं कृणोति।
तमा रभस्व समिधा यविष्ठ नृचक्षसश्चक्षुषे रंधयैनं ॥८॥

इह। प्र। ब्रूहि। यतमः। सः। अग्ने। यः। यातुऽधानः। यः। इदं। कृणोति।
तं। आ। रभस्व। संऽइधा। यविष्ठ। नृऽचक्षसः। चक्षुषे। रंधय। एनं॥८॥

हे यविष्ठ युवतमाग्ने यो यातुधानो राक्षसोऽस्मद्यज्ञविघ्नकारी यश्चान्योऽपि पिशाचादिरिदं यज्ञदूषणादि करोति स यतमः। तमबवधारणार्थे। इहास्मिंस्त्वद्विषययागकर्मणि वर्तमानाय मह्यं प्र ब्रूहि। तं पापकारिणं समिधा स्वकीयेन तेजसा रभस्व। हंतुं प्रारभस्व। तत एनं पापिष्ठं नृचक्षसो नृणां द्रष्टुस्तव चक्षुषे तेजसे रंधय। वशं नय। तेजसा संदहेत्यर्थः॥

॥ अथ नवमी ॥

तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्रांचं वसुभ्यः प्र णय प्रचेतः।
हिंस्रं रक्षांस्यभि शोशुचानं मा त्वा दभन्यातुधाना नृचक्षः ॥९॥

तीक्ष्णेन। अग्ने। चक्षुषा। रक्ष। यज्ञं। प्रांचं। वसुऽभ्यः। प्र। नय। प्रचेत इति प्रऽचेतः।
हिंस्रं। रक्षांसि। अभि। शोशुचानं। मा। त्वा। दभन्। यातुऽधानाः। नृऽचक्षः॥९॥

हे अग्ने त्वं तीक्ष्णेन तिग्मेन चक्षुषा तेजसा यज्ञमस्मदीयं यागं रक्ष। पालय। किंच। हे प्रचेतः प्रकृष्टज्ञानाग्ने प्रांचं प्रांचितारं यज्ञं वसुभ्यो वसूनामर्थाय प्र णय। प्रकर्षेण नय। किंच हे नृचक्षो नृणां द्रष्टरग्ने रक्षांसि हिंस्रं हिंसनशीलमभि शोशुचानमभिप्रदीप्तं त्वा त्वां यातुधाना राक्षसा मा दभन्। मा हिंसिषुः॥

॥ अथ दशमी ॥

नृचक्षा रक्षः परि पश्य विक्षु तस्य त्रीणि प्रति शृणीह्यग्रा।
तस्याग्ने पृष्टीर्हरसा शृणीहि त्रेधा मूलं यातुधानस्य वृश्च ॥१०॥

नृऽचक्षाः। रक्षः। परि। पश्य। विक्षु। तस्य। त्रीणि। प्रति। शृणीहि। अग्रा।
तस्य। अग्ने। पृष्टीः। हरसा। शृणीहि। त्रेधा। मूलं। यातुऽधानस्य। वृश्च ॥१०॥

हे अग्ने नृचक्षा नृणां द्रष्टा त्वं विक्षु मनुष्येषु हिंसकत्वेन वर्तमानं रक्षो राक्षसं परि पश्य। सर्वतोऽवलोकय। अवलोक्य च तस्य रक्षसस्त्रीण्यग्राग्राणि शिरांसि प्रति शृणीहि। छिंद्धीत्यर्थः। ततस्तस्य रक्षसः पृष्टीः पार्श्वस्थान्राक्षसानपि हरसा स्वकीयेन तेजसा शृणीहि। मारय। एवं त्रेधा यातुधानस्य तस्य राक्षसस्य मूलं पादं वृश्च। छिंद्धि ॥

॥ इत्यष्टमस्य चतुर्थे षष्ठो वर्गः ॥

॥ अथैकादशी ॥

त्रिर्यातुधानः प्रसितिं त एत्वृतं यो अंग्ने अनृतेन हंति।
तमर्चिषा स्फूर्जयंज्जातवेदः समक्षमेनं गृणते नि वृंङ्धि ॥११॥

त्रिः। यातुऽधानः। प्रऽसितिं। ते। एतु। ऋतं। यः। अग्ने। अनृतेन। हंति।
तं। अर्चिषा। स्फूर्जयन्। जातऽवेदः। संऽअक्षं। एनं। गृणते। नि। वृंङ्धि ॥११॥

हे जातवेदो जातप्रज्ञाग्ने ते त्वदीयं प्रसितिं ज्वालाप्रबंधनं यातुधानो राक्षसस्त्रिस्त्रीन्वारानेतु। गच्छतु। त्रिर्बद्धं यत्तत्सुबद्धं भवति हि। किंच यातुधानो राक्षस ऋतं सत्यमनृतेनासत्येन हंति। हिनस्ति। तं यातुधानमर्चिषा स्वकीयेन तेजसा स्फूर्जयन् निष्पिषन्। स्फूर्जतिश्च निष्पेषणकर्मा। एनं यातुधानं गृणते स्तोत्रं कुर्वते मह्यं समक्षं प्रत्यक्षं नि वृंङ्धि। निगृह्य वर्जय वृकेण ॥

॥ अथ द्वादशी ॥

तदंग्ने चक्षुः प्रति धेहि रेभे शंफारुजं येन पश्यसि यातुधानं।
अथर्ववज्ज्योतिषा दैव्येन सत्यं धूर्वंतमचितं न्योष ॥१२॥

तत्। अग्ने। चक्षुः। प्रति। धेहि। रेभे। शफऽआरुजं। येन। पश्यसि। यातुऽधानं।
अथर्वऽवत्। ज्योतिषा। दैव्येन। सत्यं। धूर्वंतं। अचितं। नि। ओष ॥१२॥

हे अग्ने त्वं रेभे शब्दायमाने राक्षसे तच्चक्षुस्तेजः प्रति धेहि प्रक्षिप येन चक्षुषा शफारुजं शफाभ्यामारुजंतं शफसदृशैर्नखैः साधूनामाभिमुख्येन भंजकं यातुधानं

राक्षसं पश्यसि। किंच सत्यं धूर्वंतमसत्येन हिंसंतमचितमज्ञानं दैव्येन दिविभवेन ज्योतिषा तेजसाथर्ववन्न्योष। नितरां दह। दध्यङ्ङ्थर्वा रक्षसां हंतेति प्रागुक्तं ॥

॥ अथ त्रयोदशी ॥

यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयंत रेभाः ।
मन्योर्मनसः शरव्या३ जायते या तया विध्य हृदये यातुधानान् ॥१३॥

यत्। अग्ने। अद्य। मिथुना। शपातः। यत्। वाचः। तृष्टं। जनयंत। रेभाः।
मन्योः। मनसः। शरव्या। जायते। या। तया। विध्य। हृदये। यातुऽधानान् ॥१३॥

हे अग्ने यद्यदाद्यास्मिन्नहनि मिथुना स्त्रीपुंसौ शपातः परस्परमाक्रोशतः। यद्यदा रेभाः स्तोतारो वाचः संबंधि तृष्टं कटुकं परस्पराक्रोशलक्षणमधरं वा जनयंत। परस्परमाक्रोशंतीत्यर्थः। तदा मन्योर्दीप्तस्य क्रुद्धस्य वा तव। तथा च यास्कः। मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वेति। मनसः सकाशाद्या शरव्येषुर्जायते तया शरव्यया यातुधानान्राक्षसान्हृदये विध्य। ताडय। मारयेत्यर्थः॥

॥ अथ चतुर्दशी ॥

परा शृणीहि तपसा यातुधानान्पराग्ने रक्षो हरसा शृणीहि ।
परार्चिषा मूरदेवाञ्छृणीहि परासुतृपो अभि शोशुचानः ॥१४॥

परा। शृणीहि। तपसा। यातुऽधानान्। परा। अग्ने। रक्षः। हरसा। शृणीहि।
परा। अर्चिषा। मूरऽदेवान्। शृणीहि। परा। असुऽतृपः। अभि। शोशुचानः॥१४॥

हे अग्ने यातुधानांस्तपसा तापेन परा शृणीहि। मारय। किंच रक्षो हरसा त्वदीयेनौष्ण्येन परा शृणीहि। किंच मूरदेवान्मारव्यापारान्राक्षसानर्चिषा स्वकीयेन तेजसा परा शृणीहि। अपि चासुतृपो मनुष्याणामसुभिस्तृप्ता ये तानपि परा शृणीहीत्यर्थः ॥

॥ अथ पंचदशी ॥

पराद्य देवा वृजिनं शृणंतु प्रत्यगेनं शपथा यंतु तृष्टाः ।
वाचास्तेनं शरव ऋच्छंतु मर्मन्विश्वस्यैतु प्रसितिं यातुधानः ॥१५॥

परा। अद्य। देवाः। वृजिनं। शृणंतु। प्रत्यक्। एनं। शपथाः। यंतु। तृष्टाः।
वाचाऽस्तेनं। शरवः। ऋच्छंतु। मर्मन्। विश्वस्य। एतु। प्रऽसितिं। यातुऽधानः॥१५॥

अद्यास्मिन्नहनि देवा अग्निपुरोगाः सर्वे देवा वृजिनं प्राणिनां प्राणैर्वर्जितारं यातुधानं परा शृणंतु । अथैनमायांतं राक्षसं तृष्टाः कटुका अस्माभिरुक्ताः शपथाः प्रत्यग्यंतु । किंच । वाचास्तेनमनृतवचनमेनं यातुधानं शरवः शरा मर्मन् मर्मण्यृच्छंतु । गच्छंतु । विश्वस्य व्याप्तस्याग्नेः प्रसितिं जालं । तथा च यास्कः । प्रसितिः प्रसयनात्तंतुर्वा जालं वेति । जालं यातुधानो राक्षस एतु । गच्छतु ॥

॥ इत्यष्टमस्य चतुर्थे सप्तमो वर्गः ॥

॥ अथ षोडशी ॥

यः पौरुषेयेण क्रविषा समंक्ते यो अश्व्येन पशुना यातुधानः ।
यो अघ्न्याया भरति क्षीरमग्ने तेषां शीर्षाणि हरसापि वृश्च ॥१६॥

यः । पौरुषेयेण । क्रविषा । सम्ऽअंक्ते । यः । अश्व्येन । पशुना । यातुऽधानः ।
यः । अघ्न्यायाः । भरति । क्षीरं । अग्ने । तेषां । शीर्षाणि । हरसा । अपि । वृश्च ॥१६॥

यो यातुधानो राक्षसः पौरुषेयेण पुरुषसंबंधिना क्रविषा मांसेन समंक्त आत्मानं संगमयति । यश्चाश्व्येनाश्वसमूहेन । तदीयेन मांसेनेत्यर्थः । आत्मानं संगमयति । यो वा यातुधानोऽन्येन पशुनात्मानं संगमयति । यो वा यातुधानोऽघ्न्याया गोः क्षीरं भरति हरति । हे अग्ने त्वं तेषां सर्वेषामपि राक्षसानां शीर्षाणि शिरांसि हरसा त्वदीयेन तेजसा वृश्च । छिंद्धि ॥

॥ अथ सप्तदशी ॥

संवत्सरीणं पय उस्रियायास्तस्य माशीद्यातुधानो नृचक्षः ।
पीयूषमग्ने यतमस्तितृप्सात्तं प्रत्यंचमर्चिषा विध्य मर्मन् ॥१७॥

संवत्सरीणं । पयः । उस्रियायाः । तस्य । मा । अशीत् । यातुऽधानः । नृऽचक्षः ।
पीयूषं । अग्ने । यतमः । तितृप्सात् । तं । प्रत्यंचं । अर्चिषा । विध्य । मर्मन् ॥१७॥

हे नृचक्षो नृणां द्रष्टरग्न उस्रियाया गोः । उस्रिया अहीति गोनामसु पाठात् । संवत्सरीणं संवत्सरेण भवं यत्पयोऽस्ति यातुधानो राक्षसस्तस्य माशीत । तत्पयो मा भक्षयतु । किंच । यतमो यो राक्षसः पीयूषं पीयूषेण । विभक्तिव्यत्ययः । अस्मदीयाया गोः पयसा तितृप्सादात्मानं तर्पयितुमिच्छति तं प्रत्यंचं युद्धायात्मानं

प्रतिगतं राक्षसं मर्मन् मर्मणि प्राणवियोगस्थानेऽर्चिषा स्वकीयेन तेजसा विध्य। ताडय। मारयेत्यर्थः ॥

॥ अथाष्टादशी ॥

विषं गवां यातुधानाः पिबंत्वा वृश्च्यंतामदितये दुरेवाः।
परैनान्देवः सविता ददातु परा भागमोषधीनां जयंतां ॥१८॥

विषं। गवां। यातुऽधानाः। पिबंतु। आ। वृश्च्यंतां। अदितये। दुःऽएवाः।
परा। एनान्। देवः। सविता। ददातु। परा। भागं। ओषधीनां। जयंतां ॥१८॥

हे अग्ने यातुधाना राक्षसा गवां पशूनां गृहे स्थितं विषं पिबंतु। किंचादितयेऽदित्यर्थं दुरेवा दुस्तरा यातुधाना आ वृश्च्यंतां। त्वदीयैरायुधैराछिद्यंतां। किंच सविता देव एनान्राक्षसान्परा ददातु। सिंहेभ्यः प्रयच्छतु। अपि च। तेऽमी राक्षसा ओषधीनां स्वभूतं भागं भजनीयमन्नं परा जयंतां। लभंतामित्यर्थः ॥

॥ अथैकोनविंशी ॥

सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः।
अनु दह सहमूरान्क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥१९॥

सनात्। अग्ने। मृणसि। यातुऽधानान्। न। त्वा। रक्षांसि। पृतनासु। जिग्युः।
अनु। दह। सहऽमूरान्। क्रव्यऽअदः। मा। ते। हेत्याः। मुक्षत। दैव्यायाः ॥१९॥

हे अग्ने त्वं सनाच्चिरादेवारभ्य यातुधानान्राक्षसान्मृणसि। बाधसे। तथापि त्वा त्वां पृतनासु संग्रामेषु रक्षांसि राक्षसा न जिग्युः। नाजयन्। किंच। स त्वमधुनान्वनुक्रमेण सहमूरान् मूलेन सहितान् मारकव्यापारेण युक्तान् क्रव्यादो मांसभक्षकान्राक्षसान्दह। तेजसा भस्मीकुरु। किंच। तव संबंधिनो दैव्याया दैव्याद्धेत्या आयुधात्ते यातुधाना मा मुक्षत। मुक्ता मा भूवन् ॥

॥ अथ विंशी ॥

त्वं नो अग्ने अधरादुदक्तात्त्वं पश्चादुत रक्षा पुरस्तात्।
प्रति ते ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहंतु ॥२०॥

त्वं। नः। अग्ने। अधरात्। उदक्तात्। त्वं। पश्चात्। उत। रक्ष। पुरस्तात्।
प्रति। ते। ते। अजरासः। तपिष्ठाः। अघऽशंसं। शोशुचतः। दहंतु ॥२०॥

हे अग्ने त्वं नोऽस्मानधराद्दक्षिणतः। उत्तरादिदिक्समभिव्याहारादधरशब्दोऽत्र दक्षिणदिक्पर इति विज्ञायते। उदक्तादुत्तरतश्च रक्ष। पाहि। उतापि च। हे अग्ने त्वं पश्चात्पश्चिमतः पुरस्तात्पूर्वतश्च नोऽस्मान्रक्ष। चतसृषु दिक्ष्ववस्थितेभ्यो राक्षसेभ्योऽस्मान्पाहीत्यर्थः। किंच। ते तव संबंधिनस्ते तपिष्ठा अतिशयेन तप्यमाना अजरासो जरावर्जिताः शोशुचतो ज्वलंतः संतो रश्मयोऽघशंसं पापशंसकं राक्षसं प्रति दहंतु। भस्मीकुर्वंतु ॥

॥ इत्यष्टमस्य चतुर्थेऽष्टमो वर्गः ॥

॥ अथैकविंशी ॥

पश्चात्पुरस्तादधरादुदक्तात्कविः काव्येन परि पाहि राजन्।
सखे सखायमजरो जरिम्णेऽग्ने मर्ताँ अमर्त्यस्त्वं नः ॥२१॥

पश्चात्। पुरस्तात्। अधरात्। उदक्तात्। कविः। काव्येन। परि। पाहि। राजन्।
सखे। सखायं। अजरः। जरिम्णे। अग्ने। मर्तान्। अमर्त्यः। त्वं। नः ॥२१॥

हे राजन् दीप्ताग्ने कविः क्रांतदर्शनस्त्वं काव्येन कविकर्मणा पश्चात् पश्चिमतः पुरस्तात्पूर्वतोऽधराद्दक्षिणतश्चोदक्तादुत्तरतश्चास्मान्परि पाहि। परितो रक्ष। किंच। हे सखे मित्रभूताग्नेऽजरो जरारहितस्त्वं मां सखायं जरिम्णे जरायै कुरु। त्वत्प्रसादादहं चिरं जीवामीत्यर्थः। एतदेव दर्शयति। हे अग्नेऽमर्त्यो मरणधर्मरहितस्त्वं मर्तान्मरणधर्मवतो नोऽस्माञ्जरिम्णे जरायै कुर्विति शेषः ॥

॥ अथ द्वाविंशी ॥

परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि।
धृषद्वर्णं दिवेदिवे हंतारं भंगुरावतां ॥२२॥

परि। त्वा। अग्ने। पुरं। वयं। विप्रं। सहस्य। धीमहि।
धृषत्ऽवर्णं। दिवेऽदिवे। हंतारं। भंगुरऽवतां ॥२२॥

हे सहस्य सहसे हित सहसो जात वाग्ने पुरं पूरकं विप्रं मेधाविनं धृषद्वर्णं धर्षकरूपं भंगुरावतां भंगुरकर्मयुक्तानां रक्षसां दिवेदिवे प्रत्यहं हंतारं हिंसितारं त्वा त्वां वयं पायुनामधेया भारद्वाजा रक्षसां हननाय परि धीमहि ॥

॥ अथ त्रयोविंशी ॥

विषेण भंगुरावतः प्रति ष्म रक्षसो दह।
अग्ने तिग्मेन शोचिषा तपुरग्राभिर्ऋष्टिभिः ॥२३॥
विषेण। भंगुरऽवतः। प्रति। स्म। रक्षसः। दह।
अग्ने। तिग्मेन। शोचिषा। तपुःऽअग्राभिः। ऋष्टिऽभिः ॥२३॥

हे अग्ने त्वं भंगुरावतो भंजनकर्मयुक्तान्रक्षसो राक्षसान्विषेण व्याप्तेन तिग्मेन तीक्ष्णेन शोचिषा तेजसा प्रति दह। भस्मीकुरु। तथा तपुरग्राभिस्तपनशीलाग्राभिर्ऋष्टिभिः। ऋष्टय आयुधविशेषाः। ताभिरपि प्रति दह ॥

॥ अथ चतुर्विंशी ॥

प्रत्यग्ने मिथुना दह यातुधाना किमीदिना।
सं त्वा शिशामि जागृह्यदब्धं विप्र मन्मभिः ॥२४॥
प्रति। अग्ने। मिथुना। दह। यातुऽधाना। किमीदिना।
सं। त्वा। शिशामि। जागृहि। अदब्धं। विप्र। मन्मऽभिः ॥२४॥

हे अग्ने त्वं मिथुना मिथुनभूतानि किमीदिना किमिदानीमिति ये चरंति ते किमीदिनः। तान्। तथा च यास्कः॥ किमीदिने किमिदानीमिति चरते किमिदं किमिदमिति वा। नि॰ ६.११.। इति ॥ यातुधाना यातुधानान्राक्षसान्प्रति दह। किंच। हे विप्र मेधाविन्नग्नेऽदब्धं केनाप्यहिंसितं त्वा त्वां मन्मभिः स्तुतिभिरहं सं शिशामि। स्तौमीत्यर्थः। अतस्त्वं जागृहि। निद्रां मा कुरु। बुध्यस्वेत्यर्थः ॥

॥ अथ पंचविंशी ॥

प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति।
यातुधानस्य रक्षसो बलं वि रुज वीर्यं ॥२५॥
प्रति। अग्ने। हरसा। हरः। शृणीहि। विश्वतः। प्रति।
यातुऽधानस्य। रक्षसः। बलं। वि। रुज। वीर्यं ॥२५॥

हे अग्ने हरसा त्वदीयेन तेजसा। तथा च यास्कः। हरो हरतेर्ज्योतिर्हर उच्यते

। नि॰ ४.१९.। इति। यातुधानस्य राक्षसस्य हरो हरणशीलं बलं प्रति शृणीहि। नाशयेत्यर्थः। तथा रक्षसो राक्षसस्य वीर्यं च वि रुज। भंजय॥

॥ इत्यष्टमस्य चतुर्थे नवमो वर्गः॥

हविष्पांतमित्येकोनविंशत्यृचं सूक्तं चतुर्थं त्रैष्टुभं। मूर्धन्वानृषिः। स चांगिरसो वामदेव्यो वा। सूर्यो वैश्वानरगुणकोऽग्निश्च समुदितो देवता। तथा चानुक्रांतं। हविरेकोनांगिरसो मूर्धन्वान्वामदेव्यो वा सौर्यवैश्वानरीयमिति॥ व्यूढस्य दशराचस्य पंचमेऽहन्याग्निमारुत एतद्वैश्वानरीयनिविद्धानं। सूचितं च। हविष्पांतमग्निर्होता गृहपतिः स राजा। आ॰ ८.८.। इति॥

॥ तत्र प्रथमा॥

हविष्पांतमजरं स्वर्विदि दिविस्पृश्याहुतं जुष्टमग्नौ।
तस्य भर्मणे भुवनाय देवा धर्मणे कं स्वधया पप्रथंत॥१॥

हविः। पांतं। अजरं। स्वःऽविदि। दिविऽस्पृशि। आऽहुतं। जुष्टं। अग्नौ।
तस्य। भर्मणे। भुवनाय। देवाः। धर्मणे। कं। स्वधया। पप्रथंत॥१॥

पांतं पानीयं सोमात्मकमजरं जरारहितं जुष्टं देवानां प्रियं यद्धविः स्वर्विदि सूर्यस्य वेदितरि दिविस्पृशि दिवि स्प्रष्टर्यग्नावाहुतमभिहुतं तस्य सोमात्मकस्य हविषो भर्मणे भरणाय भुवनाय भावनाय च धर्मणे धारणाय च कं सर्वस्य सुखकरमिममग्निं देवाः स्वधयान्नेन पप्रथंत। प्रथयंति। तथा च यास्कः। हविर्यत्पानीयमजरं सूर्यविदि दिविस्पृश्यभिहुतं जुष्टमग्नौ तस्य भरणाय च भावनाय च धारणाय चैतेभ्यः सर्वेभ्यः कर्मभ्यो देवा इममग्निमन्नेनापप्रथंत। नि॰ ७.२५.। इति॥

॥ अथ द्वितीया॥

गीर्णं भुवनं तमसापगूळ्हमाविः स्वरभवज्जाते अग्नौ।
तस्य देवाः पृथिवी द्यौरुतापोऽरणयन्नोषधीः सख्ये अस्य॥२॥

गीर्णं। भुवनं। तमसा। अपऽगूळ्हं। आविः। स्वः। अभवत्। जाते। अग्नौ।
तस्य। देवाः। पृथिवी। द्यौः। उत। आपः। अरणयन्। ओषधीः। सख्ये। अस्य॥२॥

गीर्णं पूर्वं निगीर्णं तमसांधकारेणापगूढमाच्छादितं स्वः सर्वं भुवनमग्नौ यस्मिन्वैश्वानरे जात उत्पन्ने सत्याविरभवदाविर्भवति तस्यास्य वैश्वानरस्याग्नेः

सख्ये सखिकर्मणि देवा इंद्रादयः पृथिवी भूमिश्च द्यौश्चापोऽंतरिक्षं चोदकानि वौ-षधीरोषध्यश्चारणयन्। अरमंत। प्रीतिं कृतवंत इत्यर्थः ॥

॥ अथ तृतीया ॥

देवेभिर्न्विषितो यज्ञियेभिरग्निं स्तोषाण्यजरं बृहंतं।

यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अंतरिक्षं ॥३॥

देवेभिः। नु। इषितः। यज्ञियेभिः। अग्निं। स्तोषाणि। अजरं। बृहंतं।

यः। भानुना। पृथिवीं। द्यां। उत। इमां। आऽततान। रोदसी इति। अंतरिक्षं ॥३॥

यज्ञियेभिर्यज्ञार्हैर्देवेभिर्देवैरिंद्रादिभिर्नु क्षिप्रमिषितोऽहमजरं जरारहितं बृहंतं महांतमग्निं तं वैश्वानराग्निं स्तोषाणि। स्तोषामि। यो वैश्वानराग्निर्भानुना तेजसा पृथिवीं भूमिमुतापि चेमां द्यां दिवं चाततानातनोति। तदेव दर्शयति। रोदसी द्यावापृथिव्यौ चाततानातनोति। विस्तारयतीत्यर्थः ॥

॥ अथ चतुर्थी ॥

यो होतासीत्प्रथमो देवजुष्टो यं समांजन्नाज्येना वृणानाः।

स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥४॥

यः। होता। आसीत्। प्रथमः। देवऽजुष्टः। यं। संऽआंजन्। आज्येन। वृणानाः।

सः। पतत्रि। इत्वरं। स्थाः। जगत्। यत्। श्वात्रं। अग्निः। अकृणोत्। जातऽवेदाः ॥४॥

यो वैश्वानरोऽग्निर्देवजुष्टो देवैः सेवितः प्रथमो मुख्यो होतासीदभूत्। यं च वैश्वानराग्निं यजमाना वृणाना आज्येन समांजन् समंजति जातवेदा जातप्रज्ञो जातधनो वा वैश्वानरोऽग्निः पतत्रि पतनशीलं पक्षिजातमित्वरं गमनशीलं सरीसृपादिकं स्थाः स्थावरं वृक्षादिरूपं च जगत्। स्थावरं जंगमं च यज्जगदित्यर्थः। श्वात्रं क्षिप्रमेवाकृणोत्। अजनयत्। तथा च यास्कः। स पतत्रि चेत्वरं स्थावरं जंगमं च यत्तत्क्षिप्रमग्निरकरोज्जातवेदाः। नि॰ ५.३.। इति ॥

॥ अथ पंचमी ॥

यज्जातवेदो भुवनस्य मूर्धन्नतिष्ठो अग्ने सह रोचनेन।

तं त्वाहेम मतिभिर्गीर्भिरुक्थैः स यज्ञियो अभवो रोदसिप्राः ॥५॥

यत्। जातऽवेदः। भुवनस्य। मूर्धन्। अतिष्ठः। अग्ने। सह। रोचनेन।
तं। त्वा। अहेम। मतिऽभिः। गीःऽभिः। उक्थैः। सः। यज्ञियः। अभवः।
रोदसिऽप्राः ॥५॥

हे जातवेदो जातप्रज्ञाग्ने यद्यस्त्वं भुवनस्य त्रैलोक्यस्य मूर्धन् मूर्धनि रोचनेनादित्येन सहातिष्ठः स्थितवानसि तं वैश्वानराग्निं त्वा त्वां मतिभिरर्चनीयाभिर्गीर्भिः स्तुतिभिरुक्थैः शस्त्रैश्चाहेम। प्रपद्यामहे। हि गताविति धातुः। स वैश्वानरस्त्वं रोदसीप्रा द्यावापृथिव्योः पूरयिता यज्ञियो यज्ञार्हश्चाभवः। भवसि ॥

॥ इत्यष्टमस्य चतुर्थे दशमो वर्गः ॥

॥ अथ षष्ठी ॥

मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्।
मायामू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन् ॥६॥

मूर्धा। भुवः। भवति। नक्तं। अग्निः। ततः। सूर्यः। जायते। प्रातः। उत्ऽयन्।
मायां। ऊं इति। तु। यज्ञियानां। एतां। अपः। यत्। तूर्णिः। चरति। प्रऽजानन् ॥६॥

अग्निर्वैश्वानरोऽग्निर्नक्तं रात्रौ भुवो भूतजातस्य मूर्धा शिरोवत्प्रधानभूतो भवति। रात्रौ सर्वप्राणिनामालोकस्य तदधीनत्वात्। ततो रात्रेरनंतरं प्रातरुद्यन् सूर्यो जायते। अहनि स एव वैश्वानरोऽग्निः सूर्यो भवतीत्यर्थः। किंच। यज्ञियानां यज्ञसंपादिनां देवानां मायामु प्रज्ञामेवैतां मन्यंते कवय इति शेषः। यत्प्रजानन् प्रज्ञायमानः सूर्यस्तूर्णिस्त्वरमाणः सन्नपोऽंतरिक्षं कर्म वा चरति। तथा च यास्कः। मूर्धा मूर्तमस्मिन्धीयते मूर्धा यः सर्वेषां भूतानां भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यंत्स एव। प्रज्ञां त्वेतां मन्यंते यज्ञियानां देवानां यज्ञसंपादिनामपो यत्कर्म चरति प्रजानंत्सर्वाणि स्थानान्यनुसंचरति त्वरमाणः। नि॰ ७.२७.। इति ॥

॥ अथ सप्तमी ॥

दृशेन्यो यो महिना समिद्धोऽरोचत दिवियोनिर्विभावा।
तस्मिन्नग्नौ सूक्तवाकेन देवा हविर्विश्व आजुहवुस्तनूपाः ॥७॥

दृशेन्यः। यः। महिना। संऽइद्धः। अरोचत। दिविऽयोनिः। विभाऽवा।
तस्मिन्। अग्नौ। सूक्तऽवाकेन। देवाः। हविः। विश्वे। आ। अजुहवुः। तनूऽपाः ॥७॥

यो वैश्वानरोऽग्निर्महिना महत्त्वेन इशेन्यः सर्वदर्शनीयः समिद्धः सम्यग्दीप्तो दिवियोनिर्द्युस्थानो विभावा दीप्तिमांश्च सन्नरोचत दीप्यते तस्मिन्वैश्वानरेऽग्नौ तनूपाः शरीराणां रक्षका विश्वे सर्वे देवाः सूक्तवाकेनेदं द्यावापृथिवी इत्यादिवाक्येन स्तोत्राणां वचनेन वा हविराजुहवुः । आभिमुख्येन जुहुवुः ॥

॥ अथाष्टमी ॥

सूक्तवाकं प्रथममादिदग्निमादिद्धविरजनयंत देवाः ।
स एषां यज्ञो अभवत्तनूपास्तं द्यौर्वेद तं पृथिवी तमापः ॥८॥

सूक्तऽवाकं । प्रथमं । आत् । इत् । अग्निं । आत् । इत् । हविः । अजनयंत । देवाः ।
सः । एषां । यज्ञः । अभवत् । तनूऽपाः । तं । द्यौः । वेद । तं । पृथिवी । तं । आपः ॥८॥

प्रथमं पूर्वं सूक्तवाकमिदं द्यावापृथिवी इत्यादि वाक्यं मनसा निरूपयंति । आदिदनंतरमेवाग्निं मथनेनोत्पादयंति । आदिदनंतरमेव देवा हविरजनयंत । स वैश्वानरोऽग्निरेषां देवानां यज्ञो यष्टव्योऽभवत् । भवति । स तनूपाः शरीराणां रक्षिता च भवति । तमग्निं द्यौर्द्युलोको वेद । जानाति । तमग्निं पृथिवी भूमिरपि च जानाति । तमग्निमापोऽंतरिक्षं च जानाति ॥

॥ अथ नवमी ॥

यं देवासोऽजनयंताग्निं यस्मिन्नाजुहवुर्भुवनानि विश्वा ।
सो अर्चिषा पृथिवीं द्यामुतेमामृजूयमानो अतपन्महित्वा ॥९॥

यं । देवासः । अजनयंत । अग्निं । यस्मिन् । आ । अजुहवुः । भुवनानि । विश्वा ।
सः । अर्चिषा । पृथिवीं । द्यां । उत । इमां । ऋजुऽयमानः । अतपत् । महिऽत्वा ॥९॥

यं वैश्वानरमग्निं देवासो देवा अजनयंतोत्पादितवंतः । यस्मिंश्चोत्पन्ने वैश्वानरेऽग्नौ विश्वा विश्वानि भुवना भुवनानि भूतान्याजुहवुराभिमुख्येन जुहुवुः सर्वमेधे स वैश्वानरोऽग्निरर्चिषा तेजसा पृथिवीमंतरिक्षं । आपः पृथिवीत्यंतरिक्षनामसु पाठात् । द्यां दिवं चोतापि चेमां भूमिं चर्जूयमान ऋजुगमनो महित्वा महत्त्वेनातपत् । सर्वं तपति ॥

॥ अथ दशमी ॥

स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्रां ।

तमू अकृण्वन् त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ॥१०॥

स्तोमेन । हि । दिवि । देवासः । अग्निं । अजीजनन् । शक्तिऽभिः । रोदसिऽप्रां ।

तं । ऊं इति । अकृण्वन् । त्रेधा । भुवे । कं । सः । ओषधीः । पचति । विश्वऽरूपाः ॥१०॥

देवासो देवाः शक्तिभिः कर्मभी रोदसिप्रां द्यावापृथिव्योरापूरयितारमग्निं सूर्यात्मकं दिवि द्युलोके स्तोमेन हि स्तुत्या खल्वजीजनन् । उत्पादितवंतः । अपि च । तमु तमेव कं सुखकरमग्निं यज्ञे त्रेधा भुवे त्रेधा भावायाकृण्वन् । कुर्वंति । स पृथिव्यां वर्तमानो विश्वरूपाः सर्वरूपा ओषधीर्व्रीह्याद्यास्तेन तेनोपकारेण पचति ॥ अत्र यास्कः । स्तोमेन हि यं दिवि देवासोऽग्निमजनयञ्छक्तिभिः कर्मभिर्द्यावापृथिव्योः पूरणं तमकुर्वंस्त्रेधाभावाय पृथिव्यामंतरिक्षे दिवीति शाकपूणिः । यदस्य दिवि तृतीयं तदसावादित्य इति हि ब्राह्मणं । नि० ७. २८. । इति ॥

॥ इत्यष्टमस्य चतुर्थे एकादशो वर्गः ॥

॥ अथैकादशी ॥

यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयं ।

यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन्भुवनानि विश्वा ॥११॥

यदा । इत् । एनं । अदधुः । यज्ञियासः । दिवि । देवाः । सूर्यं । आदितेयं ।

यदा । चरिष्णू इति । मिथुनौ । अभूतां । आत् । इत् । प्र । अपश्यन् । भुवनानि । विश्वा ॥११॥

यदेद्यदेव प्रातरादितेयमदितेः पुत्रं सूर्यमेनमग्निं च यज्ञियासो यज्ञार्हा देवा दिवि द्युलोकेऽदधुर्धृतवंतः । यदा चेमौ चरिष्णू चरणशीलौ सूर्यवैश्वानरौ मिथुनावभूतां प्रादुरभूतां । आदिदनंतरमेव विश्वा विश्वानि भुवनानि भूतजातानि प्रापश्यन् । तौ पश्यंति ॥ अत्र यास्कः । यदेनमदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्यमादितेयमदितेः पुत्रं यदा चरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्च । मिथुनौ कस्मान्मिनोतिः श्रयतिकर्मा थु इति नामकरणस्थकारो वा नयतिः परो वनिर्वा समाश्रितावन्योन्यं नयतो वनुतो वा । मनुष्यमिथुनावप्येतस्मादेव मेथंतावन्योन्यं वनुत इति वा । नि० ७. २९. । इति ॥

॥ अथ द्वादशी ॥

विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् ।
आ यस्ततानोषसो विभातीरपो ऊर्णोति तमो अर्चिषा यन् ॥१२॥
विश्वस्मै । अग्निं । भुवनाय । देवाः । वैश्वानरं । केतुं । अह्नां । अकृण्वन् ।
आ । यः । ततान । उषसः । विऽभातीः । अपो इति । ऊर्णोति । तमः । अर्चिषा । यन् ॥१२॥

देवा इंद्रादयो विश्वस्मै भुवनाय वैश्वानरं विश्वनरहितमग्निमह्नां दिवसानां केतुं प्रज्ञापकमकृण्वन् । अकुर्वन् । यो वैश्वानरोऽग्निरुषसो विभातीर्विविधं दीप्यमाना आ ततान विस्तारयति । किंच । सोऽयं यन् गच्छन् तमोऽंधकारमर्चिषा तेजसापो ऊर्णोति । अपगमयति ॥

॥ अथ त्रयोदशी ॥

वैश्वानरं कवयो यज्ञियासोऽग्निं देवा अजनयन्नजुर्यं ।
नक्षत्रं प्रत्नममिनच्चरिष्णु यक्षस्याध्यक्षं तविषं बृहंतं ॥१३॥
वैश्वानरं । कवयः । यज्ञियासः । अग्निं । देवाः । अजनयन् । अजुर्यं ।
नक्षत्रं । प्रत्नं । अमिनत् । चरिष्णु । यक्षस्य । अधिऽअक्षं । तविषं । बृहंतं ॥१३॥

कवयो मेधाविनो यज्ञियासो यज्ञार्हा यज्ञसंपादिनो वा देवा अजुर्यं जरावर्जितमहिंस्यं वा वैश्वानरं विश्वनरहितं सूर्यात्मकमग्निमजनयन् । उत्पादितवंतः । स च देवैरुत्पादितोऽग्निर्नक्षत्रं कृत्तिकादि प्रत्नं पुराणं चरिष्णु चरणशीलं यक्षस्य । यक्षतिः पूजार्थः । प्रयक्षमित्यादौ दर्शनात् । ऋग्वे० २.५.१. । यक्षस्य पूज्यस्य देवस्याध्यक्षं प्रत्यक्षं स्वामिनं वा तविषं वृद्धं बृहंतं महांतममिनत् । हिंसितवान् । तेजसाभिभूतवानित्यर्थः ॥

॥ अथ चतुर्दशी ॥

वैश्वानरं विश्वहा दीदिवांसं मंत्रैरग्निं कविमच्छा वदामः ।
यो महिम्ना परिबभूवोर्वी उतावस्तादुत देवः परस्तात् ॥१४॥
वैश्वानरं । विश्वहा । दीदिऽवांसं । मंत्रैः । अग्निं । कविं । अच्छ । वदामः ।
यः । महिम्ना । परिऽबभूव । उर्वी इति । उत । अवस्तात् । उत । देवः । परस्तात् ॥१४॥

विश्वहा सर्वदा दीदिवांसं दीप्तं कविं क्रांतप्रज्ञं वैश्वानरमग्निं मंत्रैरच्छा वदामः ।

अभिष्टुमः। यो वैश्वानरोऽग्निर्महिम्ना महत्त्वेनोर्वी द्यावापृथिव्यौ परिबभूव परि-भवति। उतापि च। अयमवस्तादधस्तात्तपति। उतापि चायं सूर्यात्मको देवः पर-स्तादुपरिष्टाच्च तपतीत्यर्थः ॥

॥ अथ पंचदशी ॥

द्वे सृती अंशृणवं पितॄणामहं देवानामुत मर्त्यानां।
ताभ्यामिदं विश्वमेजत्समेति यदंतरा पितरं मातरं च ॥१५॥

द्वे इति। सृती इति। अशृणवं। पितॄणां। अहं। देवानां। उत। मर्त्यानां।
ताभ्यां। इदं। विश्वं। एजत्। सं। एति। यत्। अंतरा। पितरं। मातरं। च ॥१५॥

पितॄणां देवानां चोतापि मर्त्यानां मनुष्याणां च द्वे सृती द्वौ मार्गौ देवया-नपितृयाणाख्यावहमशृणवं। अश्रौषं। यद्विश्वं पितरं पालकत्वेन पितृभूतां द्यां मातरं च धारकत्वेन मातृभूतां पृथिवीं चांतरा द्यावापृथिवीमध्ये भवति तदिदं विश्वमग्निना संस्कृतं सदेजद्देवलोकं पितृलोकं च गच्छत् ताभ्यां देवयानपि-तृयाणाख्याभ्यां मार्गाभ्यां समेति। गच्छति। तौ च मार्गौ भगवता दर्शितौ। भ॰ गी॰ ८. २४-२६.।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं।
तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनं।
तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते॥
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिमन्यया वर्तते पुनः॥
नैते सृती पार्थ जानन्योगी मुह्यति कश्चनेति॥

॥ इत्यष्टमस्य चतुर्थे द्वादशो वर्गः ॥

॥ अथ षोडशी ॥

द्वे समीची बिभृतश्चरंतं शीर्षतो जातं मनसा विमृष्टं।
स प्रत्यङ्विश्वा भुवनानि तस्थावप्रयुच्छन्तरणिर्भ्राजमानः ॥१६॥

द्वे इति। समीची इति संऽईची। बिभृतः। चरंतं। शीर्षतः। जातं। मनसा। विऽमृष्टं।
सः। प्रत्यङ्। विश्वा। भुवनानि। तस्थौ। अप्रऽयुच्छन्। तरणिः। भ्राजमानः ॥१६॥

समीची संगते द्वे द्यावापृथिव्यौ चरंतं गच्छंतं शीर्षतः शिरसो जातमुत्पन्नं। तथा च निगमांतरं। उत मन्येऽहमेनमनयोर्हि शिरस्तोऽयं प्रातर्जायत इति ॥ यद्वा सर्वशिरोभूतादादित्याज्जातमित्यर्थः। मनसा। मन्यतिरर्चतिकर्मा। अर्चनीयया स्तुत्या विमृष्टं शोधितं संस्कृतमग्निं बिभृतः। धारयतः। सोऽप्रयुच्छन्नप्रमाद्यन् तरणिः क्षिप्रकारी भ्राजमानो दीप्यमानोऽग्निर्विश्वानि भुवनानि प्रत्यङ्ङभिमुखस्तस्थौ। तिष्ठति। तथा च श्रूयते। तस्मात्सर्व एव मन्यंते मां प्रत्युदगादिति ॥

॥ अथ सप्तदशी ॥

यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद।
आ शेकुरित्सधमादं सखायो नक्षंत यज्ञं क इदं वि वोचत् ॥१७॥

यत्र। वदेते इति। अवरः। परः। च। यज्ञऽन्योः। कतरः। नौ। वि। वेद।
आ। शेकुः। इत्। सधऽमादं। सखायः। नक्षंत। यज्ञं। कः। इदं। वि। वोचत् ॥१७॥

यत्र यस्मिन्कालेऽवरः पार्थिवोऽग्निर्दैव्यो होता परश्च मध्यमो वायुश्चोभौ वदेते विवादं कुर्वाते यज्ञन्योर्यज्ञस्य नेत्रोर्नावावयोर्मध्ये कतरो भूयिष्ठं यज्ञं वि वेद वेत्ति तत्र सखायः समानख्याना ऋत्विजः सधमादं यज्ञमा शेकुः। कर्तुं शक्नुवंति। तथा यज्ञं नक्षंताश्नुवतेऽनुतिष्ठंति च ये तेषां विदुषां यज्ञमश्नुवानानां मध्ये को विद्वाननुष्ठाता वेदमस्य विवादस्य निर्णयरूपं वाक्यं वि वोचत्। ब्रवीति। माध्यमिकमिममग्निं ब्रवीति ॥ तथा च यास्कः। यत्र विवदेते दैव्यौ होतारावयं चाग्निरसौ च मध्यमः कतरो नौ यज्ञे भूयो वेदेत्याशक्नुवंति तत्सहमदनं समानख्याना ऋत्विजस्तेषां यज्ञं समश्नुवानानां को न इदं विवक्ष्यति। नि॰ ७.३०.। इति ॥

॥ अथाष्टादशी ॥

कत्यग्नयः कति सूर्यासः कत्युषासः कत्यु स्विदापः।
नोपस्पिजं वः पितरो वदामि पृच्छामि वः कवयो विद्मने कं ॥१८॥

कति। अग्नयः। कति। सूर्यासः। कति। उषसः। कति। ऊं इति। स्वित्। आपः।
न। उपऽस्पिजं। वः। पितरः। वदामि। पृच्छामि। वः। कवयः। विद्मने। कं ॥१८॥

एवं विवदमानावग्निवायू पितॄन्प्रश्नमेयतुः। तत्र मध्यमस्तान्पृच्छति। कत्यग्नयः। अग्नयः कति कतिसंख्याकाः। सूर्यासः सूर्याश्च कतिसंख्याकाः। उषास उषसश्च

कतिसंख्याकाः। आपश्च कति। उ इति पूरणः। स्विच्छब्दोऽत्र विचारणार्थः। हे पितरो वो युष्माकमुपस्पिजं। उपस्पिजमिति स्पर्धायुक्तं वचनमुच्यते। पूर्वोक्तं प्रश्नवचनमेतच्च वदामि किंतर्ह्यहमजानन् हे कवयो मेधाविनो युष्मान्विद्मने विज्ञानाय कं सुखं स्वरूपपर्यालोचनक्लेशमंतरेण पृच्छामि। अत्रोत्तराणि वालखिल्यसंहितायां दर्शितानि। एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनु प्रभूतः। एकैवोषाः सर्वमिदं वि भात्येकं वा इदं वि बभूव सर्वं।८.५८.२.। इति॥

॥ अथैकोनविंशी ॥

यावन्मात्रमुषसो न प्रतीकं सुपर्ण्यो३ वसंते मातरिश्वः।
तावद्दधात्युप यज्ञमायन्ब्राह्मणो होतुरवरो निषीदन्॥१९॥

यावत्ऽमात्रं। उषसः। न। प्रतीकं। सुऽपर्ण्यः। वसंते। मातरिश्वः।
तावत्। दधाति। उप। यज्ञं। आऽयन्। ब्राह्मणः। होतुः। अवरः। निऽसीदन्॥१९॥

प्रकृतस्य वैश्वानरस्य विषये यः प्रश्नस्तस्य निर्णयमनया वदंति। हे मातरिश्वो मातर्यंतरिक्षे श्वसन् माध्यमिक वायो यावन्मात्रं यावदेव सुपर्ण्यः सुपतना रात्रय उषसः प्रतीकं मुखं प्रकाशाख्यं दर्शनं वा। नेति पूरणः। वसत आच्छादयंति तावदेव ब्राह्मणो होतावरो निकृष्टो होतुरस्याग्नेर्वैश्वानरस्य दैव्यस्य होतुर्निषीदन् हौत्रं कर्म कर्तुमुपविशन् यज्ञमायन् उपगच्छन् उप दधाति। होतृकर्म स्वबुद्धौ धारयति॥ तथा च यास्कः। यावन्मात्रमुषसः प्रत्यक्तं भवति प्रतिदर्शनमिति वास्त्युपमानस्य संप्रत्यर्थे प्रयोग इहेव निधेहीति यथा सुपर्ण्यः सुपतना एता रात्रयो वसते मातरिश्वञ्ज्योतिर्वर्णस्य तावदुपदधाति यज्ञमागच्छन्ब्राह्मणो होतास्याग्नेर्होतुरवरो निषीदन् होतृजपस्त्वनग्निर्वैश्वानरीयो भवति। नि॰ ७.३१.। इति॥

॥ इत्यष्टमस्य चतुर्थे त्रयोदशो वर्गः॥

इंद्रं स्तवेत्यष्टादशर्चं पंचमं सूक्तं वैश्वामित्रस्य रेणोरार्षं त्रैष्टुभमैंद्रं। अनुक्रांतं च। इंद्रं स्तव ऊना रेणुरिति॥ सूर्यस्तुन्नाम्न्येकाह इदं सूक्तं निष्केवल्यनिविद्धानं। सूत्रितं च। सूर्यस्तुता यशस्कामः पिबा सोममभीद्रं स्तवेति मध्यंदिनः। आ॰ ९.८.। इति॥

॥ तत्र प्रथमा ॥

इंद्रं स्तवा नृतमं यस्य मह्ना विबबाधे रोचना वि ज्मो अंतान्।
आ यः पप्रौ चर्षणीधृद्वरोभिः प्र सिंधुभ्यो रिरिचानो महित्वा॥१॥

इंद्रं। स्तव। नृऽतमं। यस्यं। मह्ना। विऽबबाधे। रोचना। वि। ज्मः। अंतान्।
आ। यः। पप्रौ। चर्षणिऽधृत्। वरःऽभिः। प्र। सिंधुऽभ्यः। रिरिचानः। महिऽत्वा॥१॥

हे स्तोतस्त्वं नृतमं नेतृतममिंद्रं स्तव। स्तुहि। यस्येंद्रस्य मह्ना महत्त्वं। विभक्तिव्यत्ययः। रोचना परेषां तेजांसि विबबाधे विबाधते। अभिभवतीत्यर्थः। वि ज्मः पृथिव्याश्चांतान्पर्यंतानभिभवति। यश्चेंद्रश्चर्षणीधृन्मनुष्याणां धर्ता सिंधुभ्यः समुद्रेभ्योऽपि महित्वा महत्त्वेन प्र रिरिचानः प्रवर्धमानश्च सन् वरोभिस्तमसां वरकैस्तेजोभिरा पप्रौ द्यावापृथिव्यावापूरयति॥

॥ अथ द्वितीया ॥

स सूर्यः पर्युरू वरांस्येंद्रो ववृत्याद्रथ्येव चक्रा।
अतिष्ठंतमपस्यं१ न सर्गं कृष्णा तमांसि त्विष्या जघान॥२॥

सः। सूर्यः। परि। उरु। वरांसि। आ। इंद्रः। ववृत्यात्। रथ्याऽइव। चक्रा।
अतिष्ठंतं। अपस्यं। न। सर्गं। कृष्णा। तमांसि। त्विष्या। जघान॥२॥

सूर्यः सुवीर्यः स प्रसिद्ध इंद्र उरु बहूनि वरांसि तेजांसि पर्या ववृत्यात्। पर्यावर्तयति। तत्र दृष्टांतः। रथ्येव यथा सारथी रथसंबंधीनि चक्रा चक्राण्यावर्तयति तद्वदित्यर्थः। किंच सोऽयमतिष्ठंतं शीघ्रं गच्छंतमपस्यं न कर्मण्यमिव सर्गं। सृज्यत इति सर्गोऽश्वः। कृष्णानि तमांसि त्विष्या दीप्त्या जघान। हंति॥

॥ अथ तृतीया ॥

समानमस्मा अनपावृदर्च क्ष्मया दिवो असमं ब्रह्म नव्यं।
वि यः पृष्ठेव जनिमान्यर्य इंद्रश्चिकाय न सखायमीषे॥३॥

समानं। अस्मै। अनपऽवृत्। अर्च। क्ष्मया। दिवः। असमं। ब्रह्म। नव्यं।
वि। यः। पृष्ठाऽइव। जनिमानि। अर्यः। इंद्रः। चिकाय। न। सखायं। ईषे॥३॥

हे स्तोतस्त्वं समानं मया सहानपावृदपगतिरहितं क्ष्मया दिवो दिवः पृथिव्याश्चासममत्यंतमतिरिक्तं। महदित्यर्थः। नव्यं नवतरमन्यैरकृतपूर्वं ब्रह्म स्तोत्रमस्मा इंद्रायार्च। उच्चारय। इंद्रो जनिमानि यज्ञे यज्ञे जातानि पृष्ठेव पृष्ठसंज्ञकानि स्तोत्राणीवार्योऽरीञ्शत्रून्वि चिकाय विचिनोति सखायं च नेषे। नेच्छति॥

॥ अथ चतुर्थी ॥

इंद्राय गिरो अनिशितसर्गा अपः प्रेरयं सगरस्य बुध्नात्।

यो अक्षेणेव चक्रिया शचीभिर्विष्वक्तस्तंभ पृथिवीमुत द्यां ॥४॥

इंद्राय। गिरः। अनिशितऽसर्गाः। अपः। प्र। ईरयं। सगरस्य। बुध्नात्।

यः। अक्षेणऽइव। चक्रिया। शचीभिः। विष्वक्। तस्तंभ। पृथिवीं। उत। द्यां ॥४॥

इंद्रायेंद्रार्थमनिशितसर्गा अतनूकृतविसर्गा उपर्युपरि वर्तमाना या गिरः स्तुतयस्ताभिर्गीर्भिः सगरस्य। सगरं समुद्र इत्यंतरिक्षनामसु पाठात्। बुध्नात्प्रदेशादप उदकानि प्रेरयं। प्रेरयामि। इंद्रः शचीभिः कर्मभिः पृथिवीमुतापि च द्यां दिवं चक्रिया रथचक्राण्यक्षेणेव यथा रथाक्षेण तद्वद्विष्वक् सर्वतस्तस्तंभ। अस्तभ्नात्॥

॥ अथ पंचमी ॥

आपांतमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी।

सोमो विश्वान्यतसा वनानि नार्वागिंद्रं प्रतिमानानि देभुः ॥५॥

आपांतऽमन्युः। तृपलऽप्रभर्मा। धुनिः। शिमीऽवान्। शरुऽमान्। ऋजीषी।

सोमः। विश्वानि। अतसा। वनानि। न। अर्वाक्। इंद्रं। प्रतिऽमानानि। देभुः ॥५॥

आपांतमन्युरापातितमन्युस्तृपलप्रभर्मा ग्रावादिभिः क्षिप्रप्रहारी धुनिः शत्रूणां कंपयिता शिमीवान् कर्मवान् शरुमानायुधवानृजीष्यृजीषवान् सोमो विश्वानि सर्वाण्यतसातसमयानि वनान्यरण्यानि वर्धयतीति शेषः। प्रतिमानानि प्रतिमानभूतानि समानानि द्रव्याणीत्यर्थः। इंद्रमर्वाग्न देभुः। दभ्नोतिरत्राकर्षणकर्मा। तुलया मीयमानान्यात्माभिमुखतया नाकर्षयंति। लघूनि भवंतीत्यर्थः। अन्यच्च प्रतिनिधीयमानानि पुरूणि तान्यात्माभिमुखमाकर्षति नैवमिंद्रं कुर्वंतीति। सर्वेभ्यो महानिंद्र इत्यर्थः। त्रयः पादाः सौम्यास्तुरीयस्त्वैंद्रः॥ तथा च यास्कः। आपातितमन्युस्तृप्रप्रहारी क्षिप्रप्रहारी सृप्रप्रहारी सोमो वेंद्रो वा धुनिर्धुनोतेः शिमीति कर्मनाम शमयतेर्वा शक्नोतेर्वर्जीषी सोमो यत्सोमस्य पूयमानस्यातिरिच्यते तदृजीषमपार्जितं भवति तेनर्जीषी सोमोऽथाप्यैंद्रो निगमो भवत्यृजीषी वज्रीति। सोमः सर्वाण्यतसानि वनानि नार्वागिंद्रं प्रतिमानानि दभ्नुवंति यैरेनं प्रतिमिमते नैनं तानि दभ्नुवंति। नि॰ ५.१२.। इति ॥

॥ इत्यष्टमस्य चतुर्थे चतुर्दशो वर्गः ॥

॥ अथ षष्ठी ॥

न यस्य द्यावापृथिवी न धन्व नांतरिक्षं नाद्रयः सोमो अक्षाः ।
यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि ॥६॥

न । यस्य । द्यावापृथिवी इति । न । धन्व । न । अंतरिक्षं । न । अद्रयः । सोमः । अक्षारिति ।
यत् । अस्य । मन्युः । अधिऽनीयमानः । शृणाति । वीळु । रुजति । स्थिराणि ॥६॥

द्यावापृथिवी द्यावापृथिव्यौ यस्येंद्रस्य प्रतिमानभूते न भवतः । न धन्व । उदकमपि प्रतिमानभूतं न भवति । नांतरिक्षं । अंतरिक्षमपि प्रतिमानभूतं न भवति । नाद्रयः । पर्वताश्च प्रतिमानभूता न भवंति । तस्येंद्रस्य सोमोऽक्षाः । क्षरति । किंच यद्यदास्येंद्रस्य मन्युः क्रोधोऽधिनीयमानः शत्रूणामुपरि प्राप्यमाणो भवति तदानीमयमिंद्रो वीळु दृढं शृणाति । हिनस्ति । स्थिराणि रुजति । भिनत्ति च ॥

॥ अथ सप्तमी ॥

जघान वृत्रं स्वधितिर्वनेव रुरोज पुरो अरदन्न सिंधून् ।
बिभेद गिरिं नवमिन्न कुंभमा गा इंद्रो अकृणुत स्वयुग्भिः ॥७॥

जघान । वृत्रं । स्वऽधितिः । वनाऽइव । रुरोज । पुरः । अरदत् । न । सिंधून् ।
बिभेद । गिरिं । नवं । इत् । न । कुंभं । आ । गाः । इंद्रः । अकृणुत । स्वयुक्ऽभिः ॥७॥

इंद्रो वृत्रमसुरं जघान । हतवान् । अपि च स्वधितिः परशुर्वनेव वनानीव पुरः शत्रुनगरी रुरोज । रुजति । भिनत्ति । शत्रुनगरीर्भित्त्वा च सिंधून्नदीररदत् । वृष्ट्युदकेनालिखत् । नेति संप्रत्यर्थे । किंच । गिरिं मेघं नवं न नवमिव कुंभं कलशं बिभेदेत् । भिनत्त्येव । किंचेंद्रः स्वयुग्भिः स्वयं युज्यमानैर्मरुद्भिर्गा उदकान्याकृणुत । अस्मदभिमुखं करोति ॥

॥ अथाष्टमी ॥

त्वं ह त्यदृणया इंद्र धीरोऽसिर्न पर्व वृजिना शृणासि ।
प्र ये मित्रस्य वरुणस्य धाम युजं न जना मिनंति मित्रं ॥८॥

त्वं । ह । त्यत् । ऋणऽयाः । इंद्र । धीरः । असिः । न । पर्व । वृजिना । शृणासि ।
प्र । ये । मित्रस्य । वरुणस्य । धाम । युजं । न । जनाः । मिनंति । मित्रं ॥८॥

इंद्र धीरः प्राज्ञस्त्वं ह त्वं खलु त्यत्तदणयाः स्तोतृविषयाणामृणानां प्रापयितासि। किंच। त्वमसिर्न शस्त्रमिव पर्व पश्रूनां पर्वाणि वृजिना वृजिनानि स्तोतृणामुपद्रवाणि शृणासि। हंसि। किंच। मित्रस्य वरुणस्य मित्रावरुणयोर्धाम धारकं कर्म युजं न युक्तमिव मित्रं येऽज्ञा नृशंसा जनाः प्र मिनंति प्रकर्षेण हिंसंति तानपि शृणासीत्यर्थः ॥

॥ अथ नवमी ॥

प्र ये मित्रं प्रार्यमणं दुरेवाः प्र संगिरः प्र वरुणं मिनंति।

न्य१मित्रेषु वधमिंद्र तुम्रं वृषन्वृषाणमरुषं शिशीहि ॥९॥

प्र। ये। मित्रं। प्र। अर्यमणं। दुःऽएवाः। प्र। संऽगिरः। प्र। वरुणं। मिनंति।

नि। अमित्रेषु। वधं। इंद्र। तुम्रं। वृषन्। वृषाणं। अरुषं। शिशीहि ॥९॥

ये दुरेवा दुष्टगमना जना मित्रं देवं प्र मिनंति प्रहिंसंति अर्यमणं च देवं प्रमिनंति संगिरः समीचीनस्तुतिमतो मरुतश्च प्रमिनंति वरुणं च देवं प्रमिनंति तेष्वमित्रेषु शत्रुषु। तानुद्दिश्येत्यर्थः। हे वृषन् कामानां वर्षकेंद्र त्वं तुम्रं गमनशीलं वृषाणं कामानां वर्षकमरुषमारोचमानं वधं वज्रं। वधो वज्र इति वज्रनामसु पाठात्। नि शिशीहि। तीक्ष्णीकुरु ॥

॥ अथ दशमी ॥

इंद्रो दिव इंद्र ईशे पृथिव्या इंद्रो अपामिंद्र इत्पर्वतानां।

इंद्रो वृधामिंद्र इन्मेधिराणामिंद्रः क्षेमे योगे हव्य इंद्रः ॥१०॥

इंद्रः। दिवः। इंद्रः। ईशे। पृथिव्याः। इंद्रः। अपां। इंद्रः। इत्। पर्वतानां।

इंद्रः। वृधां। इंद्रः। इत्। मेधिराणां। इंद्रः। क्षेमे। योगे। हव्यः। इंद्रः ॥१०॥

दिवो द्युलोकस्येंद्र ईशे। ईष्टे। पृथिव्या भूमेरपींद्र ईशे। ईश्वरो भवति। अपामुदकानामपींद्र ईश्वरो भवति। पर्वतानां मेघानामपींद्र ईश्वरो भवति। वृधां वृद्धानामपींद्र एवेश्वरः। मेधिराणां प्रज्ञानामपींद्र एवेश्वरो भवति। किंचेंद्रः क्षेमे लब्धस्य धनस्य परिपालने हव्यो ह्वातव्यो योगेऽलब्धस्य धनस्य लाभेऽपींद्र एव ह्वातव्यो भवति ॥

॥ इत्यष्टमस्य चतुर्थे पंचदशो वर्गः ॥

॥ अथैकादशी ॥

प्राक्तुभ्य इंद्रः प्र वृधो अहभ्यः प्रांतरिक्षात्प्र समुद्रस्य धासेः ।
प्र वातस्य प्रथसः प्र ज्मो अंतात्प्र सिंधुभ्यो रिरिचे प्र क्षितिभ्यः ॥११॥

प्र । अक्तुऽभ्यः । इंद्रः । प्र । वृधः । अहऽभ्यः । प्र । अंतरिक्षात् । प्र । समुद्रस्य । धासेः ।
प्र । वातस्य । प्रथसः । प्र । ज्मः । अंतात् । प्र । सिंधुऽभ्यः । रिरिचे । प्र । क्षितिऽभ्यः ॥११॥

इंद्रोऽक्तुभ्यो रात्रिभ्यः प्र वृधः । प्रवृद्धः । अहभ्यो दिवसेभ्योऽपि प्र वृधः । अधिकः । अंतरिक्षादपि प्रवृद्धः । समुद्रस्याब्धेर्धासेर्धारकात्स्थानादपि प्रवृद्धः । वातस्य वायोः प्रथसः प्रथिम्नोऽपि प्रवृद्धः । ज्मः पृथिव्या अंतात्पर्यंतादपि प्रवृद्धः । सिंधुभ्यो नदीभ्यश्च प्र रिरिचे । अतिरिच्यते । महान्भवतीत्यर्थः । क्षितिभ्यो मनुष्येभ्योऽपि प्र रिरिचे ॥

॥ अथ द्वादशी ॥

प्र शोशुचत्या उषसो न केतुरसिन्वा ते वर्ततामिंद्र हेतिः ।
अश्मेव विध्य दिव आ सृजानस्तपिष्ठेन हेषसा द्रोघमित्रान् ॥१२॥

प्र । शोशुचत्याः । उषसः । न । केतुः । असिन्वा । ते । वर्ततां । इंद्र । हेतिः ।
अश्माऽइव । विध्य । दिवः । आ । सृजानः । तपिष्ठेन । हेषसा । द्रोघऽमित्रान् ॥१२॥

हे इंद्र ते तवासिन्वा भेदनरहितं हेतिर्वज्राख्यमायुधं शोशुचत्या ज्वलंत्या उषसो न यथोषसः केतुः पताकस्थानीयो रश्मिस्तद्वच्छत्रुषु प्र वर्ततां । किंच । तपिष्ठेनातिशयेन शत्रूणां तापयित्र्या हेषसा शब्दकारिण्या हेत्या द्रोघमित्रान् द्रुग्धानि मित्राणि येषां ते द्रोघमित्राः । तान्शत्रून्विध्य । ताडय । तत्र दृष्टांतः । दिव आ सृजानः सृज्यमानोऽश्मेव । यथाशनिर्वृक्षान्विध्यति तद्वदित्यर्थः ॥

॥ अथ त्रयोदशी ॥

अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः ।
अन्विंद्रं रोदसी वावशाने अन्वापो अजिहत जायमानं ॥१३॥

अनु । अह । मासाः । अनु । इत् । वनानि । अनु । ओषधीः । अनु । पर्वतासः ।
अनु । इंद्रं । रोदसी इति । वावशाने इति । अनु । आपः । अजिहत । जायमानं ॥१३॥

जायमानं प्रादुर्भवंतमिंद्रं मासाश्चैत्रादयोऽन्वजिहत । अनुगच्छंति । अहेति पूरणः । वनान्यरण्यान्यपींद्रमन्वजिहत । इदिति पूरणः । ओषधीरोषध्योऽपींद्रमनुगच्छंति । पर्वतासः पर्वता अपींद्रमनुगच्छंति । वावशाने कामयमाने रोदसी द्यावापृथिव्यावपींद्रमनुगच्छतः । आप उदकान्यपींद्रमनुगच्छंति । मासाद्यधिष्ठातृदेवताः प्रादुर्भवंतमिंद्रमनुगच्छंतीत्यर्थः ॥

॥ अथ चतुर्दशी ॥

कर्हि स्वित्सा त इंद्र चेत्यासदघस्य यद्भिनदो रक्ष एषत् ।
मित्रक्रुवो यच्छसने न गावः पृथिव्या आपृगमुया शयंते ॥१४॥
कर्हि । स्वित् । सा । ते । इंद्र । चेत्या । असत् । अघस्य । यत् । भिनदः । रक्षः । आऽईषत् ।
मित्रऽक्रुवः । यत् । शसने । न । गावः । पृथिव्याः । आऽपृक् । अमुया । शयंते ॥१४॥

हे इंद्र ते तव सा हेतिरिषुर्वा चेत्या चेतयितव्या शत्रुषु क्षेप्तव्या कर्हि स्वित् कदा वासद्भविष्यति । यद्यदा हेत्या त्वमघस्य । द्वितीयार्थे षष्ठी । अहतमेषद्युद्धार्थमागच्छद्रक्षो भिनदोऽभिनत् । यद्यदा च शक्त्या मित्रक्रुवो मित्राणां क्रूरस्य कर्मणः कर्तारो जनाः पृथिव्याः संबधिनि शसने विशसनस्थाने गावो न पशव इवापृगापर्चनाहताः संतोऽमुयानया पृथिव्या संगता युद्धे शयंते शेरते ॥

॥ अथ पंचदशी ॥

शत्रूयंतो अभि ये नस्ततस्रे महि व्राधंत ओगणास इंद्र ।
अंधेनामित्रास्तमसा सचंतां सुज्योतिषो अक्तवस्ताँ अभि ष्युः ॥१५॥
शत्रुऽयंतः । अभि । ये । नः । ततस्रे । महि । व्राधंतः । ओगणासः । इंद्र ।
अंधेन । अमित्राः । तमसा । सचंतां । सुऽज्योतिषः । अक्तवः । तान् । अभि ।
स्युरिति स्युः ॥१५॥

हे इंद्र शत्रूयंतो मह्यत्यंतं व्राधंतोऽस्मान्बाधमाना ओगणासः संघीभूता ये शत्रवो नोऽस्मानभि ततस्रे निक्षिपंति तेऽमित्राः शत्रवोऽंधेन तमसा महतांधकारेण सचंतां । संगच्छंतां । किंच । तानमित्रान् सुज्योतिषो दिवसा अक्तवो रात्रयश्चाभि ष्युः । अभिभवंतु ॥

॥ अथ षोडशी ॥

पुरूणि हि त्वा सवना जनानां ब्रह्माणि मंदन्गृणतामृषीणां ।
इमामाघोषन्नवसा सहूतिं तिरो विश्वाँ अर्चतो याह्यर्वाङ् ॥१६॥

पुरूणि । हि । त्वा । सवना । जनानां । ब्रह्माणि । मंदन् । गृणतां । ऋषीणां ।
इमां । आऽघोषन् । अवसा । सऽहूतिं । तिरः । विश्वान् । अर्चतः । याहि । अर्वाङ् ॥१६॥

हे इंद्र त्वा त्वां जनानां संबंधीनि पुरूणि बहूनि सवना सवनानि ब्रह्माणि स्तोत्राणि च मंदन् । स्तुवंति मोदयंति वा । गृणतां स्तुवतामृषीणामिमां सहूतिं स्तुतिं त्वमाघोषन् महती शब्दवती चेयं स्तुतिरिति वदन् अर्चतः स्तुवतोऽन्यान्विश्वान्सर्वानपि तिरस्तिरस्कृत्यावसा रक्षणेन सहार्वाङस्मदभिमुखं याहि । गच्छ ॥

॥ अथ सप्तदशी ॥

एवा ते वयमिंद्र भुंजतीनां विद्याम सुमतीनां नवानां ।
विद्याम वस्तोरवसा गृणंतो विश्वामित्रा उत त इंद्र नूनं ॥१७॥

एव । ते । वयं । इंद्र । भुंजतीनां । विद्याम । सुऽमतीनां । नवानां ।
विद्याम । वस्तोः । अवसा । गृणंतः । विश्वामित्राः । उत । ते । इंद्र । नूनं ॥१७॥

हे इंद्र ते तवैव भुंजतीनां रक्षंतीः प्रिया वयं विश्वामित्रपुत्रा रेणवो विद्याम । लभेमहि । उतापि च हे इंद्र ते तव नवानां नूतनाः सुमतीनामनुग्रहबुद्धीर्वस्तोरहन्यवसा रक्षणार्थं गृणंतो नूनं त्वां स्तुवंत एव विश्वामित्रा विश्वामित्रपुत्रा वयं विद्याम । लभेम ॥

॥ अथाष्टादशी ॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥१८॥

शुनं । हुवेम । मघऽवानं । इंद्रं । अस्मिन् । भरे । नृऽतमं । वाजऽसातौ ।
शृण्वंतं । उग्रं । ऊतये । समत्ऽसु । घ्नंतं । वृत्राणि । संऽजितं । धनानां ॥१८॥

अस्मिन्भरे संग्रामे शुनं वृद्धं मघवानं धनवंतं शृण्वंतमस्मदीयस्याह्वानस्य श्रोतारमुग्रमुद्गूर्णं समत्सु संग्रामेषु वृत्राणि शत्रून्घ्नंतं मारयंतं धनानां शत्रुधनानां

संजितं सम्यगेव जेतारमिंद्रं वाजसातावन्नस्य लाभायोतये रक्षणाय च हुवेम। आह्वयेम ॥

॥ इत्यष्टमस्य चतुर्थे षोडशो वर्गः ॥

सहस्रशीर्षेति षोडशर्चं षष्ठं सूक्तं। नारायणो नामर्षिरंत्या त्रिष्टुप् शिष्टा अनुष्टुभः। अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः। वे॰ सू॰ १.४.१.। पुरुषान्न परं किंचित्। का॰ उ॰ ३.११.। इत्यादिश्रुतिषु प्रसिद्धः। स देवता। तथा चानुक्रांतं। सहस्रशीर्षा षोडश नारायणः पौरुषमानुष्टुभं त्रिष्टुबंतं त्विति। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशांगुलं ॥१॥

सहस्रऽशीर्षा। पुरुषः। सहस्रऽअक्षः। सहस्रऽपात्।
सः। भूमिं। विश्वतः। वृत्वा। अति। अतिष्ठत्। दशऽअंगुलं ॥१॥

सर्वप्राणिसमष्टिरूपो ब्रह्मांडदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा। सहस्रशब्दस्योपलक्षणत्वादनंतैः शिरोभिर्युक्त इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहांतःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वं। एवं सहस्राक्षित्वं सहस्रपादत्वं च। स पुरुषो भूमिं ब्रह्मांडगोलकरूपां विश्वतः सर्वतो वृत्वा परिवेष्ट्य दशांगुलं दशांगुलपरिमितं देशमत्यतिष्ठत्। अतिक्रम्य व्यवस्थितः। दशांगुलमित्युपलक्षणं। ब्रह्मांडाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ॥

॥ अथ द्वितीया ॥

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥

पुरुषः। एव। इदं। सर्वं। यत्। भूतं। यत्। च। भव्यं।
उत। अमृतऽत्वस्य। ईशानः। यत्। अन्नेन। अतिऽरोहति ॥२॥

यदिदं वर्तमानं जगत्तत्सर्वं पुरुष एव। यच्च भूतमतीतं जगद्यच्च भव्यं भविष्यज्जगत् तदपि पुरुष एव। यथास्मिन्कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवास्तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। उतापि च।

अमृतत्वस्य देवत्वस्यायमीशानः स्वामी । यद्यस्मात्कारणादन्नेन प्राणिनां भोग्येनान्नेन निमित्तभूतेनातिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात्प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः ॥

॥ अथ तृतीया ॥

एतावा॑नस्य महि॒मातो॒ ज्याया॑श्च॒ पूरु॑षः ।
पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृतं॑ दि॒वि ॥३॥

ए॒ताव॑न् । अ॒स्य॒ । म॒हि॒मा । अतः॑ । ज्याया॑न् । च॒ । पुरु॑षः ।
पाद॑ः । अ॒स्य॒ । विश्वा॑ । भू॒तानि॑ । त्रि॒ऽपात् । अ॒स्य॒ । अ॒मृत॑म् । दि॒वि ॥३॥

अतीतानागतवर्तमानरूपं जगद्यावदस्ति एतावान्सर्वोऽप्यस्य पुरुषस्य महिमा । स्वकीयसामर्थ्यविशेषः । न तु तस्य वास्तवस्वरूपं । वास्तवस्तु पुरुषोऽतो महिम्नोऽपि ज्यायान् । अतिशयेनाधिकः । एतच्चोभयं स्पष्टीक्रियते । अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादः । चतुर्थोऽंशः । अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपममृतं विनाशरहितं सद्दिवि द्योतनात्मके स्वप्रकाशस्वरूपे व्यवतिष्ठत इति शेषः । यद्यपि सत्यं ज्ञानमनंतं ब्रह्मेत्याम्नातस्य परब्रह्मण इयत्ताभावात्पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः ॥

॥ अथ चतुर्थी ॥

त्रि॒पादू॒र्ध्व उदै॒त्पुरु॑षः॒ पादो॑ऽस्ये॒हाभ॑व॒त्पुनः॑ ।
ततो॒ विष्व॒ङ्व्य॑क्राम॒त्साशनानश॒ने अ॒भि ॥४॥

त्रि॒ऽपात् । ऊ॒र्ध्वः । उत् । ऐ॒त् । पुरु॑षः । पाद॑ः । अ॒स्य॒ । इ॒ह । अ॒भ॒व॒त् । पुन॒रिति॑ ।
तत॑ः । विष्व॑ङ् । वि । अ॒क्रा॒म॒त् । सा॒श॒ना॒न॒श॒ने इति॑ । अ॒भि ॥४॥

योऽयं त्रिपात्पुरुषः संसाररहितो ब्रह्मस्वरूपः सोऽयमूर्ध्व उदैत् । अस्मादज्ञानकार्यात्संसाराद्बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान् । तस्यास्य सोऽयं पादो लेशः सोऽयमिह मायायां पुनरभवत् । सृष्टिसंहाराभ्यां पुनःपुनरागच्छति । अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तं । विष्टभ्याहमिदं

कृत्स्नमेकांशेन स्थितो जगत्। भ॰ गी॰ १०.४२.। इति। ततो मायायामागत्यनंतरं विष्वङ् देवमनुष्यतिर्यगादिरूपेण विविधः सन् व्यक्रामत्। व्याप्तवान्। किं कृत्वा। साशनानशने अभिलक्ष्य। साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातं अनशनं तद्रहितमचेतनं गिरिनद्यादिकं। तदुभयं यथा स्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः॥

॥ अथ पंचमी ॥

तस्मा॑द्वि॒राळ॑जायत वि॒राजो॒ अधि॒ पूरु॑षः।
स जा॒तो अत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः॥५॥

तस्मा॑त्। वि॒ऽराट्। अ॒जा॒य॒त॒। वि॒ऽराजः॑। अधि॑। पुरु॑षः।
सः। जा॒तः। अति॑। अ॒रि॒च्य॒त॒। प॒श्चात्। भूमि॑म्। अथो॒ इति॑। पु॒रः॥५॥

विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपंच्यते। तस्मादादिपुरुषाद्विराड्ब्रह्मांडदेहोऽजायत। उत्पन्नः। विविधानि राजंते वस्तून्यत्रेति विराट्। विराजोऽधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषस्तद्देहाभिमानी कश्चित्पुमानजायत। सोऽयं सर्ववेदांतवेद्यः परमात्मा स्वयमेव स्वकीयया मायया विराड्देहं ब्रह्मांडरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्मांडाभिमानी देवतात्मा जीवोऽभवत्। एतच्चाथर्वणिका उत्तरतापनीये। ९.९.। विस्पष्टमामनंति। स वा एष भूतानींद्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययेति। स जातो विराट् पुरुषोऽत्यरिच्यत। अतिरिक्तोऽभूत्। विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत्। पश्चाद्देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः। अथो भूमिसृष्टेरनंतरं तेषां जीवानां पुरः ससर्ज। पूर्यंते सप्तभिर्धातुभिरिति पुरः शरीराणि॥

॥ इत्यष्टमस्य चतुर्थे सप्तदशो वर्गः ॥

॥ अथ षष्ठी ॥

यत्पुरु॑षेण ह॒विषा॑ दे॒वा य॒ज्ञमत॑न्वत।
व॒सं॒तो अ॑स्यासी॒दाज्यं॑ ग्री॒ष्म इ॒ध्मः श॒रद्ध॒विः॥६॥

यत्। पुरु॑षेण। ह॒विषा॑। दे॒वाः। य॒ज्ञम्। अत॑न्वत।
व॒सं॒तः। अ॒स्य॒। आ॒सी॒त्। आज्य॑म्। ग्री॒ष्मः। इ॒ध्मः। श॒रत्। ह॒विः॥६॥

यद्यदा पूर्वोक्तक्रमेणैव शरीरेषूत्पन्नेषु सत्सु देवा उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरंतरासंभवात्पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वतान्वतिष्ठन् तदानीमस्य यज्ञस्य वसंतो वसंतर्तुरेवाज्यमासीत्। अभूत्। तमेवाज्यत्वेन संकल्पितवंत इत्यर्थः। एवं ग्रीष्म इध्म आसीत्। तमेवेध्मत्वेन संकल्पितवंत इत्यर्थः। तथा शरद्धविरासीत्। तामेव पुरोडाशादिहविष्ट्वेन संकल्पितवंत इत्यर्थः। पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः। अनंतरं वसंतादीनामाज्यादिविशेषरूपत्वेन संकल्प इति द्रष्टव्यं ॥

॥ अथ सप्तमी ॥

तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजंत साध्या ऋषयश्च ये ॥७॥

तं। यज्ञं। बर्हिषि। प्र। औक्षन्। पुरुषं। जातं। अग्रतः।
तेन। देवाः। अयजंत। साध्याः। ऋषयः। च। ये ॥७॥

यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन्। प्रोक्षितवंतः। कीदृशमित्यत्राह। अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नं। एतच्च प्रागेवोक्तं तस्माद्विराळजायत विराजो अधि पूरुष इति। तेन पुरुषरूपेण पशुना देवा अयजंत। मानसयागं निष्पादितवंत इत्यर्थः। के ते देवा इत्यत्राह। साध्याः। सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः। तदनुकूला ऋषयो मंत्रद्रष्टारश्च ये संति ते सर्वेऽप्ययजंतेत्यर्थः ॥

॥ अथाष्टमी ॥

तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यं ।
पशून्तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥८॥

तस्मात्। यज्ञात्। सर्वऽहुतः। संऽभृतं। पृषत्ऽआज्यं।
पशून्। तान्। चक्रे। वायव्यान्। आरण्यान्। ग्राम्याः। च। ये ॥८॥

सर्वहुतः। सर्वात्मकः पुरुषो यस्मिन्यज्ञे हूयते सोऽयं सर्वहुत्। तादृशात्तस्मात्पूर्वोक्तान्मानसाद्यज्ञात्पृषदाज्यं दधिमिश्रमाज्यं संभृतं। संपादितं। दधि चाज्यं चेत्येवमादिभोग्यजातं सर्वं संपादितमित्यर्थः। तथा वायव्यान्वायुदेवताकाँल्लोक-

प्रसिद्धानारण्यान्पशूंश्चक्रे । उत्पादितवान् । आरण्या हरिणादयः । तथा ये च ग्राम्या गवाश्वादयस्तानपि चक्रे । पशूनामंतरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते । वायवः स्थेत्याह वायुर्वा अंतरिक्षस्याध्यक्षाः । अंतरिक्षदेवत्याः खलु वै पशवः । वायव एवैनान्परिददाति । तै॰ ब्रा॰ ३.२.१.३. । इति ॥

॥ अथ नवमी ॥

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छंदांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥९॥
तस्मात् । यज्ञात् । सर्वऽहुतः । ऋचः । सामानि । जज्ञिरे ।
छंदांसि । जज्ञिरे । तस्मात् । यजुः । तस्मात् । अजायत ॥९॥

सर्वहुतस्तस्मात्पूर्वोक्ताद्यज्ञादृचः सामानि जज्ञिरे । उत्पन्नाः । तस्माद्यज्ञाच्छंदांसि गायत्र्यादीनि जज्ञिरे । तस्माद्यज्ञाद्यजुरप्यजायत ॥

॥ अथ दशमी ॥

तस्मादश्वा अजायंत ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥१०॥
तस्मात् । अश्वाः । अजायंत । ये । के । च । उभयादतः ।
गावः । ह । जज्ञिरे । तस्मात् । तस्मात् । जाताः । अजावयः ॥१०॥

तस्मात्पूर्वोक्ताद्यज्ञादश्वा अजायंत । उत्पन्नाः । तथा येकेचाश्वव्यतिरिक्ता गर्दभा अश्वतराश्चोभयादत ऊर्ध्वाधोभागयोरुभयोर्दंतयुक्ताः संति तेऽप्यजायंत । तथा तस्माद्यज्ञाद्गावश्च जज्ञिरे । किंच । तस्माद्यज्ञादजावयश्च जाताः ॥

॥ इत्यष्टमस्य चतुर्थेऽष्टादशो वर्गः ॥

॥ अथैकादशी ॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥११॥
यत् । पुरुषं । वि । अदधुः । कतिधा । वि । अकल्पयन् ।
मुखं । किं । अस्य । कौ । बाहू इति । कौ । ऊरू इति । पादौ । उच्येते इति ॥११॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यंते । प्रजापतेः प्राणरूपा देवा यद्यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवंतस्तदानीं कतिधा कतिभिः प्रकारैर्व्यकल्पयन् । विविधं कल्पितवंतः । अस्य पुरुषस्य मुखं किमासीत् । कौ बाहू अभूतां । का ऊरू । कौ च पादावुच्येते । प्रथमं सामान्यरूपः प्रश्नः पश्चान्मुखं किमित्यादिना विशेषविषयाः प्रश्नाः ॥

॥ अथ द्वादशी ॥

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।

ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥१२॥

ब्राह्मणः । अस्य । मुखं । आसीत् । बाहू इति । राजन्यः । कृतः ।

ऊरू इति । तत् । अस्य । यत् । वैश्यः । पत्ऽभ्यां । शूद्रः । अजायत ॥१२॥

इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति । अस्य प्रजापतेर्ब्राह्मणो ब्राह्मणत्वजातिविशिष्टः पुरुषो मुखमासीत् । मुखादुत्पन्न इत्यर्थः । योऽयं राजन्यः क्षत्रियत्वजातिमान्पुरुषः स बाहू कृतः । बाहुत्वेन निष्पादितः । बाहुभ्यामुत्पादित इत्यर्थः । तत्तदानीमस्य प्रजापतेर्यदूरू तद्रूपो वैश्यः संपन्नः । ऊरुभ्यामुत्पन्न इत्यर्थः । तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान्पुरुषोऽजायत । इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकांडे स मुखतस्त्रिवृतं निरमिमीतेत्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये ॥

॥ अथ त्रयोदशी ॥

चंद्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।

मुखादिंद्रश्चाग्निश्च प्राणाद्वायुरजायत ॥१३॥

चंद्रमाः । मनसः । जातः । चक्षोः । सूर्यः । अजायत ।

मुखात् । इंद्रः । च । अग्निः । च । प्राणात् । वायुः । अजायत ॥१३॥

यथा दध्याज्यादिद्रव्याणि गवादयः पशव ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चंद्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह । प्रजापतेर्मनसः सकाशाच्चंद्रमा जातः । चक्षोश्च चक्षुषः सूर्योऽप्यजायत । अस्य मुखादिंद्रश्चाग्निश्च देवावुत्पन्नौ । अस्य प्राणाद्वायुरजायत ॥

॥ अथ चतुर्दशी ॥

नाभ्या आसीदंतरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥१४॥

नाभ्याः । आसीत् । अंतरिक्षं । शीर्ष्णः । द्यौः । सं । अवर्तत ।
पत्ऽभ्यां । भूमिः । दिशः । श्रोत्रात् । तथा । लोकान् । अकल्पयन् ॥१४॥

यथा चंद्रादीन्प्रजापतेर्मनःप्रभृतिभ्योऽकल्पयंस्तथांतरिक्षादीँल्लोकान्प्रजापतेर्नाभ्यादिभ्यो देवा अकल्पयन् उत्पादितवंतः । एतदेव दर्शयति । नाभ्याः प्रजापतेर्नाभेरंतरिक्षमासीत् । शीर्ष्णः शिरसो द्यौः समवर्तत । उत्पन्ना । अस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना । अस्य श्रोत्राद्दिश उत्पन्नाः ॥

॥ अथ पंचदशी ॥

सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुं ॥१५॥

सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । संऽइधः । कृताः ।
देवाः । यत् । यज्ञं । तन्वानाः । अबध्नन् । पुरुषं । पशुं ॥१५॥

अस्य सांकल्पिकयज्ञस्य गायत्र्यादीनि सप्त छंदांसि परिधय आसन् । ऐष्टिकस्याहवनीयस्य त्रयः परिधय उत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः । अत एवाम्नायते । न पुरस्तात्परिदध्यादित्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षांस्यपहंतीति । तत एत आदित्यसहिताः सप्त परिधयोऽत्र सप्त छंदोरूपाः । तथा समिधस्त्रिः सप्त त्रिगुणीकृतसप्तसंख्याका एकविंशतिः कृताः । द्वादश मासाः पंचर्तवस्त्रय इमे लोका असावादित्य एकविंश इति श्रुताः पदार्था एकविंशतिदारुयुक्तेंधनत्वेन भाविताः । यद्यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेंद्रियरूपा यज्ञं तन्वाना मानसं यज्ञं तन्वानाः कुर्वाणाः पशुमबध्नन् । विराट्पुरुषमेव पशुत्वेन भावितवंतः । एतदेवाभिप्रेत्य पूर्वत्र यत्पुरुषेण हविषेत्युक्तं ॥

॥ अथ षोडशी ॥

यज्ञेन यज्ञमयजंत देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचंत यत्र पूर्वे साध्याः संति देवाः ॥१६॥

यज्ञेन॑ । य॒ज्ञम् । अ॒य॒ज॒न्त॒ । दे॒वाः । तानि॑ । धर्मा॑णि । प्र॒थ॒मानि॑ । आ॒स॒न् ।
ते । ह॒ । नाक॑म् । म॒हि॒मानः॑ । स॒च॒न्त॒ । यत्र॑ । पूर्वे॑ । सा॒ध्याः । सन्ति॑ । दे॒वाः ॥१६॥

पूर्वं प्रपंचेनोक्तमर्थं संक्षिप्यात्र दर्शयति । देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिमयजंत । पूजितवंतः । तस्मात्पूजनात्तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यान्यासन् । एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः । अथोपासनतत्फलानुवादकभागार्थः संगृह्यते । यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपास्तिसाधका देवाः संति तिष्ठंति तन्नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानस्तदुपासका महात्मानः सचंत । समवयंति । प्राप्नुवंति ॥

॥ इत्यष्टमस्य चतुर्थे एकोनविंशो वर्गः ॥

॥ इति दशमे मंडले सप्तमोऽनुवाकः ॥

अष्टमेऽनुवाके नव सूक्तानि । सं जागृवद्भिरिति पंचदशर्चं प्रथमं सूक्तं वीतहव्यपुत्रस्यारुणनाम्न आर्षमग्निदेवत्यं । अंत्या त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रांतं । सं जागृवद्भिः पंचोनारुणो वैतहव्य आग्नेयमिति ॥ प्रातरनुवाकाश्विनशस्त्रयोर्जागते छंदसीदं सूक्तं । सूत्रितं च । सं जागृवद्भिश्चित्र इच्छिशोर्वसुं न चित्रमहसमिति जागतं । आ॰ ४.१३. । इति ॥

॥ तत्र प्रथमा ॥

सं जा॑गृ॒वद्भि॒र्जर॑माण इध्यते॒ दमे॒ दमू॑ना इ॒षय॑न्नि॒ळस्प॒दे ।
विश्व॑स्य॒ होता॑ ह॒विषो॒ वरे॑ण्यो वि॒भुर्वि॒भावा॑ सु॒षखा॑ सखीय॒ते ॥१॥
सम् । जा॒गृ॒वत्ऽभिः॑ । जर॑माणः । इ॒ध्य॒ते॒ । दमे॑ । दमू॑नाः । इ॒षय॑न् । इ॒ळः । प॒दे ।
विश्व॑स्य । होता॑ । ह॒विषः॑ । वरे॑ण्यः । वि॒ऽभुः । वि॒भाऽवा॑ । सु॒ऽसखा॑ । स॒खि॒ऽय॒ते ॥१॥

हे अग्ने जागृवद्भिर्जागरणशीलैः स्तोतृभिर्जरमाणः स्तूयमानो दमूना दममना दानमना दांतमना वेळ इळायास्पदे स्थान उत्तरवेद्यामिषयन् अन्नमिच्छन् विश्वस्य सर्वस्य हविषो होता वरेण्यो वरणीयो विभुर्व्याप्तो विभावा दीप्तिमान् सुषखा शोभनसखा भवान् सखीयते सखित्वमिच्छते यजमानाय समिध्यते । सम्यग्दीप्यते ॥

॥ अथ द्वितीया ॥

स दर्शतश्रीरतिथिर्गृहेगृहे वनेवने शिश्रिये तक्ववीरिव ।
जनंजनं जन्यो नाति मन्यते विश आ क्षेति विश्यो३ विशंविशं ॥२॥
सः । दर्शतऽश्रीः । अतिथिः । गृहेऽगृहे । वनेऽवने । शिश्रिये । तक्ववीःऽइव ।
जनंऽजनं । जन्यः । न । अति । मन्यते । विशः । आ । क्षेति । विश्यः । विशंऽविशं ॥२॥

दर्शतश्रीर्दर्शनीयविभूतिरतिथिरतिथिभूतः सोऽग्निर्गृहेगृहे यजमानानां गृहेषु वनेवने सर्वेषु वनेषु च शिश्रिये । श्रयति । किंच जन्यो जनहितः सोऽग्निर्जनंजनं सर्वं जनं तक्ववीरिव गच्छन्निव नाति मन्यते । न विसृज्य गच्छतीत्यर्थः । तदेव दर्शयति । विश्यो विड्भ्यो हितः सोऽग्निर्विशो मनुष्याना क्षेति । किंच । विशंविशं सर्वा विशः प्रजा अधितिष्ठतीति शेषः ॥

॥ अथ तृतीया ॥

सुदक्षो दक्षैः क्रतुनासि सुक्रतुरग्ने कविः काव्येनासि विश्ववित् ।
वसुर्वसूनां क्षयसि त्वमेक इद्द्यावा च यानि पृथिवी च पुष्यतः ॥३॥
सुऽदक्षः । दक्षैः । क्रतुना । असि । सुऽक्रतुः । अग्ने । कविः । काव्येन । असि । विश्वऽवित् ।
वसुः । वसूनां । क्षयसि । त्वं । एकः । इत् । द्यावा । च । यानि । पृथिवी इति । च । पुष्यतः ॥३॥

हे अग्ने त्वं दक्षैर्बलैः सुदक्षः सुबलोऽसि । भवसि । किंच क्रतुना कर्मणा सुक्रतुः शोभनकर्मासि । किंच काव्येन मेधाविकर्मणा कविर्मेधाव्यसि । किंच विश्ववित्सर्वज्ञोऽसि । किंच वसूनां धनानां वसुर्वासयितासि । किंच हे अग्ने त्वमेक इदेक एव क्षयसि । निवससि । किंच द्यावा च पृथिवी च द्यावाभूमी यानि वसूनि पुष्यतः संवर्धयतस्तेषां दिव्यानां पार्थिवानां च धनानामीशिष इत्यर्थः ॥

॥ अथ चतुर्थी ॥

प्रजानन्नग्ने तव योनिमृत्वियमिळायास्पदे घृतवंतमासदः ।
आ ते चिकित्र उषसामिवेतयोऽरेपसः सूर्यस्येव रश्मयः ॥४॥
प्रऽजानन् । अग्ने । तव । योनिं । ऋत्वियं । इळायाः । पदे । घृतऽवंतं । आ । असदः ।
आ । ते । चिकित्रे । उषसांऽइव । एतयः । अरेपसः । सूर्यस्यऽइव । रश्मयः ॥४॥

हे अग्ने तवर्त्वियमृतौ भवं घृतवंतं घृतेन सहितं योनिं निवासस्थानमिळाया-स्पद उत्तरवेद्यां प्रजानन् त्वमासदः। आसीदसि। किंच ते तव रश्मय उषसामिव यथोषसामेतयः प्रज्ञाः प्रकाशलक्षणा आगतयो वा। सूर्यस्येव --- ॥

॥ अथ पंचमी ॥

तव श्रियो वर्ष्यस्येव विद्युतश्चित्राश्चिकित्र उषसां न केतवः।
यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमास्ये ॥५॥
तव। श्रियः। वर्ष्यस्यऽइव। विऽद्युतः। चित्राः। चिकित्रे। उषसां। न। केतवः।
यत्। ओषधीः। अभिऽसृष्टः। वनानि। च। परि। स्वयं। चिनुषे। अन्नं। आस्ये ॥५॥

--- यथा वर्षितुर्मेघस्य संबंधिन्यो विद्युत उषसां न यथा चोषसां केतवः प्रज्ञा-नास्तत्स्याः प्रकाशाः प्रज्ञायंते तद्वदित्यर्थः। कदेत्यत्राह। यद्यदा त्वमोषधीर्व्रीह्याद्या वनान्यरण्यानि चाभिसृष्टः सृष्टो दग्धुं विसृष्टः सन् स्वयमात्मनास्ये मुखेऽन्नम-दनीयं स्थावरलक्षणं परि चिनुषे। परिक्षिपसीत्यर्थः ॥

॥ इत्यष्टमस्य चतुर्थे विंशो वर्गः ॥

॥ अथ षष्ठी ॥

तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निं जनयंत मातरः।
तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥६॥
तं। ओषधीः। दधिरे। गर्भं। ऋत्वियं। तं। आपः। अग्निं। जनयंत। मातरः।
तं। इत्। समानं। वनिनः। च। वीरुधः। अंतःऽवतीः। च। सुवते। च। विश्वहा ॥६॥

ऋत्वियमृतौ प्राप्तं गर्भं गर्भभूतं तं प्रकृतमग्निमोषधीरोषध्यो दधिरे। धारयंति। तमेवाग्निं मातरो धारकत्वेन मातृस्थानीया आपश्च जनयंत। जनयंति। किंच वनिनो वनस्पतयश्च समानं गर्भभावेन प्रवेशात्स्वतुल्यं तमित्तमेवाग्निं जनयंति। किंच तमेवाग्निमंतर्वतीर्गर्भवत्यो वीरुध ओषधयश्च विश्वहा सर्वदा सुवते। जनयंति ॥

॥ अथ सप्तमी ॥

वातोपधूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे।
आ ते यतंते रथ्योऽयथा पृथक्शर्धांस्यग्ने अजराणि धक्षतः ॥७॥

वातऽउपधूतः। इषितः। वशान्। अनु। तृषु। यत्। अन्ना। वेविषत्। विऽतिष्ठसे।
आ। ते। यतंते। रथ्यः। यथा। पृथक्। शर्धांसि। अग्ने। अजराणि। धक्षतः ॥७॥

हे अग्ने यद्यदा त्वं वातोपधूतो वायुना कंपितो वशान्कांतान्वनस्पतीननु प्रति तृषु क्षिप्रमिषितः प्रेरितश्च सन् अन्नान्यदनीयानि वनस्पत्यादीनि स्थावराणि वेविषद्व्याप्नुवन्वितिष्ठस इतस्ततो गच्छसि तदानीं धक्षतः काननानि दहतस्ते तवाजराणि जरारहितानि शर्धांसि तेजांसि यथा रथ्यो रथिनस्तद्वत्पृथगा यतंते। गच्छंति ॥

॥ अथाष्टमी ॥

मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिं।
तमिदर्भे हविष्या समानमित्तमिन्महे वृणते नान्यं त्वत् ॥८॥

मेधाऽकारं। विदथस्य। प्रऽसाधनं। अग्निं। होतारं। परिऽभूतमं। मतिं।
तं। इत्। अर्भे। हविषि। आ। समानं। इत्। तं। इत्। महे। वृणते। न। अन्यं। त्वत् ॥८॥

मेधाकारं प्रज्ञायाः कर्तारं विदथस्य यज्ञस्य प्रसाधनं प्रकर्षेण साधकं होतारं देवानामाह्वातारं परिभूतममतिशयेन शत्रूणां परिभवितारं मतिं मंतारं यं त्वामग्निं वृणीमह इति शेषः। तमित्तमेवाग्निमर्भेऽल्पे हविषि च पुरोडाशादिके हविषि समानमित्सहैवर्त्विज आ वृणते। प्रार्थयंते। महे महति सोमात्मके हविष्यपि तमित्तमेवाग्निं वृणते। त्वत्त्वत्तोऽन्यमतिरिक्तं देवं न वृणते ॥

॥ अथ नवमी ॥

त्वामिदत्र वृणते त्वायवो होतारमग्ने विदथेषु वेधसः।
यद्देवयंतो दधति प्रयांसि ते हविष्मंतो मनवो वृक्तबर्हिषः ॥९॥

त्वां। इत्। अत्र। वृणते। त्वाऽयवः। होतारं। अग्ने। विदथेषु। वेधसः।
यत्। देवऽयंतः। दधति। प्रयांसि। ते। हविष्मंतः। मनवः। वृक्तऽबर्हिषः ॥९॥

हे अग्ने होतारं देवानां ह्वातारमग्निं त्वामित्त्वामेव त्वायवस्त्वत्कामा वेधसः कर्मणां कर्तार ऋत्विजोऽत्रास्मिँल्लोके विदथेषु यज्ञेषु वृणते। प्रार्थयंते। कदेत्यत आह। यद्यदा देवयंतो देवान्यष्टुं स्तोतुं वेच्छंतो वृक्तबर्हिषश्छिन्नबर्हिषो हविष्मंतः संस्कृतहविष्का मनवो मनुष्या ऋत्विजस्ते तुभ्यं प्रयांसि हवींषि दधति धारयंति। प्रयच्छंतीत्यर्थः ॥

॥ अथ दशमी ॥

तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः ।
तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ॥१०॥
तव । अग्ने । होत्रं । तव । पोत्रं । ऋत्वियं । तव । नेष्ट्रं । त्वं । अग्नित् । ऋतऽयतः ।
तव । प्रऽशास्त्रं । त्वं । अध्वरिऽयसि । ब्रह्मा । च । असि । गृहऽपतिः । च । नः । दमे ॥१०॥

हे अग्ने तव होत्रं होतृकर्म त्वया विना तस्याभावात् । किंच तवैवर्त्वियमृतौ भवं प्राप्तानुष्ठानकालं पोत्रं पोतृकर्म त्वया विना तस्याप्यभावात् । किंच तवैव नेष्ट्रं नेष्टृकर्म। किंच। ऋतायत ऋतं यज्ञं कर्तुमिच्छतो यजमानस्य त्वमेवाग्निर्नान्यः कश्चित् । किंच तवैव प्रशास्त्रं प्रशास्तृकर्म। किंच हे अग्ने त्वमेवाध्वरीयसि । अध्वरं यज्ञं कर्तुमिच्छसि । तव हेतुत्वात्त्वत्कर्तृत्वं। किंच त्वमेव ब्रह्मासि त्वया विना तस्याभावात्। किंच नोऽस्माकं दमे गृहे गृहपतिर्यजमानोऽसि त्वया विनास्माकं यजमानत्वाभावात् ॥

॥ इत्यष्टमस्य चतुर्थे एकविंशो वर्गः ॥

॥ अथैकादशी ॥

यस्तुभ्यमग्ने अमृताय मर्त्यः समिधा दाशदुत वा हविष्कृति ।
तस्य होता भवसि यासि दूत्य१मुप ब्रूषे यजस्यध्वरीयसि ॥११॥
यः । तुभ्यं । अग्ने । अमृताय । मर्त्यः । संऽइधा । दाशत् । उत । वा । हविःऽकृति ।
तस्य । होता । भवसि । यासि । दूत्यं । उप । ब्रूषे । यजसि । अध्वरिऽयसि ॥११॥

हे अग्ने अमृताय मरणधर्मवर्जिताय तुभ्यं यो मर्त्यो मनुष्यः समिधा समिधं । द्वितीयायाः सुपां सुलुगित्याकारः। दाशद्दाति प्रयच्छति उत वापि वा हविष्कृति। हविषां कृत् करणं यस्मिन् स हविष्कृत्। तस्मिन्यज्ञे हवींषि ददातीति शेषः। तस्य मनुष्यस्य होता देवानामाह्वाता भवसि। किंच त्वं दूत्यं देवान्प्रति दूतकर्म कर्तुं यासि। गच्छसि। किंच त्वं ब्रह्मा भूत्वास्मिन्कर्मणि युष्मभ्यमिमानि हवींषि यजमानेन प्रहितानीत्युप ब्रूषे। उपक्रम्य ब्रवीषि। किंच। त्वं यजसि। यजमानो भूत्वा देवेभ्यो हवींषि ददासि। किंच त्वं तथा पूर्वोक्तप्रकारेणाध्वरीयसि। अध्वर्युरिवाचरसि। अथवान्यं यज्ञं कर्तुमिच्छसि ॥

॥ अथ द्वादशी ॥

इमा अस्मै मतयो वाचो अस्मदाँ ऋचो गिरः सुष्टुतयः समग्मत ।
वसूयवो वसवे जातवेदसे वृद्धासु चिद्वर्धनो यासु चाकनत् ॥ १२ ॥
इमाः । अस्मै । मतयः । वाचः । अस्मत् । आ । ऋचः । गिरः । सुऽस्तुतयः । सं । अग्मत ।
वसुऽयवः । वसवे । जातऽवेदसे । वृद्धासु । चित् । वर्धनः । यासु । चाकनत् ॥ १२ ॥

जातवेदसे जातप्रज्ञाय वसवे वासयित्रेऽस्मा अग्नये मतयः पूजयित्र्य इमा वाचो वसूयवोऽस्मदर्थं धनकामाः सत्योऽस्मदस्मत्तो निर्गत्या समग्मत । आभिमुख्येन संगच्छंते । तमिममग्निं प्रीणयंत्वित्यर्थः । काः पुनस्ताः । सुष्टुतयः शोभनस्तुतिरूपा ऋच ऋगात्मिका गिरो वाचः । तथा यासु वृद्धासु चित् स्वत एव वृद्धास्वपि वर्धनः पुनरपि वर्धयिता सन्नग्निश्चाकनत् । स्तोतॄन्कामयते । इमा मतय इत्यन्वयः ॥

॥ अथ त्रयोदशी ॥

इमां प्रत्नाय सुष्टुतिं नवीयसीं वोचेयमस्मा उशते शृणोतु नः ।
भूया अंतरा हृद्यस्य निस्पृशे जायेव पत्य उशती सुवासाः ॥ १३ ॥
इमां । प्रत्नाय । सुऽस्तुतिं । नवीयसीं । वोचेयं । अस्मै । उशते । शृणोतु । नः ।
भूयाः । अंतरा । हृदि । अस्य । निऽस्पृशे । जायाऽइव । पत्ये । उशती । सुऽवासाः ॥ १३ ॥

प्रत्नाय पुराणायोशते स्तोत्रं कामयमानायास्मा अग्नये नवीयसीं नवतरामन्यैरकृतपूर्वां सुष्टुतिं शोभनस्तुतिं वोचेयं । अहं वक्ष्यामि । सोऽग्निरस्मदीयां स्तुतिं शृणोतु । किंचाहमस्याग्नेर्हृदि हृदये तत्रापंतरा मध्ये निस्पृशे संस्पर्शनाय । गुणैरनुरंजनायेत्यर्थः । भूयाः । भूयासं । व्यत्ययेन मध्यमः । अग्नेर्हृदिस्पृगहं स्यामित्यर्थः । अथवा मम सुष्टुतेरनुप्रवेष्टा भवेति योज्यं । समानमन्यत् । तत्र दृष्टांतः । पत्ये पत्युर्हृदयस्य मध्ये सुवासाः शोभनवस्त्रादिना मंडिता जायोशती कामयमाना यथेष्टतमा भवति तद्वदित्यर्थः ॥

॥ अथ चतुर्दशी ॥

यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनये चारुमग्नये ॥ १४ ॥

यस्मिन्। अश्वासः। ऋषभासः। उक्षणः। वशाः। मेषाः। अवऽसृष्टासः। आऽहुताः।
कीलालऽपे। सोमऽपृष्ठाय। वेधसे। हृदा। मतिं। जनये। चारुं। अग्नये ॥१४॥

यस्मिन्नग्नावुक्षण उक्षाणः।·वा षपूर्वस्य निगम इति दीर्घविकल्पः। सेचनसमर्था अश्वासोऽश्वा ऋषभासो वृषभाश्च वशाः स्वभाववंध्याश्च मेषाश्चावसृष्टासो देवतार्थमवसृष्टाः परित्यक्ताः संतोऽश्वमेध आहुता आभिमुख्येन हुता भवंति कीलालपे सौत्रामण्यां सुरां पिबते। कीलालमित्युदकनामसु पाठात्। उदकं पिबते सोमपृष्ठाय। सोमयुक्तः पृष्ठ उपरिभागो यस्य तस्मै सोमपृष्ठाय वेधसे विधात्रे तस्मा अग्नये हृदा हृदयेन चारुं कल्याणीं मतिं स्तुतिं जनये। जनयामि। उत्पादयामि॥

॥ अथ पंचदशी ॥

अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः।
वाजसनिं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहंतं ॥१५॥

अहावि। अग्ने। हविः। आस्ये। ते। स्रुचिऽइव। घृतं। चम्विऽइव। सोमः।
वाजऽसनिं। रयिं। अस्मे इति। सुऽवीरं। प्रऽशस्तं। धेहि। यशसं। बृहंतं ॥१५॥

हे अग्ने ते तवास्ये मुखे हविः पुरोडाशादि हविरस्माभिरहावि। सततं प्रक्षिप्यते। तत्र दृष्टांतौ। घृतमाज्यं स्रुचीव। यथा स्रुचि। चम्वीव सोमः। यथा चमसे सोमस्तद्वदित्यर्थः। तथा त्वं वाजसनिमन्नस्य दातारं सुवीरं शोभनपुत्रोपेतं प्रशस्तं सुवर्णादिकं यशसं यशस्विनं कीर्तिमंतं बृहंतमपरिमितं महांतं वा रयिं रमणीयं धनमस्मे अस्मभ्यं धेहि। देहि॥

॥ इत्यष्टमस्य चतुर्थे द्वाविंशो वर्गः ॥

यज्ञस्येति पंचदशर्चं द्वितीयं सूक्तं मनोः पुत्रस्य शार्यातस्यार्षं जागतं बहुदेवताकं। तथा चानुक्रांतं। यज्ञस्य शार्यातो मानवो वैश्वदेवं तु जागतमिति॥ चातुर्विंशिक आरंभणीयेऽहनि वैश्वदेवशस्त्र इदं सूक्तं वैश्वदेवनिविद्धानं। सूत्रितं च। ते हि द्यावापृथिवी यज्ञस्य वो रथ्यं। आ० ७.४.। इति॥ पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहन्यपीदं वैश्वदेवनिविद्धानं चातुर्विंशिकेन तृतीयसवनमिति सूत्रकृतातिदिष्टत्वात्॥

॥ तत्र प्रथमा ॥

यज्ञस्य वो रथ्यं विश्पतिं विशां होतारमक्तोरतिथिं विभावसुं ।
शोचञ्छुष्कासु हरिणीषु जर्भुरद्वृषा केतुर्यजतो द्यामशायत ॥१॥

यज्ञस्य। वः। रथ्यं। विश्पतिं। विशां। होतारं। अक्तोः। अतिथिं। विभाऽवसुं।
शोचन्। शुष्कासु। हरिणीषु। जर्भुरत्। वृषा। केतुः। यजतः। द्यां। अशायत ॥१॥

हे देवा वो यूयं यज्ञस्य रथ्यं नेतारं विश्पतिं मनुष्याणां पालकं स्वामिनं वा विशां देवानां होतारमाह्वातारमक्तो रात्रेरतिथिमतिथिभूतं विभावसुं विविधदीप्तधनं तमग्निं परिचरतेति शेषः। शुष्कासु शुष्कभूतास्वोषधीषु शोचन् ज्वलन् हरिणीषु हरितवर्णास्वार्द्रास्वोषधीषु जर्भुरद्भक्षयन् कुटिलं गच्छन्वा वृषा कामानां वर्षिता केतुः प्रज्ञापको यजतो यष्टव्योऽग्निर्द्यां दिवमशायत। प्रतिशेते ॥

॥ अथ द्वितीया ॥

इममंजस्पामुभये अकृण्वत धर्माणमग्निं विदथस्य साधनं ।
अक्तुं न यह्वमुषसः पुरोहितं तनूनपातमरुषस्य निंसते ॥२॥

इमं। अंजःऽपां। उभये। अकृण्वत। धर्माणं। अग्निं। विदथस्य। साधनं।
अक्तुं। न। यह्वं। उषसः। पुरःऽहितं। तनूऽनपातं। अरुषस्य। निंसते ॥२॥

उभये देवमनुष्या अंजस्पामंजसा रक्षकं धर्माणं धारकमिममग्निं विदथस्य यज्ञस्य साधनं साधयितारमकृण्वत। अकुर्वत। किंच। अरुषस्यारोचमानस्य वायोस्तनूनपातं पुत्रं यह्वं महांतं पुरोहितमुषसोऽक्तुं न स्वरश्मिभिरंजकमादित्यमिव निंसते। चुंबयंति। आश्रयंत इत्यर्थः ॥

॥ अथ तृतीया ॥

बळस्य नीथा वि पणेश्च मन्महे वया अस्य प्रहुता आसुरत्तवे ।
यदा घोरासो अमृतत्वमाशतादिज्जनस्य दैव्यस्य चर्किरन् ॥३॥

बट्। अस्य। नीथा। वि। पणेः। च। मन्महे। वयाः। अस्य। प्रऽहुताः। आसुः। अत्तवे।
यदा। घोरासः। अमृतऽत्वं। आशत। आत्। इत्। जनस्य। दैव्यस्य। चर्किरन् ॥३॥

वि पणेरस्माभिर्विविधं पणितव्यस्य स्तुत्यस्याग्नेर्नीथा नीथान्यस्मत्संबंधीनि

प्रज्ञानानि बट् सत्यानि स्युरिति मन्महे। वयं कामयामहे। किंच। अस्याग्नेर्वया अस्मदीया अन्नाहुतयोऽन्नवे भक्षणाय प्रहुता आसुर्भवेयुरिति कामयामहे। किंच। यदा यस्मिन्काले घोरासो घोरा अग्नेर्ज्वाला अमृतत्वमविनाशित्वमाशत प्राप्नुवंति आदिदनंतरमेवास्माकमृत्विजो दैव्यस्य देवेषु भवस्य जनस्याग्नेरर्थाय चर्किरन्। किरेयुः। अग्नौ हवींषि प्रक्षिपेयुरित्यर्थः॥

॥ अथ चतुर्थी ॥

ऋतस्य हि प्रसितिर्द्यौरुरु व्यचो नमो मह्य१रमतिः पनीयसी।
इंद्रो मित्रो वरुणः सं चिकित्रिरेऽथो भगः सविता पूतदक्षसः॥४॥
ऋतस्य। हि। प्रऽसितिः। द्यौः। उरु। व्यचः। नमः। मही। अरमतिः। पनीयसी।
इंद्रः। मित्रः। वरुणः। सं। चिकित्रिरे। अथो इति। भगः। सविता। पूतऽदक्षसः॥४॥

ऋतस्य यज्ञस्य संबंधिनमग्निं प्रति प्रसितिर्विस्तृता द्यौरुरु विस्तीर्णं व्यचो व्याप्तमंतरिक्षं च पनीयसी स्तुत्यतमारमतिः पर्यंतरहिता मही पृथिवी च नमो नमनं कुर्वंतीति शेषः। अथो अपि चैनमग्निमिंद्रो मित्रश्च वरुणश्च भगश्च सविता पूतदक्षसः शुद्धबला एते देवा एनमग्निं सं चिकित्रिरे। ज्यैष्ठ्याय संजानते॥

॥ अथ पंचमी ॥

प्र रुद्रेण ययिना यंति सिंधवस्तिरो महीमरमतिं दधन्विरे।
येभिः परिज्मा परियन्नुरु ज्रयो वि रोरुवज्जठरे विश्वमुक्षते॥५॥
प्र। रुद्रेण। ययिना। यंति। सिंधवः। तिरः। महीं। अरमतिं। दधन्विरे।
येभिः। परिऽज्मा। परिऽयन्। उरु। ज्रयः। वि। रोरुवत्। जठरे। विश्वं। उक्षते॥५॥

सिंधवः स्यंदनशीला आपो ययिना गमनशीलेन रुद्रेण रुद्रपुत्रेण मरुद्गणेन सह प्र यंति। अथ बहुवदाह। तेऽमी मरुतोऽरमतिं। रमतिर्विरामोऽवसानं। तद्रहितामपर्यंतां महीं पृथिवीं तिरो दधन्विरे। तिरस्कुर्वंतीत्यर्थः। परिज्मा परितो गंतेंद्रः परियन् परितो गच्छन् येभिर्यैर्मरुद्गणैः सहोरु ज्रयो बहुवेगं करोतीति शेषः। किंच। जठरेऽंतरिक्षे रोरुवच्छब्दं कुर्वन्पर्जन्यो यैर्मरुद्गणैः सह विश्वं भुवनमुक्षते। सिंचते॥

॥ इत्यष्टमस्य चतुर्थे त्रयोविंशो वर्गः॥

॥ अथ षष्ठी ॥

ऋाणा रुद्रा मरुतो विश्वकृष्टयो दिवः श्येनासो असुरस्य नीळयः ।
तेभिश्चष्टे वरुणो मित्रो अर्यमेंद्रो देवेभिरर्वशेभिरर्वशः ॥ ६ ॥

ऋाणाः । रुद्राः । मरुतः । विश्वऽकृष्टयः । दिवः । श्येनासः । असुरस्य । नीळयः ।
तेभिः । चष्टे । वरुणः । मित्रः । अर्यमा । इंद्रः । देवेभिः । अर्वशेभिः । अर्वशः ॥ ६ ॥

असुरस्य मेघस्य नीळय आवासभूता दिवोऽतरिक्षसंबंधिनः श्येनासः श्येनाः शंसनीयगतयो विश्वकृष्टयो व्याप्तमनुष्या रुद्रा रुद्रपुत्रा ये मरुतः ऋाणाः स्वाधिकारकर्माणि कुर्वाणा आसत इति शेषः । तेभिस्तैरर्वशेभिरश्ववद्भिः सोमवद्भिर्वा देवेभिर्देवैः सहार्वशोऽश्ववान् सोमवान्वेंद्रश्चष्टे । पश्यति । वरुणश्च मित्रश्चार्यमा च सोमवद्भिर्मरुद्भिः सह पश्यंति ॥

॥ अथ सप्तमी ॥

इंद्रे भुजं शशमानास आशत सूरो दृशीके वृषणश्च पौंस्ये ।
प्र ये न्वस्यार्हणा ततक्षिरे युजं वज्रं नृषदनेषु कारवः ॥ ७ ॥

इंद्रे । भुजं । शशमानासः । आशत । सूरः । दृशीके । वृषणः । च । पौंस्ये ।
प्र । ये । नु । अस्य । अर्हणा । ततक्षिरे । युजं । वज्रं । नृऽसदनेषु । कारवः ॥ ७ ॥

ये शशमानासः शशमानाः स्तोतार इंद्रे स्तुते सति भुजं पालनमाशत प्राप्नुवंति । सूरः सूर्ये स्तुते सति दृशीके दर्शनं सर्ववस्तुविषयं प्राप्नुवंति । वृषणो वर्षितरींद्रे स्तुते पौंस्यं बलं च प्राप्नुवंति । किंच ये कारवः स्तोतारोऽस्येंद्रस्यार्हणा पूजनानि नु क्षिप्रं ततक्षिरे प्रकृष्टानि कुर्वंति ते स्तोतारो नृषदनेषु । नरः कर्तृत्वेन येषु सीदंति तिष्ठंति तेषु यज्ञेषु युजं सहायमिंद्रस्य वज्रं प्राप्नुवंति ॥

॥ अथाष्टमी ॥

सूरश्चिदा हरितो अस्य रीरमदिंद्रादा कश्चिद्भयते तवीयसः ।
भीमस्य वृष्णो जठरादभिश्वसो दिवेदिवे सहुरिः स्तन्नबाधितः ॥ ८ ॥

सूरः । चित् । आ । हरितः । अस्य । रीरमत् । इंद्रात् । आ । कः । चित् । भयते । तवीयसः ।
भीमस्य । वृष्णः । जठरात् । अभिऽश्वसः । दिवेऽदिवे । सहुरिः । स्तन् । अबाधितः ॥ ८ ॥

सूरः सूर्योऽप्यस्येंद्रस्य परमेश्वरस्य परमात्मन आज्ञां परिपालयितुं मन्वानो हरितोऽश्वान्प्रेरयतीति शेषः। प्रेरयन्नध्वन्या रीरमत्। आभिमुख्येन रमयति। यः कश्चिद्देवोऽपि सृष्टौ भयते बिभेति स देवस्तवीयसः प्रवृद्धादिंद्रात्परमात्मनो भयादेव बिभेति। तथा च तैत्तिरीये पठितं। भीषास्माद्वातः पवते। तै॰ उ॰ २.८.। इत्यादिना। किंच। वृष्णः कामानां वर्षितुर्भीमस्य सर्वभयंकरस्य परमात्मनः परमेश्वरस्य दिवेदिवेऽन्वहमभिश्वस आभिमुख्येन श्वसतो जठरादुदरादंतरिक्षात्सहुरिः सहनशीलोऽबाधितो बाधरहितः स्तन्। स्तनयति। शब्दं करोति॥

॥ अथ नवमी ॥

स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय नमसा दिदिष्टन।
येभिः शिवः स्ववाँ एवयावभिर्दिवः सिषक्ति स्वयशा निकामभिः॥९॥
स्तोमं। वः। अद्य। रुद्राय। शिक्वसे। क्षयत्ऽवीराय। नमसा। दिदिष्टन।
येभिः। शिवः। स्वऽवान्। एवयावऽभिः। दिवः। सिसक्ति। स्वऽयशाः।
निकामऽभिः॥९॥

एवयावभिरश्वैरागच्छद्भिर्येभिर्यैर्मरुद्भिः सह स्ववान् ज्ञातिमान् स्वयशाः स्वभूतकीर्तिः शिवः सुखकरः परमेश्वरो दिवो द्युलोकाद्यजमानान्सिषक्ति सेवते हे ऋत्विजो यूयमद्यास्मिन्यागे निकामभिर्नियताभिलाषैस्तैर्मरुद्भिः सहिताय क्षयद्वीराय क्षितशत्रवे शिक्वसे शरणे शक्ताय रुद्राय नमसान्नेन नमस्कारेण वा सह स्तोमं स्तोत्रं दिदिष्टन। दिशत। सृजत। गमयतेत्यर्थः॥

॥ अथ दशमी ॥

ते हि प्रजाया अभरंत वि श्रवो बृहस्पतिर्वृषभः सोमजामयः।
यज्ञैरथर्वा प्रथमो वि धारयद्देवा दक्षैर्भृगवः सं चिकित्रिरे॥१०॥
ते। हि। प्रऽजायाः। अभरंत। वि। श्रवः। बृहस्पतिः। वृषभः। सोमऽजामयः।
यज्ञैः। अथर्वा। प्रथमः। वि। धारयत्। देवाः। दक्षैः। भृगवः। सं। चिकित्रिरे॥१०॥

हि यस्मात्कारणाद्वृषभः कामानां वर्षिता बृहस्पतिः सोमजामयोऽन्ये सोमबंधवस्ते विश्वे देवाः प्रजाया अर्थाय श्रवोऽन्नं व्यभरंत विभरंति वृष्टिद्वारेण पोषयंति तस्मात्कारणात्तासां प्रजानां मध्येऽथर्वा नामर्षिः प्रथमः प्रथममेव क्रियमाणैर्य-

ङ्गैर्वि धारयत्। देवान्कर्मयोग्यान्विधृतानकरोत्। अत्र निगमः। यज्ञैरथर्वा प्रथमः पथस्तते। ऋग्वे॰ १.८३.५.। इति। अथ दक्षैर्बलैः सह देवा विश्वे भृगव ऋषयश्च सं चिकित्रिरे। अथर्वणा कृतं यज्ञं गत्वा पशून्संज्ञातवंतः ॥

॥ इत्यष्टमस्य चतुर्थे चतुर्विंशो वर्गः ॥

॥ अथैकादशी ॥

ते हि द्यावापृथिवी भूरिरेतसा नराशंसश्चतुरंगो यमोऽदितिः।
देवस्त्वष्टा द्रविणोदा ऋभुक्षणः प्र रोदसी मरुतो विष्णुरर्हिरे ॥११॥
ते। हि। द्यावापृथिवी इति। भूरिऽरेतसा। नराशंसः। चतुःऽअंगः। यमः। अदितिः।
देवः। त्वष्टा। द्रविणःऽदाः। ऋभुक्षणः। प्र। रोदसी इति। मरुतः। विष्णुः। अर्हिरे॥११॥

भूरिरेतसा बहूदके द्यावापृथिवी द्यावापृथिव्यौ यमो देवोऽदितिश्च त्वष्टा देवश्च द्रविणोदा अग्निश्च ऋभुक्षण ऋभवश्च रोदसी रुद्रस्य पत्नी पत्न्यौ वा मरुतो देवाश्च विष्णुश्च एते विश्वे देवाश्चतुरंगश्चतुर्भिरग्निभिर्युक्तः। तस्मिन् नराशंसो नराशंस-नामधेये यज्ञे प्रार्हिरे। अस्माभिः स्तोतृभिः पूज्यंते ॥

॥ अथ द्वादशी ॥

उत स्य न उशिजामुर्विया कविरहिः शृणोतु बुध्न्यो३ हवीमनि।
सूर्यामासा विचरंता दिविक्षिता धिया शमीनहुषी अस्य बोधतं ॥१२॥
उत। स्यः। नः। उशिजां। उर्विया। कविः। अहिः। शृणोतु। बुध्न्यः। हवीमनि।
सूर्यामासा। विऽचरंता। दिविऽक्षिता। धिया। शमीनहुषी इति। अस्य। बोधतं॥१२॥

उतापि च नोऽस्माकमुशिजां कामयमानानामृत्विजामुर्वियोर्वी बह्वीं स्तुतिं कविर्मेधावी बुध्न्यो बुध्नेऽतरिक्षे भवः सोऽहिर्देवो हवीमनि हूयंते यत्र देवेभ्यो हवींषि तस्मिन्यज्ञे शृणोतु। दिविक्षिता दिवि वसंतौ विचरंता विशेषेण चरंतौ सूर्याचंद्रमसा सूर्यचंद्रमसौ धिया बुद्ध्यास्य स्तोत्रमिदं बोधतं। बुध्येतां। शमी कर्मवती पृथिवी। शमीति कर्मनामसु पाठात्। नहुषी द्यौः। अत्र वाजसनेयकं। द्यौर्नहुषीयं वै शमी तस्या एष गर्भ इति। हे द्यावापृथिव्यौ युवां स्तोत्रं धिया स्वीयया प्रज्ञया बुध्येतं। अवगच्छतमित्यर्थः ॥

॥ अथ त्रयोदशी ॥

प्र नः पूषा चरथं विश्वदेव्योऽपां नपादवतु वायुरिष्टये।
आत्मानं वस्यो अभि वातमर्चत तदश्विना सुहवा यामनि श्रुतं ॥१३॥
प्र। नः। पूषा। चरथं। विश्वऽदेव्यः। अपां। नपात्। अवतु। वायुः। इष्टये।
आत्मानं। वस्यः। अभि। वातं। अर्चत। तत्। अश्विना। सुऽहवा। यामनि। श्रुतं॥१३॥

पूषा देवो नोऽस्माकं संबंधि चरथं जंगमं प्रावतु। प्रकर्षेण रक्षतु। किंच विश्वदेव्यो विश्वदेवहितोऽपां नपाद्वायुरिष्टये यज्ञस्य निष्कृत्यर्थं प्रावतु। किंच। आत्मानं सर्वेषामात्मभूतं वातं वायुं वस्यो वसीयः प्रशस्यतरमन्नं प्राप्तुं। अस्मभ्यमन्नं कामयमानमिति शेषः। हे अश्विनाश्विनौ सुहवा स्वाह्वानौ युवां यामनि गमने तदिदं स्तोत्रं श्रुतं। शृणुतं॥

॥ अथ चतुर्दशी॥

विशामासामभयानामधिक्षितं गीर्भिरु स्वयशसं गृणीमसि।
ग्नाभिर्विश्वाभिरदितिमनर्वणमक्तोर्युवानं नृमणा अधा पतिं॥१४॥
विशां। आसां। अभयानां। अधिऽक्षितं। गीःऽभिः। ऊं इति। स्वऽयशसं। गृणीमसि।
ग्नाभिः। विश्वाभिः। अदितिं। अनर्वणं। अक्तोः। युवानं। नृऽमनाः। अध। पतिं॥१४॥

अभयानां संसारभयरहितानामासां विशां मनुष्याणामधिक्षितमंतर्निवसंतं स्वयशसमुपार्जितकीर्तिमेनमग्निं गीर्भिः स्तुतिभिर्गृणीमसि। वयं स्तुमः। किंच। अनर्वणमप्रत्यृतां पत्युरप्रत्यृतत्वेनाप्रतिगतामदितिमदीनां देवमातरं विश्वाभिः सर्वाभिर्ग्नाभिर्देवपत्नीभिः सह स्तुमः। किंचाक्तो रात्रेर्युवानं स्वतेजसा मिश्रयितारं चंद्रमसं स्तुमः। किंच नृमणाः। नृषु मनुष्येष्वनुग्राहकमना यस्तमादित्यं स्तुमः। अधाथ पतिं सर्वस्य पालकमिंद्रं स्तुमः॥

॥ अथ पंचदशी॥

रेभदत्र जनुषा पूर्वो अंगिरा ग्रावाण ऊर्ध्वा अभि चक्षुरध्वरं।
येभिर्विहाया अभवद्विचक्षणः पाथः सुमेकं स्वधितिर्वनन्वति॥१५॥

रेभ॑त् । अत्र॑ । ज॒नुषा॑ । पूर्वः॑ । अंगि॑राः । ग्रावा॑णः । ऊ॒र्ध्वाः । अ॒भि । च॒क्षुः॑ । अ॒ध्व॒रं ।
येभिः॑ । वि॒ऽहा॑याः । अभ॑वत् । वि॒ऽच॒क्ष॒णः । पाथः॑ । सु॒ऽमेकं॑ । स्व॒ऽधि॑तिः ।
वनं॑न्ऽवति ॥१५॥

अंगिरा नामर्षिरार्त्विज्येन वृतः स देवान्स्तौति । अत्रास्मिन्यज्ञे जनुषा जन्मना पूर्वः प्रत्नोऽंगिरा नामर्षी रेभत् । देवान्स्तौति । ग्रावाणश्चोर्ध्वा उद्यताः संतोऽध्वरं यज्ञसाधनं सोममभि चक्षुः । अभिपश्यंति । विचक्षणो विद्रष्टेंद्रो येभिर्यैर्ग्रावभिरभिषवसंबंधिभिः शब्दैर्विहाया महानभवत् । हृष्टोऽभूदित्यर्थः । अस्येंद्रस्य स्वधितिर्वज्रो वनन्वत्युदकवति मार्गे पाथोऽन्नसाधनं सुमेकं शोभनमुदकं निरगमयदिति शेषः ॥

॥ इत्यष्टमस्य चतुर्थे पंचविंशो वर्गः ॥

महीति पंचदशर्चं तृतीयं सूक्तं । तान्वो नाम पृथोः पुत्र ऋषिः । द्वितीयातृतीये त्रयोदशी चेति तिस्रोऽनुष्टुभः । नवम्यक्षरसंख्यया पंक्तिर्न पादैः । एकादशी न्यंकुसारिण्यष्टकद्वादशकद्व्यष्टकवती । पंचदशी पुरस्ताद्बृहत्याद्यद्वादशकत्र्यष्टका । शिष्टा नव प्रस्तारपंक्तिच्छंदस्काः । आद्यौ जागतौ द्वौ गायत्रौ सा प्रस्तारपंक्तिः । विश्वे देवा देवता । तथा चानुक्रांतं । महि तान्वः पार्थः प्रस्तारपांक्तं पुरस्ताद्बृहत्यंतं त्रयोदश्युपाद्ये चानुष्टुभौ नवम्यक्षरैः पंक्तिरेकादशी न्यंकुसारिणीति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

महिं द्यावापृथिवी भूतमु॒र्वी नारी॑ य॒ह्वी न रोद॑सी॒ सदं॑ नः ।
तेभि॑र्नः पात॒ सह्य॑स ए॒भिर्नः॑ पातं शू॒षणि॑ ॥१॥

महि॑ । द्या॒वा॒पृ॒थि॒वी॒ इति॑ । भू॒तं॒ । उ॒र्वी इति॑ । नारी॒ इति॑ । य॒ह्वी इति॑ । न ।
रोद॑सी॒ इति॑ । सदं॑ । नः॒ ।
तेभिः॑ । न॒ः । पा॒त॒ं । सह्य॑सः । ए॒भिः । न॒ः । पा॒त॒ं । शू॒षणि॑ ॥१॥

हे द्यावापृथिवी द्यावापृथिव्यौ युवां मह्यत्यंतं यथा भवति तथोर्वी विस्तीर्णे भूतं । भवतं । किंच यह्वी महत्यौ रोदसी द्यावापृथिव्यौ नारी न स्त्रियाविव नोऽस्माकं सदं सदा भवतं । किंच युवां शूषणि नोऽस्माकं शत्रुबले युष्मदीयैरेभिः पालनैः पातं । रक्षतं । किंच । युष्मदीयैस्तेभिः तैः पालनैर्नोऽस्माकं सह्यसोऽतिशयेनास्मानभिभवितुः शत्रोरपि पातं । रक्षतं ॥

॥ अथ द्वितीया ॥

यज्ञेयंज्ञे स मर्त्यो देवान्त्संपर्यति ।

यः सुम्नैर्दीर्घश्रुत्तम आविवासात्येनान् ॥२॥

यज्ञेऽयंज्ञे । सः । मर्त्यः । देवान् । सपर्यति ।

यः । सुम्नैः । दीर्घश्रुत्ऽतमः । आऽविवासाति । एनान् ॥२॥

स मर्त्यो मनुष्यो यज्ञेयज्ञे सर्वेषु यज्ञेषु देवान्सर्वान्सपर्यति परिचरति यो दीर्घश्रुत्तमोऽतिशयेन दीर्घस्य बहोः शास्त्रस्य श्रोता यो मनुष्यः सुम्नैः सुखकरैर्हविर्भिरेनान्देवानाविवासाति परिचरति । असुखकरैर्हविर्भिः कृतमपि कर्म समर्थं न भवतीत्यर्थः ॥

॥ अथ तृतीया ॥

विश्वेषामिरज्यवो देवानां वार्महः ।

विश्वे हि विश्वमंहसो विश्वे यज्ञेषु यज्ञियाः ॥३॥

विश्वेषां । इरज्यवः । देवानां । वाः । महः ।

विश्वे । हि । विश्वऽमंहसः । विश्वे । यज्ञेषु । यज्ञियाः ॥३॥

हे विश्वेषामिरज्यवो भुवनानामीश्वरा देवानां द्योतमानादिगुणयुक्तानां भवतां महो महद्वार्वरणीयं धनं विद्यत इति शेषः । तदस्मभ्यं दत्तेति भावः । किंच विश्वे सर्वे यूयं विश्वमहसो व्याप्ततेजस्काः । किंच विश्वे यूयं यज्ञेषु यज्ञिया यष्टव्याः ॥

॥ अथ चतुर्थी ॥

ते घा राजानो अमृतस्य मंद्रा अर्यमा मित्रो वरुणः परिज्मा ।

कद्रुद्रो नृणां स्तुतो मरुतः पूषणो भगः ॥४॥

ते । घ । राजानः । अमृतस्य । मंद्राः । अर्यमा । मित्रः । वरुणः । परिऽज्मा ।

कत् । रुद्रः । नृणां । स्तुतः । मरुतः । पूषणः । भगः ॥४॥

अर्यमा देवो मित्रश्च परिज्मा सर्वतो गामी सर्वत्राप्रतिहतगतिर्वरुणोऽन्यो देवजनश्चर्त्विग्भिः स्तुतो रुद्रश्च पूषणः सर्वस्य पोषयितारो मरुतश्च भगश्च एते देवा मंद्राः सर्वैः स्तुत्याः संतो नृणां मनुष्याणां कत् सुखं प्रयच्छतेति शेषः । ते सर्वेऽमृतस्यामृतसदृशस्य हविषो राजानो घ । ईश्वराः खलु ॥

॥ अथ पंचमी ॥

उत नो नक्तमपां वृषण्वसू सूर्यामासा सदनाय सधन्या ।
सचा यत्साद्येषामहिर्बुध्नेषु बुध्न्यः ॥५॥

उत । नः । नक्तं । अपां । वृषण्वसू इति वृषण्ऽवसू । सूर्यामासा । सदनाय । सऽधन्या ।
सचा । यत् । सादि । एषां । अहिः । बुध्नेषु । बुध्न्यः ॥५॥

उतापि च हे वृषण्वसू वर्षणधनावश्विनौ युवामपामुदकानां संबंधिनौ सधन्या सधन्यौ समानधनौ सूर्यामासा सूर्याचंद्रमसौ बुध्नेष्वंतरिक्षेषु निवासस्थानेषु मेघेषु यद्योऽहिर्बुध्न्यो देवो सादि सीदति तिष्ठत्येषामेभिः सचा सह युवां नक्तं रात्रावहनि चोरुष्यतमिति वक्ष्यमाणेन संबंधः ॥

॥ इत्यष्टमस्य चतुर्थे षड्विंशो वर्गः ॥

॥ अथ षष्ठी ॥

उत नो देवावश्विना शुभस्पती धामभिर्मित्रावरुणा उरुष्यतां ।
महः स राय एषतेऽति धन्वेव दुरिता ॥६॥

उत । नः । देवौ । अश्विना । शुभः । पती इति । धामऽभिः । मित्रावरुणौ । उरुष्यतां ।
महः । सः । रायः । आ । ईषते । अति । धन्वऽइव । दुःऽइता ॥६॥

उतापि च शुभस्पती शुभस्योदकस्य पती अश्विनाश्विनौ देवौ नोऽस्मान्धामभिरात्मीयैः शरीरैरुरुष्यतां । रक्षतां । किंच । मित्रावरुणावात्मीयैः शरीरैरुरुष्यतां । रक्षेतां । यं यजमानं पुरुषममी देवा रक्षंति स महो महांति रायो धनान्येषते । आभिमुख्येन प्राप्नोति । गच्छति । किंच दुरिता दुरितानि शीघ्रमत्यतिगंतातिक्रांता च भवति । तत्र दृष्टांतः । धन्वेव । यथा पथिको निरुदकान्देशानतिक्रामति तद्वदित्यर्थः ॥

॥ अथ सप्तमी ॥

उत नो रुद्रा चिन्मृळतामश्विना विश्वे देवासो रथस्पतिर्भगः ।
ऋभुर्वाज ऋभुक्षणः परिज्मा विश्ववेदसः ॥७॥

उत । नः । रुद्रा । चित् । मृळतां । अश्विना । विश्वे । देवासः । रथःपतिः । भगः ।
ऋभुः । वाजः । ऋभुक्षणः । परिऽज्मा । विश्वऽवेदसः ॥७॥

उत चिदपि च रुद्रा रुद्रपुत्रावश्विनाश्विनौ नोऽस्मान्मृळतां। सुखयतां। किंच रथस्पती रथस्य पतिः पूषर्भुर्वाजोऽन्नवान्भगश्च परिज्मा परितो गंता वायुश्चेति विश्वे सर्वे देवासो देवाः सुखयंतु। हे विश्ववेदसो विश्ववेदाः सर्वप्रज्ञाः सर्वधना वा हे ऋभुक्षणो महांतो ब्रह्मादयो देवा यूयं सुखयत ॥

॥ अथाष्टमी ॥

ऋभुर्ऋभुक्षा ऋभुर्विधतो मद आ ते हरी जूजुवानस्य वाजिना।

दुष्टरं यस्य साम चिदृधग्यज्ञो न मानुषः ॥८॥

ऋभुः। ऋभुक्षाः। ऋभुः। विधतः। मदः। आ। ते। हरी इति। जूजुवानस्य। वाजिना।

दुस्तरं। यस्य। साम। चित्। ऋधक्। यज्ञः। न। मानुषः ॥८॥

ऋभुक्षा महानिंद्र ऋभुर्यज्ञेन भाति। किंच विधतस्त्वां परिचरतो यजमानस्य मदो हर्षोऽप्यृभुर्यज्ञेन भाति। हे इंद्र आ जूजुवानस्य प्रति शीघ्रमागच्छतस्ते तव हरी अश्वावपि वाजिना वाजिनौ बलवंतौ। किंच यस्येंद्रस्य संबंधि साम चिन्नी-यमानं सामापि दुष्टरं रक्षोभिरप्रापणीयं। एष यज्ञो मानुषो मनुष्यसाधारणो न। किंच। ऋधक् पृथक्। दिव्य इत्यर्थः ॥

॥ अथ नवमी ॥

कृधी नो अह्रयो देव सवितः स च स्तुषे मघोनां।

सहो न इंद्रो वह्निभिर्न्येषां चर्षणीनां चक्रं रश्मिं न योयुवे ॥९॥

कृधि। नः। अह्रयः। देव। सवितरिति। सः। च। स्तुषे। मघोनां।

सहो इति। नः। इंद्रः। वह्निऽभिः। नि। एषां। चर्षणीनां। चक्रं। रश्मिं। न। योयुवे ॥९॥

हे सवितः प्रेरक नोऽस्मानह्रयोऽनवनतवदनानलज्जितान्कृधि। कुरु। किंच। स त्वं मघोनां धनवतां यजमानानां संबंधिभिर्ऋत्विग्भिः स्तुषे। स्तूयसे। इंद्रो वह्निभिर्वोढृभिर्मरुद्भिः सह सहो बलं चर्षणीनां मनुष्याणां नोऽस्माकं नि योयुवे। भृशं निमिश्रयतु। तत्र दृष्टांतः। चक्रं रथस्य चक्रं रश्मिं न। चक्रादिकं। तद्वदित्यर्थः॥

॥ अथ दशमी ॥

ऐषु द्यावापृथिवी धातं महदस्मे वीरेषु विश्वचर्षणि श्रवः।

पृक्षं वाजस्य सातये पृक्षं रायोत तुर्वणे ॥१०॥

आ। एषु। द्यावापृथिवी इति। धातं। महत्। अस्मे इति। वीरेषु। विश्वऽचर्षणि। श्रवंः। पृक्षं। वाजस्य। सातये। पृक्षं। राया। उत। तुर्वणे ॥१०॥

हे द्यावापृथिवी द्यावापृथिव्यौ युवामस्मे अस्माकं संबंधिषेषु वीरेषु पुत्रेषु विश्वचर्षणि सर्वमनुष्योपेतं महच्छ्रवो यश आ धातं। आधत्तं। दत्तं। किंच वाजस्य बलस्य सातये संभजनाय पृक्षं पालकमन्नं दत्तं। उतापि च तुर्वणे शत्रूणां तरणाय राया धनेन सह पृक्षमन्नं दत्तं ॥

॥ इत्यष्टमस्य चतुर्थे सप्तविंशो वर्गः ॥

॥ अथैकादशी ॥

एतं शंसमिंद्रास्मयुष्ट्वं कूचित्संतं सहसावन्नभिष्टये सदा पाह्यभिष्टये।
मेदतां वेदता वसो ॥११॥

एतं। शंसं। इंद्र। अस्मऽयुः। त्वं। कूऽचित्। संतं। सहसाऽवन्। अभिष्टये। सदा। पाहि। अभिष्टये।
मेदतां। वेदता। वसो इति ॥११॥

हे वसो वासयितः सहसावन् बलवन्निंद्रास्मयुरस्मान्कामयमानस्त्वं कूचित् क्वचिदपि संतं स्थितमेतमिमं शंसं स्तोतारमभिष्टयेऽभिलषितसिद्ध्यर्थमपि चाभिष्टये यागार्थं सदा सर्वदा पाहि। रक्ष। किंच वेदता त्वदीयेन प्रज्ञानेन स्तोतारं मां मेदतां। बुध्यस्व ॥

॥ अथ द्वादशी ॥

एतं मे स्तोमं तना न सूर्ये द्युतद्यामानं वावृधंत नृणां।
संवननं नाश्व्यं तष्टेवानपच्युतं ॥१२॥

एतं। मे। स्तोमं। तना। न। सूर्ये। द्युतत्ऽयामानं। ववृधंत। नृणां।
संऽवननं। न। अश्व्यं। तष्टाऽइव। अनपऽच्युतं ॥१२॥

नृणां नेतॄणां देवशत्रूणां संवननं न संभजनं सम्यग्हिंसनमिवावस्थितं मे मदीयमेतमिदं स्तोमं स्तोत्रं ववृधंत। ऋत्विजो वर्धयंतु। तत्र दृष्टांतः। सूर्ये द्युतद्यामानं दीप्तगमनं तना न विस्तृतान्रश्मीन्वर्धयंति तद्वदित्यर्थः। अनपच्युतं च्युति-

रहितमश्व्यमश्वार्हं रथं तष्टेव यथा वर्धकी रथिष्वागतेषु संस्कृतं रथसंस्कारस्थानात्प्रेरयति तद्वदित्यर्थः ॥

॥ अथ त्रयोदशी ॥

वावर्त येषां राया युक्तैषां हिरण्ययीं ।
नेमधिता न पौंस्या वृथेव विष्टांता ॥१३॥

ववर्त । येषां । राया । युक्ता । एषां । हिरण्ययीं ।
नेमऽधिता । न । पौंस्या । वृथाऽइव । विष्टऽअंता ॥१३॥

येषां देवानां स्वभूतेन रायास्मभ्यं दातव्येन धनेन युक्ता स्तुतिरावववर्त तेषामेषामर्थाय हिरण्ययी हिरण्मयी हिरण्यालंकारवत्मीतिकरास्मन्मुखात्पुनःपुनरावर्तत इत्यर्थः । तत्र दृष्टांतः । पौंस्या पौंस्यानि बलानि नेमधिता न नेमधितौ संग्रामे । विष्टांता व्याप्तावसाना वृथेव यथा घटिकायंत्रमाला तद्वदित्यर्थः ॥

॥ अथ चतुर्दशी ॥

प्र तद्दुःशीमे पृथवाने वेने प्र रामे वोचमसुरे मघवत्सु ।
ये युक्ताय पंच शतास्मयु पथा विश्राव्येषां ॥१४॥

प्र । तत् । दुःऽशीमे । पृथवाने । वेने । प्र । रामे । वोचं । असुरे । मघवत्ऽसु ।
ये । युक्ताय । पंच । शता । अस्मऽयु । पथा । विऽश्रावि । एषां ॥१४॥

ये देवाः पंच शता शतानि रथान्युक्तायाश्वैर्युक्तास्मयुस्मत्कामाः संतः पथा यज्ञमार्गेण गच्छंति तेषामेषां देवानां विश्रावि देवानां लोके नानाविशेषेण श्रावकगुणयुक्तं तत्स्तोत्रं दुःशीमे दुःशीमनाम्नि पृथवाने । पृथवानः पृथिः । तस्मिन् वेने चासुरे बलवति रामे चैतेषु राजसु प्र वोचं । प्रब्रवीमि । प्रख्यापयामीत्यर्थः । मघवत्स्वन्येषु धनवत्सु च प्रख्यापयामीत्यर्थः ॥

॥ अथ पंचदशी ॥

अधीन्वत्र सप्ततिं च सप्त च ।
सद्यो दिदिष्ट तान्वः सद्यो दिदिष्ट पार्थ्यः सद्यो दिदिष्ट मायवः ॥१५॥

अधि । इत् । नु । अत्र । सप्ततिं । च । सप्त । च ।
सद्यः । दिदिष्ट । तान्वः । सद्यः । दिदिष्ट । पार्थ्यः । सद्यः । दिदिष्ट । मायवः ॥१५॥

अत्रैषु राजसु तान्वो नामर्षिर्गवां सप्त च सप्ततिं च नु क्षिप्रं सद्य इत् सद्य एवाधि दिदिष्ट। अधिपूर्वो दिशिर्याचनार्थः। ययाचे। किंच पार्थ्यो नाम युवनाश्वनामकस्य कुले पृथेः पुत्रः कश्चित्सद्य एव गवां सप्तसप्ततिमधि दिदिष्ट। किंच मायवोऽपि सद्य एवाधि दिदिष्ट॥

॥ इत्यष्टमस्य चतुर्थेऽष्टाविंशो वर्गः ॥

प्रैत इति चतुर्दशर्चं चतुर्थं सूक्तं। कद्रूः पुत्रस्य सर्पस्यार्बुदस्यार्षं पंचमी सप्तमी चतुर्दशी त्रिष्टुभः शिष्टा एकादश जगत्यः। सोमाभिषवार्था ग्रावाणोऽत्र देवता। तथा चानुक्रांतं। प्रैते षळूना सर्पोऽर्बुदः काद्रवेयो ग्राव्णोऽस्तौत्पंचम्यंत्ये त्रिष्टुभौ सप्तमी चेति॥ ग्रावस्तोत्र एतत्सूक्तं। सूचितं च। प्रैते वदंत्वित्यर्बुदं प्रागुत्तमाया आ व ऋंजसे प्र वो ग्रावाण इति सूक्तयोः। आ॰ ५.१२.। इति॥ यद्वा। इदमेकमेव सूक्तं ग्रावस्तोत्रं। सूचितं च। अर्बुदमेवेत्येके प्र वो ग्रावाण इत्येके। आ॰ ५.१२.। इति॥

॥ तत्र प्रथमा ॥

प्रैते वदंतु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेंद्राय सोमिनः॥१॥

प्र। एते। वदंतु। प्र। वयं। वदाम। ग्रावऽभ्यः। वाचं। वदत। वदत्ऽभ्यः।
यत्। अद्रयः। पर्वताः। साकं। आशवः। श्लोकं। घोषं। भरथ। इंद्राय। सोमिनः॥१॥

एते ग्रावाण उपलाः प्र वदंतु। अभिषवशब्दं कुर्वंतु। वयं यजमाना वदद्भ्योऽभिषवशब्दं कुर्वद्भ्यो ग्रावभ्यो ग्राव्णामर्थाय वाचं प्र वदाम। किंच हे ऋत्विजो यूयमपि स्तुतिलक्षणां वाचं वदत। पठत। यद्यदाद्रय आदरणीया दृढा आशवः सोमाभिषवार्थं क्षिप्रकारिणः पर्वता ग्रावाणः सर्वे यूयं साकं सहेंद्रायेंद्रार्थं श्लोकं श्रोतव्यं घोषमभिषवशब्दं भरथ पोषयथ तदानीं सोमिनः सोमवंतः सोमेन तृप्ता भवथ॥

॥ अथ द्वितीया ॥

एते वदंति शतवत्सहस्रवदभि क्रंदंति हरितेभिरासभिः।
विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशत॥२॥

एते। वदंति। शतऽवत्। सहस्रऽवत्। अभि। क्रंदंति। हरितेभिः। आसऽभिः।
विष्ट्वी। ग्रावाणः। सुऽकृतः। सुऽकृत्यया। होतुः। चित्। पूर्वे। हविःऽअद्यं। आशत॥२॥

शतवत्सहस्रवत् यथा शतं मनुष्याः सहस्रवदपरिमिता मनुष्याश्च वदंति तद्व-देते ग्रावाणो वदंति। शब्दं कुर्वंति। किंच हरितेभिः सोमसंसर्गाद्धरितवर्णैरास्यैरभि क्रंदंति। सोममभिलक्ष्य देवानाह्वयंतीत्यर्थः। किंच सुकृतः शोभन-कर्माणो ग्रावाणो विष्ट्वी यज्ञं प्राप्य होतुर्देवानामाह्वातुरग्नेः पूर्वे चित् पूर्वमेवाद्यं भक्षणीयं हविराशत। प्राप्नुवंति ॥

॥ अथ तृतीया ॥

एते वंदंत्यविंदन्नना मधु न्यूंखयंते अधि पक्व आमिषि।

वृक्षस्य शाखामरुणस्य बप्संतस्ते सूर्भर्वा वृषभाः प्रेमराविषुः ॥३॥

एते। वदंति। अविंदन्। अना। मधु। नि। ऊंखयंते। अधि। पक्वे। आमिषि।

वृक्षस्य। शाखां। अरुणस्य। बप्संतः। ते। सूर्भर्वाः। वृषभाः। प्र। ई। अराविषुः ॥३॥

अरुणस्यारुणवर्णस्य वृक्षस्य शाखां बप्सतो भक्षयंतस्ते सूभर्वाः शोभनभक्षा वृषभाः प्रेमराविषुः। प्ररुवंति। यथा पक्व आमिष्यध्यामिषे क्रव्यादो मांसभक्षकाश्च मांसविषये यथा न्यूंखयंते शब्दविशेषं कुर्वंति तद्वदेते ग्रावाणो वदंति। शब्दं कुर्वंति। किंच। मधु मदकरं सोममनास्येनाविदन्। लभंते ॥

॥ अथ चतुर्थी ॥

बृहद्वदंति मदिरेण मंदिनेंद्रं क्रोशंतोऽविदन्नना मधु।

संरभ्या धीराः स्वसृभिरनर्तिषुराघोषयंतः पृथिवीमुपब्दिभिः ॥४॥

बृहत्। वदंति। मदिरेण। मंदिना। इंद्रं। क्रोशंतः। अविदन्। अना। मधु।

संऽरभ्य। धीराः। स्वसृऽभिः। अनर्तिषुः। आऽघोषयंतः। पृथिवीं। उपब्दिऽभिः॥४॥

मदिरेण मदकरेण मंदिनाभिषूयमाणेन सोमेनेंद्रं क्रोशंत आह्वयंत एते ग्रा-वाणो बृहदत्यंतं वदंति। शब्दं कुर्वंति। किंच। अनास्येन मधु मदकरं सोमम-विदन्। अलभंत। किंच संरभ्य संरब्धा भूत्वा धीरा धृष्टाः संत उपब्दिभिः शब्दैः पृथिवीमाघोषयंतः पूरयंतः स्वसृभिरंगुलिभिः सहानर्तिषुः। नृत्यंति ॥

॥ अथ पंचमी ॥

सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः।

न्य१ङ्नि यंत्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्वितः ॥५॥

सुऽपर्णाः । वाचं । अक्रत । उप । द्यवि । आऽखरे । कृष्णाः । इषिराः । अनर्तिषुः ।
न्यक् । नि । यंति । उपरस्य । निःऽकृतं । पुरु । रेतः । दधिरे । सूर्यऽश्वितः ॥५॥

सुपर्णाः सुपतना ग्रावाण उपोपलस्य समीपे द्यव्यंतरिक्षे वाचमभिषवशब्द-मक्रत । कुर्वंति । किंच । आखरे । मृगाणां व्रज आखरः । तस्मिन् इषिरा गमन-शीलाः कृष्णाः कृष्णमृगा इव सूर्यश्वितः सूर्यवच्छ्वेतवर्णा द्रप्सा अनर्तिषुः । नृत्यंति । निष्कृतं ग्रावभिः पीडितं सदुपरस्योपलस्य न्यगधोमुखं सोमं नि यंति । निगम-यंति । किंच पुरु बहु रेतः सोमलक्षणमुदकं दधिरे । धारयंति ॥

॥ इत्यष्टमस्य चतुर्थे एकोनत्रिंशो वर्गः ॥

॥ अथ षष्ठी ॥

उग्रा इव प्रवहंतः समायमुः साकं युक्ता वृषणो बिभ्रतो धुरः ।
यच्छ्वसंतो जग्रसाना अराविषुः शृण्व एषां प्रोथथो अर्वतामिव ॥६॥

उग्राःऽइव । प्रऽवहंतः । संऽआयमुः । साकं । युक्ताः । वृषणः । बिभ्रतः । धुरः ।
यत् । श्वसंतः । जग्रसानाः । अराविषुः । शृण्वे । एषां । प्रोथथः । अर्वतांऽइव ॥६॥

वृषणः । फलं वर्षतीति वृषा यज्ञः । तस्य धुरं भारं बिभ्रतो धारयंत एते ग्रा-वाणः साकं सोमेन सह युक्ताः संतः प्रवहंतो रथं प्रकर्षेण वोढार उग्रा उद्गूर्णा अश्वा इव समायमुः । समायच्छंति । आयता भवंतीत्यर्थः । यद्यदा श्वसंतोऽभि-षवसमये उत्पतननिपतनव्यापारजनितेन वायुना श्वसंत इव स्थिता ग्रावाणो जग्रसानाः सोमं ग्रसमाना अराविषुः शब्दायंते तदानीमेषां ग्राव्णां संबंधी प्रो-थथो मुखाच्छब्दः शृण्वे । श्रूयते । तत्र दृष्टांतः । अर्वतामिवाश्वानां संबंधिनो मुखाद्धेषाशब्दो यथा तद्वदित्यर्थः ॥

॥ अथ सप्तमी ॥

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।
दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ॥७॥

दशावनिऽभ्यः । दशऽकक्ष्येभ्यः । दशऽयोक्त्रेभ्यः । दशऽयोजनेभ्यः ।
दशाभीशुऽभ्यः । अर्चत । अजरेभ्यः । दश । धुरः । दश । युक्ताः । वहत्ऽभ्यः ॥७॥

दशावनिभ्यः । कर्माण्यवंति गच्छंतीत्यवनयः । दशावनयोऽंगुलयो येषां ग्रा-

हकत्वेन संबंधिनस्ते दशावनयः। तान्याव्णः। द्वितीयार्थे चतुर्थी। दशकक्ष्येभ्यः। कक्ष्याः प्रकाशका अंगुलयो येषां ते दशकक्ष्याः। तान्। दशयोक्त्रेभ्यः। योक्त्रवद्बंधने साधनभूता दशांगुलयो येषां तान्। दशयोजनेभ्यः। सोमेन सह योजने साधनभूता दशांगुलयो येषां तान्। दशाभीशुभ्यः। कर्माण्यभितो व्याप्नुवंतीत्यभीशवोऽंगुलयो दश येषां तान्। अजरेभ्यो जराविवर्जितान्दश दशभिर्धुरो धूर्भिर्हिंसितृभिः। तृतीयार्थे प्रथमा। युक्ता युक्तान्। द्वितीयार्थे प्रथमा। वहद्भ्यो वहतोऽभिषवाख्ये कर्मणि व्याप्रियमाणानर्चत। स्तुत। हे ऋत्विज इति शेषः॥ अत्र यास्कः। अवनयोऽंगुलयो भवंत्यवंति कर्माणि कक्ष्याः प्रकाशयंति कर्माणि योक्त्राणि योजनानीति व्याख्यातमभीशवोऽभ्यश्नुवते कर्माणि दश धुरो दश युक्ता वहद्भ्यः। धूर्धूर्वतेर्वधकर्मण इयमपीतरा धूरेतस्मादेव विहंति वहं धारयतेर्वा। नि॰ ३.९.। इति॥

॥ अथाष्टमी ॥

ते अद्रयो दशयंत्रास आशवस्तेषामाधानं पर्येति हर्यतं।
त ऊं सुतस्य सोम्यस्यांधसोंऽशोः पीयूषं प्रथमस्य भेजिरे॥८॥

ते। अद्रयः। दशऽयंत्रासः। आशवः। तेषां। आऽधानं। परि। एति। हर्यतं।
ते। ऊं इति। सुतस्य। सोम्यस्य। अंधसः। अंशोः। पीयूषं। प्रथमस्य। भेजिरे॥८॥

अद्रय आदरणीया आशवः क्षिप्रकारिणस्त एते प्रकृता ग्रावाणो दशयंत्रासो दशयंत्राः। तेषामेषां ग्राव्णां संबंधि यदाधानं प्रक्षेपणमभिषवकर्म हर्यतं स्पृहणीयं पर्येति। परितो गच्छति। त एते ग्रावाण एव सुतस्याभिषुतस्य सोम्यस्य सोमस्य संबंधिनोऽंशोः खंडस्वरूपस्यांधसोऽन्नस्य पीयूषममृतं प्रथमं भेजिरे॥

॥ अथ नवमी ॥

ते सोमादो हरी इंद्रस्य निंसतेंऽशुं दुहंतो अध्यासते गवि।
तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विंद्रो वर्धते प्रथते वृषायते॥९॥

ते। सोमऽअदः। हरी इति। इंद्रस्य। निंसते। अंशुं। दुहंतः। अधि। आसते। गवि।
तेभिः। दुग्धं। पपिऽवान्। सोम्यं। मधु। इंद्रः। वर्धते। प्रथते। वृषऽयते॥९॥

ते सोमादः सोमस्यात्तारस्ते प्रकृता एते ग्रावाण इंद्रस्य हरी अश्वौ निंसते। निक्षंति। चुंबंति। प्राप्नुवंतीत्यर्थः। किंच। गव्यधिषवणचर्मण्यंशुं सोमं दुहंत

आसते। किंचेंद्रस्तेभिस्तैर्दुग्धं सोम्यं सोममयं मध्वमृतं पपिवान्पीतवान्वर्धते। वृद्ध-शरीरो भवति। प्रथते। विस्तीर्णशरीरश्च भवति। वृषायते। वृषेवाचरति॥

॥ अथ दशमी ॥

वृषा वो अंशुर्न किला रिषाथनेळावंतः सदमित्स्थनाशिताः।
रैवत्येव महसा चारवः स्थन यस्य ग्रावाणो अजुषध्वमध्वरं ॥१०॥

वृषा। वः। अंशुः। न। किल। रिषाथन। इळाऽवंतः। सदं। इत्। स्थन। आशिताः।
रैवत्याऽइव। महसा। चारवः। स्थन। यस्य। ग्रावाणः। अजुषध्वं। अध्वरं ॥१०॥

अंशुः सोमो वो युष्माकं वृषा यज्ञे वर्षिता भविष्यति। यूयमपि न रिषाथन किल। न रिष्यथ। न शीर्णा भवथ किल। किंच। इळावंतोऽन्नवंत इव यूयं सदमित् सदैवाशिता भोजिताः स्थन। भवथ। किंच। रैवत्येव यथा रेवंतस्तेजसा युक्ता भवंति तद्वन्महसा तेजसा युक्ताश्चारवः कल्याणाः स्थन। भवथ। हे ग्रावाणो यूयं यस्य यजमानस्याध्वरं यज्ञमजुषध्वं। असेवध्वं॥

॥ इत्यष्टमस्य चतुर्थे त्रिंशो वर्गः ॥

॥ अथैकादशी ॥

तृदिला अतृंदिलासो अद्रयोऽश्रमणा अशृंथिता अमृत्यवः।
अनातुरा अजराः स्थामविष्णवः सुपीवसो अतृषिता अतृष्णजः ॥११॥

तृदिलाः। अतृंदिलासः। अद्रयः। अश्रमणाः। अशृंथिताः। अमृत्यवः।
अनातुराः। अजराः। स्थ। अमविष्णवः। सुऽपीवसः। अतृषिताः। अतृष्णऽजः॥११॥

अश्रमणाः श्रमणवर्जिता अशृथिता अन्यैरशिथिलीकृता अमृत्यवोऽमारिता अनातुरा अरोगा अजरा जरारहिताः स्थ। भवथ। किंच। अमविष्णव उत्क्षेपणावक्षेपणगत्युपेता हे ग्रावाणस्तृदिला अन्येषां भेदका अतृदिलासः स्वयमन्येनाभिन्नाः सुपीवसः सुबला अतृषितास्तृष्णारहिता अतृष्णजो निःस्पृहा भवथ॥

॥ अथ द्वादशी ॥

ध्रुवा एव वः पितरो युगेयुगे क्षेमकामासः सदसो न युंजते।
अजुर्यासो हरिषाचो हरिद्रव आ द्यां रवेण पृथिवीमशुश्रवुः ॥१२॥

ध्रुवाः । एव । वः । पितरः । युगेऽयुगे । क्षेमंऽकामासः । सदसः । न । युंजते ।
अजुर्यासः । हरिऽसाचः । हरिद्रवः । आ । द्यां । रवेण । पृथिवीं । अशुश्रवुः ॥१२॥

हे ग्रावाणो युगेयुगे सर्वेषु युगेषु ध्रुवा एव निश्चला एव वो युष्माकं पितरः पितृभूताः पर्वताः क्षेमकामासः क्षेमकामाः सदसो न युंजते । सदांस्यात्मना न संयोजयंति । अजुर्यासो जरारहिता हरिषाचः सोमस्य संभक्तारो हरिद्रवः सोमसंसर्गाद्धरितवर्णा द्यां दिवं पृथिवीं च रवेणाभिषवशब्देनाशुश्रवुः । श्रावयंति ॥

॥ अथ त्रयोदशी ॥

तदिद्वदंत्यद्रयो विमोचने यामन्नंजस्पा इव घेदुपब्दिभिः ।
वपंतो बीजमिव धान्याकृतः पृंचंति सोमं न मिनंति बप्सतः ॥१३॥
तत् । इत् । वदंति । अद्रयः । विऽमोचने । यामन् । अंजःपाःऽइव । घ । इत् । उपब्दिऽभिः ।
वपंतः । बीजंऽइव । धान्यऽकृतः । पृंचंति । सोमं । न । मिनंति । बप्सतः ॥१३॥

अद्रय आदरणीया ग्रावाणो यामन् यामनि गमनेऽंजस्पाः । अंजसा पांति रक्षंतीत्यंजस्पाः । तेषां रथानामिवोपब्दिभिस्तदित्तदेवाभिषवकर्म विमोचने घेत् तत्सोमरसविमोचनवेलायामपि वदंति । प्रकाशयंति । किंच । बप्सतः सोमं भक्षयंतो ग्रावाणो वपंतो धान्याकृतः कृषीवला बीजमिव यथा पृंचंति तद्वत्सोमं पृंचंति संपर्चयंतीत्यर्थः । नैनं मिनंति । न हिंसंतीत्यर्थः ॥

॥ अथ चतुर्दशी ॥

सुते अध्वरे अधि वाचमक्रता क्रीळयो न मातरं तुदंतः ।
वि षू मुंचा सुषुवुषो मनीषां वि वर्ततामद्रयश्चायमानाः ॥१४॥
सुते । अध्वरे । अधि । वाचं । अक्रत । आ । क्रीळयः । न । मातरं । तुदंतः ।
वि । सु । मुंच । सुसुऽवुषः । मनीषां । वि । वर्ततां । अद्रयः । चायमानाः ॥१४॥

चायमानाः पूज्यमाना अद्रय आदरणीया ग्रावाणोऽध्वरेऽधि यज्ञे सुते सोमेऽभिषुते मातरं तुदंतो हस्तेन ताडयंत आ क्रीळयो नाक्रीडकाः कुमाराः शब्दं यथा कुर्वंति तथा वाचं शब्दमक्रत । कृण्वंति । सुषुवुषः सोममभिषुतवतो ग्राव्णो

मनीषां स्तुतिं वि मुंच। विशेषेण मुंच। किंच। अद्रयो वि वर्तंतां। अभिषवशब्दं विमुंचंतु ॥

॥ इत्यष्टमस्य चतुर्थे एकत्रिंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्येऽष्टमाष्टके चतुर्थोऽध्यायः समाप्तः ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥
अथाष्टमाष्टकेऽध्यायश्चतुर्थः संप्रदर्शितः।
धीमता सायणार्येण पंचमोऽथ प्रदर्श्यते ॥

तत्र हये जाय इत्यष्टादशर्चं पंचमं सूक्तं त्रैष्टुभं। अत्रानुक्रमणिका। हये ह्यूनोर्वशीमैळः पुरूरवाः पूर्वोषितात्कामात्पुनरासाद्यावरोद्धुमैच्छत्सा तमनिच्छंती प्रत्याचष्टे हय इषुर्या कदा सुदेवोऽंतरिक्षप्रां सचेति तिस्रश्चैळवाक्यं शिष्टा उर्वश्या इति। हये जाय इषुर्न श्रिये या सुजूर्णिः कदा सूनुः सुदेवो अद्यांतरिक्षप्रां सचा यदासु जहतीष्वित्याद्यास्तिस्रश्चेति नवर्च ऐळस्य पुरूरवसो वाक्यानि। अतस्तासां स ऋषिः। शिष्टा नवोर्वश्या वाक्यानि। अतस्तासु सर्षिका। उभयोर्वाक्येषु योऽर्थः प्रतिपाद्यते सा देवता। गतो विनियोगः ॥

ऐळोर्वशीतिहासोऽत्र वैशद्याय प्रवर्ण्यते।
मित्रश्च वरुणश्चोभौ दीक्षितौ प्रेक्ष्य चोर्वशीं ॥१॥
रेतः सिषिचतुः सद्यस्तत्कुंभे न्यदधुस्तदा।
तां शप्तवंतौ मनुजभोग्या भूम्यां भवेति तौ ॥२॥
अत्रांतर इळो राजा मनोः पुत्रैश्च संयुतः।
मृगयां संचरन् साश्वो देवीक्रीडां विवेश ह ॥३॥

यत्र देवं गिरिसुता सर्वैर्भावैरतोषयत् ।
अत्राविशन्पुमान् स्त्री स्यादित्युक्त्वा तत्र प्राविशत् ॥४॥
स्त्रीभूत्वा व्रीडितः सोऽगाच्छरणं शिवमंजसा ।
इयं प्रसाद्यतां राजन्नित्युक्तः शंभुना नृपः ॥५॥
जगाम शरणं देवीमात्मनः पुंस्त्वसिद्धये ।
अकरोत्सा नृपं देवी षण्मासात्प्राप्तपुंस्त्वकं ॥६॥
ततः कदाचित्स्त्रीकाले बुधः सौंदर्यमोहितः ।
अप्सरोभ्यो विशिष्टां तामिळां संगतवान्मुदा ॥७॥
तदिळायां सोमसुताज्जातो राजा पुरूरवाः ।
तमुर्वशी तु चकमे प्रतिष्ठानपुरे स्थितं ॥८॥
तल्पादन्यत्र नग्नं त्वां दृष्ट्वा यामि यथागतं ।
सुतावुरणकौ त्वं च समीपं कुरु मे द्रुतं ॥९॥
इति सा समयं कृत्वा रमयामास तं नृपं ।
चतुरब्दे गते रात्रौ देवैरुरणकद्वयं ॥१०॥
हृतं तस्य ध्वनिं श्रुत्वा नग्न एव स भूपतिः ।
उत्थाय जित्वा तौ मागच्छेत्येवं जल्पकोऽन्यतः ॥११॥
विद्युता दर्शितोऽस्यै स नग्न एव पुरूरवाः ।
अथ सा नष्टसमया ह्युर्वशी तु दिवं ययौ ॥१२॥
तत उन्मत्तवद्राजा दिदृक्षुस्तामितस्ततः ।
कुर्वन्नन्वेषणं तीरे सरसो मानसस्य तां ॥१३॥
विहरंतीमप्सरोभिः सहापश्यत्पुरूरवाः ।
पुनः स चकमे भोक्तुमुर्वशीं च पुरूरवाः ॥१४॥
साध्वं सापश्यदुक्त्वा च प्रत्याचष्टे व्रजेति तं ।
इत्युर्वश्यैळसंवादमिममेषोऽप्यसूचयदिति ॥१५॥

अत्र वाजसनेयकं। उर्वशी हाप्सराः पुरूरवसमैळं चकमे तꣳह विंदमानोवाच त्रिः स्म माह्नो वैतसेन दंडेन हतादकामाꣳस्म मा निपद्यासै मो स्म त्वा नग्नं दर्शमेष वै न स्त्रीणामुपचार इति सा हास्मिञ्ज्योगुवासापि हास्माद्गर्भिण्यास तावज्ज्योग्घास्मिन्नुवास। ततो ह गंधर्वाः समूदिरे ज्योग्वा इयमुर्वशी मनुष्येष्व-वात्सीदुपजानीत यथेयं पुनरागच्छेदिति तस्यै हाविर्ध्दुरणा शयन उपबद्धास ततो

ह गंधर्वा अन्यतरमुरणं प्रमेथुः। सा होवाचावीर इव बत मेऽजन इव पुत्र इति द्वितीयं प्रमेथुः सा ह तथैवोवाचाथ हायमीक्षां चक्रे कथं नु तदवीरं कथमजनं स्याद्यत्राहं स्यामिति स नग्न एवानूत्पपात चिरं तन्मेने यद्वासः पर्यधास्यत ततो ह गंधर्वा विद्युतं जनयां चक्रुस्तं यथा दिवैवं नग्नं ददर्श ततो हैवेयं तिरोबभूव पुनरैमीत्येत्तिरोभूतां स आध्या जल्पन्कुरुक्षेत्रं समया चचारान्यतःप्लक्षेति बिसवती तस्यै हाध्यंतेन वव्राज तद्ध ता अप्सरस आतयो भूत्वा परिपुप्लुविरे तं हेयं ज्ञात्वोवाच अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा आविरसामेति तथेति तस्मै हाविरासुस्तां हायं ज्ञात्वाभिपरोवाद हये जाये मनसेत्यादि। श॰ ब्रा॰ ११. ५. १. ॥

॥ तत्र सूक्ते प्रथमा ॥

हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु।
न नौ मंत्रा अनुदितास एते मयस्करन्परतरे चनाहन् ॥१॥
हये। जाये। मनसा। तिष्ठ। घोरे। वचांसि। मिश्रा। कृणवावहै। नु।
न। नौ। मंत्राः। अनुदितासः। एते। मयः। करन्। परऽतरे। चन। अहन् ॥१॥

पुरूरवसो वाक्यं। जायां पश्यन्वदति। हये हे घोरे। अस्माकं दुःखजनकत्वात्। घोरकारिणि जाये मनसास्मदुपर्यनुरागवता मनसा युक्ता सती तिष्ठ। क्षणमात्रं संनिधावेव निवस। हय इत्यस्य निघाताभावश्छांदसः। किमर्थं संस्थानमिति तत्राह। वचांसि वाक्यानि मिश्राण्युक्तिप्रत्युक्तिरूपाणि न्वद्य क्षिप्रं वा कृणवावहै। करवावहै। कृवि हिंसाकरणयोः। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। किमर्थं वचसः करणमिति चेदुच्यते। नाववयोर्मंत्रा रहस्यार्था एते विवक्षिता अनुदितासोऽव्याह्रियमाणाः परस्परमसंभाष्यमाणा गुंफिताः संतः परतरे चनाहन्। चनेति निपातसमुदायश्चार्थे। अनेकेषु दिवसेषु चरमेऽप्यहनि मयः। सुखनामैतत्। सुखं न करन्। कुर्वंति। अतः कृणवावहा इति ॥

॥ अथ द्वितीया ॥

किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव।
पुरूरवः पुनरस्तं परेहि दुरापना वात इवाहमस्मि ॥२॥

किं। एता। वाचा। कृणव। तव। अहं। प्र। अक्रमिषं। उषसां। अग्रियाऽइव।
पुरूरवः। पुनः। अस्तं। परा। इहि। दुःऽआपना। वातःऽइव। अहं। अस्मि॥२॥

अनया तमुर्वशी प्रत्युवाच। एतैतया वाचा केवलया पुनःसंभोगरहितया किं कृणव। किं करवाव। अहं त्विदानीं त्वत्सकाशात्प्राक्रमिषं। अतिक्रांतवत्यस्मि। अतिक्रमे दृष्टांतः। उषसामग्रियेव। बह्वीनामुषसां मध्येऽग्र्याग्रे भवा पूर्वोषाः प्राक्रमीद्यथाहमपीति। यस्मादेवं तस्माद्धे पुरूरवस्त्वं पुनरस्मत्सकाशादस्तं गृहं परेहि। परागच्छ। मा ममाभिलाषं कार्षीः। तस्या दुर्ग्रहत्वमाह। अहं वात इव वायुरिव दुरापना दुष्प्रापा दुरापा वास्मि। दुरापा वा अहं त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवैनं तदुवाचेति वाजसनेयकं। श० ब्रा० ११. ५. १. ७.॥

॥ अथ तृतीया ॥

इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः।
अवीरे क्रतौ वि दविद्युतन्नोरा न मायुं चितयंत धुनयः॥३॥

इषुः। न। श्रिये। इषुऽधेः। असना। गोऽसाः। शतऽसाः। न। रंहिः।
अवीरे। क्रतौ। वि। दविद्युतत्। न। उरा। न। मायुं। चितयंत। धुनयः॥३॥

अनया पुरूरवाः स्वस्य विरहजनितं वैक्लव्यं तां प्रति ब्रूते। इषुधेः। इषवो धीयंतेऽस्मिन्निति इषुधिर्निषंगः। ततः सकाशादिषुरसनासनायै प्रक्षेप्तुं न भवति श्रिये विजयार्थं। त्वद्विरहाद्युद्धस्य बुद्धावप्यनिधानात्। तथा रंहिर्वेगवानहं शत्रुसकाशाद्गोषास्तेषां शत्रूणां गवां संभक्ता नाभवं। तथा शतसाः शतानामपरिमितानां शत्रुधनानां संभक्ता नाभवं। किंच। अवीरे वीरवर्जिते क्रतौ राजकर्मणि सति न वि दविद्युतत्। न विद्योतते। न मत्सामर्थ्यं। किंच। धुनयः कंपयितारोऽस्मदीया नरा उरोरौ। सुपां सुलुगिति सप्तम्या डादेशः। विस्तीर्णे संग्रामे मायुं। मीयते प्रक्षिप्यत इति मायुः शब्दः। कृवापाजीत्यादिनोण्। सिंहनादं न चितयंत। न बुध्यंते। चिती संज्ञाने। अस्माण्णिचि संज्ञापूर्वकस्य विधेरनित्यत्वाल्लघूपधगुणाभावः। छांदसो लङ्॥

॥ अथ चतुर्थी ॥

सा वसु दधती श्वशुराय वय उषो यदि वष्ट्यंतिगृहात्।
अस्तं ननक्षे यस्मिंश्चाकन्दिवा नक्तं श्नथिता वैतसेन॥४॥

सा । वसु । दधती । श्वशुराय । वयः । उषः । यदि । वष्टि । अंतिऽगृहात् ।
अस्तं । ननक्षे । यस्मिन् । चाकन् । दिवा । नक्तं । श्नथिता । वैतसेन ॥४॥

इदमुत्तरं चोर्वशीवाक्यं । आद्येन पुरात्मना कृतमुषसे निवेदयति । हे उषः सेयमुर्वशी वसु वासकं वयोऽन्नं श्वशुराय भर्तुः पुरूरवसः पित्रे दधती प्रयच्छंती तत्र गृहे स्थिता यदि पतिं वष्टि कामयते तदांतिगृहात् । स्वभर्तृभोगगृहांतिके यः श्वशुरस्य भोजनगृहं तदंतिगृहं । तस्माद्गृहात्सोर्वश्यस्तं पतिगृहं ननक्षे । व्याप्नोति । यस्मिन्गृहे चाकन् कामयत उर्वशी । सा चोर्वशी दिवा नक्तमहनि रात्रौ च वैतसेन । शेपो वैतस इति पुंस्प्रजननस्येति निरुक्तं । ३. २१. । पुंस्प्रजननेन श्नथिता ताडिता च भवति । एवमुर्वश्यात्मानं परोक्षेण निर्दिदेश ॥

॥ अथ पंचमी ॥

त्रिः स्म माह्नः श्नथयो वैतसेनोत स्म मेऽव्यत्यै पृणासि ।
पुरूरवोऽनु ते केतमायं राजा मे वीर तन्व१स्तदासीः ॥५॥

त्रिः । स्म । मा । अह्नः । श्नथयः । वैतसेन । उत । स्म । मे । अव्यत्यै । पृणासि ।
पुरूरवः । अनु । ते । केतं । आयं । राजा । मे । वीर । तन्वः । तत् । आसीः ॥५॥

अनेन पुरूरवसमेव संबोध्योक्तवती । हे पुरूरवस्त्वं मा मामह्नोऽहनि वैतसेन दंडेन पुंव्यंजनेन त्रिस्त्रिवारं । द्वित्रिचतुर्भ्यः सुच् । श्नथयः स्म । अश्नथयः । अताडयः । कृत्वोर्थप्रयोगे । पा॰ २. ३. ६४. । इति कालवाचिनोऽहःशब्दादधिकरणे षष्ठी । उतापि च । स्मेति पूरणः । अव्यत्यै । सपत्नीभिः सह पर्यायेण पतिमागच्छति सा व्यती । न तादृश्यव्यती । तस्यै मे मह्यं पृणासि । पूरयसि । एवं बुद्ध्या हे पुरूरवस्ते तव केतं गृहमन्वायं । अन्वगमं पूर्वं । हे वीर राजा त्वं च मे मम तन्वः शरीरस्य तत्तदासीः । अभवः । सुखयितेति शेषः । परमप्येवं मंतव्यं किमिति कातरो भवसीत्युवाच ॥

॥ इत्यष्टमस्य पंचमे प्रथमो वर्गः ॥

॥ अथ षष्ठी ॥

या सुजूर्णिः श्रेणिः सुम्नआपिर्ह्रदेचक्षुर्न ग्रंथिनी चरण्युः ।
ता अंजयोऽरुणयो न सस्रुः श्रिये गावो न धेनवोऽनवंत ॥६॥

या । सुऽजूर्णिः । श्रेणिः । सुम्नेऽआपिः । ह्रदेऽचक्षुः । न । ग्रंथिनी । चरण्युः ।

ताः । अंजयः । अरुणयः । न । सस्रुः । श्रिये । गावः । न । धेनवः । अनवंत ॥६॥

पुरूरवसो वाक्यं । या सुजूर्णिः सुजवैतन्नामिकास्ति तथा या श्रेणिर्या सुम्नआपिर्या ह्रदेचक्षुः । नकारः समुच्चये । ताभिश्चतसृभिरालिभूताभिर्मानिनीभिः सहिता ग्रंथिनी ग्रंथनवती संदर्भवती चरण्युश्चरणशीलोर्वश्याजगाम। यद्वा ग्रंथिनीत्येतत्सखिभूताप्सरोनामधेयं। या सुजूर्णिः सुजवोर्वशी सा ताभिः सह जगाम। ता अप्सरसोऽंजय आभरणोपेता अरुणयोऽरुणवर्णा न सस्रुः। पूर्ववन्न गच्छंति। श्रिये श्रयणाय धेनवो नवप्रसूता गावो न गाव इव। आश्रयार्थं यथा गावोऽनवंत शब्दायंते तथा न शब्दयंतीति व्यतिरेके दृष्टांतः ॥

॥ अथ सप्तमी ॥

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्य१ः स्वगूर्ताः ।

महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ॥७॥

सं । अस्मिन् । जायमाने । आसत । ग्नाः । उत । ईं । अवर्धन् । नद्यः । स्वऽगूर्ताः ।

महे । यत् । त्वा । पुरूरवः । रणाय । अवर्धयन् । दस्युऽहत्याय । देवाः ॥७॥

अनयैताभिः सह संसर्गस्त्वयानुभूत इत्युर्वशी वदति। अस्मिन्पुरूरवसि जायमाने सति ग्ना अप्सरसो देववेश्या अपि समासत। संगता अभवन्। अथवा जायमाने यज्ञार्थं प्रवर्धमाने सति ग्ना देवपत्न्योऽपि समासत। समभवन्। उतापि च। ईमेनं पुरूरवसं स्वगूर्ताः स्वयंगामिन्यो नद्यस्तासामाश्रयभूता अवर्धयन्। किंच हे पुरूरवो यद्यस्मात्त्वा त्वां महे महते रणाय रमणीयाय संग्रामाय दस्युहत्याय दस्युहननाय देवास्त्वामवर्धयन् ॥

॥ अथाष्टमी ॥

सचा यदासु जहतीष्वत्कममानुषीषु मानुषो निषेवे ।

अप स्म मत्तरसंती न भुज्युस्ता अत्रसन्रथस्पृशो नाश्वाः ॥८॥

सचा । यत् । आसु । जहतीषु । अत्कं । अमानुषीषु । मानुषः । निऽसेवे ।

अप । स्म । मत् । तरसंती । न । भुज्युः । ताः । अत्रसन् । रथऽस्पृशः । न । अश्वाः ॥८॥

इदमादिद्वीण्येकवाक्यानि। तत्रादितो द्वाभ्यामुर्वशीमन्याश्च सह स्तौति। यद्यदा सचा सहायभूतः पुरूरवा अत्कं स्वकीयं रूपं। अत्क इति रूपनाम। जहतीषु परित्यजंतीष्वमानुषीषु देवताभूतास्वप्सरःसु मानुषः सन् निषेवेऽभिमुखं गच्छति तदानीं ता अप्सरसो मत् मत्तोऽपापसृत्याचसन्। चसतिर्गतिकर्मा। गच्छंति। पलायने दृष्टांतः। तरसंती भुज्युर्न। तरसन्नाम मृगः। तस्य स्त्री भुज्युर्भोगसाधनभूता स्त्री मृगी। सा यथा व्याधाद्भीता पलायते। किंच। रथस्पृशो नाश्वाः। रथे नियुक्ता अश्वा इव। यथा ते पलायंते तद्वत्पलायंत इति। उर्वश्यानेकाभिरस्माभिः सह भोगमनुभुक्तवानसीत्युक्तः प्रत्याचष्टे ॥

॥ अथ नवमी ॥

यदासु मर्तो अमृतासु निस्पृक्सं क्षोणीभिः क्रतुभिर्न पृंक्ते।
ता आतयो न तन्वः शुंभत स्वा अश्वासो न क्रीळयो दंदशानाः ॥९॥
यत्। आसु। मर्तः। अमृतासु। निऽस्पृक्। सं। क्षोणीभिः। क्रतुऽभिः। न। पृंक्ते।
ताः। आतयः। न। तन्वः। शुंभत। स्वाः। अश्वासः। न। क्रीळयः। दंदशानाः ॥९॥

यद्यदास्वमृतास्वप्सरःसु मर्त्यो मनुष्यः पुरूरवा निस्पृक् निःशेषेण स्पृशन् क्षोणीभिर्वाग्भिः क्रतुभिर्न कर्मभिश्च सं पृंक्ते संपर्कं करोति। नकारः समुच्चयार्थः। ता अप्सरस आतय आतिभूतास्तदानीं स्वास्तन्व आत्मीयानि रूपाणि न शुंभत। न प्रकाशयंति। अश्वासो नाश्वा इव क्रीळयः संक्रीडमाना दंदशाना दंदशूका जिह्वाभिरात्मीयाः सृक्का भक्षयंतः। ते यथा चापल्येन धावंतः स्वरूपं न प्रयच्छंति रथिकाय तद्वदिति दुःखाद्ब्रूते ॥

॥ अथ दशमी ॥

विद्युन्न या पतंती दविद्योद्भरंती मे अप्या काम्यानि।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥१०॥
विऽद्युत्। न। या। पतंती। दविद्योत्। भरंती। मे। अप्या। काम्यानि।
जनिष्टो इति। अपः। नर्यः। सुऽजातः। प्र। उर्वशी। तिरत। दीर्घं। आयुः ॥१०॥

अनयोर्वशीं स्तौति। योर्वशी विद्युन्न विद्युदिव पतंती गच्छंती दविद्योद्द्योतते। किं कुर्वती। अप्या। अप इत्यंतरिक्षनाम। तत्संबंधीनि व्याप्तानि वा काम्यान्य-

स्मदभिमतान्युदकानि वा मे मह्यं भरंती संपादयंती। यदागतायास्तस्याः सकाशादपो व्याप्तः कर्मसु नर्यो नरेभ्यो हितः सुजातः सुजननः पुत्रो जनिष्टो अजनिष्टोत्पद्यते तदानीं ममोर्वशी दीर्घमायुः प्र तिरत। प्रवर्धयति। प्रजामनु प्रजायसे तदु ते मर्त्यामृतं। तै० ब्रा० १.५.५.६.। इति हि मंत्रः॥

॥ इत्यष्टमस्य पंचमे द्वितीयो वर्गः ॥

॥ अथैकादशी ॥

जज्ञिष इत्था गोपीथ्याय हि दधाथ तत्पुरूरवो म ओजः।
अशासं त्वा विदुषी सस्मिन्नहन्न म आशृणोः किमभुग्वदासि ॥११॥

जज्ञिषे। इत्था। गोऽपीथ्याय। हि। दधाथ। तत्। पुरूरवः। मे। ओजः।
अशासं। त्वा। विदुषी। सस्मिन्। अहन्। न। मे। आ। अशृणोः। किं। अभुक्।
वदासि ॥११॥

इत्थेत्थं गोपीथ्याय। गौः पृथिवी। पीथं पालनं। स्वार्थिकस्तद्धितः। भूरक्षणाय जज्ञिषे हि। जातोऽसि खलु पुत्ररूपेण। आत्मा वै पुत्रनामेति श्रुतेः। पुनर्दव्याह। हे पुरूरवो मे ममोदरे मय्योजोऽपत्योत्पादनसामर्थ्यं दधाथ। मयि निहितवानसि। तत्तथास्तु। अथापि स्यातव्यमिति चेत्तत्राह। अहं विदुषी भावि कार्यं जानती सस्मिन्नहन् सर्वस्मिन्नहनि त्वया कर्तव्यं त्वा त्वामशासं। शिक्षितवत्यनस्मि। त्वं मे मम वचनं नाशृणोः। न शृणोषि। किं त्वमभुगभोक्तापालयिता प्रतिज्ञातार्थमपालयन्वदासि हये जाय इत्यादिकरूपं प्रलापं। वदेर्लेट्यडागमः। दिवसे त्रिवारं यभस्व। एडकबालकमस्माकं पुत्रत्वेन परिकल्पय। अपत्योत्पादनपर्यंतं वसामि नग्नं त्वां यदाद्राक्षं तदा गच्छामीत्येवंरूपो मिथःसमय उर्वशी हाप्सराः पुरूरवसमैळं चकमे त ँ ह विंदमानोवाच त्रिः स्म माह्नो वैतसेन दंडेनेत्यादि वाजसनेयकमुदाहृतं॥

॥ अथ द्वादशी ॥

कदा सूनुः पितरं जात इच्छाच्चक्रन्नाश्रु वर्तयद्विजानन्।
को दंपती समनसा वि यूयोदध यदग्निः श्वशुरेषु दीदयत् ॥१२॥

कदा। सूनुः। पितरं। जातः। इच्छात्। चक्रन्। न। अश्रु। वर्तयत्। विऽजानन्।
कः। दंपती इति दंऽपती। सऽमनसा। वि। यूयोत्। अध। यत्। अग्निः। श्वशुरेषु।
दीदयत् ॥१२॥

इदं पुरूरवसो वाक्यं। कदा कस्मिन्काले सूनुस्त्वोदरजातः सन् पितरं मामिच्छात् इच्छेत्। इषु इच्छायां। लेटि शपीषुगमियमां छ इति छादेशः। लेटोऽडाटावित्यडागमः। कदा वा विजानन्पितरं मामधिगच्छन् चक्रन् क्रंदमानो नाश्रु वर्तयत्। नेति चार्थे। किंच। कः किंविधः सन् सूनुः समनसा समनसौ समनस्कौ दंपती जायापती त्वां मां च वि यूयोत्। विश्लेषयेत्। यु मिश्रणामिश्रणयोः। यौतेश्छांदसः शपः श्लुः। तुजादित्वादभ्यासस्य दीर्घः। अधाधुना यद्यदाग्निस्तव हृदयस्थितस्तेजोरूपो गर्भः श्वशुरेषु दीदयत्। दीप्यते। दीदयतिर्दीप्तिकर्मेति नैरुक्तो धातुः ॥

॥ अथ त्रयोदशी ॥

प्रति ब्रवाणि वर्तयते अश्रु चक्रन्न क्रंददाध्ये शिवायै।
प्र तत्ते हिनवा यत्ते अस्मे परेह्यस्तं नहि मूर मापः ॥१३॥

प्रति। ब्रवाणि। वर्तयते। अश्रु। चक्रन्। न। क्रंदत्। आऽध्ये। शिवायै।
प्र। तत्। ते। हिनव। यत्। ते। अस्मे इति। परा। इहि। अस्तं। नहि। मूर। मा। आपः ॥१३॥

इदमुर्वशीवाक्यं। हे पुरूरवः। त्वां प्रति ब्रवाणि। प्रतिवच्मि। त्वदपत्यमश्रु वाष्पं वर्तयते। वर्तयिष्यति। आध्य आध्याते वस्तुनि शिवायै शिवे कल्याणे समुपस्थिते सति चक्रन् रुदन् अश्रूणि विमुंचन् न क्रंदत्। नकारश्चार्थे। रोत्स्यति चेत्यर्थः। तत्त्वदपत्यं ते तुभ्यं हिनव प्रहिणोमि यदपत्यं ते तव संबंध्यस्मे अस्मासु निहितं। त्वं परेह्यस्तं। अस्तमिति गृहनाम। स्वगृहं प्रतिगच्छ। हे मूर मूढ मा मां न ह्यापः। न प्राप्नोषि। हिनवेत्यत्र हिनोतेश्छंदसि लुङ्लङ्लिट इति भविष्यदर्थे लङि मिप आमादेशः। गुणः। अंत्यलोपश्छांदसः। बहुलवचनादडभावः। आपः। आपॢ व्याप्तौ। लिटि तिङां तिङो भवंतीति थलो णल् ॥

॥ अथ चतुर्दशी ॥

सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गंतवा उं।
अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः ॥१४॥

सुऽदेवः । अद्य । प्रऽपतेत् । अनावृत् । पराऽवतं । परमां । गंतवै । ऊं इति ।
अध । शयीत । निःऽऋतेः । उपऽस्थे । अध । एनं । वृकाः । रभसासः । अद्युः ॥१४॥

अद्य परिद्यूनः पुरूरवा उवाच । सुदेवस्त्वया सह सुक्रीडः पतिरद्य प्रपतेत् । अत्रैव प्रपततु । अथवानावृदनावृत्तः सन् परमां परावतं दूरादपि दूरदेशं गंतवै गंतुं महाप्रस्थानगमनं कुर्यात् । अधाथवा यत्रकुत्रापि गंतुं समर्थो निर्ऋतेः पृथिव्या उपस्थे शयीत । शयनं कुर्यात् । यद्वा निर्ऋतिः पापदेवता । तस्या उपस्थ उत्संगे संनिधौ म्रियतामित्यर्थः । अधाथवैनं वृका अरण्याः श्वानो रभसासो वेगवंतो ऽद्युः । भक्षयंतु । अत्र वाजसनेयकं । सुदेवोऽद्योद्वा बध्नीत प्र वा पतेत्तदेनं वृका वा श्वानो वाद्युरिति हैव तदुवाचेति ॥

॥ अथ पंचदशी ॥

पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन् ।
न वै स्त्रैणानि सख्यानि संति सालावृकाणां हृदयान्येता ॥१५॥

पुरूरवः । मा । मृथाः । मा । प्र । पप्तः । मा । त्वा । वृकासः । अशिवासः । ऊं इति । क्षन् ।
न । वै । स्त्रैणानि । सख्यानि । संति । सालावृकाणां । हृदयानि । एता ॥१५॥

तमितरा प्रत्युवाच । हे पुरूरवस्त्वं मा मृथाः । मृतिं मा प्राप्नुहि । म्रियतेर्लुङि थासि ह्रस्वादंगादिति सिचो लोपः । तथा मा प्र पप्तः । अत्रैव पतनं मा कार्षीः । पतेर्लुङि लृदित्त्वात्पुषादीत्यादिना च्लेरङ् । पतः पुमिति पुम् । तथा त्वा त्वामशिवासोऽशुभा वृकासो वृका मा उ क्षन् । उ इत्येवकारार्थे । अक्षन् । माभ्यवहारयंतु । किमित्येवमस्मदुपर्यायहं करोषि । मा कार्षीरित्यर्थः । अदेर्लुङि लुङ्सनोर्घस्लृ । पा० २.४.३७. । इति घस्लादेशः । मंत्रे घसेति च्लेर्लुक् । गमहनेत्यादिनोपधालोपः । शासिवसीत्यादिना षत्वं । खरि चेति चर्त्वं । बाहुलकादडभावः । अथ स्वस्नेहस्यासारतामाह । स्त्रैणानि स्त्रीणां कृतानि सख्यानि न वै संति । न संति खलु । अभावे कारणमाह । एतानि सख्यानि सालावृकाणां हृदयानि यथा वत्सादीनां विश्वासापन्नानां घातुकानि तद्वत् । अत्र वाजसनेयकं । मैतदादृथा न वै स्त्रैण॑ सख्यमस्ति पुनर्गृहानिहीति हैवैनं तदुवाचेति ॥

॥ इत्यष्टमस्य पंचमे तृतीयो वर्गः ॥

॥ अथ षोडशी ॥

यद्विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः ।
घृतस्य स्तोकं सकृदह्न आश्नां तादेवेदं तातृपाणा चरामि ॥१६॥

यत् । विऽरूपा । अचरं । मर्त्येषु । अवसं । रात्रीः । शरदः । चतस्रः ।
घृतस्य । स्तोकं । सकृत् । अह्नः । आश्नां । तात् । एव । इदं । ततृपाणा । चरामि ॥१६॥

यद्यदा विरूपा मनुष्यसंपर्काद्विगतसहजभूतदेवरूपापत्यानुकूल्येन नानारूपा वा मर्त्येषु मनुष्येष्वचरं तदानीं रात्रीः पूरयित्रीश्चतस्रः शरदोऽवसं । न्यवसं । अत्यंतसंयोगेति द्वितीया । तदानीं घृतस्य स्तोकं सकृदह्न आश्नां । तादेव तेनैव स्तोकेनाहमिदं संप्रति तातृपाणा तृप्ता सती चरामि ॥

॥ अथ सप्तदशी ॥

अंतरिक्षप्रां रजसो विमानीमुप शिक्षाम्युर्वशीं वसिष्ठः ।
उप त्वा रातिः सुकृतस्य तिष्ठान्नि वर्तस्व हृदयं तप्यते मे ॥१७॥

अंतरिक्षऽप्रां । रजसः । विऽमानीं । उप । शिक्षामि । उर्वशीं । वसिष्ठः ।
उप । त्वा । रातिः । सुऽकृतस्य । तिष्ठात् । नि । वर्तस्व । हृदयं । तप्यते । मे ॥१७॥

अंतरिक्षप्रां स्वतेजसांतरिक्षस्य पूरयित्रीं तथा रजसो रंजकस्योदकस्य विमानीं निर्मात्रीमुर्वशीं वसिष्ठः समानानां मध्येऽतिशयेन वासयिताहमुप शिक्षामि । वशं नयामि । सुकृतस्य शोभनकर्मणो रातिर्दाता पुरूरवास्त्वा त्वामुप तिष्ठात् । उपतिष्ठतु । मे हृदयं तप्यते । अतो निवर्तस्व । एवं राजोवाच ॥

॥ अथाष्टादशी ॥

इति त्वा देवा इम आहुरैळ यथेमेतद्भवसि मृत्युबंधुः ।
प्रजा ते देवान्हविषा यजाति स्वर्ग उ त्वमपि मादयासे ॥१८॥

इति । त्वा । देवाः । इमे । आहुः । ऐळ । यथा । ईं । एतत् । भवसि । मृत्युऽबंधुः ।
प्रऽजा । ते । देवान् । हविषा । यजाति । स्वःऽगे । ऊं इति । त्वं । अपि । मादयासे ॥१८॥

हे ऐळ पुरूरवस्त्वा त्वामिमे देवा इत्याहुः । मृत्युबंधुर्मृत्योर्बंधको मृत्योर्बंधुभूतो वा मृत्युवशमप्राप्नुवंस्त्वं यथें यथैतद्भवसि भविष्यसि प्रजा प्रकर्षेण जायमानस्त्वं

ते तव संबंधिनो यष्टव्यान्देवान्हविषा यजासि। यजसि। स्वर्ग उ स्वर्ग एव त्वमपि मादयासे। मादयसेऽस्माभिः सह। एवमाहुरित्यर्थः। यस्मादेवं करोषि तस्मादभिलाषं हित्वा सुखी भवेति सेयं पुरूरवसं प्रत्युवाच ॥

॥ इत्यष्टमस्य पंचमे चतुर्थो वर्गः ॥

अथ प्र ते मह इति त्रयोदशर्चं षष्ठं सूक्तं। वरुर्नामांगिरस ऋषिः। इंद्रस्य पुत्रः सर्वहरिर्वा नाम। द्वादशीत्रयोदश्यौ त्रिष्टुभौ शिष्टा एकादश जगत्यः। इंद्रस्याश्वौ हरी। तयोरत्र स्तूयमानत्वात्तद्देवताकमिदं। तथा चानुक्रांतं। प्र ते सप्तोना वरुः सर्वहरिर्वेंद्रो हरिस्तुतिर्द्वित्रिष्टुबंतं॥ अतिरात्रे तृतीये पर्याये ब्राह्मणाच्छंसिन एतत्सूक्तं। सूचितं च। प्र ते मह ऊती शचीवस्तव वीर्येणेति याज्या। आ॰ ६.४.। इति ॥ षोडशिशस्त्रेऽप्याद्यस्तृचः शंसनीयः। सूचितं च। प्र ते महे विदथे शंसिषं हरी इति तिस्रो जगत्यः। आ॰ ६.२.। इति ॥

॥ तत्र प्रथमा ॥

प्र ते॑ म॒हे वि॒दथे॑ शंसिषं॒ हरी॒ प्र ते॑ वन्वे व॒नुषो॑ हर्य॒तं मदं॑।

घृ॒तं न यो हरि॑भि॒श्चारु॒ सेच॑त॒ आ त्वा॑ विशंतु॒ हरि॑वर्पसं॒ गिरः॑ ॥१॥

प्र। ते॒। म॒हे। वि॒दथे॑। शं॒सि॒षं॒। हरी॒ इति॑। प्र। ते॒। व॒न्वे॒। व॒नुषः॑। ह॒र्य॒तं। मदं॑।

घृ॒तं। न। यः। हरि॑ऽभिः। चारु॑। सेच॑ते। आ। त्वा॒। वि॒शं॒तु॒। हरि॑ऽवर्पसं। गिरः॑ ॥१॥

हे इंद्र ते तव हरी अश्वौ महे महति विदथे यज्ञे प्र शंसिषं। अशंसिषं। अस्ताविषं। तथा वनुषः। वनु हिंसायां। हिंसकस्य ते तव हर्यतं। हर्य गतिकांत्योः। तस्यौणादिकोऽतच्। चित्स्वरेणांतोदात्तः। कमनीयं मदं प्र वन्वे। प्रयाचेऽस्मदभिमतं। वनु याचने। य इंद्रो हरिभिर्हरितवर्णैरश्वैर्मद्यागं गत्वा चारु चरणीयं घृतं न घृतमिव सुपूतमुदकं सेचते वर्षति तं तादृशं हरिवर्पसं। वर्प इति रूपनाम। हरितरूपं त्वा त्वामाविशंतु गिरोऽस्मदीयाः स्तुतिवाचस्तव मदाय ॥

॥ अथ द्वितीया ॥

हरिं॒ हि योनि॑म॒भि ये स॒मस्व॑रन्हि॒न्वंतो॒ हरी॑ दि॒व्यं यथा॒ सदः॑।

आ यं पृ॒णंति॒ हरि॑भि॒र्न धे॒नव॒ इंद्रा॑य शू॒षं हरि॑वंतमर्चत ॥२॥

हरिं॑। हि। योनिं॑। अ॒भि। ये। सं॒ऽअस्व॑रन्। हि॒न्वंतः॑। हरी॒ इति॑। दि॒व्यं। यथा॑। सदः॑।

आ। यं। पृ॒णंति॑। हरि॑ऽभिः। न। धे॒नवः॑। इंद्रा॑य। शू॒षं। हरि॑ऽवंतं। अ॒र्च॒त॒ ॥२॥

ये पूर्वे स्तोतार ऋषयो योनिमिंद्रस्य स्थानभूतं हरिमश्वमभि समस्वरन्। स्वृ शब्दोपतापनयोः। अभिसंस्तुवंति। किं कुर्वंतः। दिव्यं देवसंबंधि सदो यागगृहं यथा प्रेरयंतींद्रं तथा हरी अश्वौ हिन्वंतः प्रेरयंतः। सोमेऽभिषुते सति स्वयमेवेंद्रो रथेऽश्वौ प्रेरयति अतः स्तोतॄणां हरिप्रेरणत्वं। यद्वा दिव्यं सद इंद्रः प्राप्नुयाद्यथा तथा हरी स्तुतिभिर्हिन्वंतः प्रेरयंतः। यमिंद्रं धेनवो नवप्रसूतिका गावो यथा पृणंति क्षीरादिभिः। अत्र पुरस्तादुपचारोऽपि नकार उपमार्थीयः। हरिभिर्हरितवर्णैः सोमैरापृणंति पूरयंति च। तथा यूयमपींद्रायेंद्रस्य हरिवंतं शूषं बलमर्चत। पूजयत हे स्तोतारः स्तुतिभिः॥

॥ अथ तृतीया ॥

सो अस्य वज्रो हरितो य आयसो हरिर्निकामो हरिरा गभस्त्योः।
द्युम्नी सुशिप्रो हरिमन्युसायक इंद्रे नि रूपा हरिता मिमिक्षिरे ॥३॥
सः। अस्य। वज्रः। हरितः। यः। आयसः। हरिः। निऽकामः। हरिः। आ। गभस्त्योः।
द्युम्नी। सुऽशिप्रः। हरिमन्युऽसायकः। इंद्रे। नि। रूपा। हरिता। मिमिक्षिरे ॥३॥

अस्येंद्रस्य स वज्रो हरितो हरितवर्णो य आयसोऽयःसारभूतोऽस्ति निर्मितः। स च हरिर्हरितवर्णो वज्रो निकामो नितरां कमनीयः। स आ हंता शत्रूणां। तादृशो वज्रो गभस्त्योर्हस्तयोर्वर्तत इति शेषः। अयमिंद्रो द्युम्नी। द्युम्नं द्योतमानं धनं। तद्वान् सुशिप्रः शोभनहनुर्हरिमन्युसायकः। यस्य मन्युः सायकः शत्रुहंताभिगंता वा भवति। यद्वा शत्रुहंता कोपः सायकश्च यस्य स तादृशो भवति। किं बहुना। इंद्रे रूपा रूपाणि हरिता हरितानि नि मिमिक्षिरे। निषिक्तानि बभूवुः। मिहेः सनंतात्कर्मणि लिटि रूपं॥

॥ अथ चतुर्थी ॥

दिवि न केतुरधि धायि हर्यतो विव्यचद्वज्रो हरितो न रंह्या।
तुददहिं हरिशिप्रो य आयसः सहस्रशोका अभवद्धरिंभरः ॥४॥
दिवि। न। केतुः। अधि। धायि। हर्यतः। विव्यचत्। वज्रः। हरितः। न। रंह्या।
तुदत्। अहिं। हरिऽशिप्रः। यः। आयसः। सहस्रऽशोकाः। अभवत्। हरिंऽभरः ॥४॥

दिव्यंतरिक्षे केतुः प्रकाशेन सर्वस्य प्रज्ञापक आदित्य इव स यथाधि निहित एवमयमिंद्रोऽधि धायि। अध्यधायि। स्तोतृभिरधि निहितः। किंचेंद्रस्य वज्रो

हर्यतः स्पृहणीयः सन् विव्यचत्। व्याप्नोति व्याप्तव्यं शत्रुसंघं। तत्र दृष्टांतः। हरितो न हरितवर्णा अध्वाहर्तारो वाश्वा आदित्यसंबंधिनः। ते यथा रंह्या रंहणेन वेगेन व्याप्नुवंति व्याप्तव्यं। योऽस्य वज्र आयसोऽयोविकारोऽहिं वृत्रं मेघं वा तुदन्निनस्ति। योऽयं महानुभावो हरिशिप्रः सोमपानरभसेन हरितवर्णनासिकस्तद्वर्णहनुर्वा हरिभरो हर्योभर्तेंद्रः सहस्रशोका अभवत्। शुच दीप्तौ। अपरिमितदीप्तिर्भवति॥

॥ अथ पंचमी ॥

त्वंत्वमहर्यथा उपस्तुतः पूर्वेभिरिंद्र हरिकेश यज्वभिः।

त्वं हर्यसि तव विश्वमुक्थ्य१मसामि राधो हरिजात हर्यतं॥५॥

त्वंऽत्वं। अहर्यथाः। उपऽस्तुतः। पूर्वेभिः। इंद्र। हरिऽकेश। यज्वऽभिः।

त्वं। हर्यसि। तव। विश्वं। उक्थ्यं। असामि। राधः। हरिऽजात। हर्यतं॥५॥

हे इंद्र हे हरिकेश हरितरोमवदश्व त्वंत्वमेव सर्वत्र यज्ञेऽहर्यथा अकामयथाः स्तोत्रं हविर्वा। कीदृशस्त्वं। पूर्वेभिः पूर्वतनैर्यज्वभिर्यजमानैरुपस्तुतः सन्। हे हरिजात हरितवर्णः सन् प्रादुर्भूत हारकप्रादुर्भाव वा। शत्रुवधार्थं प्रादुर्भूतेत्यर्थः। हे तादृशेंद्र त्वं तव स्वभूतमिति शेषः। विश्वं व्याप्तं सोमचरुपुरोडाशादिरूपं सर्वं वा। यद्वा यत्र यानि यानि हवींषि दीयंते तत्सर्वं वा। तथोक्थ्यं प्रशस्यमसाम्यसाधारणमसमं कृत्स्नं हर्यतं कांतं राधोऽन्नं हविर्लक्षणं हर्यसि। कामयसे॥

॥ इत्यष्टमस्य पंचमे पंचमो वर्गः॥

॥ अथ षष्ठी॥

ता वज्रिणं मंदिनं स्तोम्यं मद इंद्रं रथे वहतो हर्यता हरी।

पुरूण्यस्मै सवनानि हर्यत इंद्राय सोमा हरयो दधन्विरे॥६॥

ता। वज्रिणं। मंदिनं। स्तोम्यं। मदे। इंद्रं। रथे। वहतः। हर्यता। हरी इति।

पुरूणि। अस्मै। सवनानि। हर्यते। इंद्राय। सोमाः। हरयः। दधन्विरे॥६॥

ता तौ प्रसिद्धौ हर्यता हर्यतौ गंतारौ कांतौ वा हरी हरितवर्णावश्वौ मंदिनं मोदमानं स्तोम्यं स्तुत्यर्हं वज्रिणमिंद्रं मदे निमित्ते रथे वहतः। धारयतः। यज्ञमस्मदीयं प्रापयतः। अस्मै हर्यते कांतायेंद्राय पुरूणि बहूनि सवनानि प्रातरादीनि हरयो हरितवर्णाः सोमा दधन्विरे। निधीयंते॥

॥ अथ सप्तमी ॥

अरं कामाय हरयो दधन्विरे स्थिराय हिन्वन्हरयो हरी तुरा ।
अर्वद्भिर्यो हरिभिर्जोषमीयते सो अस्य कामं हरिवंतमानशे ॥७॥

अरं । कामाय । हरयः । दधन्विरे । स्थिराय । हिन्वन् । हरयः । हरी इति । तुरा ।
अर्वत्ऽभिः । यः । हरिऽभिः । जोषं । ईयते । सः । अस्य । कामं । हरिऽवंतं । आनशे ॥७॥

अरमलं पर्याप्तं कामायेंद्रकामनाय हरयो हरितवर्णाः सोमा दधन्विरे । ते च हरयः स्थिराय युद्धेऽपलायितायेंद्राय तुरा तुरौ त्वरमाणौ हरी अश्वौ हिन्वन् । प्रेरयंति । योऽर्वद्भिररणकुशलैर्हरिभिरश्वैर्जोषं शूरैः सेव्यं संग्राममीयते गच्छति स रथोऽस्येंद्रस्य स्वभूतं कामं कमनीयं हरिवंतं सोमवंतं यज्ञमानशे । व्याप्नोति ॥

॥ अथाष्टमी ॥

हरिश्मशारुर्हरिकेश आयसस्तुरस्पेये यो हरिपा अवर्धत ।
अर्वद्भिर्यो हरिभिर्वाजिनीवसुरति विश्वा दुरिता पारिषद्धरी ॥८॥

हरिऽश्मशारुः । हरिऽकेशः । आयसः । तुरःऽपेये । यः । हरिऽपाः । अवर्धत ।
अर्वत्ऽभिः । यः । हरिऽभिः । वाजिनीऽवसुः । अति । विश्वा । दुःऽइता । पारिषत् ।
हरी इति ॥८॥

हरिश्मशारुर्हरितवर्णश्मश्रुर्हरिकेशो हरितवर्णकेश आयसोऽयोमयहृदयः । शत्रूणां घातक इत्यर्थः । एतादृशो य इंद्रस्तुरस्पेये तूर्णं पातव्ये सोमे हरिपा हरितवर्णसोमपा अवर्धत वर्धते यश्चार्वद्भिर्गंतृभिर्हरिभिरश्वैः सोमैर्वा वाजिनीवसुः । वाजिनमन्नं हविर्लक्षणं । तदस्या अस्तीति वाजिनी क्रिया । सैव वसु धनं यस्य स तथोक्तः । यज्ञधन इत्यर्थः । यद्वा वाजिनमेव वाजिनी । तदेव धनं यस्य स एवमुक्तलक्षण इंद्रो हरी रथे योजयित्वा विश्वा विश्वानि सर्वाणि दुरितास्माकं दुरितानि पारिषत् । पारयतु । पारयतेर्लेटि सिप्यडागमः ॥

॥ अथ नवमी ॥

स्रुवेव यस्य हरिणी विपेततुः शिप्रे वाजाय हरिणी दविध्वतः ।
प्र यत्कृते चमसे मर्मृजद्धरी पीत्वा मदस्य हर्यतस्यांधसः ॥९॥

सुवाऽइव। यस्यं। हरिणी इतिं। विऽपेततुः। शिप्रे इतिं। वाजाय। हरिणी इतिं। दविध्वतः।

प्र। यत्। कृते। चमसे। मर्मृजत्। हरी इतिं। पीत्वा। मदस्य। हर्यतस्यं। अंधसः॥९॥

यस्येंद्रस्य हरिणी हरितवर्णावश्वौ विपेततू रथ इंद्रमारोप्य विपततो यज्ञमस्मदीयं। यद्वा यस्य हरिणी हरितवर्णे कनीनिके विपेततुः सोमं प्रति विपततः। तत्र दृष्टांतः। सुवेव। यथा सुवा सुवौ हविषा पूर्णौ पात्रविशेषौ होमार्थं विपततस्तद्वत्। तथा यस्य च हरिणी हरितवर्णे शिप्रे हनू वाजाय सोमलक्षणायान्नाय दविध्वतः कंपयतः। पुरतः प्रत्तस्य सोमस्य प्रीत्या चलतः। तथा यद्यदा कृते संस्कृते चमसे वर्तमानं मदस्य मदकरं हर्यतस्य कांतमंधसोऽन्नं सोमं पीत्वा हरी अश्वौ प्र मर्मृजत्। प्रमार्ष्टि। तदानीं स्तुत इत्यर्थः॥

॥ अथ दशमी ॥

उत स्म सद्म हर्यतस्य पस्त्योऽ३रत्यो न वाजं हरिवाँ अचिक्रदत्।
मही चिद्धि धिषणाहर्यदोजसा बृहद्वयो दधिषे हर्यतश्चिदा॥१०॥

उत। स्म। सद्मं। हर्यतस्यं। पस्त्योः। अत्यः। न। वाजं। हरिऽवान्। अचिक्रदत्।
मही। चित्। हि। धिषणा। अहर्यत्। ओजसा। बृहत्। वयः। दधिषे। हर्यतः। चित्। आ॥१०॥

उतापि च हर्यतस्य कमनीयस्येंद्रस्य सद्म सदनं पस्त्योर्द्यावापृथिव्योः संबंधि। सोऽयमत्यो नाश्व इव वाजं संग्रामं हरिवान् अश्ववानचिक्रदत्। गच्छति। तथा हि यस्माद्वे इंद्र त्वां मही महती धिषणा स्तुतिरोजसा बलेन युक्तमिंद्रमहर्यत् कामयते। चिदिति पूरणः। अतो वाजमचिक्रदत्। तथा सति हर्यतः कामयमानस्य यजमानस्य बृहन्महद्वयोऽन्नमा दधिषे। धारयसि। आप्रयच्छसि। चिदिति पूरणः॥

॥ इत्यष्टमस्य पंचमे षष्ठो वर्गः॥

॥ अथैकादशी ॥

आ रोदसी हर्यमाणो महित्वा नव्यंनव्यं हर्यसि मन्म नु प्रियं।
प्र पस्त्यमसुर हर्यतं गोराविष्कृधि हरये सूर्याय॥११॥

आ। रोदसी इति। हर्यमाणः। महिऽत्वा। नव्यंऽनव्यं। हर्यसि। मन्म। नु। प्रियं।
प्र। पस्त्यं। असुर। हर्यतं। गोः। आविः। कृधि। हरये। सूर्याय ॥११॥

हे इंद्र हर्यमाणः कामयमानो महित्वा महत्त्वेन रोदसी द्यावापृथिव्यावा। पूरयसीति शेषः। तथा नव्यंनव्यं नवतरं प्रियं प्रियकरं मन्म मननीयं स्तोत्रं नु क्षिप्रं हर्यसि। कामयसे। हे असुर बलवन्। असुः प्राणः। तद्वन्। मत्वर्थीयो रः। तादृशेंद्र गोः। जात्येकवचनं। गवां हर्यतं स्पृहणीयं पस्त्यं गृहं गोरुदकस्योक्तगुणकं स्थानं वा हरय उदकस्य हर्त्रे सूर्याय प्र प्रकर्षेणाविष्कृधि। प्रकटीकुरु ॥

॥ अथ द्वादशी ॥

आ त्वा हर्यंतं प्रयुजो जनानां रथे वहंतु हरिशिप्रमिंद्र।
पिबा यथा प्रतिभृतस्य मध्वो हर्यन्यज्ञं सधमादे दशोणिं ॥१२॥
आ। त्वा। हर्यतं। प्रऽयुजः। जनानां। रथे। वहंतु। हरिऽशिप्रं। इंद्र।
पिब। यथा। प्रतिऽभृतस्य। मध्वः। हर्यन्। यज्ञं। सधऽमादे। दशऽओणिं ॥१२॥

हे इंद्र हरिशिप्रं हरितवर्णशिप्रं त्वा त्वां हर्यतं यज्ञं कामयमानं प्रयुजो रथे प्रयुक्ता अश्वा रथे स्थापयित्वा जनानामृत्विग्यजमानानामंतिकं वहंतु। प्रापयंतु। प्रवहंति। यथा येन प्रकारेण प्रतिभृतस्य ग्रहादिषु संभृतं मध्वो मधु सोमरसं यज्ञं यागसाधनं दशोणिं। ओणयोऽंगुलयः। दशभिरंगुलिभिः संपादितं सोमं हर्यन् कामयमानः सन् पिब पिबसि सधमादे संग्रामे जयार्थं तथावहंत्वित्यर्थः॥

अपाः पूर्वेषामित्येषा षोडशिशस्त्रस्य याज्या। सूचितं च। एवा हि शक्रो वशी हि शक्र इति जपित्वापाः पूर्वेषां हरिवः सुतानामिति यजति। आ० ६.२.। इति ॥

॥ सैषा त्रयोदशी ॥

अपाः पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते।
ममद्धि सोमं मधुमंतमिंद्र सत्रा वृषञ्जठर आ वृषस्व ॥१३॥
अपाः। पूर्वेषां। हरिऽवः। सुतानां। अथो इति। इदं। सवनं। केवलं। ते।
ममद्धि। सोमं। मधुऽमंतं। इंद्र। सत्रा। वृषन्। जठरे। आ। वृषस्व ॥१३॥

हे इंद्र सुतानामभिषुतानां पूर्वेषां प्रातःसवनसंपादितानां। कर्मणि षष्ठ्यावेते।

अभिषुतान्प्रातःसवनिकान्सोमानित्यर्थः । तानपाः । अपिबः । हे हरिव इतींद्रसंबोधनं। हरिभ्यामश्वाभ्यां तद्वन्। यद्वा। ऋक्सामात्मकाभ्यां हरिभ्यां युक्त। ऋक्सामे वा इंद्रस्य हरी ताभ्यामेष हरतीति ब्राह्मणं। अथो अपि चेदं माध्यंदिनं सवनं केवलं ते तवैवासाधारणं। माध्यंदिनं सवनं केवलं ते ।४.३५.७.। इति हि मंत्रांतरं। तस्मिन्सवने हे इंद्र मधुमंतं माधुर्योपेतं सोमं ममड्डि। पिब। आस्वादयेत्यर्थः। मदिरत्रास्वादनकर्मा। पिबंतु मदंतु वियंत्विति च मंत्रः। सत्रा वृषन्। सत्राशब्दो भूयिष्ठवचनः। हे भूयिष्ठ वर्षितरिंद्र जठर आ वृषस्व। आसिंचस्व ॥

॥ इत्यष्टमस्य पंचमे सप्तमो वर्गः ॥

या ओषधीरिति त्रयोविंशत्यृचं सप्तमं सूक्तं। अथर्वणः पुत्रस्य भिषग्नाम्न आर्षं। आनुष्टुभमोषधिदेवताकं। तथा चानुक्रांतं। या ओषधीस्त्र्यधिकाथर्वणो भिषगोषधिस्तुतिरानुष्टुभमिति॥ दीक्षितानां ज्वराद्युपसंतापे संजातेऽनेन सूक्तेन मार्जयेत्। सूचितं च। ओषधिसूक्तेन चाप्लाव्यानुमृजेत् । आ० ६.९.। इति ॥

॥ तत्र प्रथमा ॥

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥१॥
याः । ओषधीः । पूर्वाः । जाताः । देवेभ्यः । त्रिऽयुगं । पुरा ।
मनै । नु । बभ्रूणां । अहं । शतं । धामानि । सप्त । च ॥१॥

या ओषधयः पूर्वाः पुरातन्यो जाता उत्पन्नाः। केभ्यः सकाशात्। देवेभ्यो जगन्निर्मातृभ्यः। यद्वा। देवा द्योतमाना ऋतवः। तेभ्यः। कस्मिन्काले। त्रियुगं। त्रिषु युगेषु विशेषेण प्रादुर्भावापेक्षया कृतादियुगत्रयमुक्तं कलौ त्वत्यंताल्पत्वादुपेक्षितं। अथवा त्रिषु युगेषु वसंते प्रावृषि शरदि चेत्यर्थः। अहं बभ्रूणां बभ्रुवर्णानां सोमाद्योषधीनां शतं सप्त च धामान्यनुलेपमार्जनाभिषेकादिरूपेणाश्रयभूतानि स्थानानि नु क्षिप्रं मनै। मन्ये। संभावयामीत्यर्थः। अत्र वाजसनेयकं। या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरेत्यृतवो वै देवास्तेभ्य एतास्त्रिः पुरा जायंते वसंते प्रावृषि शरदि मनै नु बभ्रूणामहमिति सोमो वै बभ्रुः सोम्या ओषधय औषधः पुरुषः शतं धामानीति यदिदꣳ शतायुः शतार्घः शतवीर्य एतानि हास्य तानि शतं धामानि सप्त चेति य एवेमे सप्त शीर्षन्प्राणास्तानेतदाह।७.२.४.२६.।

इति ॥ अत्र निरुक्तं च । या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद्बभ्रूणामहं बभ्रुवर्णानां हरणानां भरणानामिति वा शतं धामानि सप्त चेति । धामानि त्रयाणि भवंति स्थानानि नामानि जन्मानीति । जन्मान्यत्राभिप्रेतानि सप्तशतानि सप्तशतं पुरुषस्य मर्मणां तेष्वेना दधाति । नि॰ ९.२८. । इति ॥

॥ अथ द्वितीया ॥

शतं वो अंब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रत्वो यूयमिमं मे अगदं कृत ॥२॥

शतं । वः । अंब । धामानि । सहस्रं । उत । वः । रुहः ।
अध । शतऽक्रत्वः । यूयं । इमं । मे । अगदं । कृत ॥२॥

हे अंब मातर ओषधयो वो युष्माकं धामानि स्थानानि जन्मानि वा शतमपरिमितानि । उतापि च वो युष्माकं रुहः प्ररोहः प्रोद्गमः सहस्रमपरिमितः । अधापि च हे शतक्रत्वः शतकर्माणो यूयमिमं मे मां मदीयं वा जनमामयग्रस्तमगदं । गदो रोगः । तद्रहितं कृत । कुरुत ॥

॥ अथ तृतीया ॥

ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥३॥

ओषधीः । प्रति । मोदध्वं । पुष्पऽवतीः । प्रऽसूवरीः ।
अश्वाःऽइव । सऽजित्वरीः । वीरुधः । पारयिष्णवः ॥३॥

हे ओषधीरोषधयः प्रति मोदध्वं । इमं रुग्णं प्रति मुदिता हृष्टा भवत । कीदृश्यो यूयं । पुष्पवतीः पुष्पवत्यः प्रसूवरीः । प्रकर्षेण सूयंत उपभोगायेति प्रसवाः फलानि । तद्वत्यः । किंच । अश्वा इवाशुवाना हया इव सजित्वरीः सह रोगं जयंत्यः । वीरुधो विरोहंत्यः । पारयिष्णवो रुग्णं पुरुषं पारयंत्यो रोगात् ॥

॥ अथ चतुर्थी ॥

ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे ।
सनेयमश्वं गां वास आत्मानं तव पूरुष ॥४॥

ओषधीः। इति। मातरः। तत्। वः। देवीः। उप। ब्रुवे।
सनेयं। अश्वं। गां। वासः। आत्मानं। तवं। पुरुष ॥४॥

हे ओषधीरोषधयो देवीर्देव्यो द्योतनादिगुणका हे मातरो जनानां मातृभूताः। मातृवद्धितकारित्वान्मातृत्वोपचारः। अथ वा मातर आरोग्यनिर्मात्र्यो वो युष्माकं संबंधिनं भिषजं तद्वक्ष्यमाणमितीत्थमुप ब्रुवे। उपब्रवीमि। किं तदिति चेदुच्यते। ओषध्यर्थमहमश्वं गां वासोऽंशुकं किं बहुनात्मानमपि हे पुरुष चिकित्सक तव तुभ्यं सनेयं। ददामि ॥

॥ अथ पंचमी ॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता।
गोभाज इत्किलासथ यत्सनवथ पूरुषं ॥५॥
अश्वत्थे। वः। निऽसदनं। पर्णे। वः। वसतिः। कृता।
गोऽभाजः। इत्। किल। असथ। यत्। सनवथ। पुरुषं ॥५॥

हे ओषधिदेवता वो युष्माकमश्वत्थे निषदनं नितरां वर्तनं। तथा वो युष्माकं पर्णे पलाशे वसतिर्निवासः कृता। तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत् तत्पर्णस्य पर्णत्वमिति। तै॰ ब्रा॰ १.१.३.१०। ब्राह्मणात्पलाशस्य पर्णत्वप्रसिद्धिः। अश्वत्थपलाशयोर्यज्ञयोग्यत्वप्राधान्यापेक्षयोपादानं। किंच गोभाज इत्किल गवां भोजयित्र्य एवासथ भवथ खलु यद्यदि सनवथ संभजध्वे पुरुषं तर्ह्येवं भवथेति। वन षण संभक्तौ। लेट्यडागमः। व्यत्ययेनोप्रत्ययः। यद्वौत्सर्गिकः शप् चेति विकरणता ॥

॥ इत्यष्टमस्य पंचमेऽष्टमो वर्गः ॥

॥ अथ षष्ठी ॥

यत्रौषधीः समग्मत राजानः समिताविव।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥६॥
यत्र। ओषधीः। संऽअग्मत। राजानः। समितौऽइव।
विप्रः। सः। उच्यते। भिषक्। रक्षःऽहा। अमीवऽचातनः ॥६॥

यत्र यस्मिन्देश ओषधीरोषधयः समग्मत संगच्छंते। राजानः समिताविव।

संग्रामे यथा संगता भवंति तद्वत्। तासां नानाविधानामोषधीनां संगमनं यस्मिन्देशेऽस्ति तत्र विप्रः प्राज्ञो ब्राह्मणो भिषगुच्यते रक्षोहा रक्षोहंता। अमीवचातनः। अमीवो व्याधिः। तस्य चातनश्चातयिता नाशयिता च भवति तदानीं॥

॥ अथ सप्तमी ॥

अश्वावतीं सोमावतीमूर्जयंतीमुदोजसं।

आविंत्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥७॥

अश्वऽवतीं। सोमऽवतीं। ऊर्जयंतीं। उत्ऽओजसं।

आ। अवित्सि। सर्वाः। ओषधीः। अस्मै। अरिष्टऽतातये ॥७॥

अश्वावत्यादयः प्रधानभूता ओषधयश्चतस्रः। ताः सर्वा ओषधीराविंत्सि। आजाने। स्तौमीत्यर्थः। अस्मा अरिष्टतातये। अमुं रोगं विनाशयितुमित्यर्थः॥

॥ अथाष्टमी ॥

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते।

धनं सनिष्यंतीनामात्मानं तव पूरुष ॥८॥

उत्। शुष्माः। ओषधीनां। गावः। गोस्थात्ऽइव। ईरते।

धनं। सनिष्यंतीनां। आत्मानं। तव। पुरुष ॥८॥

ओषधीनां शुष्मा बलान्युदीरते। उद्गच्छंति। रुग्णे स्ववीर्यं प्रोद्गमयंतीत्यर्थः। गावो गोष्ठादिव। ता यथा ततः सकाशादुदीरते तद्वत्। कीदृशीनामोषधीनां। उच्यते। धनं स्वसामर्थ्यलक्षणं सनिष्यंतीनां दातुमिच्छंतीनां। किं प्रतीत्युच्यते। पूरुष पुरुष रोगग्रस्त तवात्मानं शरीरं प्रति। यद्वा प्ररोहंतीरोषधीर्दृष्ट्वा वदति। हे पुरुष प्रियंग्वाद्योषधिस्वामिन् तवात्मानं वर्धयितुं धनं सनिष्यंतीनां व्रीह्याद्योषधीनां शुष्मा उदीरते॥

॥ अथ नवमी ॥

इष्कृतिर्नाम वो मातार्थो यूयं स्थ निष्कृतीः।

सीराः पतत्रिणीः स्थन यदामयति निष्कृथ ॥९॥

इष्कृतिः। नाम। वः। माता। अथो इति। यूयं। स्थ। निःऽकृतीः।

सीराः। पतत्रिणीः। स्थन। यत्। आमयति। निः। कृथ ॥९॥

हे ओषधयो वो माता जननीष्कृतिर्नाम। सर्वेषां रुग्णानां निष्कर्त्रीति प्रसिद्धा यस्मात्सा रुग्णं निष्करोति। अथातो यूयमपि निष्कृतीर्निष्कृतयः स्थ। भवथ। किंच। यूयं सीराः सरणशीलाः पतत्रिणीः पतनवत्यश्च स्थन। भवथ। तप्तनबिति तनादेशः। किंच। पुरुषो यद्यदामयति व्याधितो भवति तं निष्कृथ। संस्कुरुथ॥

॥ अथ दशमी ॥

अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः।
ओषधीः प्राचुच्यवुर्यत्किं च तन्वो३रपः॥१०॥
अति। विश्वाः। परिऽस्थाः। स्तेनःऽइव। व्रजं। अक्रमुः।
ओषधीः। प्र। अचुच्यवुः। यत्। किं। च। तन्वः। रपः॥१०॥

विश्वा व्याप्ताः परिष्ठाः परितः स्थिता ओषधयोऽत्यक्रमुः। व्याधीनतिक्रांतवत्यः। स्तेन इव व्रजं। यथा स्तेनो व्रजमत्यक्रमीत् तद्वत्। तथा कृत्वौषधीरोषधयः प्राचुच्यवुः प्रच्यावयंति यत्किंच तन्वो रुग्णशरीरस्य रपः पापं व्याधिलक्षणमस्ति तदिति॥

॥ इत्यष्टमस्य पंचमे नवमो वर्गः॥

॥ अथैकादशी ॥

यदिमा वाजयन्नहमोषधीर्हस्त आदधे।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा॥११॥
यत्। इमाः। वाजयन्। अहं। ओषधीः। हस्ते। आऽदधे।
आत्मा। यक्ष्मस्य। नश्यति। पुरा। जीवऽगृभः। यथा॥११॥

अहं यद्यदीमा ओषधीर्हस्त आदध आधारयामि। किं कुर्वन्। वाजयन् रुग्णं बलिनं कुर्वन् ततः पुरा यक्ष्मस्य रोगस्यात्मा नश्यति नष्टो भवति जीवगृभो यथा। जीवानां शकुनादीनां ग्राहकाद्व्याधाद्यथा जीवा नश्यंति तद्वत्। यद्वा जीवगृभो मृत्योः सकाशाज्जीवोऽपह्रियते। तद्वत्॥

॥ अथ द्वादशी ॥

यस्यौषधीः प्रसर्पथांगमंगं परुष्परुः।
ततो यक्ष्मं वि बाधध्व उग्रो मध्यमशीरिव॥१२॥

यस्य॑ । ओष॑धीः । प्र॒ऽसर्प॑थ । अङ्ग॑ऽअङ्गं । परुः॑ऽपरुः ।
ततः॑ । यक्ष्मं॑ । वि । बा॒ध॒ध्वे॒ । उ॒ग्रः । म॒ध्य॒म॒शीःऽइ॑व ॥ १२ ॥

हे ओषधीरोषधयो यस्य रुग्णस्यांगमंगं यद्यदंगं परुःपरुर्यद्यत्पर्व प्रसर्पथ प्रकर्षेणाश्रयथ ततोऽंगात्पर्वणश्च यक्ष्मं व्याधिं वि बाधध्वे । उग्र उद्गूर्णबलो मध्यमशीर्मध्यमस्थाने वर्तमानो राजा यथोपद्रवकारिणः समनंतरं शत्रून्पदेपदे विबाधते । तद्वत् ॥

॥ अथ त्रयोदशी ॥

सा॒कं य॑क्ष्म॒ प्र प॑त॒ चाषे॑ण किकिदी॒विना॑ ।
सा॒कं वात॑स्य॒ ध्राज्या॑ सा॒कं न॑श्य नि॒हाक॑या ॥ १३ ॥

सा॒कं । य॒क्ष्म॒ । प्र । प॒त॒ । चाषे॑ण । कि॒कि॒दी॒विना॑ ।
सा॒कं । वात॑स्य । ध्राज्या॑ । सा॒कं । न॒श्य॒ । नि॒ऽहाक॑या ॥ १३ ॥

हे अस्मदीयस्य पुरुषस्य शरीराधिष्ठायिन्यक्ष्म व्याधे त्वं साकं सहैव प्र पत । प्रकर्षेण शीघ्रं गच्छ । केन साकमित्युच्यते । चाषेण । अतिशीघ्रं पतता चाषाख्येन पक्षिणा सह । तथा किकिदीविना पक्षिणा च सह । तथा वातस्य शीघ्रं गच्छतो वायोर्ध्राज्या । ध्रज गतौ । गतिवेगेन सह गच्छ । तथा निहाकया गोधिकया साकं नश्य । नाशं प्राप्नुहि ॥

॥ अथ चतुर्दशी ॥

अ॒न्या वो॑ अ॒न्याम॑वत्व॒न्यान्यस्या॒ उपा॑वत ।
ताः सर्वाः॑ संवि॒दा॒ना इ॒दं मे॒ प्राव॑ता॒ वचः॑ ॥ १४ ॥

अ॒न्या । वः॒ । अ॒न्यां । अ॒व॒तु॒ । अ॒न्या । अ॒न्यस्याः॑ । उप॑ । अ॒व॒त॒ ।
ताः॒ । सर्वाः॑ । सं॒ऽवि॒दा॒नाः । इ॒दं । मे॒ । प्र । अ॒व॒त॒ । वचः॑ ॥ १४ ॥

हे ओषधयो वो युष्माकं मध्येऽन्यौषधिरन्यामोषधिमवतु । प्राप्नोतु । अवतिरत्र गत्यर्थः । तथान्यान्यस्याः समीपमुपावत । उपगच्छत । एवं याः संति क्षित्यामोषधयस्ताः सर्वाः संविदानाः परस्परमैकमत्यं प्राप्ताः सत्य इदं मे मदीयं वचः प्रार्थनालक्षणं वचनं प्रावत । प्ररक्षत ॥

॥ अथ पंचदशी ॥

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुंचंत्वंहसः ॥१५॥

याः । फलिनीः । याः । अफलाः । अपुष्पाः । याः । च । पुष्पिणीः ।
बृहस्पतिऽप्रसूताः । ताः । नः । मुंचंतु । अंहसः ॥१५॥

याः फलिनीः फलवत्यो या अफलाः फलवर्जिता या अपुष्पाः पुष्परहिता याश्च पुष्पिणीः पुष्पवत्यो बृहस्पतिप्रसूताः । बृहस्पतिर्मंत्राभिमानी देवः । तेनानुज्ञाताः । ता नोऽस्मानंहसो मुंचंतु । मोचयंतु ॥

॥ इत्यष्टमस्य पंचमे दशमो वर्गः ॥

॥ अथ षोडशी ॥

मुंचंतु मा शपथ्या३दथो वरुण्यादुत ।
अथो यमस्य पड्बीशात्सर्वस्माद्देवकिल्बिषात् ॥१६॥

मुंचंतु । मा । शपथ्यात् । अथो इति । वरुण्यात् । उत ।
अथो इति । यमस्य । पड्बीशात् । सर्वस्मात् । देवऽकिल्बिषात् ॥१६॥

मा मामोषधयः शपथ्याच्छपथसंजातादेनसः सकाशान्मुंचंतु । अथो अपि च वरुण्याद्वरुणसंभवान्मां मुंचंतु । वरुणोऽपि स्वपाशेन जातमात्रं पुरुषं बध्नाति । उतेति पूरणः । अथो अपि च यमस्य पड्बीशात्पादबंधनान्निगडान्मुंचंतु । न केवलं वरुणादेः पापात् किंतु सर्वस्माद्देवकिल्बिषाद्देवैः कृतात्पापान्मुंचंतु ॥

॥ अथ सप्तदशी ॥

अवपतंतीरवदन्दिव ओषधयस्परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥१७॥

अवऽपतंतीः । अवदन् । दिवः । ओषधयः । परि ।
यं । जीवं । अश्नवामहै । न । सः । रिष्याति । पुरुषः ॥१७॥

दिवो द्युलोकादवपतंतीरवपतंत्य ओषधय इत्थं पर्यवदन् । किमित्युच्यते । यं जीवं जीवंतमश्नवामहै व्याप्नुमो न स पूरुषः पुरुषो रिष्याति । रिष्यति । विनश्यति ॥

॥ अथाष्टादशी ॥

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासां त्वमस्युत्तमारं कामाय शं हृदे ॥१८॥
याः । ओषधीः । सोमऽराज्ञीः । बह्वीः । शतऽविचक्षणाः ।
तासां । त्वं । असि । उत्ऽतमा । अरं । कामाय । शं । हृदे ॥१८॥

या ओषधीरोषधयः सोमराज्ञीः । सोमो राजा स्वामी यासां तास्तथोक्ता बह्वीरसंख्याताः शतविचक्षणा बहुदर्शना हे सोमाख्य ओषधे तासामोषधीनां त्वमुत्तमासि । यस्मादेवं तस्मादरमलमत्यर्थं कामाय कांताय हृदे हृदयाय शं सुखकरी भवेति शेषः ॥

॥ अथैकोनविंशी ॥

या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
बृहस्पतिप्रसूता अस्यै सं दत्त वीर्यं ॥१९॥
याः । ओषधीः । सोमऽराज्ञीः । विऽस्थिताः । पृथिवीं । अनु ।
बृहस्पतिऽप्रसूताः । अस्यै । सं । दत्त । वीर्यं ॥१९॥

या ओषधीरोषधयः सोमराज्ञीः पृथिवीमनु विष्ठिता विविधं स्थिता दिवः सकाशादागत्य पृथिव्यां नानाभेदेन स्थिता बृहस्पतिप्रसूता बृहस्पतिनानुज्ञाताः सत्यो यूयमस्यै रुग्णतन्वे वीर्यं सं दत्त । संधत्त ॥

॥ अथ विंशी ॥

मा वो रिषत्खनिता यस्मै चाहं खनामि वः ।
द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरं ॥२०॥
मा । वः । रिषत् । खनिता । यस्मै । च । अहं । खनामि । वः ।
द्विऽपत् । चतुःऽपत् । अस्माकं । सर्वं । अस्तु । अनातुरं ॥२०॥

हे ओषधयो वो युष्मान्मा रिषत् । मा हिंस्यात् । कः । खनिता । भूमेः खननकर्ता । यस्मै रुग्णाय चाहं खनामि वो युष्मान् । किं चास्माकं संबंधि द्विपत् पुत्रभृत्यादिकं चतुष्पद्गोमहिष्यादिकं च यदस्ति तत्सर्वमनातुरमरोगमस्तु ॥

॥ अथैकविंशी ॥

याश्चेदमुपशृण्वंति याश्च दूरं परागताः ।
सर्वाः संगत्य वीरुधोऽस्यै सं दत्त वीर्यं ॥२१॥

याः । च । इदं । उपऽशृण्वंति । याः । च । दूरं । पराऽगताः ।
सर्वाः । संऽगत्य । वीरुधः । अस्यै । सं । दत्त । वीर्यं ॥२१॥

याश्चौषधय इदं स्तोत्रमुपशृण्वंति याश्चौषधयो दूरं परागताः सर्वा वीरुधः संगत्य संगताः सत्यो हे वीरुधोऽस्यै रुग्णतन्वे वीर्यं सं दत्त ॥

॥ अथ द्वाविंशी ॥

ओषधयः सं वदंते सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि ॥२२॥

ओषधयः । सं । वदंते । सोमेन । सह । राज्ञा ।
यस्मै । कृणोति । ब्राह्मणः । तं । राजन् । पारयामसि ॥२२॥

ओषधयः सर्वाः सोमेन राज्ञा सह सं वदंते । संवादं कुर्वंति । किमित्युच्यते । यस्मै रुग्णाय ब्राह्मण ओषधिसामर्थ्यज्ञो ब्राह्मणो वैद्यः कृणोति करोति चिकित्सां तं रुग्णं हे राजन् पारयामसि । पारयामः । इदंतो मसिः ॥

॥ अथ त्रयोविंशी ॥

त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः ।
उपस्तिरस्तु सो३स्माकं यो अस्माँ अभिदासति ॥२३॥

त्वं । उत्ऽतमा । असि । ओषधे । तव । वृक्षाः । उपस्तयः ।
उपस्तिः । अस्तु । सः । अस्माकं । यः । अस्मान् । अभिऽदासति ॥२३॥

हे ओषधे सोमाख्ये त्वमोषधीनामन्यासामुत्तमासि । तव वृक्षाः सर्व उपस्तयः । अधःशायिन एव । तथा सति स उपस्तिरस्त्वधःशायी भवतु योऽस्मानभिदासति हिनस्ति । भ्रातृव्य इति ॥

॥ इत्यष्टमस्य पंचम एकादशो वर्गः ॥

बृहस्पते प्रतीति द्वादशर्चमष्टमं सूक्तं त्रैष्टुभं बृहस्पतिमित्रादिसर्वदेवताकं। आर्ष्टिषेणपुत्रो देवापिर्नामर्षिः। तथा चानुक्रांतं। बृहस्पते द्वादशार्ष्टिषेणो देवापिर्वृष्टिकामो देवांस्तुष्टाव। गतः सूक्तविनियोगः॥ अस्य सूक्तस्याख्यानं निरुक्तकारः प्रदर्शयति। देवापिश्चार्ष्टिषेणः शंतनुश्च कौरव्यौ भ्रातरौ बभूवतुः। स शंतनुः कनीयानभिषेचयांचक्रे देवापिस्तपः प्रतिपेदे। ततः शंतनौ राज्ये द्वादश वर्षाणि देवो न ववर्ष। तमूचुर्ब्राह्मणा अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमंतरित्याभिषेचितं तस्मात्ते देवो न वर्षतीति। स शंतनुर्देवापिं शिशिक्ष राज्येन। तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति। तस्यैतद्वर्षकामसूक्तं। नि॰ २.१०.। इति॥

॥ तत्र प्रथमा ॥

बृह॑स्पते॒ प्रति॑ मे दे॒वता॑मिहि मि॒त्रो वा॒ यद्वरु॑णो॒ वासि॑ पू॒षा।
आ॒दि॒त्यैर्वा॒ यद्वसु॑भिर्म॒रुत्वा॒न्त्स प॒र्जन्यं॒ शंत॑नवे वृषाय॥१॥

बृह॑स्पते। प्रति॑। मे॒। दे॒वता॑म्। इ॒हि॒। मि॒त्रः। वा॒। यत्। वरु॑णः। वा॒। असि॑। पू॒षा।
आ॒दि॒त्यैः। वा॒। यत्। वसु॑ऽभिः। म॒रुत्वा॑न्। सः। प॒र्जन्य॑म्। शम्ऽत॑नवे। वृ॒ष॒य॒॥१॥

तत्र ब्रह्मत्वे प्रवृत्तो बृहस्पतिमनुधावति। हे बृहस्पते मे मम वृष्ट्यर्थं प्रति देवतां प्रतीहि। प्रतिगच्छ। यष्टव्या देवताः प्रतिगच्छ। यदि त्वं मित्रो वास्यथवा वरुणोऽसि यद्वा पूषास्यथवादित्यैर्द्वादशादित्यैररुणादिभिर्वसुभिर्वासकैरष्टवसुभिर्धरध्रुवादिभिः सह मरुत्वान्। मरुतो देवाः। तद्वानसि। स त्वं पर्जन्यं तर्पयितारं मेघं शंतनवे राज्ञे वृषाय। वर्षय। छंदसि शायजपीति व्यत्ययेन शपोऽपि शायजादेशः॥

॥ अथ द्वितीया ॥

आ दे॒वो दू॒तो अ॑जि॒रश्चि॑कि॒त्वान्त्वद्दे॑वापे अ॒भि माम॑गच्छत्।
प्र॒ती॒ची॒नः प्रति॒ मामा व॑वृत्स्व॒ दधा॑मि ते द्यु॒मतीं॒ वाच॑मा॒सन्॥२॥

आ। दे॒वः। दू॒तः। अ॒जि॒रः। चि॒कि॒त्वान्। त्वत्। दे॒व॒ऽआ॒पे॒। अ॒भि। माम्। अ॒ग॒च्छ॒त्।
प्र॒ती॒ची॒नः। प्रति॑। माम्। आ। व॒वृ॒त्स्व॒। दधा॑मि। ते॒। द्यु॒ऽमती॑म्। वाच॑म्। आ॒सन्॥२॥

देवः कश्चिद्दूतोऽजिरो गमनशीलश्चिकित्वांश्चेतनावान् हे देवापे त्वत् त्वत्तः सकाशात्त्वया प्रेषितः सन् मामभ्यागच्छत्। अभ्यागच्छतु। हे बृहस्पते प्रतीची-

नोऽस्मदभिमुखो मां प्रत्या ववृत्स्व। मां प्रत्यागच्छ। ते तुभ्यं त्वदर्थं द्युमतीं दीप्तियुक्तां वाचं स्तुतिरूपां दधाम्यासन्नास्येऽस्मदीये ॥

॥ अथ तृतीया ॥

अस्मे धेहि द्युमतीं वाचमासन्बृहस्पते अनमीवामिषिरां।

यया वृष्टिं शंतनवे वनाव दिवो द्रप्सो मधुमाँ आ विवेश ॥३॥

अस्मे इति। धेहि। द्युऽमतीं। वाचं। आसन्। बृहस्पते। अनमीवां। इषिरां।

यया। वृष्टिं। शंऽतनवे। वनाव। दिवः। द्रप्सः। मधुऽमान्। आ। विवेश ॥३॥

हे बृहस्पते त्वमस्मे अस्मासु द्युमतीं दीप्तिमतीं वाचं स्तोत्रात्मिकामासन्नास्येऽस्मदीये धेहि। स्थापय। कीदृशीं वाचं। अनमीवां। अमीवारहितां। वाचोऽमीवा नाम गद्गदादिदोषः। तथेषिरां गमनशीलां। यया वाचा स्तुत्यात्मिकया देवानिष्ट्वा शंतनवे वृष्टिकामाय वनाव संभजेवहि वृष्टिं त्वं चाहं च दिवो द्युलोकात्। त्वयाधिष्ठितो द्रप्स उदकस्यंदो मधुमान् माधुर्योपेत आ विवेश। आविशति वाचमिति समन्वयः ॥

॥ अथ चतुर्थी ॥

आ नो द्रप्सा मधुमंतो विशंत्विंद्र देह्यधिरथं सहस्रं।

नि षीद होत्रमृतुथा यजस्व देवान्देवापे हविषा सपर्य ॥४॥

आ। नः। द्रप्साः। मधुऽमंतः। विशंतु। इंद्र। देहि। अधिऽरथं। सहस्रं।

नि। सीद। होत्रं। ऋतुऽथा। यजस्व। देवान्। देवऽआपे। हविषा। सपर्य ॥४॥

नोऽस्मान्द्रप्सा वृष्टिसंस्त्याया मधुमंतो माधुर्योपेता आ विशंतु। हे इंद्र परमेश्वर बृहस्पतेऽधिरथं रथस्याध्युपरि वर्तमानं सहस्रं सहस्रसंख्याकं धनं देहि। धेहि। यद्वा रथमधिकं यस्य सहस्रस्य तादृशं गोसहस्रं। हे देवापे नि षीद होत्रं। आर्त्विज्ये निषीद। निषण्णश्च त्वमृतुथा कालेकाले यजस्व यष्टव्यान्देवान् स्तुत्या हविषा च सपर्य। परिचर ॥

॥ अथ पंचमी ॥

आर्ष्टिषेणो होत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान्।

स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥५॥

आर्ष्टिषेणः । होत्रं । ऋषिः । निऽसीदन् । देवऽआपिः । देवऽसुमतिं । चिकित्वान् ।
सः । उत्ऽतरस्मात् । अधरं । समुद्रं । अपः । दिव्याः । असृजत् । वर्ष्याः । अभि ॥५॥

आर्ष्टिषेण ऋष्टिषेणस्य पुत्रो देवापिर्ऋषिर्देवसुमतिं देवानां कल्याणीं मतिं स्तुतिं चिकित्वाञ्जानन् होत्रं होतृकर्म कर्तुं निषीदन् निषण्णो भवति । स उत्तरस्मादुपरि वर्तमानादंतरिक्षाख्यात्समुद्रादधरमधो वर्तमानं पार्थिवं समुद्रमभि दिव्या दिविभवा वर्ष्या वर्षभवा अपोऽसृजत् । सृजतु । अत्रार्ष्टिषेण ऋष्टिषेणस्य पुत्र इत्यादि निरुक्तं द्रष्टव्यं ॥

॥ अथ षष्ठी ॥

अस्मिन्त्समुद्रे अध्युत्तरस्मिन्नापो देवेभिर्निवृता अतिष्ठन् ।
ता अद्रवन्नार्ष्टिषेणेन सृष्टा देवापिना प्रेषिता मृक्षिणीषु ॥६॥

अस्मिन् । समुद्रे । अधि । उत्ऽतरस्मिन् । आपः । देवेभिः । निऽवृताः । अतिष्ठन् ।
ताः । अद्रवन् । आर्ष्टिषेणेन । सृष्टाः । देवऽआपिना । प्रऽईषिताः । मृक्षिणीषु ॥६॥

अस्मिन्पार्थिवे समुद्रे पूरणीये सति । अधीति सप्तम्यर्थानुवादी । उत्तरस्मिन्समुद्रेऽतरिक्षाख्य आप उदकानि देवेभिर्द्योतमानैर्निवृता निरुद्धा अतिष्ठन् । ता आप आर्ष्टिषेणेनर्ष्टिषेणस्य पुत्रेण देवापिना सृष्टाः प्रेषिताः प्रकर्षेणेच्छां प्राप्ताः कांक्षिता मृक्षिणीषु मृष्टवतीषु परिमृष्टासु स्थलीष्वद्रवन् । स्रवंति ॥

॥ इत्यष्टमस्य पंचमे द्वादशो वर्गः ॥

॥ अथ सप्तमी ॥

यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् ।
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ॥७॥

यत् । देवऽआपिः । शंऽतनवे । पुरःऽहितः । होत्राय । वृतः । कृपयन् । अदीधेत् ।
देवऽश्रुतं । वृष्टिऽवनिं । रराणः । बृहस्पतिः । वाचं । अस्मै । अयच्छत् ॥७॥

यद्यदा देवापिरार्ष्टिषेणः शंतनवे स्वभ्रात्रे कौरव्याय पुरोहितः सन् होत्राय होत्रार्थं वृतः सन् देवश्रुतं । देवा एनं शृण्वंतीति देवश्रुत् । तं तथा वृष्टिवनिं वृष्टियाचिनं बृहस्पतिमदीधेत् अन्वध्यायत् स च रराणो रममाणो बृहस्पतिर्देवोऽस्मै देवापये वाचमयच्छत् ॥

॥ अथाष्टमी ॥

यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो मनुष्यः समीधे ।
विश्वेभिर्देवैरनुमद्यमानः प्र पर्जन्यमीरया वृष्टिमंतं ॥८॥

यं । त्वा । देवऽआपिः । शुशुचानः । अग्ने । आर्ष्टिषेणः । मनुष्यः । संऽईधे ।
विश्वेभिः । देवैः । अनुऽमद्यमानः । प्र । पर्जन्यं । ईरय । वृष्टिऽमंतं ॥८॥

हे अग्ने यं त्वा त्वां शुशुचानः स्तोत्रेण ज्वलन् मनुष्य आर्ष्टिषेणो देवापिः समीधे सम्यग्दीपयति स त्वं विश्वेभिः सर्वैर्देवैरनुमद्यमानोऽनुमाद्यमानः सन् पर्जन्यं मेघं वृष्टिमंतं वर्षणवंतं प्रेरय । गमय ॥

॥ अथ नवमी ॥

त्वां पूर्व ऋषयो गीर्भिरायन्त्वामध्वरेषु पुरुहूत विश्वे ।
सहस्राण्यधिरथान्यस्मे आ नो यज्ञं रोहिदश्वोप याहि ॥९॥

त्वां । पूर्वे । ऋषयः । गीःऽभिः । आयन् । त्वां । अध्वरेषु । पुरुऽहूत । विश्वे ।
सहस्राणि । अधिऽरथानि । अस्मे इति । आ । नः । यज्ञं । रोहित्ऽअश्व । उप । याहि ॥९॥

हे अग्ने त्वां पूर्व ऋषयो गीर्भिः स्तुतिभिरायन् । आगच्छन् । तथा हे पुरुहूत बहुभिराहूताग्ने विश्वे सर्वेऽपीदानींतना यजमाना अध्वरेषु यज्ञेषु स्तुतिभिर्गच्छंतीति शेषः । किंच सहस्राणि सहस्रसंख्यानि गोयूथान्यधिरथानि रथाधिकान्यस्मे अस्माकं शंतनुना दक्षिणात्वेन संकल्पितानि भवंत्विति शेषः । हे रोहिदश्व नो यज्ञमुप याहि । उपागच्छ ॥

॥ अथ दशमी ॥

एतान्यग्ने नवतिर्नव त्वे आहुतान्यधिरथा सहस्रा ।
तेभिर्वर्धस्व तन्वः शूर पूर्वीर्दिवो नो वृष्टिमिषितो रिरीहि ॥१०॥

एतानि । अग्ने । नवतिः । नव । त्वे इति । आऽहुतानि । अधिऽरथा । सहस्रा ।
तेभिः । वर्धस्व । तन्वः । शूर । पूर्वीः । दिवः । नः । वृष्टिं । इषितः । रिरीहि ॥१०॥

हे अग्ने गवां नवतिर्नव च तथैतान्यधिरथानि सहस्रा सहस्राणि च रथाधिकानि गवां सहस्राणि च त्वे त्वय्याहुतानि त्वयि प्रीणयितव्ये सत्याहुतानि । यद्वा

त्वे त्वय्याहुतानि समर्पितानीत्यर्थः। तेभिस्तैः प्रत्तैः पूर्वीर्बह्वीस्तन्वस्तनूर्युष्मदीया वर्धस्व। वर्धय। नोऽस्मदर्थं दिवो द्युलोकाद्वृष्टिमिषितः प्रार्थितः सन् रिरीहि। पूरय॥

॥ अथैकादशी ॥

एतान्यग्ने नवतिं सहस्रा सं प्र यच्छ वृष्ण इंद्राय भागं।

विद्वान्पथ ऋतुशो देवयानानप्यौलानं दिवि देवेषु धेहि ॥११॥

एतानि। अग्ने। नवतिं। सहस्रा। सं। प्र। यच्छ। वृष्णे। इंद्राय। भागं।

विद्वान्। पथः। ऋतुऽशः। देवऽयानान्। अपि। औलानं। दिवि। देवेषु। धेहि॥११॥

हे अग्ने गवामेतानि नवतिं सहस्रा सहस्राणि च वृष्णे वर्षित्र इंद्राय भागं सं प्र यच्छ। तत्प्रीत्यर्थमृत्विग्भ्यो देहि। किंच देवयानान्पथो देवयानान्मार्गान्विद्वांस्त्वमृतुशः कालेकाल औलानमपि कुरुकुलजातमपि शांतनवं देवेषु मध्ये धेहि। निधेहि। स्थापय॥

॥ अथ द्वादशी ॥

अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षांसि सेध।

अस्मात्समुद्राद्बृहतो दिवो नोऽपां भूमानमुप नः सृजेह ॥१२॥

अग्ने। बाधस्व। वि। मृधः। वि। दुःऽगहा। अप। अमीवां। अप। रक्षांसि। सेध।

अस्मात्। समुद्रात्। बृहतः। दिवः। नः। अपां। भूमानं। उप। नः। सृज। इह॥१२॥

हे अग्ने दुर्गहा दुर्गहाणि दुःखेनागहितव्यानि शत्रुपुराणि वि बाधस्व। तथामीवां रोगमप सेध। तथा रक्षांस्यप सेध। अपवारय। अस्मात्समुद्रात् समुद्रवणसाधनाद्बृहतो महतो दिवो द्युलोकादंतरिक्षाद्वापामुदकानां भूमानं बहुभावं वृष्टिसंस्त्यायमिहास्मिँल्लोक उप सृज। प्रयच्छेत्यर्थः॥

॥ इत्यष्टमस्य पंचमे त्रयोदशो वर्गः॥

कं न इति द्वादशर्चं नवमं सूक्तं। वैखानसस्य वम्रस्यार्षं त्रैष्टुभमैंद्रं। तथा चानुक्रांतं। कं नो वम्रो वैखानस इति। गतो विनियोगः॥

॥ तत्र प्रथमा॥

कं नश्चित्रमिषण्यसि चिकित्वान्पृथुग्मानं वाश्रं वावृधध्यै।

कत्तस्य दातु शवसो व्युष्टौ तक्षद्वज्रं वृत्रतुरमपिन्वत् ॥१॥

कं। नः। चित्रं। इषण्यसि। चिकित्वान्। पृथुऽग्मानं। वाश्रं। वावृधध्यै।
कत्। तस्य। दातु। शवसः। विऽउंष्टौ। तक्षत्। वज्रं। वृत्रऽतुरं। अपिन्वत् ॥१॥

हे इंद्र नोऽस्माकं चित्रं चायनीयं कं धनविशेषमिषण्यसि। प्रेरयसि। चिकित्वान् सर्वथा प्रेरणीयमिति जानन्। कीदृशं तं। पृथुग्मानं पृथुभावं प्राप्नुवंतं वाश्रं शब्दनीयं स्तुत्यं। किमर्थं च। वावृधध्यै। अस्माकं वर्धनाय। किंच तस्येंद्रस्य शवसो बलस्य व्युष्टौ व्युच्छने सति कद्दातु किं दानमस्माकं भवतीति शेषः। यं वज्रं वृत्रतुरं वृत्रस्यावरकस्य पापस्य हिंसकं त्वष्टा तक्षदतक्षत् साधु संपादितवान्। अपिन्वदसिंचच्च। तस्य शवसो व्युष्टाविति संबंधः। यद्वा हे इंद्र कत्किं तस्य वज्रस्य दानं भवति यं वज्रमिंद्रार्थं तक्षदिति योजना। मह्यं त्वष्टा वज्रमतक्षदायसं। १०. ४८. ३.। इति मंत्रांतरं ॥

॥ अथ द्वितीया ॥

स हि द्युता विद्युता वेति साम पृथुं योनिमसुरत्वा ससाद।
स सनीळेभिः प्रसहानो अस्य भ्रातुर्न ऋते सप्तथस्य मायाः ॥२॥
सः। हि। द्युता। विऽद्युता। वेति। साम। पृथुं। योनिं। असुरऽत्वा। आ। ससाद।
सः। सऽनीळेभिः। प्रऽसहानः। अस्य। भ्रातुः। न। ऋते। सप्तथस्य। मायाः ॥२॥

स हि स खल्विंद्रो द्युता द्योतमानेन विद्युतैतन्नामकेनायुधेन युक्तः सन् साम स्तोत्रात्मकं यज्ञसंबंधि वेति। गच्छति। तथासुरत्वासुरत्वेन बलेन युक्तः सन् पृथुं विस्तीर्णं योनिं फलस्योत्पादकं यज्ञं ससाद। संगतो भवति। स इंद्रः सनीळेभिः। नीडं विमानं। सविमानैर्मरुद्भिर्युक्तः प्रसहानोऽभिभवन्भवति। तस्य सप्तथस्यादित्यानां धात्रादीनां मध्ये सप्तमस्येंद्रस्य भ्रातुर्भागैर्भक्तव्यस्य मायासुर्यृते यज्ञे न संभवतीति शेषः ॥

॥ अथ तृतीया ॥

स वाजं यातापदुष्पदा यन्स्वर्षाता परि षदत्सनिष्यन्।
अनर्वा यच्छतदुरस्य वेदो घ्नञ्छिश्नदेवाँ अभि वर्पसा भूत् ॥३॥
सः। वाजं। याता। अपदुःऽपदा। यन्। स्वःऽसाता। परि। सदत्। सनिष्यन्।
अनर्वा। यत्। शतऽदुरस्य। वेदः। घ्नन्। शिश्नऽदेवान्। अभि। वर्पसा। भूत् ॥३॥

वाजं भूरैर्गंतव्यं संग्रामं याता स इंद्रः । न लोकाव्ययेति षष्ठीप्रतिषेधः । अपदुष्पदापगतदुष्टपतनेन यन् गच्छन् सनिष्यन् तत्र शत्रुधनानि संभक्तुमिच्छन् परि षदत् । परिषीदति । कुत्रेत्युच्यते । स्वर्षाता । स्वर्षातौ सर्वलाभोपेते संग्रामे । किंचानर्वा युद्धेऽप्रत्यृत इंद्रः शतदुरस्य शत्रुपुरस्यांतर्निहितं यद्वेदो धनमस्ति तद्धनं वर्पसावरकेण बलेनाभि भूत् । अभिभवति । किं कुर्वन् । शिश्नदेवानब्रह्मचर्यान्श-तद्वारेषु शत्रुपुरसंबंधिषु वर्तमानान् घ्नन् हिंसन् ॥

॥ अथ चतुर्थी ॥

स यह्व्यो३ऽवनीर्गोष्वर्वा जुहोति प्रधन्यासु सस्निः ।
अपादो यत्र युज्यासोऽरथा द्रोण्यश्वास ईरते घृतं वाः ॥४॥

सः । यह्व्यः । अवनीः । गोषु । अर्वा । आ । जुहोति । प्रऽधन्यासु । सस्निः ।
अपादः । यत्र । युज्यासः । अरथाः । द्रोणिऽअश्वासः । ईरते । घृतं । वारिति वाः ॥४॥

स इंद्रोऽर्वा मेघेष्वभिगंता सस्निः सरणकुशलः प्रधन्यासु प्रकृष्टधननिमित्तासु गोषु भूमिषु यह्व्यः । महन्नामैतत् । महतीरवनीः । अवंतीत्यवनय आपः । ता आ जुहोति । आक्षिपति । यत्र यासु भूमिष्वपादः पादरहिता अरथा रथवर्जिताः । पादरहिताः केचन रथेन गच्छंति । केनापि मून्या द्रोण्यश्वासो द्रुतव्यापना युज्यासो युज्या इंद्रस्य सख्यो नद्यो वार्वारकं घृतमुदकमीरते प्रेरयंति तत्राजुहोति ॥

॥ अथ पंचमी ॥

स रुद्रेभिरशस्तवार ऋभ्वा हित्वी गयमारेअवद्य आगात् ।
वम्रस्य मन्ये मिथुना विवव्री अन्नमभीत्यारोदयन्मुषायन् ॥५॥

सः । रुद्रेभिः । अशस्तऽवारः । ऋभ्वा । हित्वी । गयं । आरेऽअवद्यः । आ । अगात् ।
वम्रस्य । मन्ये । मिथुना । विवव्री इति विऽवव्री । अन्नं । अभिऽइत्य । अरोदयत् ।
मुषायन् ॥५॥

स इंद्रो रुद्रेभी रुद्रपुत्रैर्मरुद्भिः सहित आगात् । आगच्छतु । कीदृशः । अशस्त-वारः । स्तोतृभिरप्रार्थितधनः । स्वयमेव प्रदातेत्यर्थः । तथर्भ्वा महान् गयं हित्वी हित्वा स्वस्थानं परित्यज्यागात् । आगच्छतु । तत्र संबंधः । आरेअवद्यो दूरेग-तगर्ह्यः । किंच । वम्रस्यैतन्नामकस्यर्षेर्मम मिथुना मिथुनौ मातापितरौ विवव्री

विगतज्वरौ मन्ये। अवगच्छामि। अयं वम्रोऽत्रं शत्रुसंबंध्यभीत्याभिप्राय मुषायन् मुष्णन् अरोदयत्। रोदयति। छंदसि शायजपीत्यहावपि मुषेः श्नः शायजादेशः ॥

॥ अथ षष्ठी ॥

स इद्दासं॑ तुवी॒रवं॒ पति॒र्दन्ष॑ळ॒क्षं त्रि॑शी॒र्षाणं॑ दमन्यत्।
अ॒स्य त्रि॒तो न्वोज॑सा वृधा॒नो वि॒पा व॑रा॒हमयो॑अग्रया हन् ॥६॥

सः। इत्। दासं॑। तु॒वि॒ऽर॒वं॑। पतिः॑। दन्। ष॒ट्ऽअ॒क्षं। त्रि॒ऽशी॒र्षाणं॑। द॒म॒न्य॒त्।
अ॒स्य। त्रि॒तः। नु। ओज॑सा। वृ॒धा॒नः। वि॒पा। व॒रा॒हं। अयः॑ऽअग्रया। ह॒न्निति॑ हन्॥६॥

स इत् स एवेंद्रः पतिः सर्वस्य स्वामी दासमुपक्षपयितारं तुवीरवं बहुशब्दं संग्रामे भयंकरं शब्दं कुर्वाणं वृत्रं दन् दमयन् षळक्षमक्षिषट्कोपेतं त्रिशीर्षाणं त्रिशिरस्कं त्वष्टुः पुत्रं विश्वरूपं दमन्यत्। दमितुं प्रहर्तुमैच्छत्। अवधीदित्यर्थः। यद्वा। दमयतीति दमनः। नंद्यादित्वाल्ल्युः। स इवाचरति। उपमानादाचार इति क्यच्यंत्यलोपश्छांदसः। ततो लङि बहुलं छंदसीत्यडभावः। किंच। त्रित एतन्नामा महर्षिरस्येंद्रस्यौजसा बलेन वृधानो वर्धमानो विपांगुल्या। कीदृश्या। अयोअग्रया। अयोवत्कठिननखया वराहं वराहाकारमुदकवंतं मेघं व्यहन्। विहतवान् ॥

॥ इत्यष्टमस्य पंचमे चतुर्दशो वर्गः ॥

॥ अथ सप्तमी ॥

स द्रु॒ह्वणे॒ मनु॑ष ऊर्ध्वसा॒न आ सा॑विषदर्शसा॒नाय॒ शरु॑म्।
स नृत॑मो॒ नहु॑षो॒ऽस्मत्सुजा॑तः पुरो॑ऽभिन॒दर्हं॒न्दस्यु॒हत्ये॑ ॥७॥

सः। द्रु॒ह्वणे॑। मनु॑षे। ऊ॒र्ध्व॒सा॒नः। आ। सा॒वि॒ष॒त्। अ॒र्श॒सा॒नाय॑। शरु॑म्।
सः। नृ॒ऽतमः॑। नहु॑षः। अ॒स्मत्। सु॒ऽजा॑तः। पुरः॑। अ॒भि॒न॒त्। अर्ह॑न्। द॒स्यु॒ऽहत्ये॑॥७॥

स इंद्रो द्रुह्वणे द्रुह्वणाय दृढं शत्रुभिर्द्रोतव्याय मनुषे मनुष्याय योद्धे स्वभक्तायोर्ध्वसानः। ऊर्ध्व उच्छ्रितः शौर्यादिभिर्गुणैरधिकः सन् स्यति शत्रूणामंतं करोतीत्यूर्ध्वसः। स इवाचरन्। ऊर्ध्वसशब्दादाचारार्थे क्विबंताच्छानच्। अर्शसानाय शत्रूणां हिंसित्रे शरुं हिंसकमायुधमा साविषत्। आभिमुख्येन प्रसौति। यच्छति। यद्वा द्रुह्वणे मनुषे द्रोग्धव्याय मनुष्यायार्शसानाय स्वभक्तहिंसित्रे। तस्य वधार्थमूर्ध्वसानः सन् शरुमा साविषत्। वज्रं प्रेरयति। स एवेंद्रो नहुषो मनुष्यान् नृतमो

मनुष्याणां नेतृतमः संग्रामे शूराणां गमयितृतमः। यद्वा नृतमो नहुषो बंधकश्चास्मदस्मदर्थं सुजातः सुष्ठु प्रादुर्भूतोऽर्हन् पूज्यः सन् दस्युहत्ये। दस्यव उपक्षपयितारः शत्रवः। तेषां हत्यं हननं यस्मिन् तादृशे संग्रामे पुरः शत्रूणां शरीराण्यभिनत्। भिन्नवान्॥

॥ अथाष्टमी ॥

सो अभ्रियो न यवंस उदन्यन्क्षयाय गातुं विदन्नो अस्मे।
उप यत्सीददिंदुं शरीरैः श्येनोऽयोऽपाष्टिर्हंति दस्यून्॥८॥

सः। अभ्रियः। न। यवसे। उदन्यन्। क्षयाय। गातुं। विदत्। नः। अस्मे इति।
उप। यत्। सीदत्। इंदुं। शरीरैः। श्येनः। अयःऽअपाष्टिः। हंति। दस्यून्॥८॥

स इंद्रोऽभ्रियो न। न भ्राजंतेऽपो बिभ्रतीति वाभ्राणि मेघाः। तेषां संघोऽभ्रियः। स इव यवसे गवादिभक्षणसाधनाय तृणायोदन्यन् उदकं दातुमिच्छन्। तथा क्षयाय गमनाय निवासाय वास्मे अस्माकं गातुं मार्गं विदत्। अलभत। न इति पूरणः। तादृशः सन् यद्यदेंदुं सोमं शरीरैः स्वशरीरावयवैरंगैरुप सीदत् उपगच्छति। यच्छब्दयोगादनिघातः। तदानीं श्येनः। सादृश्यप्रधानोऽयं निर्देशः। श्येनसदृशः श्येनवच्छंसनीयगमनः। अयोऽपाष्टिः। अपयष्टिर्व्याप्तिर्यस्य स प्रदेशोऽपाष्टिः पार्ष्णिः। अयोमयोऽपाष्टिः पार्ष्णिर्यस्य सः। दस्यूञ्शत्रून्हंति। हिनस्ति॥

॥ अथ नवमी ॥

स व्राधतः शवसानेभिरस्य कुत्साय शुष्णं कृपणे परादात्।
अयं कविमनयच्छस्यमानमत्कं यो अस्य सनितोत नृणां॥९॥

सः। व्राधतः। शवसानेभिः। अस्य। कुत्साय। शुष्णं। कृपणे। परा। अदात्।
अयं। कविं। अनयत्। शस्यमानं। अत्कं। यः। अस्य। सनिता। उत। नृणां॥९॥

स इंद्रो व्राधतः। महन्नामैतत्। महतोऽपि शत्रूञ्शवसानेभिर्बलमाचरद्भिरायुधैरस्य। अस्यतु। असु क्षेपणे। व्यत्ययेन मध्यमः। कुत्सायैतन्नामकाय कृपणे स्तोत्रे। कृपतिः स्तुतिकर्मा। शुष्णं शोषकमेतन्नामकमसुरं परादात्। पराभूय खंडितवान्। कुत्साय शुष्णमशुषं नि बर्हीः।४.१६.१२। इति मंत्रांतरं। किंचायमिंद्रः कविमुशनसं। कविरिति पितृनाम्ना पुत्रस्यापि व्यवहार उपचारात्। शस्यमानं

स्तुवंतमनयत् । वशं प्रापयत्तस्य विरोधिनं । यद्वा कविं भार्गवमेव स्तोतृभिः शस्यमानं स्ववशमनयत् । यः कविरस्येंद्रस्यात्कं रूपं सनिता संभक्ता भवति । न लोकाव्ययेति षष्ठीप्रतिषेधः । उतापि च नृणां वृष्ट्यादिनेतॄणामिंद्रानुचराणां मरुतां यः कविः सनिता । तमनयदिति ॥

॥ अथ दशमी ॥

अयं दशस्यन्नर्येभिरस्य दस्मो देवेभिर्वरुणो न मायी ।
अयं कनीनं ऋतुपा अवेद्यमिमीतारुरुं यश्चतुष्पात् ॥१०॥
अयं । दशस्यन् । नर्येभिः । अस्य । दस्मः । देवेभिः । वरुणः । न । मायी ।
अयं । कनीनः । ऋतुऽपाः । अवेदि । अमिमीत । अररुं । यः । चतुःऽपात् ॥१०॥

अयमिंद्रो दशस्यन् स्तोतृभ्यो धनं प्रयच्छन् । दशस्यतिर्दानकर्मा । नर्येभिर्नर्यैर्नृहितैर्मरुद्भिरस्य । अस्यति । छांदसस्तिपो लोपः । यद्वा व्यत्ययेन लोण्मध्यमः । तथा देवेभिर्द्योतमानैः स्वतेजोभिर्दस्मो दर्शनीयो वरुणो न वरुण इव । वरुणस्तमोवारक आदित्यो वरुण एव वा । स इव मायी मायावान् । तथायं कनीनः कमनीय ऋतुपा ऋतौ पातावेदि । अज्ञायि । तथाररुमसुरमेतन्नामानममिमीत । अमिनात् । योऽररुश्चतुष्पात् । पादचतुष्टयोपेतः । मीङ् हिंसायां । लङि बहुलं छंदसीति विकरणस्य श्लुः ॥

॥ अथैकादशी ॥

अस्य स्तोमेभिरौशिज ऋजिश्वा व्रजं दरयद्वृषभेण पिप्रोः ।
सुत्वा यद्यजतो दीदयद्गीः पुर इयानो अभि वर्पसा भूत् ॥११॥
अस्य । स्तोमेभिः । औशिजः । ऋजिश्वा । व्रजं । दरयत् । वृषभेण । पिप्रोः ।
सुत्वा । यत् । यजतः । दीदयत् । गीः । पुरः । इयानः । अभि । वर्पसा । भूत् ॥११॥

अस्येंद्रस्य स्तोमेभिः स्तोत्रैरौशिज उशिजः पुत्र ऋजिश्वैतन्नामा वृषभेण वज्रेण वृषभेण वा युक्तं व्रजं गोष्ठं पिप्रोरेतन्नामकस्यासुरस्य संबंधिनं तेनापहृत्य पालितं दरयत् । अदारयत् । यद्यदा सुत्वा सोमस्य सोता । सुयजोर्ङ्वनिबिति वनिप् । ह्रस्वस्य पितीति तुक् । यजतो यष्टौशिजो गीः स्तुतिवाचो दीदयत् दीपितवान् । तथा यद्यदेयानो गच्छन् पुरः शत्रुपुराणि । यद्वा पुरः पुर इव संघीभूतानि पापान्यभि

भूत्। अभिभवति। केन साधनेन। वर्पसा। रूपनामैतत्। रूपेणेंद्रानुगृहीतेन। यदैवमकरोत्तदा वज्रमदरयदिति संबंधः ॥

॥ अथ द्वादशी ॥

एवा महो असुर वक्षथाय वम्रकः पड्भिरुप सर्पदिंद्रं।
स इयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः ॥१२॥

एव। महः। असुर। वक्षथाय। वम्रकः। पट्ऽभिः। उप। सर्पत्। इंद्रं।
सः। इयानः। करति। स्वस्तिं। अस्मै। इषं। ऊर्जं। सुऽक्षितिं। विश्वं। आ। अभारित्यभाः ॥१२॥

अनया स्तुतिमुपसंहृत्याभिमतं वम्रकः प्रार्थयते। हे असुर बलवन्निंद्रं त्वामेवैवमुक्तप्रकारेण महो महतो हविषः स्तोत्रस्य वा वक्षथाय वहनाय महतः स्वर्गादेः प्रापणाय वा पड्भिः पादैरुप सर्पत्। उपागमत्। स इयान उपागम्यमानः सन् करति करोतु स्वस्तिमविनाशमस्मै वम्रकाय। तथेषमन्नमूर्जं रसं सुक्षितिं सुनिवासं सम्यग्विश्वं सर्वमाभाः। आहरतु ॥

॥ इत्यष्टमस्य पंचमे पंचदशो वर्गः ॥

॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे दाशतय्यां दशमे मंडलेऽष्टमोऽनुवाकः ॥

नवमेऽनुवाके त्रयोदश सूक्तानि। तत्रेंद्र दृह्येति द्वादशर्चं प्रथमं सूक्तं वंदनपुत्रस्य दुवस्योरार्षं वैश्वदेवं। द्वादशी त्रिष्टुप्। शिष्टा जगत्यः। तथा चानुक्रांतं। इंद्र दुवस्युर्वांदनो वैश्वदेवं त्वंत्या त्रिष्टुबिति। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

इंद्र दृह्य मघवन्त्वावदिद्भुज इह स्तुतः सुतपा बोधि नो वृधे।
देवेभिर्नः सविता प्रावतु श्रुतमा सर्वतातिमदितिं वृणीमहे ॥१॥

इंद्र। दृह्य। मघऽवन्। त्वाऽवत्। इत्। भुजे। इह। स्तुतः। सुतऽपाः। बोधि। नः। वृधे।
देवेभिः। नः। सविता। प्र। अवतु। श्रुतं। आ। सर्वऽतातिं। अदितिं। वृणीमहे ॥१॥

हे इंद्र मघवन् धनवन् त्वं त्वावदित् त्वत्सदृशमेव शत्रुबलं दृह्य। मारय। किमर्थं। भुजे। अस्माकं भोगाय। तदर्थमिहास्मिन्यज्ञे स्तुतः सन् सुतपाः सुतस्या-

भिषुतस्य सोमस्य पाता बोधि। बुध्यस्व। भवेत्यर्थः। किमर्थं। नोऽस्माकं वृधे। वर्धनाय। किंच देवेभिर्देवैः सह नोऽस्माकं श्रुतं विश्रुतं यज्ञं सविता सर्वस्य स्वस्वकर्मसु प्रेरको देवः प्रावतु। प्ररक्षतु। किंच सर्वतातिं। स्वार्थिकस्तातिल्। सर्वां सर्वात्मिकां। यद्वा सर्वे तायंतेऽस्यामिति सर्वतातिः। छांदसो दीर्घः। तादृशीमदितिमखंडनीयां देवमातरमा वृणीमहे ॥

॥ अथ द्वितीया ॥

भराय सु भरत भागमृत्वियं प्र वायवे शुचिपे क्रंददिष्टये।
गौरस्य यः पयसः पीतिमानश आ सर्वतातिमदितिं वृणीमहे ॥२॥
भराय। सु। भरत। भागं। ऋत्वियं। प्र। वायवे। शुचिऽपे। क्रंदत्ऽइष्टये।
गौरस्य। यः। पयसः। पीतिं। आनशे। आ। सर्वऽतातिं। अदितिं। वृणीमहे ॥२॥

भराय संग्रामकारिणे सर्वेषां पोषकाय वेंद्रायर्त्वियं काले जातं प्राप्तकालं भागं सु भरत। सुष्ठु संपादयत हे ऋत्विजः। तथा शुचिपे शुद्धस्य सोमस्य पात्रे क्रंददिष्टये शब्दितगमनाय। वायोः शीघ्रगमने हि शब्दः प्रत्यक्षः। तादृशाय वायवे देवाय प्र भरत भागमिति शेषः। यो देवो गौरस्य गौरवर्णस्य पशोः पयसः पीतिं पानमानशे प्राप्नोति तस्मै वायवे। शिष्टमुक्तं ॥

॥ अथ तृतीया ॥

आ नो देवः सविता साविषद्वय ऋजूयते यजमानाय सुन्वते।
यथा देवान्प्रतिभूषेम पाकवदा सर्वतातिमदितिं वृणीमहे ॥३॥
आ। नः। देवः। सविता। साविषत्। वयः। ऋजुऽयते। यजमानाय। सुन्वते।
यथा। देवान्। प्रतिऽभूषेम। पाकऽवत्। आ। सर्वऽतातिं। अदितिं। वृणीमहे ॥३॥

सविता सर्वस्य प्रेरकः सूर्यो नोऽस्माकं संबंधिन ऋजूयत ऋजुकामाय सुन्वतेऽभिषवं कुर्वते यजमानाय वयोऽन्नं पाकवत् पाकोपेतं। व्यवहितमप्येतदत्र संबध्यते। आ साविषत्। आभिमुख्येन प्रसौति। सौतेर्ण्यंताल्लेटि रूपं। यथा येन प्रकारेण देवान्प्रतिभूषेम। प्रतिभवेम। भवतेर्लिङि सिप् शपौ। द्विविकरणता। यद्वा भूष अलंकारे। भौवादिकः। भूषयेमेत्यर्थः ॥

॥ अथ चतुर्थी ॥

इंद्रो अस्मे सुमना अस्तु विश्वहा राजा सोमः सुवितस्याध्येतु नः ।
यथायथा मित्रधितानि संदधुरा सर्वतातिमदितिं वृणीमहे ॥४॥
इंद्रः। अस्मे इति। सुऽमनाः। अस्तु। विश्वहा। राजा। सोमः। सुवितस्य। अधि। एतु। नः।
यथाऽयथा। मित्रऽधितानि। संऽदधुः। आ। सर्वऽतातिं। अदितिं। वृणीमहे ॥४॥

इंद्रो देवोऽस्मे अस्माकं सुमनाः सुमनस्कोऽनुग्रहचेता अस्तु। भवतु। विश्वहा सर्वेष्वप्यहःसु। राजा सोमश्च नोऽस्माकं सुवितस्य सुवितं स्तोत्रमध्येतु। अधिगच्छतु। यथायथा येन येन प्रकारेणास्माकं मित्रधितानि मित्रनिहितानि धनानि संदधुस्तथाधिगच्छतु सोमः। तथेंद्रोऽपि सुमना अस्त्विति समन्वयः ॥

॥ अथ पंचमी ॥

इंद्र उक्थेन शवसा परुर्दधे बृहस्पते प्रतरीतास्यायुषः ।
यज्ञो मनुः प्रमतिर्नः पिता हि कमा सर्वतातिमदितिं वृणीमहे ॥५॥
इंद्रः। उक्थेन। शवसा। परुः। दधे। बृहस्पते। प्रऽतरीता। असि। आयुषः।
यज्ञः। मनुः। प्रऽमतिः। नः। पिता। हि। कं। आ। सर्वऽतातिं। अदितिं। वृणीमहे॥५॥

अयमिंद्र उक्थेन शवसा स्तुत्येन बलेन परुः पर्व यज्ञियमस्मदीयं वा दधे। धारयति। हे बृहस्पत आयुषो ममायुष्यस्य प्रतरीता प्रवर्धयितासि। भव। तथा यज्ञो मनुर्मंता प्रमतिः प्रकृष्टा मतिर्यस्य स नः पिता पालकः सन् कं सुखं प्रयच्छतु। यद्वा यज्ञो मंत्रो बुद्धिश्च प्रत्येकं सुखं प्रयच्छतु ॥

॥ अथ षष्ठी ॥

इंद्रस्य नु सुकृतं दैव्यं सहोऽग्निर्गृहे जरिता मेधिरः कविः ।
यज्ञश्च भूद्विदथे चारुरंतम आ सर्वतातिमदितिं वृणीमहे ॥६॥
इंद्रस्य। नु। सुऽकृतं। दैव्यं। सहः। अग्निः। गृहे। जरिता। मेधिरः। कविः।
यज्ञः। च। भूत्। विदथे। चारुः। अंतमः। आ। सर्वऽतातिं। अदितिं। वृणीमहे॥६॥

दैव्यं देवानां हितं सहो बलं यदस्ति तदिंद्रस्य सुकृतं। इंद्रेण खलु सुष्ठु संपादितं। यद्वा यत्सुकृतं दैव्यं सहो बलं मरुत्संज्ञकमस्ति तदिंद्रस्य नु। इंद्रस्य संबंधि

खलु । अथवा । इंद्रस्य नु संबंधि सुकृतं दैव्यं सहो देवार्हं बलमग्निर्गृहेऽस्मदीये यागगृहे वर्तत इति शेषः । इंद्रस्य संबंधी सुष्ठु संपादितो देवानां बलभूतोऽग्निर्गार्हपत्यः सन् वर्तत इत्यर्थः । स चाग्निर्जरिता देवानां स्तोता मेधिरः । मेधो यज्ञो हविर्वा । तद्वान् कविः क्रांतप्रज्ञो यज्ञो यष्टव्यश्च भूत् । भवति । कुत्र । विदथे यज्ञे । किंच । सोऽग्निश्चारुश्चरणीयः । अंतमोऽस्माकमंतिकतमश्च ॥

॥ इत्यष्टमस्य पंचमे षोडशो वर्गः ॥

॥ अथ सप्तमी ॥

न वो॒ गुहा॑ चकृम॒ भूरि॑ दुष्कृ॒तं नावि॒ष्ट्यं॑ वसवो देव॒हेळ॑नं ।
माकि॑र्नो देवा॒ अनृ॑तस्य॒ वर्प॑स॒ आ स॒र्वता॑ति॒मदि॑तिं वृणीमहे ॥७॥

न । व॒ः । गुहा॑ । च॒कृ॒म॒ । भूरि॑ । दुः॒ऽकृतं॑ । न । आ॒विः॒ऽत्यं॑ । व॒स॒व॒ः । दे॒व॒ऽहेळ॑नं ।
माकिः॑ । न॒ः । दे॒वा॒ः । अनृ॑तस्य । वर्प॑सः । आ । स॒र्वऽता॑तिं । अदि॑तिं । वृ॒णी॒म॒हे॒ ॥७॥

हे देवा वो युष्माकं गुहा गुहायां प्रच्छन्ने देशे भूरि प्रभूतं दुष्कृतं पापं । द्रोहमित्यर्थः । न चकृम । तथाविष्ट्यमाविः संभूतं देवहेळनं देवानां क्रोधनं तन्निमित्तं द्रोहं न चकृम । हे वसवो वासका देवाः । किंच । हे देवा नोऽस्माकमनृतस्य वर्पसो रूपस्य प्राप्तिर्माकिः । मा भूत् । इतः परं मानुषं रूपं मा भूदित्यर्थः । शिष्टमुक्तं ॥

॥ अथाष्टमी ॥

अपामीं॑वां सवि॒ता सा॑विष॒न्य१॑ग्वरी॑य॒ इदप॑ सेध॒न्त्वद्र॑यः ।
ग्रावा॒ यत्र॑ मधु॒षुदु॒च्यते॑ बृ॒हदा स॒र्वता॑ति॒मदि॑तिं वृणीमहे ॥८॥

अप॑ । अमी॑वां । स॒वि॒ता । सा॒वि॒ष॒त् । न्य॑क् । वरी॑यः । इत् । अप॑ । से॒ध॒न्तु॒ । अद्र॑यः ।
ग्रावा॑ । यत्र॑ । म॒धु॒ऽसुत् । उ॒च्यते॑ । बृ॒हत् । आ । स॒र्वऽता॑तिं । अदि॑तिं । वृ॒णी॒म॒हे॒ ॥८॥

सविता सर्वस्य प्रेरकः सवितृदेवो नोऽस्माकं संबंधिनममीवां रोगमप साविषत् । अपप्रेरयतु । अपगमयत्वित्यर्थः । तथा वरीय इदुरुतरमपि पापं न्यग्नीचीनमप सेधंत्वद्रयः पर्वताभिमानिनो देवा अभिषवाश्मानो वा । एतत्सर्वं कुत्र भवत्विति चेत् उच्यते । यत्र यस्मिन्प्रदेशे यस्मिन्यागे वा मधुरस्य सोमस्य सोता ग्रावा बृहत्प्रवृद्धमुच्यते स्तूयते तत्र ॥

॥ अथ नवमी ॥

ऊर्ध्वो ग्रावा वसवोऽस्तु सोतरि विश्वा द्वेषांसि सनुतर्युयोत ।
स नो देवः सविता पायुरीड्य आ सर्वतातिमदितिं वृणीमहे ॥९॥
ऊर्ध्वः । ग्रावा । वसवः । अस्तु । सोतरि । विश्वा । द्वेषांसि । सनुतः । युयोत ।
सः । नः । देवः । सविता । पायुः । ईड्यः । आ । सर्वऽतातिं । अदितिं । वृणीमहे ॥९॥

हे वसवो देवाः सोतरि सोमाभिषवकर्तरि मयि ग्रावोर्ध्व उन्नतोऽस्तु । तेनोच्छ्रितेन विश्वा द्वेषांसि सर्वानपि द्वेष्टॄन्सनुतः निगूढान्युयोत । पृथक्कुरुत । स सविता देवो नोऽस्माकं पायुः पालयिता । कृवापाजीत्यादिनोण् । प्रत्ययस्वरः । स ईड्यः स्तोतव्यश्च ॥

॥ अथ दशमी ॥

ऊर्जं गावो यवसे पीवो अत्तन ऋतस्य याः सदने कोशे अंग्ध्वे ।
तनूरेव तन्वो अस्तु भेषजमा सर्वतातिमदितिं वृणीमहे ॥१०॥
ऊर्जं । गावः । यवसे । पीवः । अत्तन । ऋतस्य । याः । सदने । कोशे । अंग्ध्वे ।
तनूः । एव । तन्वः । अस्तु । भेषजं । आ । सर्वऽतातिं । अदितिं । वृणीमहे ॥१०॥

हे गाव आशिरार्था यूयं यवसे तृणवति देशे पीवः प्रवृद्धमूर्जं रसमत्तन । अत्त । या ऋतस्य यज्ञस्य सदने गृहे कोशे गोष्ठे दोहनस्थानेऽंग्ध्वे व्यंजयथ ता अत्तन । तनूरेव । जन्ये जनकशब्दः । तनूरेव क्षीरमेव तन्वः सोमरसस्य भेषजमस्तु । यद्वा पृथगेव वाक्यं । अस्माकं तन्वो भेषजमस्तु । किंच तनूरेव पशुशरीरमेव । पशुना यागे सति स्वर्गस्य संपादयितुं शक्यत्वात् ॥

॥ अथैकादशी ॥

क्रतुप्रावा जरिता शश्वतामव इंद्र इद्भद्रा प्रमतिः सुतावतां ।
पूर्णमूधर्दिव्यं यस्य सिक्तय आ सर्वतातिमदितिं वृणीमहे ॥११॥
क्रतुऽप्रावा । जरिता । शश्वतां । अवः । इंद्रः । इत् । भद्रा । प्रऽमतिः । सुतऽवतां ।
पूर्णं । ऊधः । दिव्यं । यस्य । सिक्तये । आ । सर्वऽतातिं । अदितिं । वृणीमहे ॥११॥

क्रतुप्रावा कर्मणां पूरकः । प्रा पूरणे । आतो मनिन्नित्यादिना वनिप् । जरिता

स्तोता। यजमानं साधु सोमः कृत इति स्तौति। यद्वा शश्वतां सर्वेषां जरयितेंद्र इदिंद्र एव सुतावतां सोमवतां यजमानानामवो रक्षको भद्रा भद्रया स्तुत्या प्रमतिः। यस्येंद्रस्य सिक्तये सेकाय पानायोधरुद्वततरं द्रोणकलशं पूर्णं सोमेन पूर्णं भवति स एवावः स एव प्रमतिरिति ॥

॥ अथ द्वादशी ॥

चित्रस्ते भानुः क्रतुप्रा अभिष्टिः संति स्पृधो जरणिप्रा अधृष्टाः।
रजिष्ठया रज्या पश्व आ गोस्तूतूर्षति पर्यग्रं दुवस्युः ॥१२॥

चित्रः। ते। भानुः। क्रतुऽप्राः। अभिष्टिः। संति। स्पृधः। जरणिऽप्राः। अधृष्टाः।
रजिष्ठया। रज्या। पश्वः। आ। गोः। तूतूर्षति। परि। अग्रं। दुवस्युः ॥१२॥

हे इंद्र ते भानुः प्रकाशश्चित्र आश्चर्यभूतश्चायनीयो वा। तथा क्रतुप्राः स भानुरस्माकं कर्मणां पूरकोऽभिष्टिरभ्येषणीयः। हे इंद्र ते जरणिप्राः स्तोतॄणां धनस्य पूरयित्र्योऽधृष्टा अन्यैरप्रधृष्याः स्पृधः स्पर्धाः संति। यस्मादेवं तस्माद्रजिष्ठयर्जुतमया रज्या रज्ज्वा गोः पश्वः पशोरग्रं दुवस्युः परिचरणमिच्छन् एतन्नामर्षिः परि तूतूर्षति। अभित्वरयति ॥

॥ इत्यष्टमस्य पंचमे सप्तदशो वर्गः ॥

उद्बुध्यध्वमिति द्वादशर्चं द्वितीयं सूक्तं। सोमपुत्रस्य बुधस्यार्षं। आ वो धियमिति नवमी कपृन्नर इत्यंत्या च द्वे जगत्यौ। चतुर्थीषष्ठ्यौ गायत्र्यौ। निराहावार्निति पंचमी बृहती। शिष्टास्त्रिष्टुभः। विश्वे देवा देवता। ऋत्विक्स्तुतिरूपोऽर्थो वा देवता। तथा चानुक्रांतं। उद्बुध्यध्वं बुधः सौम्य ऋत्विक्स्तुतिर्वा नवम्यंत्ये जगत्यौ गायत्र्योर्मध्ये बृहती पंचमीति। गतः सूक्तविनियोगः ॥

॥ तत्र प्रथमा ॥

उद्बुध्यध्वं समनसः सखायः समग्निमिंध्वं बहवः सनीळाः।
दधिक्रामग्निमुषसं च देवीमिंद्रावतोऽवसे नि ह्वये वः ॥१॥

उत्। बुध्यध्वं। सऽमनसः। सखायः। सं। अग्निं। इंध्वं। बहवः। सऽनीळाः।
दधिऽक्रां। अग्निं। उषसं। च। देवीं। इंद्रऽवतः। अवसे। नि। ह्वये। वः ॥१॥

अग्निं चेष्यमाणा ऋत्विजो वदंति। हे सखायः सखिभूता ऋत्विजः समनसः

समानमनस्काः परस्परमद्रोग्धारः। अन्योन्यं कर्मानुकूला इत्यर्थः। तादृशा यूयमुदुत्कृष्टं बुध्यध्वं। जानीध्वं। उत्तरत्र युष्माकं कर्तव्यमेवोपदिशति। तथाग्निं समिंध्वं। सम्यग्दीपयध्वं। ञिइंधी दीप्तौ। रौधादिकः। लोटि श्नसोरल्लोप इत्यल्लोपः। बहवोऽनेके सनीळाः समाननिवासाः। एकस्यामेव शालायां निवसंतः। अहं च दधिक्रामेतन्नामिकां देवतामग्निमुषसं च देवीमेतांस्त्रीन्देवानिंद्रावत इंद्रेण युक्तान्वो युष्मानवसेऽस्माकं रक्षणाय नि नितरां ह्वये। आह्वयामि॥

॥ अथ द्वितीया ॥

मंद्रा कृणुध्वं धिय आ तनुध्वं नावमरित्रपरणीं कृणुध्वं।
इष्कृणुध्वमायुधारं कृणुध्वं प्रांचं यज्ञं प्र णयता सखायः॥२॥

मंद्रा। कृणुध्वं। धियः। आ। तनुध्वं। नावं। अरित्रऽपरणीं। कृणुध्वं।
इष्कृणुध्वं। आयुधा। अरं। कृणुध्वं। प्रांचं। यज्ञं। प्र। नयत। सखायः॥२॥

मंद्रा मंद्राणि मदकराणि स्तोत्राणि कृणुध्वं। कुरुध्वं। हे सखायः। कृवि हिंसाकरणयोः। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। अकारश्चांतादेशः। यद्वा करोतेर्व्यत्ययेन श्नुः। तथा धियः कर्माणि चयनप्रदेशकर्षणादीन्या तनुध्वं। विस्तारयत। तथारित्रपरणीं कर्षणादिरूपेणारित्रेण पारयितव्यां नावं चयनाख्यां कृणुध्वं। कुरुध्वं। तथायुधायुधानि सीरयुगादीन्यरमलं कृणुध्वं। हे सखाय ऋत्विजः प्रांचं प्रागंचनं यज्ञं यष्टव्यमग्निं प्र णयत। प्रकर्षेण नयत। आदौ कर्षणं प्रांचं कुरुतेत्यर्थः॥

॥ अथ तृतीया ॥

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजं।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्॥३॥

युनक्त। सीरा। वि। युगा। तनुध्वं। कृते। योनौ। वपत। इह। बीजं।
गिरा। च। श्रुष्टिः। सऽभराः। असत्। नः। नेदीयः। इत्। सृण्यः। पक्वं। आ। इयात्॥३॥

हे सखायो यूयं सीरा सीराणि युनक्त। युंग्ध्वमनडुद्भिः सह। युजेर्लोटि तप्तनप्तनथनाश्चेति तबादेशः। अत एवाङित्त्वाच्छ्नसोरल्लोप इत्यल्लोपाभावः। तदर्थं युगा युगानि वि तनुध्वं। विस्तारयध्वं। कृते च योनाविह सीतायां बीजं ग्राम्यमारण्यं च वपत। निधत्त। तिलमाषव्रीह्यादिकं ग्राम्यसप्तकं वेणुश्यामाकनीवारादिकमा-

रण्यवीजसमन्नकं च कृष्टाकृष्टयोर्निवपतेत्यर्थः । सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्ट इत्यापस्तंबः । तथा नोऽस्माकं गिरा स्तुत्या प्रशस्त्या सहास्माकं श्रुष्टिरन्नं सभराः सभरमसत् । भवति । भवतु । तथा नेदीय इदंतिकमेव सृण्यः । सृणिरंकुशः । अंकुशवद्वक्त्रो लवित्रः । पक्वं स्तंबमेयात् । आभिमुख्येन गच्छतु । श्रुष्टिः सभरा असत् सृण्यः पक्वमेयादिति चशब्दानुवृत्तेश्चवायोगे प्रथमेति प्रथमस्य निघाताभावः ॥

॥ अथ चतुर्थी ॥

सीरा॑ युंजंति क॒वयो॑ यु॒गा वि त॑न्वते॒ पृथ॑क् ।
धीरा॑ दे॒वेषु॑ सु॒म्नया ॥४॥

सीरा॑ । यु॒ञ्जं॒ति॒ । क॒वयः॑ । यु॒गा । वि । त॒न्व॒ते॒ । पृथ॑क् ।
धीराः॑ । दे॒वेषु॑ । सु॒म्न॒ऽया ॥४॥

कवयो मेधाविन ऋत्विजः सीरा सीराणि कर्षणसाधनानि युंजंति । योजयंति । युगा युगान्यपि पृथक् परस्परं वि तन्वते । भिन्नप्रदेशानि कुर्वंति । कीदृशाः कवयः । देवेषु विषये धीरा धीमंतः । किमर्थं । सुम्नया । सुम्नमिति सुखनाम । सुखेच्छया । सुम्नशब्दात्क्यजंताद्भावे अ प्रत्ययादित्यकारप्रत्ययः । सुपां सुलुगिति तृतीयाया आकारः । अथवा धीरा धीमंतो देवेषु सुम्नया सुम्नेन । देवेषु सुखं भूयादिति । सुपां सुलुगिति विभक्तेर्याजादेशः ॥

॥ अथ पंचमी ॥

निरा॑हा॒वान्कृ॑णोतन॒ सं व॑र॒त्रा द॑धातन ।
सिं॒चाम॑हा अव॒तमु॒द्रिणं॑ व॒यं सु॒षेक॒मनु॑पक्षितं ॥५॥

निः । आ॒ऽहा॒वान् । कृ॒णो॒त॒न॒ । सं । व॒र॒त्राः । द॒धा॒त॒न॒ ।
सिं॒चाम॑है । अ॒व॒तं । उ॒द्रिणं॑ । व॒यं । सु॒ऽसेकं॑ । अनु॑पऽक्षितं ॥५॥

हे सखाय आहावान् । आहूयंते पानार्थं गावोऽत्रेत्याहावानि पानानि । अत्रौचित्यादग्निचयनप्रदेशे कर्षणार्थं गोपानसाधनं । द्रुममयपानपात्राण्युच्यंते । तानाहावान् निष्कृणोतन । निष्कुरुत । आङ्ह्वयतेर्निपानमाहावः । पा॰ ३.३.७४.। इति निपातितः । याथादिस्वरः । कृणोतन । तप्तनबित्यादिना तनप् । तेनाङित्त्वाद्गुणः । श्नाभ्यस्तयोरात इत्याकारलोपः । किमर्थमाहावकरणं वरत्रस्थापनं चेति । अत्रो-

च्यते । वयमवतमवटं सिंचामहे । कीदृशमवटं । उद्रिणं । उद्भाववंतं । सुषेकं । सुष्ठु सेक्तुं शक्यं । अनुपक्षितं । अनुपक्षीणं । कदाचिदुदकोपक्षयरहितं ॥

॥ अथ षष्ठी ॥

इष्कृताहावमवतं सुवरत्रं सुषेचनं ।
उद्रिणं सिंचे अक्षितं ॥६॥
इष्कृतऽआहावं । अवतं । सुऽवरत्रं । सुऽसेचनं ।
उद्रिणं । सिंचे । अक्षितं ॥६॥

इष्कृताहावं संस्कृताहावमवतमवटं द्रोणं सिंचे । सेचयामि । पुनः कीदृशमवटं । सुवरत्रं । शोभनवरत्रोपेतं । सुषेचनं । शोभनोदकसेकोपेतं । उद्रिणं । उद्भाववंतं । अक्षितं । अक्षीणं ॥

॥ इत्यष्टमस्य पंचमेऽष्टादशो वर्गः ॥

॥ अथ सप्तमी ॥

प्रीणीताश्वान्हितं जयाथ स्वस्तिवाहं रथमित्कृणुध्वं ।
द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिंचता नृपाणं ॥७॥
प्रीणीत । अश्वान् । हितं । जयाथ । स्वस्तिऽवाहं । रथं । इत् । कृणुध्वं ।
द्रोणऽआहावं । अवतं । अश्मऽचक्रं । अंसत्रऽकोशं । सिंचत । नृऽपानं ॥७॥

हे ऋत्विजो यूयमश्वान्व्यापनशीलान्बलिवर्दान्प्रीणीत । उचितघासोदकादिप्रदानेन प्रीणयत । यथा क्षेत्रकर्षणाय प्रभवंति तथा कुरुतेत्यर्थः । तथा कृत्वा हितं चयनायोचितं कर्षणं जयाथ । जयथ । संपादयथ । तथा रथं चयनाख्यं हलाख्यं वा स्वस्तिवाहमित् सुखस्य वाहकमेव कृणुध्वं । कुरुध्वं । तदर्थं द्रोणाहावं । आह्वयंत्यत्र पानार्थं बलिवर्दानित्याहावो जलाधारः पात्रविशेषः । स च द्रोणमयो द्रुममय आहावो यस्य तादृशमवतमवटवन्निम्नभूतमश्मचक्रं व्याप्तक्रमणमश्ममयचक्रं वांसत्रकोशं । अंसत्रं कवचं यथा कायं रक्षति तद्वदुदकस्य कोशं कोशस्थानीयं नृपाणं नृणां कर्मनेतॄणां पानयोग्यमीदृशमवतं सिंचत हे ऋत्विजः । एवमृत्विक्स्तुतिर्वेति पक्षे । सूक्तस्य वैश्वदेवपक्ष एवं योजना । प्रीणीत प्रीणयताश्वान् । स्नानपानयोग्यान्नैः संग्रामयोग्यान्कुरुतेत्यर्थः । हितं जयाथ । हितमिति क्रिया-

विशेषणं । कथं जयथ । बंधुसुहृद्भ्यो यथा हितं भवति तथा जयथ संग्रामं । स्वस्तिवाहं । स्वस्तीत्यविनाशनाम । अविनाशवाहनं रथमिद्रथं च कृणुध्वं । इदिति चार्थे । अश्वरथं च दृढं कृत्वा संग्रामभूमिं गत्वा द्रोणाहावमित्यादीनि द्वितीयांतानि कूपाख्यसंग्रामविशेषणानि सिंचतेत्यनेन संबध्यंते । द्रोणो द्रुममयः स एव रथ आहाव आहावस्थानीयो यस्य संग्रामस्य तं । अवतं । कूपनामैतत् । कूपं संग्रामाख्यं । अश्मचक्रं कूपप्रांतनिबद्धाश्मसदृशप्रहरणायुधवंतं । असनानि वा क्षेपणानि वा चक्राख्यायुधविशेषा यस्मिन् तं । व्याप्तचरणवंतं व्याप्तक्रमणवंतं वा । चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वेति निरुक्तं । अंसत्रकोशं । अंसत्राणि धनूंषि कवचानि च कोशस्थानीयानि यस्मिन् तं सिंचत नृपाणं । यस्मिन्योद्धार उदकवत्पीयंते मार्यंते तं । ईदृशं कूपसदृशं संग्रामं सिंचत हे अस्मदीया योद्धारः । सूक्तस्य वैश्वदेवत्वाद्धे सैनिका विश्वेषां देवानां प्रसादेन सर्वमेतत्कुरुतेत्यर्थः । एवं निराहावानित्यादिषु कूपरूपव्याजेन संग्रामवर्णनमवगंतव्यं ॥

॥ अथाष्टमी ॥

व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तं ॥८॥

व्रजं । कृणुध्वं । सः । हि । वः । नृऽपानः । वर्म । सीव्यध्वं । बहुला । पृथूनि ।
पुरः । कृणुध्वं । आयसीः । अधृष्टाः । मा । वः । सुस्रोत् । चमसः । दृंहत । तं ॥८॥

हे ऋत्विजो व्रजं कृणुध्वं । व्रजं गोष्ठं कुरुध्वं । आशिरदोहार्थं गोस्थानं कुरुत । स हि स खलु वो नृपाणः । नेतॄणां देवानां पातव्यः । देवपानसाधन इति । सांनाय्यरूपेण वाशिररूपेण वा गोः पयआदिकं देवाः पिबंति खलु । वर्म वर्माणि सीव्यध्वं । वर्मवत्प्रधानस्योभयत आच्छादकत्वात्प्रयाजादीनि प्राच्यानि प्रतीच्यानि चांगानि वर्माणि । तानि सीव्यध्वं । दलयध्वं । कुरुध्वमित्यर्थः । कीदृशानि वर्माणि । बहुला । बहुलान्यनेकानि । तानि च पृथूनि विस्तीर्णानि । तथा पुरः पुराणि धिष्ण्यादीनि यष्टव्यानां देवानां वा पुरः शरीराण्यायसीरयोमयवत् सारभूता अधृष्टा अन्यैरधृष्याः । पूरणीया ग्रहा वा पुर इत्युच्यंते । तानुक्तलक्षणान्कुरुत । वो युष्मदीयश्चमसो यज्ञाख्यो भक्षणसाधनश्चमस एव वा । चमसपक्षे सामान्येनैकवचनं । मा सुस्रोत् । मा स्रवेत् । स्रवतेर्लेङि बहुलं छंदसीति शपः श्लुः । तं दृंहत । दृढीकुरुत । यथा विकलो न भवति तथा कुरुत । दृह दृहि वृद्धौ । भौवादिकः ।

तस्माल्लोटीदित्त्वानुम्। ऋत्विक्स्तुतिपक्ष एवं। वैश्वदेवपक्षे। अस्मदीया योद्धारो यूयं। नरो योद्धारः पिबंति प्रत्यर्थिनां प्राणानिति नृपाणः। स तादृशो युष्मदीयः खलु। गोष्ठपक्षे नराणां पानसाधनः स खलु। पातेः करणाधिकरणयोश्चेति ल्युट्। वर्म वर्माणि कवचानि सीव्यध्वं बहुलानि पृथूनि च यथा भवंति तथा। पुरः पुरीः कृणुध्वमायसीरन्यैरधृष्टाश्च। वश्चमसोऽदनसाधनो मा सुस्रोत्। मा स्रवेत्। तं दृंहतेति। इति देवतानुग्रहलब्धबलो वदति ॥

॥ अथ नवमी ॥

आ वो धियं यज्ञियां वर्त ऊतये देवा देवीं यजतां यज्ञियामिह।
सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥९॥
आ। वः। धियं। यज्ञियां। वर्ते। ऊतये। देवाः। देवीं। यजतां। यज्ञियां। इह।
सा। नः। दुहीयत्। यवसाऽइव। गत्वी। सहस्रऽधारा। पयसा। मही। गौः ॥९॥

हे देवाः स्तोतार ऋत्विजो वो युष्माकमूतये यज्ञियां यज्ञार्हां धियं बुद्धिमा वर्ते। प्रवर्तये। यद्वा। हे देवा ऋत्विजो वो यज्ञियां धियं युष्माकं कर्तव्यत्वेन संबंधिनीमस्माकमूतये रक्षणाया वर्ते। अपि च देवा एव संबोध्याः। हे देवा वो युष्माकं धियं बुद्धिमा वर्ते। आवर्तयामि। किमर्थं। ऊतये। अस्माकं रक्षणाय। कीदृशीं धियं। यज्ञियां यज्ञार्हां देवीं द्योतमानां यजतां पूज्यां। इहास्मिन्यागेऽस्यां भूमौ वा। एको यज्ञियामिति शब्दः पूरणः। सा धीर्नोऽस्माकं दुहीयत्। दुह्यात्। तत्र दृष्टांतः। यवसेव यवसानि भक्षयित्वेव गत्वी पुनर्गोष्ठं गत्वा। पीत्वीतिवत्। पयसा सहस्रधारा मही महती गौर्यथा दुग्धे तद्वत् ॥

॥ अथ दशमी ॥

आ तू षिंच हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः।
परि ष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥१०॥
आ। तु। सिंच। हरिं। ईं। द्रोः। उपऽस्थे। वाशीभिः। तक्षत। अश्मन्ऽमयीभिः।
परि। स्वजध्वं। दश। कक्ष्याभिः। उभे इति। धुरौ। प्रति। वह्निं। युनक्त ॥१०॥

हे अध्वर्यो त्वमेनं हरिं हरितवर्णं सोमं द्रोर्द्रुमविकारस्य पात्रस्योपस्थ उपर्या सिंच। आसेकं कुरु। त्विति पूरणः। तदर्थं हे पात्रसंपादिनोऽश्मन्मयीभिरयःशि-

लासारभूताभिर्वाशीभिस्तक्षत पात्राणि। नकारोपजनश्छांदसः। मयटः टित्त्वा-ङ्डीप्। तानि पात्राणि सोमपूर्णानि दश दशसंख्याकानि कक्ष्याभिः प्रकारैः पर्यायेण परि ष्वजध्वं। संस्कुरुध्वं। आसादयत। यद्वा वाशीभिरश्मन्मयीभिर्हविर्धानशकटे तक्षत। ते च दश कक्ष्याभिर्दशसंख्याकाभी रज्जुभिः परि ष्वजध्वं। उभे धुरौ युग-संबंधिन्यौ वह्नी वाहकावनड्वाहौ युनक्त। अथवायं मंत्रश्चयनक्षेत्रकर्षणसाधनह-लाविषयतया व्याख्येयः॥

॥ अथैकादशी ॥

उभे धुरौ वह्निरापिब्दमानोऽंतर्योनेव चरति द्विजानिः।
वनस्पतिं वन आस्थापयध्वं नि षू दधिध्वमखनंत उत्सं ॥११॥

उभे इति। धुरौ। वह्निः। आऽपिब्दमानः। अंतः। योनाऽइव। चरति। द्विऽजानिः।
वनस्पतिं। वने। आ। अस्थापयध्वं। नि। सु। दधिध्वं। अखनंतः। उत्सं ॥११॥

हविर्धानशकटस्योभे धुरावापिब्दमान आशब्दमानो वह्निर्हविर्वाहकोऽनड्वान् योनावंतरिव द्विजानिर्द्विजायः। तयोरंतश्चरति। तं वनस्पतिं वनस्पतिविकारं शकटं वने वनसंबंधिनि वृक्षे। मेथीभूत इत्यर्थः। तत्रास्थापयध्वं। यद्वा वने वन-नीये देश आस्थापयध्वं। तत्पश्चात्तत्रत्यं सोमं सु सुष्ठु नि दधिध्वं। सुखं यथा भवति तथा स्थापयतासंद्यां। अभिषवप्रदेशे च पश्चादुत्सं तद्रसमखनंतः संपादयतेत्यर्थः॥ अथवायमपि मंत्रः कर्षणपरो व्याख्येयः। यस्य लांगलस्योभे धुरावापिब्दमानः शब्दमानो वह्निरनड्वान् अंतर्योनाविवेत्यादि समानं। तादृशं वनस्पतिं वनस्पति-विकारं लांगलं वने वननीये वपनार्थे कर्षणप्रदेश आस्थापयध्वं। सु सुष्ठु सर्वत्र तं लांगलं नि दधिध्वं। उत्सं सेकसाधनं गर्तं सिक्तं वा प्रदेशमखनंतः॥

षष्ठेऽहनि ब्राह्मणाच्छंसिशस्त्रे कपृन्नर इत्येषा। कपृन्नरो यद्व प्राचीरजगंतेति चैते। आ० ८.३.। इति॥

॥ सैषा द्वादशी ॥

कपृन्नरः कपृथमुद्दधातन चोदयंत खुदत वाजसातये।
निष्टिग्र्यः पुत्रमा च्यावयोतय इंद्रं सबाध इह सोमपीतये ॥१२॥

कपृत्। नरः। कपृथं। उत्। दधातन। चोदयंत। खुदत। वाजऽसातये।
निष्टिग्र्यः। पुत्रं। आ। च्यवय। ऊतये। इंद्रं। सऽबाधः। इह। सोमऽपीतये ॥१२॥

हे नरो नेतार ऋत्विज एष इंद्रः कपृत्। सुखस्य पूरको यष्टॄणां स्तोतॄणां च। कमिति सुखनाम। तं कपृथं सुखस्य पूरयितारमिंद्रं चोदयत। प्रेरयत। खुदत। खुर्दत क्रीडयत। खुर्द क्रीडायां। भौवादिकः। व्यत्ययेन शः। रेफलोपश्छांदसः। संपिंष्ट। संस्कुरुतेत्यर्थः। किमर्थं। वाजसातये। अन्नस्य लाभाय। तदेवाह। हे होतः निष्टिग्यः पुत्रं। निष्टिं दितिं स्वसपत्नीं गिरतीति निष्टिग्रीरदितिः। तस्याः पुत्रमिंद्रं सबाधः। सह पापैः प्रयासरूपैः कर्मभिर्बाध्यंत इति सबाध ऋत्विजः। तथाविधा यूयं सोमपीतये तस्य सोमपानायोतयेऽस्माकं रक्षणाय वा च्यवय। व्यत्ययेनैकवचनं। आच्यावयतेत्यर्थः॥

॥ इत्यष्टमस्य पंचम एकोनविंशो वर्गः॥

प्र ते रथमिति द्वादशर्चं तृतीयं सूक्तं। भर्म्यश्वपुत्रो मुद्गल ऋषिः। आद्या तृतीयांत्या चेति तिस्रो बृहत्यः। शिष्टा नव त्रिष्टुभः। द्रुघणो नाम मुद्गरः। तद्देवत्यमिदमिंद्रदेवत्यं वा। तथा चानुक्रांतं। प्र ते मुद्गलो भार्म्यश्वो द्रुघणेन वृषभेण चाजिं जिगायेति द्रौघणं वाद्या तृतीयांत्या च बृहत्य इति। गतो विनियोगः॥ अत्राहुः। मुद्गलस्य हृता गावश्चौरैस्त्यक्त्वा जरद्गवं। स शिष्टं शकटे कृत्वा गत्वैक ऋजुराहवं। द्रुघणं युयुजेऽन्यत्र च चौरमार्गानुसारकः। द्रुघणं चाग्रतः क्षिप्त्वा चौरेभ्यो जगृहे स्वगा इति॥ तथा निरुक्तेऽपीयं कथा सूचिता। मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय। नि॰ ९.२३.। इति॥

॥ तत्र प्रथमा॥

प्र ते॒ रथं॑ मिथू॒कृत॒मिंद्रो॑ऽवतु धृष्णु॒या।

अ॒स्मिन्ना॒जौ पु॑रुहूत श्र॒वाय्ये॑ धनभ॒क्षेषु॑ नोऽव॥१॥

प्र। ते॒। रथं॑। मि॒थु॒ऽकृतं॑। इंद्रः॑। अ॒व॒तु॒। धृ॒ष्णु॒ऽया।

अ॒स्मिन्। आ॒जौ। पु॒रु॒ऽहू॒त॒। श्र॒वाय्ये॑। ध॒न॒ऽभ॒क्षेषु॑। नः॒। अ॒व॒॥१॥

हे मुद्गल ते रथं मिथूकृतं मिथःकृतमसहायं कृतं। अथवा मिथुरिति मिथ्यानाम। अश्वादिभिः शून्यं कृतं धृष्णुया धर्षणशील इंद्रोऽवतु। रक्षतु। यद्वा धृष्णुया धर्षणशीलेन वज्रेण। उभयत्र सुपां सुलुगिति सुपो याजादेशः। अथ प्रत्यक्षकृतः। हे पुरुहूत बहुभिराहूतेंद्रास्मिन्नाजौ संग्रामेऽपहृतगोभिश्चौरैः कृते संग्रामे। कीदृशे। श्रवाय्ये श्रोतव्ये। विश्रुत इत्यर्थः। श्रुदक्षीत्यादिनाय्यप्रत्ययः। धनभक्षेष्वस्मासु गो-

रूपधनभजनकामेषु सत्सु। यद्वा गोरूपधनस्य भक्षकेषु चौरेषु जेतव्येषु सत्सु नो ऽस्मानव। रक्ष ॥

॥ अथ द्वितीया ॥

उत्स्म वातो वहति वासो अस्या अधिरथं यदजयत्सहस्रं।

रथीरभून्मुद्गलानी गविष्टौ भरे कृतं व्यचेदिंद्रसेना ॥२॥

उत्। स्म। वातः। वहति। वासः। अस्याः। अधिऽरथं। यत्। अजयत्। सहस्रं।

रथीः। अभूत्। मुद्गलानी। गोऽइष्टौ। भरे। कृतं। वि। अचेत्। इंद्रऽसेना ॥२॥

अस्या रथीरभून्मुद्गलानीति वक्ष्यमाणत्वादस्य मुद्गलस्य पत्न्याः सारथिभूताया वासोऽंशुकं वातो वायुरुद्वहति। ऊर्ध्वं प्रापयति। श्रमजनितस्वेदापनयनाय। अथवा शीघ्ररथधावनजनितो वायुरंशुकं चालयतीत्यर्थः। कदेत्युच्यते। यद्यदाधिरथमधिकं रथमारुह्य सहस्रं सहस्रसंख्याकं गोसंघमजयत्तदा। यद्वा गोसहस्रमजयदस्या इति वा योज्यं। यद्योगाज्जयतेर्न निघातः। गविष्टौ गवामपहृतानामेषणे मुद्गलानी मुद्गलस्य स्त्री रथीरभूत्। सारथिरभवत्। छांदस आनुक्। इंद्रसेना स्तुत्या परितुष्टस्येंद्रस्य सेना। यद्वेंद्रस्य शत्रूणां दारयितुर्मुद्गलस्य सेनानीरूपा मुद्गलानी भरे संग्रामे कृतं संपादितं गोसंघं व्यचेत्। व्यचिनोत्। शत्रुभ्यः पृथक् कृतवती। चयतेर्लङि बहुलं छंदसीति विकरणस्य लुक् ॥

॥ अथ तृतीया ॥

अंतर्यच्छ जिघांसतो वज्रमिंद्राभिदासतः।

दासस्य वा मघवन्नार्यस्य वा सनुतर्यवया वधं ॥३॥

अंतः। यच्छ। जिघांसतः। वज्रं। इंद्र। अभिऽदासतः।

दासस्य। वा। मघऽवन्। आर्यस्य। वा। सनुतः। यवय। वधं ॥३॥

हे इंद्र जिघांसतो हंतुमिच्छतोऽभिदासतोऽभिद्रुह्यतः शत्रोर्वज्रमंतर्यच्छ। अंतर्गमय। तदेवाह। हे मघवन्धनवन्निंद्र दासस्य वोपक्षीणस्याल्पस्यार्यस्याभिगंतव्यस्य महतो वा शत्रोर्वधं। वज्रनामैतत्। हननसाधनं वज्रं सनुतः। अंतर्हितनामैतत्। अंतर्हितं गूढं प्रयुज्यमानं यवय। पृथक्कुरु ॥

॥ अथ चतुर्थी ॥

उन्नो ह्रदमपिबज्जर्हृषाणः कूटं स्म तृंहदभिमातिमेति ।
प्र मुष्कभारः श्रव इच्छमानोऽजिरं बाहू अभरत्सिषासन् ॥४॥

उन्नः । ह्रदं । अपिबत् । जर्हृषाणः । कूटं । स्म । तृंहत् । अभिऽमातिं । एति ।
प्र । मुष्कऽभारः । श्रवः । इच्छमानः । अजिरं । बाहू इति । अभरत् । सिसासन् ॥४॥

अत्र वृषभः स्तूयते । वृषभ उन्न उदकस्य ह्रदमगाधजलाशयमपिबज्जर्हृषाणः । अत्यंतं हृषितः सन् । तथा कूटं पर्वतशृंगं चौरैर्गोपिधानार्थं निहितं तृंहत्स्म । शृंगेण विहिंसितवान् । व्यदारयदित्यर्थः । तथा कृत्वाभिमातिमेति शत्रुं गच्छति हंतुं । पश्चान्मुष्कभारः प्रवृद्धमुष्कः । प्रवृद्धस्य वृषभस्य हि मुष्कवृद्धिर्भवति । तथा प्रवृद्धो वृषभः श्रवः । श्रूयत इति श्रवो यशः । इच्छमान इच्छन् अजिरं गमनशीलं शत्रुं बाहू बाहुभ्यां बाह्वोर्वा प्राभरत् । प्रहृतवान् । यद्वा । अजिरमिति क्षिप्रनाम । क्षिप्रं सिषासन् संभक्तुमिच्छन् बाहू प्राभरत् । प्रसारितवानित्यर्थः ॥

॥ अथ पंचमी ॥

न्यक्रंदयन्नुपयंत एनममेहयन्वृषभं मध्य आजेः ।
तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ॥५॥

नि । अक्रंदयन् । उपऽयंतः । एनं । अमेहयन् । वृषभं । मध्ये । आजेः ।
तेन । सूभर्वं । शतऽवत् । सहस्रं । गवां । मुद्गलः । प्रऽधने । जिगाय ॥५॥

मुद्गल आह । तेनेति तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यमेनं वृषभं न्यक्रंदयन् नितरां क्रंदनमकुर्वन् । के । उपयंतः समीपे गच्छंतो नरः । यथा प्रचंडेन क्रंदनेन शत्रवो भीताः पलायंते तथाकुर्वन् । किं । वृषभं वर्षकं सेक्तारमाजेः संग्रामस्य मध्येऽमेहयन् मूत्रपुरीषोत्सर्गं विश्रामार्थं कारितवंतः सूभर्वं । भर्वतिरत्तिकर्मा । शोभनचर्वणादिभक्षकं । तादृशो यथा भवति तथा कृत्वेत्यर्थः । यद्वैतद्गोसहस्रविशेषणं । तेनोक्तरूपेण वृषभेण सूभर्वं सुष्ठु यवसास्वादि शतवच्छतोपेतं गवां सहस्रं मुद्गल एतन्नामाहं प्रधने संग्रामे जिगाय । अजैषं ॥

॥ अथ षष्ठी ॥

ककर्दवे वृषभो युक्त आसीदवावचीत्सारथिरस्य केशी ।
दुधेर्युक्तस्य द्रवतः सहानस ऋच्छंति ष्मा निष्पदो मुद्गलानीं ॥ ६॥

ककर्दवे । वृषभः । युक्तः । आसीत् । अवावचीत् । सारथिः । अस्य । केशी ।
दुधेः । युक्तस्य । द्रवतः । सह । अनसा । ऋच्छंति । स्म । निःऽपदः । मुद्गलानीं ॥ ६॥

ककर्दवे हिंसनाय शत्रूणां वृषभो वर्षिता गौर्युक्त आसीत् । रथे संबद्धोऽभूत् । केशी केशवान् प्रग्रहवानस्य राज्ञो रथस्य वा सारथिर्मुद्गलानीत्यर्थः । सारथ्यभिप्रायेण केशीति पुँल्लिंगता । अवावचीत् । वृषभभयजनकं शत्रुभयजनकं वाक्रोशमकरोत् । अथवा केशी केशिनी सारथिरस्य । अमुमित्यर्थः । अमुं वृषभं शब्दमकारयत् । वच परिभाषण इत्यस्य केवलस्यांतर्णीतण्यर्थस्य यङ्लुगंतस्य लुङि रूपं । अथवास्य सारथिः सहायभूतः केशी प्रकृष्टकेशो वृषभोऽवावचीत् । भृशमशब्दयत् । एवंभूतस्य दुधेर्दुर्धरस्यानसा सह द्रवतः शीघ्रं शत्रुमध्ये रथेन सह धावतो वृषभस्य भयंकरशब्देन निष्पदो निर्गच्छंतो योद्धारो मुद्गलानीं मुद्गलस्य योषितं सारथिभूतां प्रत्यृच्छंति ष्म । अगच्छन्नित्यर्थः । पाघ्रेत्यादिनर्च्छादेशः ॥

॥ इत्यष्टमस्य पंचमे विंशो वर्गः ॥

॥ अथ सप्तमी ॥

उत प्रधिमुदहन्नस्य विद्वानुपायुनग्वंसगमत्र शिक्षन् ।
इंद्र उदावत्पतिमघ्न्यानामरंहत पद्याभिः ककुद्मान् ॥ ७॥

उत । प्रऽधिं । उत् । अहन् । अस्य । विद्वान् । उप । अयुनक् । वंसगं । अत्र । शिक्षन् ।
इंद्रः । उत् । आवत् । पतिं । अघ्न्यानां । अरंहत । पद्याभिः । ककुत्ऽमान् ॥ ७॥

उतापि च विद्वान् स मुद्गलोऽस्य रथस्य प्रधिं । प्रधिरक्षच्छिद्रकाष्ठः प्रांतकाष्ठः । स च रथावयवानामुपलक्षकः । रथावयवमुदहन् । उदगमयत् । रथं संननाहेत्यर्थः । तदनंतरमत्र रथे वंसगं वननीयगमनं वृषभं शिक्षन् शिक्षयन् रज्जुषु स्थापयन् उपायुनक् । रथसमीपे युगेऽयोजयत् । युजेर्लङि तिपो हल्ङ्यादिलोपः । एवं सतींद्रो देवोऽघ्न्यानामहंतव्यानां गवां पतिमुदावत् । उत्कृष्टमावत् । रक्षामकरोत् । पश्चात्ककुद्मान्वृषभः पद्याभिः सरणिभिररंहत । वेगेनागमत् । रहिर्गत्यर्थः ॥

॥ अथाष्टमी ॥

शुनमंष्ट्राव्यंचरत्कपर्दी वरत्रायां दार्वानह्यमानः ।
नृम्णानि कृण्वन्बहवे जनाय गाः पस्पशानस्तविषीरधत्त ॥८॥
शुनं । अष्ट्राऽवी । अचरत् । कपर्दी । वरत्रायाँ । दारु । आऽनह्यमानः ।
नृम्णानि । कृण्वन् । बहवे । जनाय । गाः । पस्पशानः । तविषीः । अधत्त ॥८॥

शुनमिति सुखनाम । सुखं यथा भवति तथा । अष्ट्रावी । अष्ट्रा प्रतोदः । तद्वान् । छांदसो विनिः । कपर्दी कपर्दवान् अचरत् । संचरति । किं कुर्वन् । वरत्रायां वध्यां दारु काष्ठं रथांगभूतमानह्यमानः सर्वतो बध्नन् । पुनः किं कुर्वन् । बहवे जनाय स्वपुत्रभृत्यादिलक्षणाय नृम्णानि धनानि शत्रुसंबंधीनि सुखानि वा कृण्वन् । गाः पस्पशानः स्पृशन् । स्पश बाधनस्पर्शनयोः । छांदसो लिटि कानच् । एवं कुर्वन् तविषीर्बलान्यधत्त । धत्ते । जयं प्राप्नोतीत्यर्थः ॥

॥ अथ नवमी ॥

इमं तं पश्य वृषभस्य युंजं काष्ठाया मध्ये द्रुघणं शयानं ।
येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु ॥९॥
इमं । तं । पश्य । वृषभस्य । युंजं । काष्ठायाः । मध्ये । द्रुऽघनं । शयानं ।
येन । जिगाय । शतऽवत् । सहस्रं । गवाँ । मुद्गलः । पृतनाज्येषु ॥९॥

कंचन सखायं सेनादिसहायाभावेन जयविषय उपहासं कुर्वाणं प्रति ब्रवीति । राजा द्रुघणेन वृषभेण चाजिं जिगायेत्युक्तवान् । पूर्वं वृषभो वर्णितः । अत्र द्रुघणो वर्ण्यते । हे सखे तमिमं द्रुघणं पश्य । कीदृशमिममित्युच्यते । युजेरसमास इति नुम् । युंजं । युज्यत इति युक् सखा । वृषभस्य सखिभूतं । वृषभो यावंतमर्थं साधयति तावंतमेव साधयंतमित्यर्थः । पुनः कीदृशं । काष्ठाया मध्ये । आज्यंतोऽपि काष्ठोच्यते । २.१५. । इति निरुक्तं । आज्यंतस्य मध्ये । संग्राम इत्यर्थः । तत्र शयानं । हंतव्यान्सर्वान्हत्वा सुखेन स्वपंतं निर्व्यापारत्वेन वर्तमानं । ईदृशं द्रुममयं घनं पश्येत्यर्थः । येन द्रुघणेन शतवच्छतोपेतं गवां सहस्रं पृतनाज्येषु संग्रामेषु जिगायाहमजैषं तमिमं पश्येति समन्वयः । जयतेर्लिट् । सन्लिँटोर्जेरित्यभ्यासादुत्तरस्य कुत्वं । मिपो णल् ॥

॥ अथ दशमी ॥

आरे अघा को न्वि१त्था ददर्श यं युंजंति तम्वा स्थापयंति ।
नास्मै तृणं नोदकमा भरंत्युत्तरो धुरो वहति प्रदेदिशत् ॥१०॥
आरे । अघा । कः । नु । इत्था । ददर्श । यं । युंजंति । तं । ऊं इति । आ । स्थापयंति ।
न । अस्मै । तृणं । न । उदकं । आ । भरंति । उत्ऽतरः । धुरः । वहति । प्रऽदेदिशत् ॥१०॥

य आरे समीप एवाघाघानि दुःखानि शत्रुरूपाणि करोति तं को नरो न्विदानीमित्थेत्थं ददर्श । पश्यति । किंच यं द्रुघणं युंजंति रथे तमु तमेवा स्थापयंति । आरोहयंतीत्यर्थः । अथवा यं रथे युंजंति तमेव प्रहरणार्थमास्थापयंति । उभयविधं कार्यमेकः करोतीत्यर्थः । किंचास्मै तृणं ना भरंति । नाहरंति । तथोदकं नाहरंति । हृग्रहोर्भ इति भत्वं । ईदृशो द्रुघण उत्तरो दक्षिणस्य वृषभस्य स्वयमुत्तरः सन् धुरो रथभारस्य रथधुरं वहति प्रदेदिशत् प्रकर्षेण जयं स्वामिने प्रदिशन् । शत्रूणां वा भयं प्रदिशन्वहति । दिश अतिसर्जन इत्यस्माद्यङ्लुगंताच्छतरि रूपं ॥

॥ अथैकादशी ॥

परिवृक्तेव पतिविद्यमानट् पीप्याना कूचक्रेणेव सिंचन् ।
एषैष्या चिद्रथ्या जयेम सुमंगलं सिनवदस्तु सातं ॥११॥
परिवृक्ताऽइव । पतिऽविद्यं । आनट् । पीप्याना । कूचक्रेणऽइव । सिंचन् ।
एषऽएष्या । चित् । रथ्या । जयेम । सुऽमंगलं । सिनंऽवत् । अस्तु । सातं ॥११॥

अत्र मुद्गलानी सारथिः स्तूयते । एषा मुद्गलानी परिवृक्तेव । वृजी वर्जने । परित्यक्ता पत्या पत्या वियुक्ता योषिदिव । सा यथा पतिविद्यं । विद्यो वेद्यो लंभनीयः । पतिश्चासौ विद्यश्च । पतिविद्यमानशे तद्वत्पतिविद्यमानट् । आनड् व्याप्तिकर्मा । नशेर्लुङि मंत्रे घसेति च्लेर्लुक् । छंदस्यपि दृश्यते । पा॰ ६.४.७३. । इत्यनजादीनामप्याडागमः । अश्नोतेर्लिटि वा णल्लोपश्छांदसः । तथा पतिसमीपं सारथित्वेनागत्य पीप्याना वर्धमाना भवति । किमिव । कूचक्रेणेव सिंचन् । कुः पृथिवी । तस्याश्चक्रो वलयः कूचक्रः । तेन वर्षणीयत्वेन निमित्तेन सिंचन् जलं वर्षन्मेघ इव । स यथांतरिक्षे स्वल्पमात्रोऽपि वर्षणसमये महान्भवति तद्वदियमपि शत्रुमध्ये शरधारा वर्षंती वर्धत इत्यर्थः । तथैषैष्या । एषितव्यो गोसंघ एषः । तमि-

च्छतीत्येषैषी । ईदृश्या तया रथ्या सारथिभूतया जयेम शत्रुभिरपहृतं गोसंघं । तस्याः सातं दत्तं संभजनं वा सुमंगलं शोभनमंगलवत् सिनवत् । सिनमन्नं । तद्वच्चास्तु । गोरूपान्नवच्च भवतु ॥

॥ अथ द्वादशी ॥

त्वं विश्व॑स्य॒ जग॑त॒श्चक्षु॑रिंद्रासि॒ चक्षु॑षः ।

वृषा॒ यदा॒जिं वृष॑णा॒ सिषा॑ससि चो॒दय॒न्वध्रि॑णा यु॒जा ॥१२॥

त्वं । विश्व॑स्य । जग॑तः । चक्षुः॑ । इं॒द्र॒ । अ॒सि॒ । चक्षु॑षः ।

वृषा॑ । यत् । आ॒जिं । वृष॑णा । सिसा॑ससि । चो॒दय॑न् । वध्रि॑णा । यु॒जा ॥१२॥

सूक्तस्य विकल्पेनेंद्रत्वादादाविंद्रस्य स्तुतत्वादंतेऽपींद्रः स्तूयते । हे इंद्र त्वं विश्वस्य सर्वस्य जगतश्चक्षुषश्चक्षुष्मतः पश्यतो वा जगतश्चक्षुरसि। प्रत्येकमुत्पत्तिविशिष्टचक्षुःसद्भावेऽपि सर्वस्य साधारणं चक्षुरसि। त्वया द्रष्टव्यानैहिकामुष्मिकपदार्थान्पश्यंतीत्यर्थः । त्वामेव हि यज्ञादिना लब्ध्वा पुरुषार्थान्साधयंति । यद्वा विश्वस्य जगतो यन्निजं चक्षुरस्ति तस्यापि चक्षुषस्त्वं चक्षुरसि । यद्यस्माद्वृषाभिमतवर्षकस्त्वमाजिं मुद्गलस्य मम संग्रामं वध्रिणा पाशेन युजा युजौ युक्तौ वृषणा वृषणौ वर्षकावश्वौ रथे योजयित्वा चोदयञ्शत्रुषु प्रेरयन् सिषाससि । आजिं संभक्तुमिच्छसि तस्माच्चक्षुरसि ॥

॥ इत्यष्टमस्य पंचम एकविंशो वर्गः ॥

आशुः शिशान इति त्रयोदशर्चं चतुर्थं सूक्तमिंद्रपुत्रस्याप्रतिरथनाम्न आर्षं । त्रयोदश्यनुष्टुप् शिष्टास्त्रिष्टुभः । बृहस्पते परि दीयेत्यस्या बृहस्पतिर्देवता । अमीषां चित्तमित्यस्या अप्वाख्या देवी देवता । शिष्टा ऐंद्र्यः । त्रयोदशी विकल्पेन मारुती । तथा चानुक्रांतं । आशुः सप्तोनैंद्रोऽप्रतिरथश्चतुर्थी बार्हस्पत्योपांत्याप्वादेव्यंत्यानुष्टुम्मारुती वेति ॥ साग्निचित्ये क्रतौ चित्यग्निषु प्रणीयमानेषु दक्षिणतो व्रजता ब्रह्मणैतत्सूक्तं जप्यं । तथा च सूचितं । दक्षिणतश्च व्रजञ्जपत्याशुः शिशान इति सूक्तं समाप्य । आ॰ ४.८. । इति च ॥ युद्धार्थं राज्ञः सन्नहनेऽनेन सूक्तेन राजेक्षितव्यः । सूचितं च । अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैः । आ॰ गृ॰ ३. १२. । इति ॥

॥ तत्र प्रथमा ॥

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनां ।
संक्रंदनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिंद्रः ॥१॥
आशुः । शिशानः । वृषभः । न । भीमः । घनाघनः । क्षोभणः । चर्षणीनां ।
संऽक्रंदनः । अनिऽमिषः । एकऽवीरः । शतं । सेनाः । अजयत् । साकं । इंद्रः ॥१॥

अयमिंद्र आशुः शीघ्रकारी व्यापको वा शिशानो निशितः । शत्रूणां भयजनक इत्यर्थः । क इव । वृषभो न भीमः । बिभेत्यस्मादिति भीमः । तादृशो वृषभ इव । स यथा तीक्ष्णाभ्यां शृंगाभ्यां भीमो भवति तद्वत् । अथवा । शिशानस्तीक्ष्णमतिः । व्यत्ययेनात्मनेपदं । वृषभो न भीमः । वृषभो यथा शृंगाभ्यां भयजनकस्तद्वच्छत्रूणां भयजनकश्च । घनाघनो घातकः शत्रूणां हंता । पचाद्यचि हंतेर्घश्चेति द्विर्वचनमभ्यासस्याडागमो घत्वं च धात्वभ्यासयोः । चर्षणीनां । चर्षणयो मनुष्याः । मनुष्याणां द्वेष्याणां क्षोभणः क्षोभयिता । संक्रंदनः सम्यक् क्रंदयिता । प्राणिनामाकर्षणेन प्रहारेण वा । अनिमिषश्चक्षुर्निमेषरहितः । सर्वदा स्वयज्ञगमनयुद्धादिकार्येष्वनलस इत्यर्थः । एकवीरः । वीरयत्यमित्रानिति वीरः । एकश्चासौ वीरश्च । अथवा । एक एव विक्रांतः । असाहाय्येन कार्यक्षम इत्यर्थः । ईदृशोऽयमिंद्रः शतं सेनाः साकं सहैकोद्योगेनैवाजयत् । जयति ॥

॥ अथ द्वितीया ॥

संक्रंदनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिंद्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥२॥
संऽक्रंदनेन । अनिऽमिषेण । जिष्णुना । युत्ऽकारेण । दुःऽच्यवनेन । धृष्णुना ।
तत् । इंद्रेण । जयत । तत् । सहध्वं । युधः । नरः । इषुऽहस्तेन । वृष्णा ॥२॥

अस्तु नामेंद्र उक्तविधः तथाप्यस्माकं किमिति चेत् आह । संक्रंदनेनानिमिषेण चोक्तलक्षणेन जिष्णुना जयशीलेन युत्कारेण । योधनं युत् । युद्धकारिणा । कर्मण्यण् । दुश्च्यवनेनान्यैरविचाल्येन । च्युङ् प्रुङ् गतौ । छंदसि गत्यर्थेभ्यः । पा० ३. ३.१२९. । इति युच् । धृष्णुना धर्षकेण । ईदृशेनेंद्रेण तद्युद्धं जयत । शत्रुबलं सहध्वं । अभिभवत । हे युधो योद्धारो हे नरो नेतारः । विभाषितं विशेषवचने बहुवच-

नमिति पूर्वस्याविद्यमानवत्त्वनिषेधादुत्तरं निहन्यते । पुनः कीदृशेनेंद्रेणेति । इषुहस्तेन वृष्णा वर्षित्रा च ॥

॥ अथ तृतीया ॥

स इषुहस्तैः स निषंगिभिर्वशी संस्रष्टा स युध इंद्रो गणेन ।
संसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥३॥

सः । इषुऽहस्तैः । सः । निषंगिऽभिः । वशी । संऽस्रष्टा । सः । युधः । इंद्रः । गणेन ।
संसृष्टऽजित् । सोमऽपाः । बाहुऽशर्धी । उग्रऽधन्वा । प्रतिऽहिताभिः । अस्ता ॥३॥

पूर्वमंत्र इंद्रेण जयतेत्युक्तं । अत्रेंद्रस्य जयसाधनसमर्थत्वं दर्शयति । स इंद्र इषुहस्तैर्भटैर्मरुदादिभिर्वशी वश्यैस्तद्वान् । तथा निषंगिभिर्युक्तः । निषंगः खड्गः । तद्वद्भिर्वशी । स चेंद्रो युधी युध्यमानः सन् । इगुपधलक्षणः कः । अथवा युधी युद्धहेतोर्गणेन शत्रुसंघेन सह संस्रष्टैकीभवनशीलः । यत एवंविधोऽतः संसृष्टजित् । ये परस्परैकमत्येन युद्धाय संसृष्टा भवंति तेषां जेता । तथा सोमपाः सोमस्य पाता । बाहुशर्धी । शर्धो बलं । बाह्वोर्बलं बाहुबलं । तद्वान् । मत्वर्थीय इनिः । यद्वा शृधु प्रसहने । बाहुभ्यां शर्धयत्यभिभवतीति बाहुशर्धी । सुप्यजातौ णिनिस्ताच्छील्य इति णिनिः । उग्रधन्वोद्यतधन्वा प्रतिहिताभिः शत्रुषु प्रेरिताभिरिषुभिरस्ता मारयिता । यत्रेषून्मुंचति तत्र वृथा न भवतीत्यर्थः । ईदृशेनेंद्रेण जयतेति संबंधः ॥

॥ अथ चतुर्थी ॥

बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः ।
प्रभंजन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानां ॥४॥

बृहस्पते । परि । दीय । रथेन । रक्षःऽहा । अमित्रान् । अपऽबाधमानः ।
प्रऽभंजन् । सेनाः । प्रऽमृणः । युधा । जयन् । अस्माकं । एधि । अविता । रथानां ॥४॥

हे बृहस्पते बृहतां पातः पालयितर्देव रथेन परि दीय । परिगच्छ । दीयतिर्गच्छतिकर्मा । आगत्य च रक्षोहा रक्षसां हंतामित्राञ्शत्रूनपबाधमानः सर्वतो नाशयन् तथा सेनाः शत्रुसंबंधिनीः प्रभंजन् प्रकर्षेण नाशयन् प्रमृणः प्रकर्षेण हिंसन् । मृण हिंसायां । इगुपधलक्षणः कः । केन हिंसन् । युधा युद्धेन । सावेकाच इति विभक्तेरुदात्तत्वं । जयन् एवं सर्वत्र जयं प्रतिपद्यमानः । ईदृशस्त्वमस्माकं रथानामवितेधि । भव ॥

॥ अथ पंचमी ॥

बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजा जैत्रमिंद्र रथमा तिष्ठ गोवित् ॥५॥

बलऽविज्ञायः । स्थविरः । प्रऽवीरः । सहस्वान् । वाजी । सहमानः । उग्रः ।
अभिऽवीरः । अभिऽसत्वा । सहःऽजा । जैत्रं । इंद्र । रथं । आ । तिष्ठ । गोऽवित् ॥५॥

सर्वस्य भूतस्य बलं विजानातीति बलविज्ञायः । यद्वा बलं ममायमिति सर्वैर्बलत्वेन विज्ञायत इति बलविज्ञायः । सर्वस्य बलभूत इत्यर्थः । स्थविरो महान् प्रवीरः प्रकर्षेण वीरः सहस्वान् पराभिभवसामर्थ्यवान् वाजी वेजनवान् अन्नवान्वा सहमानः शत्रूणामभिभवितोग्र उद्गूर्णबलोऽभिवीरः । अभिगता वीरा वीर्यवंतोऽनुचरा यस्य स तथोक्तः । अभिसत्वाभिगतसत्वा सहोजाः सहसो बलाज्जात एवं महानुभावस्त्वं हे इंद्र जैत्रं जयशीलं रथमा तिष्ठ । अस्मत्सहायार्थमारोढुमर्हसि । त्वं च गोविदुदकस्य स्तुतेर्वा लब्धा वेदिता वा ॥

॥ अथ षष्ठी ॥

गोत्रभिदं गोविदं वज्रबाहुं जयंतमज्म प्रमृणंतमोजसा ।
इमं सजाता अनु वीरयध्वमिंद्रं सखायो अनु सं रभध्वं ॥६॥

गोत्रऽभिदं । गोऽविदं । वज्रऽबाहुं । जयंतं । अज्म । प्रऽमृणंतं । ओजसा ।
इमं । सऽजाताः । अनु । वीरयध्वं । इंद्रं । सखायः । अनु । सं । रभध्वं ॥६॥

गोत्रभिदं । गा उदकानि त्रायंत इति गोत्रा मेघाः । यद्वा गौर्भूमिः । तां त्रायंत इति गोत्राः पर्वताः । तेषां भेत्तारं गोविदमुदकस्य लब्धारं वज्रबाहुं वज्रहस्तं । प्रहरणार्थेभ्य इति परनिपातः । जयंतं शत्रूनभिभवंतं जयनशीलमज्म गमनशीलं शत्रुबलमोजसा बलेन जयंतं । यद्वाज्माजिं जयंतमोजसा बलेन प्रमृणंतं शत्रूनभिभवंतं । ईदृशं महानुभावमिममिंद्रं हे सजाताः सहोत्पन्ना योद्धारो यूयमनु वीरयध्वं । एनमग्रतः कृत्वानु पश्चाद्वीरयध्वं । वीरकर्म युद्धं कुरुध्वं । शूर वीर विक्रांतौ । वीरशब्दात्तत्करोति तदाचष्ट इति णिच् । हे सखायः परस्परं सखिभूता यूयमिममिंद्रं संरभमाणमनु सं रभध्वं ॥

॥ इत्यष्टमस्य पंचमे द्वाविंशो वर्गः ॥

॥ अथ सप्तमी ॥

अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिंद्रः ।
दुश्च्यवनः पृतनाषाळयुध्योऽस्माकं सेना अवतु प्र युत्सु ॥७॥

अभि । गोत्राणि । सहसा । गाहमानः । अदयः । वीरः । शतऽमन्युः । इंद्रः ।
दुःऽच्यवनः । पृतनाषाट् । अयुध्यः । अस्माकं । सेनाः । अवतु । प्र । युत्ऽसु ॥७॥

अयमिंद्रो गोत्राण्यभ्राणि मेघान् सहसा बलेनाभि गाहमानः प्रविशन् अदयो निर्दयो वीरो विक्रांतः शतमन्युर्बहुयज्ञो बहुक्रोधो वा दुश्च्यवनोऽन्यैरचाल्यः। स्वयं पृतनाषाट् शत्रुसेनानामभिभविता। छंदसि सह इति ण्विः। सहेः साडः स इति मूर्धन्यादेशः। अयुध्यः संप्रहर्तुमशक्यः। युध संप्रहारे। छांदसः क्यप्। ईदृगिंद्रोऽस्माकं सेना युत्सु संग्रामेषु प्रावतु। प्रकर्षेण रक्षतु ॥

॥ अथाष्टमी ॥

इंद्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभंजतीनां जयंतीनां मरुतो यंत्वग्रं ॥८॥

इंद्रः । आसां । नेता । बृहस्पतिः । दक्षिणा । यज्ञः । पुरः । एतु । सोमः ।
देवऽसेनानां । अभिऽभंजतीनां । जयंतीनां । मरुतः । यंतु । अग्रं ॥८॥

आसामस्मत्सहायार्थमागतानामयमिंद्रो नेता नायकोऽस्तु। तथा तस्य बृहस्पतिः पुर एतु। एवं दक्षिणा यज्ञः सोमश्च पुर एत्विति प्रत्येकं संबंधः। तथा देवसेनानामभिभंजतीनामस्मदमित्रानाभिमुख्येन मर्दयंतीनां जयंतीनां। छंदसीति नाम उदात्तत्वं जयंतीनामित्यत्र बहुलवचनान्न भवति। तासामग्रं मरुतो यंतु। गच्छंतु ॥

॥ अथ नवमी ॥

इंद्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रं ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥९॥

इंद्रस्य । वृष्णः । वरुणस्य । राज्ञः । आदित्यानां । मरुतां । शर्धः । उग्रं ।
महाऽमनसां । भुवनऽच्यवानां । घोषः । देवानां । जयतां । उत् । अस्थात् ॥९॥

वृष्णो वर्षकस्येंद्रस्य राज्ञो वरुणस्यादित्यानां मरुतां चोग्रमुद्गूर्णं शर्धो बल-

मस्माकं भवत्विति शेषः। किंच महामनसामुदारमनसां भुवनच्यवानां च्यावयितॄणां देवानां घोषो जयशब्द उदस्थात्। उत्तिष्ठति। अनूर्ध्वकर्मत्वादात्मनेपदाभावः। पा॰ १.३.२४.॥

॥ अथ दशमी ॥

उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनांसि।

उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यंतु घोषाः ॥१०॥

उत्। हर्षय। मघऽवन्। आयुधानि। उत्। सत्वनां। मामकानां। मनांसि।

उत्। वृत्रऽहन्। वाजिनां। वाजिनानि। उत्। रथानां। जयतां। यंतु। घोषाः ॥१०॥

हे मघवन्निंद्रास्मदीयान्यायुधान्युद्धर्षय। उत्कृष्टं हर्षय। प्रहरणेषूद्युक्तानि भवंत्वित्यर्थः। मामकानामस्मदीयानां सत्वनां प्राणिनां सेवकानां मनांसि चोद्धर्षय। हे वृत्रहन्निंद्र वाजिनामश्वानां वाजिनानि वेगा उद्यंतु। तथा जयतां रथानां घोषा उद्यंतु॥

॥ अथैकादशी ॥

अस्माकमिंद्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयंतु।

अस्माकं वीरा उत्तरे भवंत्वस्माँ उ देवा अवता हवेषु ॥११॥

अस्माकं। इंद्रः। संऽऋतेषु। ध्वजेषु। अस्माकं। याः। इषवः। ताः। जयंतु।

अस्माकं। वीराः। उत्ऽतरे। भवंतु। अस्मान्। ऊं इति। देवाः। अवत। हवेषु ॥११॥

अस्माकं संबंधिष्वेव समृतेषु परसेनां संप्राप्तेषु ध्वजेषु ध्वजवत्सु सैनिकेष्विंद्रो रक्षिता भवतु। तथास्माकं या इषवः संति ता एव जयंतु शत्रून्। तथास्माकं वीरा भटा उत्तर उपरि भवंतु। हे देवा अस्माँ उ अस्मानेवावत रक्षत हवेषु संग्रामेषु॥

॥ अथ द्वादशी ॥

अमीषां चित्तं प्रतिलोभयंती गृहाणांगान्यप्वे परेहि।

अभि प्रेहि निर्दह हृत्सु शोकैरंधेनामित्रास्तमसा सचंतां ॥१२॥

अमीषां। चित्तं। प्रतिऽलोभयंती। गृहाण। अंगानि। अप्वे। परा। इहि।

अभि। प्र। इहि। निः। दह। हृत्ऽसु। शोकैः। अंधेन। अमित्राः। तमसा। सचंतां ॥१२॥

हे अप्वे पापाभिमानिनि देवते अमीषां योद्धॄणां शत्रूणां चित्तं प्रतिलोभयंती

विमोहयंत्यंगानि तेषामवयवाञ्छिरआदिकान्गृहाण। स्वीकुरु। अभि प्रेहि। अभिगच्छ। तेषां समीपं गत्वा च हृत्सु हृदयेषु शोकैर्निर्दह। नितरां भस्मीकुरु। तेऽमित्रा अस्मच्छत्रवोऽंधेन तमसा सचंतां। संगच्छंतां॥

॥ अथ त्रयोदशी ॥

प्रेता जयता नर इंद्रो वः शर्म यच्छतु।
उग्रा वः संतु बाहवोऽनाधृष्या यथासथ ॥१३॥
प्र। इत। जयत। नरः। इंद्रः। वः। शर्म। यच्छतु।
उग्राः। वः। संतु। बाहवः। अनाधृष्याः। यथा। असथ ॥१३॥

हे नरो नेतारः संग्रामस्य निर्वोढारो योद्धारः प्रेत। प्रकर्षेण गच्छत। गत्वा च जयत तान्प्रतिभटान्। तिङः परत्वात्तिङ्ङतिङ इति निघाताभावः। वो युष्माकमिंद्रः शर्म सुखं यच्छतु। प्रयच्छतु। वो बाहव उग्रा उद्गूर्णबलाः संतु। भवंतु। अनाधृष्या अन्यैरनभिभाव्या यथा यूयमसथ भविष्यथ तथा उग्राः संतु वो बाहवः॥

॥ इत्यष्टमस्य पंचमे त्रयोविंशो वर्गः ॥

असावीत्येकादशर्चं पंचमं सूक्तं। वैश्वामित्रस्याष्टकस्यार्षं त्रैष्टुभमैंद्रं। तथा चानुक्रांतं। असाव्येकादशाष्टको वैश्वामित्र इति। गतः सूक्तविनियोगः॥

॥ तत्र प्रथमा ॥

असावि सोमः पुरुहूत तुभ्यं हरिभ्यां यज्ञमुप याहि तूयं।
तुभ्यं गिरो विप्रवीरा इयाना दधन्विर इंद्र पिबा सुतस्य ॥१॥
असावि। सोमः। पुरुऽहूत। तुभ्यं। हरिऽभ्यां। यज्ञं। उप। याहि। तूयं।
तुभ्यं। गिरः। विप्रऽवीराः। इयानाः। दधन्विरे। इंद्र। पिब। सुतस्य ॥१॥

हे पुरुहूत बहुभिः स्तोतृभिराहूत तुभ्यं त्वदर्थं सोमोऽसावि। अभिषुतोऽभूत्। षुञ् अभिषव इत्यस्मात्कर्मणि लुङ्। अतो हरिभ्यां हरितवर्णाभ्यामश्वाभ्यां यज्ञमस्मदीयं तूयं तूर्णमुप याहि। उपागच्छ। तुभ्यं त्वदर्थं गिरोऽस्मदीयाः स्तुतयो विप्रवीराः। विप्रा मेधाविनो वीरा विशेषेण प्रेरयितारः प्रोद्गमयितारो यासां तास्तथोक्ताः। इयाना गमनशीला दधन्विरे। गम्यंते। अस्माभिर्युष्मत्प्रीणनाय प्राप्यंत इत्यर्थः॥ ईङ् गतौ। ताच्छीलिकः शानच्। छांदसो विकरणस्य लुक्।

धविर्गत्यर्थः । इदित्वान्नुम् । कर्मणि छांदसो लिट् ॥ यत एवमतः सुतस्याभिषुतस्यांशं सुतं सोमं वा पिब ॥

प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रेऽप्सु धूतस्येत्येषा याज्या । सूचितं च । अप्सु धूतस्य हरिवः पिबेहेति याज्या । आ० ६.४. । इति ॥

॥ सैषा सूक्ते द्वितीया ॥

अप्सु धूतस्य हरिवः पिबेह नृभिः सुतस्य जठरं पृणस्व ।
मिमिक्षुर्यमद्रय इंद्र तुभ्यं तेभिर्वर्धस्व मदमुक्थवाहः ॥२॥

अप्ऽसु । धूतस्य । हरिऽवः । पिब । इह । नृऽभिः । सुतस्य । जठरं । पृणस्व ।
मिमिक्षुः । यं । अद्रयः । इंद्र । तुभ्यं । तेभिः । वर्धस्व । मदं । उक्थऽवाहः ॥२॥

हे हरिवः । ऋक्सामे वा इंद्रस्य हरी इति श्रुतेः । स्तोत्रशस्त्राधारभूताभ्यामृक्सामाभ्यां हरिभ्यां तद्वन्निंद्र अप्स्वेकधानादिषूदकेषु धूतस्य कंपितस्य । अभिषुतस्येत्यर्थः । तथा नृभिः कर्मनेतृभिः कर्मनिर्वाहकैरध्वर्य्वादिभिः सुतस्याभिषुतस्य । उभयत्र क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानसंज्ञायां चतुर्थ्यर्थे बहुलं छंदसीति षष्ठी । ईदृशं सोममिहास्मिन्यज्ञे पिब । पीत्वा च जठरं स्वकीयं पृणस्व । पूरय च । चादिलोपे विभाषेति प्रथमा तिङ्विभक्तिर्न निहन्यते । यं सोममद्रयोऽभिषवग्रावाणो हे इंद्र तुभ्यं त्वदर्थं मिमिक्षुः सेक्तुमभिषोतुमैच्छन् । अभिषवमकुर्वन्नित्यर्थः । मिह सेचन इत्यस्य सनि लिङ्युसि रूपं । हे उक्थवाह उक्थैः शस्त्रैरुह्यमान तेभिस्तैर्मदं वर्धस्व ॥

द्वितीये पर्याये ब्राह्मणाच्छंसिनः प्रोग्रामित्येषा याज्या । सूचितं च । अश्वावति प्रथमः प्रोग्रां पीतिं वृष्ण इयर्मि सत्यामिति याज्या । आ० ६.४. । इति ॥

॥ सैषा तृतीया ॥

प्रोग्रां पीतिं वृष्ण इयर्मि सत्यां प्रयै सुतस्य हर्यश्व तुभ्यं ।
इंद्र धेनाभिरिह मादयस्व धीभिर्विश्वाभिः शच्या गृणानः ॥३॥

प्र । उग्रां । पीतिं । वृष्णे । इयर्मि । सत्यां । प्रऽयै । सुतस्य । हरिऽअश्व । तुभ्यं ।
इंद्र । धेनाभिः । इह । मादयस्व । धीभिः । विश्वाभिः । शच्या । गृणानः ॥३॥

हे हर्यश्वेंद्र वृष्णे वर्षकाय तुभ्यमुयामुद्गूर्णं सत्यां पीतिं सोमपानं प्रेयर्मि। प्रेरयामि। किमर्थं। प्रयै। प्रगमनाय। कस्य पीतिं। सुतस्याभिषुतस्य। अतो हे इंद्र शच्या शक्त्या कर्मणा वा युक्तो गृणानः स्तूयमानस्त्वं विश्वाभिः सर्वाभिर्धेनाभिः स्तुतिवाग्भिर्विश्वाभिर्धीभिः सर्वैः कर्मभिश्चेहास्मिन्यागे मादयस्व। तृप्यस्व। मद तृप्तियोगे। आत्मनेपदं॥

तृतीये पर्याये ब्राह्मणाच्छंसिनः शस्त्र ऊती शचीव इत्येषा याज्या॥ ऊती शचीवस्तव वीर्येणेति याज्या। आ॰ ६.४.। इति सूचितं॥

॥ सैषा चतुर्थी॥

ऊती शचीवस्तव वीर्येण वयो दधाना उशिजं ऋतज्ञाः।
प्रजावदिंद्र मनुषो दुरोणे तस्थुर्गृणंतः सधमाद्यासः॥४॥
ऊती। शचीऽवः। तव। वीर्येण। वयः। दधानाः। उशिजः। ऋतऽज्ञाः।
प्रजाऽवत्। इंद्र। मनुषः। दुरोणे। तस्थुः। गृणंतः। सधऽमाद्यासः॥४॥

हे शचीवः शक्तिवन्निंद्र तवोत्यूत्या रक्षणेन तव वीर्येण वयोऽन्नं प्रजावत्प्रजोपेतं दधाना धारयंत उशिजस्त्वामेव कामयमाना ऋतज्ञा ऋतं यज्ञमहर्जानंतः। अंगिरसः सत्त्रमनुतिष्ठंतः षष्ठेऽहनि प्रयोगमूढाः संतो नाभानेदिष्ठेन पारं गता यतोऽतस्तेषामृतज्ञत्वं। ईदृशोऽंगिरसो मनुषो मनुष्यस्य यजमानस्य दुरोणे यज्ञगृहे गृणंतस्त्वां स्तुवंतः सधमाद्यासः सह माद्यंतस्तस्थुः। तिष्ठंति। मादयतेः कृत्यल्युटो बहुलमिति वचनात्कर्तर्यचो यदिति यत्। छांदसः सधादेशः। अतो वयमपि तिष्ठेमेत्यर्थः॥

॥ अथ पंचमी॥

प्रणीतिभिष्टे हर्यश्व सुष्टोः सुषुम्नस्य पुरुरुचो जनासः।
मंहिष्ठामूतिं वितिरे दधानाः स्तोतारं इंद्र तव सूनृताभिः॥५॥
प्रनीतिऽभिः। ते। हरिऽअश्व। सुऽस्तोः। सुऽसुम्नस्य। पुरुऽरुचः। जनासः।
मंहिष्ठां। ऊतिं। विऽतिरे। दधानाः। स्तोतारः। इंद्र। तव। सूनृताभिः॥५॥

हे हर्यश्व हरितवर्णाश्वोपेतेंद्र सुष्टोः सुष्ठु स्तूयमानस्य सुषुम्नस्य सुसुखस्य सुधनस्य वा पुरुरुचो बहुदीप्तेस्ते तव प्रणीतिभिः प्रणयनैर्धनादिप्रदानैर्जनासो जनाः

स्तोतारः सूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः। एतत्प्रणीतिभिरित्यनेन समुच्चीयते। वितिरेऽन्येभ्योऽर्थिभ्यो वितरणाय मंहिष्ठामतिशयेन मंहनीयां तव संबंधिनीमूतिं रक्षां दधाना आसत इति शेषः ॥

॥ इत्यष्टमस्य पंचमे चतुर्विंशो वर्गः ॥

॥ अथ षष्ठी ॥

उप ब्रह्माणि हरिवो हरिभ्यां सोमस्य याहि पीतये सुतस्य।

इंद्र त्वा यज्ञः क्षममाणमानड् दाश्वाँ अस्यध्वरस्य प्रकेतः ॥६॥

उप। ब्रह्माणि। हरिऽवः। हरिऽभ्यां। सोमस्य। याहि। पीतये। सुतस्य।

इंद्र। त्वा। यज्ञः। क्षममाणं। आनट्। दाश्वान्। असि। अध्वरस्य। प्रऽकेतः ॥६॥

हे हरिवो हरिवन्निंद्र सुतस्याभिषुतस्य सोमस्य पीतये पानाय ब्रह्माणि परिवृढान्यस्मदीयानि कर्माणि स्तोत्राणि वोप याहि। उपागच्छ। केन साधनेनेति तदुच्यते। हरिभ्यामश्वाभ्यां। ताभ्यां युक्तेन रथेनेत्यर्थः। यद्वा हरिभ्यां हरिव इति संबंधनीयं। हे इंद्र क्षममाणं त्वा त्वां यज्ञः सोमयाग आनट्। व्याप्नोति। नशतेर्लुङि मंत्रे घसेति च्लेर्लुक्। छंदस्यपि दृश्यत इत्याडागमः। अश्नोतेरेव वा लिटि छांदसस्तत्प्रत्ययस्य लोपः। अश्नोतेश्चेति नुडागमः। अध्वरस्य यागस्य प्रकेतः प्रकर्षेण जानंस्त्वं दाश्वानसि। दातासि कर्मफलस्य ॥

॥ अथ सप्तमी ॥

सहस्रवाजमभिमातिषाहं सुतेरणं मघवानं सुवृक्तिं।

उप भूषंति गिरो अप्रतीतमिंद्रं नमस्या जरितुः पनंत ॥७॥

सहस्रऽवाजं। अभिमातिऽसहं। सुतेऽरणं। मघऽवानं। सुऽवृक्तिं।

उप। भूषंति। गिरः। अप्रतिऽइतं। इंद्रं। नमस्याः। जरितुः। पनंत ॥७॥

सहस्रवाजमपरिमितान्नमपरिमितबलं वाभिमातिषाहमभिमातीनां सर्वतो हिंसकानां शत्रूणामभिभवितारं सुतेरणमभिषुते सोमे रममाणं मघवानं धनवंतं सुवृक्तिं शोभनस्तुतिकमप्रतीतं युद्धेऽन्यैरप्रतिगतमिंद्रं गिरः स्तुतिरूपा वाच उप भूषंति। अलंकुर्वंति। तदेवाह। जरितुः स्तोतुर्नमस्याः स्तुतयः पनंत। स्तुवंति ॥

॥ अथाष्टमी ॥

सप्तापो देवीः सुरणा अमृक्ता याभिः सिंधुमतर इंद्र पूर्भित् ।
नवतिं स्रोत्या नव च स्रवंतीर्देवेभ्यो गातुं मनुषे च विंदः ॥८॥

सप्त । आपः । देवीः । सुऽरणाः । अमृक्ताः । याभिः । सिंधुं । अतरः । इंद्र । पूःऽभित् ।
नवतिं । स्रोत्याः । नव । च । स्रवंतीः । देवेभ्यः । गातुं । मनुषे । च । विंदः ॥८॥

हे इंद्र त्वदाज्ञया सप्तैतत्संख्याका आपोऽब्रूपा देवीर्देव्यो गंगाद्याः सुरणाः सुष्ठु रममाणाः शोभनशब्दा वा। रणिः शब्दार्थः। वशिरण्योरुपसंख्यानमिति भावेऽप्। बहुव्रीहावाद्युदात्तं द्यच् छंदसीत्युत्तरपदाद्युदात्तत्वं। अमृक्ता अहिंसिताः प्रवहंतीति शेषः। हे इंद्र पूर्भित् पुरां भेत्ता त्वं याभिर्गंगादिभिः सप्तनदीभिः सिंधुं समुद्रमतरः। प्रावर्धय इत्यर्थः। यद्वा सप्त सर्पणस्वभावा उक्तलक्षणा आपो देव्यस्त्वया सृष्टाः प्रवहंति याभिः सिंधुं नदीमतरः। किंच त्वं नवतिं नव च नवोत्तरनवतिसंख्याकाः स्रवंतीः प्रवहंतीः स्रोत्याः। नदीनामैतत्। नदीर्देवेभ्यः हविरर्थं मनुषे मनुष्याय भोगार्थं च गातुं गंतव्यं तासां मार्गं च विंदः। अलभथाः ॥

॥ अथ नवमी ॥

अपो महीरभिशस्तेरमुंचोऽजागरास्वधि देव एकः ।
इंद्र यास्त्वं वृत्रतूर्ये चकर्थ ताभिर्विश्वायुस्तन्वं पुपुष्याः ॥९॥

अपः । महीः । अभिऽशस्तेः । अमुंचः । अजागः । आसु । अधि । देवः । एकः ।
इंद्र । याः । त्वं । वृत्रऽतूर्ये । चकर्थ । ताभिः । विश्वऽआयुः । तन्वं । पुपुष्याः ॥९॥

हे इंद्र महीर्महतीरप उदकान्यभिशस्तेरभिशंसकाद्वृत्रादमुंचः। आसु मुक्तास्वप्सु देवस्त्वमेक एक एवासहायः सन् अध्यजागः। अप्रमत्तो भवसि। यद्वा। अधीति सप्तम्यर्थानुवादी। हे इंद्र त्वं या अपो वृत्रतूर्ये वृत्रहत्यायां चकर्थ करोषि ताभिरद्भिर्विश्वाभिः सर्वाभिस्त्वं तनुं स्वकीयं शरीरं पुपुष्याः। पोषयेः। पुष पुष्टावित्यस्य व्यत्ययेन श्नुः ॥

॥ अथ दशमी ॥

वीरेण्यः क्रतुरिंद्रः सुशस्तिरुतापि धेना पुरुहूतमीट्टे ।
आर्दयद्वृत्रमकृणोदु लोकं ससाहे शक्रः पृतना अभिष्टिः ॥१०॥

वीरेण्यः। क्रतुः। इंद्रः। सुऽशस्तिः। उत। अपि। धेना। पुरुऽहूतं। ईट्टे।

आर्दयत्। वृत्रं। अकृणोत्। ऊं इति। लोकं। ससहे। शक्रः। पृतनाः। अभिष्टिः॥१०॥

इंद्रो वीरेण्यो वीरैर्गंतव्योऽतिशयेन वीरो वा क्रतुः कर्मवान् सुशस्तिः शोभनस्तुतिकः। उतापि च। अपीत्यनर्थकः। अपि च धेना। वाग्नामैतत्। प्रीणयित्री स्तुतिवाक् पुरुहूतमिंद्रमीट्टे। स्तौति पूजयति वा। यत उक्तलक्षणोऽतः स्तौतीत्यर्थः। किंचायं वृत्रमावरकमेतन्नामकमसुरमार्दयत्। हतवानित्यर्थः। उ अपि च लोकं। लोक्यत इति लोकः प्रकाशः। तमकृणोत्। अकरोत्। आवरकमसुरं हत्वा प्रकाशं कृतवानित्यर्थः। न केवलं तमेकमेव अपि तु शक्र इंद्रोऽभिष्टिः शत्रूणामभिगंता पृतनाः शत्रुसेनाः ससाहे। अभ्यभवत्॥

॥ अथैकादशी ॥

शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ।

शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां॥११॥

शुनं। हुवेम। मघऽवानं। इंद्रं। अस्मिन्। भरे। नृऽतमं। वाजऽसातौ।

शृण्वंतं। उग्रं। ऊतये। समत्ऽसु। घ्नंतं। वृत्राणि। संऽजितं। धनानां॥११॥

पूर्वं व्याख्याता॥

॥ इत्यष्टमस्य पंचमे पंचविंशो वर्गः॥

कदेत्येकादशर्चं षष्ठं सूक्तं। ऐंद्रकुत्सपुत्रो नाम्ना दुर्मित्रो गुणतः सुमित्रः। यद्वा नाम्ना सुमित्रो गुणतो दुर्मित्र ऋषिः। हरी यस्य सुयुजा वज्रं यश्चक्र इति द्वे पिपीलिकमध्ये एकादशषट्कादशके उष्णिहौ। अंत्या त्रिष्टुप्। आद्या गायत्री वा। अक्षरव्यूहेन पक्षांतर उष्णिक्। शिष्टाभिः सर्वाभिः सप्तोष्णिहः। तथा चानुक्रांतं। कदा कौत्सो दुर्मित्रो नाम्ना सुमित्रो गुणतः सुमित्रो वा नाम्ना दुर्मित्रो गुणत औष्णिहं हरी वज्रं पिपीलिकमध्ये त्रिष्टुबंत्याद्या गायत्री वेति। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

कदा वसो स्तोत्रं हर्यत आव श्मशा रुधद्वाः।

दीर्घं सुतं वाताप्याय॥१॥

कदा । वसो इति॑ । स्तोत्रं॑ । हर्य॑ते । आ । अव॑ । श्मशा । रुधत् । वारिति॑ वाः ।
दीर्घं॑ । सुतं । वाताप्या॑य ॥१॥

हे वसो वासयितरिंद्र स्तोत्रमस्मत्कर्तृकं हर्यते कामयमानाय कामयमानं त्वां । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी । कदा कस्मिन्कालेऽव रुधत् । अवरोत्स्यति । अवरुध्य च कदा वाः । वारयिष्यति । तादृशः कालः कदास्माकं संभविष्यतीत्याशास्ते । रुधेर्लुङीरितो वेति च्लेरङादेशः । वारिति वृणोतेर्ण्यंताल्लुङि छांदसः शपो लुक् । छंदस्युभयथेति तिप आर्धधातुकत्वाण्णेरनिटीति लोपे हल्ङ्याब्भ्य इति तिलोपः । तत्र दृष्टांतः । अश्नुते क्षेत्रमिति श्मशा कुल्या । लुप्तोपममेतत् । यथा कुल्येतस्ततः उदकान्यवरुणद्धि अवरुध्य च वारयति तथेत्यर्थः । किमुद्दिश्यावरोध इति तत्राह । दीर्घं सवनत्रयरूपेणायतं सुतमभिषुतं सोमं प्रति । किमर्थमिति तदाह । वाताप्याय । वातेनाप्यतेऽधस्तान्निपात्यत इति वाताप्यमुदकं । तस्य प्रदानायेत्यर्थः ॥

॥ अथ द्वितीया ॥

हरी यस्य॑ सुयुजा विव्र॑ता वेरर्व॑तानु शेपा॑ ।
उभा रजी न केशिना पतिर्दन् ॥२॥

हरी इति॑ । यस्य॑ । सुऽयुजा॑ । विऽव्र॑ता । वेः । अर्व॑ता । अनु॑ । शेपा॑ ।
उभा । रजी इति॑ । न । केशिना॑ । पति॑ः । दन् ॥२॥

यस्येंद्रस्य हरी हरितवर्णावश्वौ सुयुजा सुष्ठु नियोज्यौ सुशिक्षितावित्यर्थः । विव्रता । व्रतमिति कर्मनाम । विशिष्टकर्माणाववर्वंतावरणकुशलौ शेपा शेपवंतौ । मत्वर्थो लुप्यते । प्रशस्तपुंस्त्वावित्यर्थः । उभोभौ रजी न रजसी द्यावापृथिव्याविव । यद्वा महांतौ रंजकौ सूर्याचंद्रमसाविव केशिनौ प्रकाशमानौ केशवंतौ वा । ईदृशावश्वौ हे इंद्र यस्य ते तव स्वभूतौ तयोः पतिः स्वामी त्वं दन् धनानि प्रयच्छन् अनु वेः । स्तुतशस्त्रादीन्यनुकामयस्व । दन्निति ददातेः शतरि छंदस्युभयथेत्यार्धधातुकत्वादातो लोप इटि चेत्याकारलोपः । अत एव श्लभावश्च ॥

॥ अथ तृतीया ॥

अप योरिंद्रः पापज आ मर्तो न शश्रमाणो बिभीवान् ।
शुभे यद्युयुजे तविषीवान् ॥३॥

अपं । योः । इंद्रः । पापंजे । आ । मर्तः । न । शश्रमाणः । बिभीवान् ।

शुभे । यत् । युयुजे । तविंषीऽवान् ॥ ३॥

य इंद्रः पापजे । आ इत्यनर्थकः । पापाज्जायत इति पापजो वृत्रः । तस्मिन्मर्तो न मनुष्य इव शश्रमाणस्तेन सह युद्धे श्राम्यन् बिभीवान् बिभ्यच्च भवति । श्राम्यतेश्छंदसि लिट् । तस्य व्यत्ययेन कानच् । स इंद्रो यद्यदा तविषीवान् मरुद्भिर्बलैर्बलवान्युयुजे युज्यते संपद्यते शुभे शोभार्थं तदानीमप योः । तस्य वृत्रस्यापयोरपयोजिता भवति ॥

॥ अथ चतुर्थी ॥

सचायोरिंद्रश्चर्कृष आँ उंपानसः संपर्यन् ।

नदयोर्विव्रंतयोः शूर इंद्रः ॥ ४॥

सचा । आयोः । इंद्रः । चर्कृषे । आ । उपानसः । सपर्यन् ।

नदयोः । विऽव्रंतयोः । शूरः । इंद्रः ॥ ४॥

आयोः । मनुष्यनामैतत् । मनुष्यस्य स्तोतुश्चर्कृषे पुनः पुनर्विलेखनाय । धनप्रदानायेत्यर्थः । सचा सह दातव्यैर्धनैः सहितः । यद्वायोः सचा सहायभूत उपानसोऽन उपागतवान् । अत्यादयः क्रांताद्यर्थे द्वितीययेति प्रादिसमासः । अनसंतान्नपुंसकात् । पा॰ ५. ४. १०३. १. । इति समासांतष्टच् । आरूढरथ इत्यर्थः । सपर्यन् धनैः स्तोतारं पूजयन् । यद्वा व्यत्ययेन कर्तृप्रत्ययः । स्तुतिभिर्हविर्भिश्च पूज्यमानः । उक्तगुणविशिष्टः सन् आ । आगच्छति । उपसर्गश्रुतेरुचितक्रियाध्याहारः । कीदृश इंद्रः । नदयोर्हेषाशब्दं कुर्वतोर्विव्रतयोर्विशिष्टकर्मणोरश्वयोर्नियंता शूरो विक्रांतः ॥

॥ अथ पंचमी ॥

अधि यस्तस्थौ केशंवंता व्यचंस्वंता न पुष्ट्यै ।

वनोति शिप्राभ्यां शिप्रिणीवान् ॥ ५॥

अधिं । यः । तस्थौ । केशंऽवंता । व्यचंस्वंता । न । पुष्ट्यै ।

वनोतिं । शिप्राभ्यां । शिप्रिणींऽवान् ॥ ५॥

य इंद्रः केशवंता केशिनौ व्यचस्वंता व्यचनवंतौ व्याप्तिमंतौ । नेत्यनर्थको निपातः । ईदृशावश्वौ पुष्ट्यै पोषणाय यजमानस्यात्मनो वाधि तस्यावधितिष्ठत्या-

रोहति। अधिशीङ्स्थासां कर्मेति कर्मणोऽधिकरणसंज्ञा। यद्वा। नेति चार्थे। तेन गुणौ समुच्चीयेते। प्रशस्तकेशौ व्यचस्वंतौ चेत्यर्थः। स शिप्राभ्यां हनूभ्यां शिप्रिणीवान् शिप्रवानिंद्रः। एको मत्वर्थीयोऽनुवादः। वनोति। सोमान्याचते। वनु याचने। यद्वा वनुष्यति हंतिकर्मा। शत्रून्हिनस्ति॥

॥ इत्यष्टमस्य पंचमे षड्विंशो वर्गः ॥

॥ अथ षष्ठी ॥

प्रास्तौदृष्वौजा ऋष्वेभिस्ततक्ष शूरः शवसा।
ऋभुर्न क्रतुभिर्मातरिश्वा ॥६॥

प्र। अस्तौत्। ऋष्वऽओजाः। ऋष्वेभिः। ततक्ष। शूरः। शवसा।
ऋभुः। न। क्रतुऽभिः। मातरिश्वा ॥६॥

ऋष्वौजा दर्शनीयबलो व्याप्तबलो वर्ष्वेभिर्दर्शनीयैर्मरुद्भिः सह प्रास्तौत्। स्तुत्यादिकं सम्यक् कृतमनेनेति प्रशंसति। यद्वा कर्मणि कर्तृप्रत्ययः। प्रकर्षेण स्तुतोऽभूत्। य इंद्रः शूरो विक्रांतो मातरिश्वा वृष्टेर्निर्मातर्यंतरिक्षे श्वसन्वर्तमानः सन् शवसा बलेन क्रतुभिः क्रियमाणैः कर्मभिः। यद्वा क्रतुरिति प्रज्ञानाम। बलेन प्रज्ञाभिश्च ततक्ष। वृत्रवधादिकं चकार। तत्र दृष्टांतः। ऋभुर्न। ऋभव इव। सुपां सुलुगिति जसः सुरादेशः। ऋभवो यथा कर्मभिः प्रज्ञाभिश्चानन्यसाधारणरथचमसादिनिर्माणमकुर्वन् तद्वदित्यर्थः॥

॥ अथ सप्तमी ॥

वज्रं यश्चक्रे सुहनाय दस्यवे हिरीमशो हिरीमान्।
अरुतहनुरद्भुतं न रजः ॥७॥

वज्रं। यः। चक्रे। सुऽहनाय। दस्यवे। हिरीमशः। हिरीमान्।
अरुतऽहनुः। अद्भुतं। न। रजः ॥७॥

य इंद्रः सुहनाय सुष्ठु हननीयाय दस्यव उपक्षपयित्रे शत्रवे तस्य वधाय वज्रं प्रहरणसाधनमायुधं चक्रे कृतवान् स त्वं वृजिना शिशीहीत्युत्तरसंबंधः। कीदृश इंद्रः। हिरीमशः। हरितश्मश्रुः। पृषोदरादिः। हिरीमान्। हरिताश्वो हरितवर्णो वा। अरुतहनुः। अबाधितहनुः। किमिव। अद्भुतं न रजः। अद्भुतमिति महन्नाम। रज इति रंजकमंतरिक्षमुच्यते। महदंतरिक्षमिव। तद्यथान्यैरबाध्यं भवति तद्वत्॥

॥ अथाष्टमी ॥

अवं नो वृजिना शिशीह्यृचा वनेमानृचः ।
नाब्रह्मा यज्ञ ऋधग्जोषति त्वे ॥८॥
अवं । नः । वृजिना । शिशीहि । ऋचा । वनेम । अनृचः ।
न । अब्रह्मा । यज्ञः । ऋधक् । जोषति । त्वे इति ॥८॥

हे इंद्र नोऽस्माकं वृजिना वृजिनानि वर्जनीयानि पापान्यव शिशीहि । अत्यर्थं तनूकुरु । विनाशयेत्यर्थः । वयं चर्चा स्तुत्या साधनेनानृचोऽस्तुतिकानयजमानान्वनेम । हिंसाम । अब्रह्मा । ब्रह्म परिवृढं स्तोत्रं । स्तुतिविरहितो यज्ञ ऋधक् सस्तुतिकाद्यज्ञात्पृथग्भूतस्त्वे त्वयि न जोषति । न सेवते त्वां । न प्रीणयतीत्यर्थः । जुषी प्रीतिसेवनयोः । व्यत्ययेन शप् परस्मैपदं च ॥

॥ अथ नवमी ॥

ऊर्ध्वा यत्ते चेतिनी भूद्यज्ञस्य धूर्षु सद्मन् ।
सजूर्नावं स्वयशसं सचायोः ॥९॥
ऊर्ध्वा । यत् । ते । चेतिनी । भूत् । यज्ञस्य । धूःऽसु । सद्मन् ।
सऽजूः । नावं । स्वऽयशसं । सचा । आयोः ॥९॥

हे इंद्र ते तव स्वभूता चेतिनी । चेताग्निचयं । यद्वा चेतिनी क्रिया । सा यद्यदोर्ध्वोन्नता प्रवृत्ता भूदभूत् । यद्योगादनिघातः । कुत्र स्थान इति । यज्ञस्य यागस्य सद्मन् सदने । केष्विति । धूर्षु कर्मणां वोढृषृत्विक्षु तदानीं सजूर्यजमानेन मरुद्भिर्वा सह प्रीयमाणो वा सन् आयोर्मनुषस्य यजमानस्य सचा सह तेन साकं स्वयशसं स्वायत्तयशस्कं यशःसाधनं नावं तरणसाधनं तरणिं । आरोहसीति शेषः । एकमेव रथं यजमान आरोहति स्वतरणार्थं तमेव तस्य साधकमारोहसीत्यर्थः । यद्वा नावं रथं स्वयशसमायोर्यजमानस्य सचा सहायभूतः सजूस्तेन सह प्रीयमाण आरोहेत्यर्थः ॥

॥ अथ दशमी ॥

श्रिये ते पृश्निरुपसेचनी भूच्छ्रिये दर्विररेपाः ।
यया स्वे पात्रे सिंचस उत् ॥१०॥

श्रिये। ते। पृश्निः। उपऽसेचनी। भूत्। श्रिये। दर्विः। अरेपाः।
यया। स्वे। पात्रे। सिंचसे। उत्॥१०॥

हे इंद्र ते तव संबंधिनः सोमस्य श्रिये श्रयणाय पृश्निर्गौः पृश्निवर्णोपसेचनी पयसो दोग्ध्री भूत्। भवतु। तथा दर्विररणिररेपा अपापा सती ते श्रिये हविषः श्रयणाय भूत्। भवतु। यया दर्व्या स्वे स्वकीये पात्रे पानसाधने मुख उत्सिंचस उपर्याकृष्य पिबसि। सा श्रिये भूदिति संबंधः॥

॥ अथैकादशी ॥

शतं वा यदसुर्य प्रति त्वा सुमित्र इत्यास्तौद्दुर्मित्र इत्यास्तौत्।
आवो यद्दस्युहत्ये कुत्सपुत्रं प्रावो यद्दस्युहत्ये कुत्सवत्सं॥११॥

शतं। वा। यत्। असुर्य। प्रति। त्वा। सुऽमित्रः। इत्था। अस्तौत्। दुःऽमित्रः। इत्था।
अस्तौत्।
आवः। यत्। दस्युऽहत्ये। कुत्सऽपुत्रं। प्र। आवः। यत्। दस्युऽहत्ये। कुत्सऽवत्सं॥११॥

हे असुर्य बलवन्निंद्र। अवध्यत्वेनासुरसंबंधित्वात्। त्वा त्वां प्रति शतं वा शतसंख्याकं धनं। वाशब्देनापरिमितं धनं वा। यद्यदा कामितवानित्यर्थः। यद्यदा च दस्युहत्ये दस्युहनने शत्रुवधे कुत्सपुत्रं दुर्मित्रमावो रक्षितवानसि। तथा कुत्सवत्सं कुत्सपुत्रं प्रावः प्रकर्षेण रक्षितवानसि। अव रक्षणादौ। लङ्याडजादीनामित्याडागमः। पादादित्वादनिघातः। पुनरुक्तिरादरार्थं। तदानीं सुमित्रो नाम्नेत्थमस्तौत्। तथा दुर्मित्रो गुणत इत्थमस्तौत्। तद्विपरीतं वा द्रष्टव्यं। सुमित्रो नाम्ना दुर्मित्रो गुणत इति कात्यायनेन तथोक्तेः। स इत्थेत्थमनेन कृतप्रकारेणास्तौत्। अस्तावीत्। इत्यास्तौदिति द्विरुक्तिः स्तुतिसमाप्त्यर्थं॥

॥ इत्यष्टमस्य पंचमे सप्तविंशो वर्गः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्येऽष्टमाष्टके पंचमोऽध्यायः॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥
अष्टमे पंचमाध्यायं व्याख्याय श्रुतिकोविदः।
सायणार्यस्ततोऽध्यायं षष्ठं च व्याचिकीर्षति ॥

तत्रोभा उ नूनमित्येकादशर्चमाद्यं सूक्तं। अनुवाकापेक्षया सप्तमं सूक्तं। त्रैष्टुभमश्विदैवत्यं। कश्यपपुत्रो भूतांशो नामर्षिः। तथा चानुक्रम्यते। उभौ भूतांशः काश्यप आश्विनमिति ॥ अग्नोर्यामेऽच्छावाकातिरिक्तोक्थ एतत्सूक्तं। सूचितं च। उभा उ नूनं देव्या होतारा प्रथमा पुरोहितेति परिधानीया। आ० ९.११.। इति ॥

॥ तत्र प्रथमा ॥

उभा उं नूनं तदिदर्थयेथे वि तन्वाथे धियो वस्त्रापसेव।
सध्रीचीना यातवे प्रेमजीगः सुदिनेव पृक्ष आ तंसयेथे ॥१॥

उभौ। ऊं इति। नूनं। तत्। इत्। अर्थयेथे इति। वि। तन्वाथे इति। धियः। वस्त्रा। अपसाऽइव।
सध्रीचीना। यातवे। प्र। ईं। अजीगरिति। सुदिनाऽइव। पृक्षः। आ। तंसयेथे इति ॥१॥

हे अश्विनावुभौ युवां नूनमिदानीं तदिदस्माभिर्दीयमानं हविः क्रियमाणं स्तोत्रमेवार्थयेथे। प्रार्थयथः ॥ अर्थ याच्ञायां। चौरादिकः। अनुदात्तेत्। उः पूरणः ॥ संप्रार्थ्य च धियः कर्माणि स्तुतीर्वा वि तन्वाथे। विस्तारयथः। तनु विस्तारे। तानादिकः। तत्र दृष्टांतः। अपसेव। अपस्विनौ कुविंदौ यथा वस्त्रा वस्त्राणि विस्तारयतः ॥ अपःशब्दान्मत्वर्थीयो विनिः। तस्य बहुलं छंदसीति लुक्। प्रातिपदिकस्वरेणांतोदात्तः। उभयत्र सुप आकारः ॥ ईमयं यजमानः सध्रीचीना सध्रीचीनौ सहांचनौ युवां ॥ सहपूर्वादंचतेः क्विनि सहस्य सध्रिरिति सध्र्यादेशः। विभाषांचेरदिक्स्त्रियामिति खः। सुप आजादेशः ॥ तौ यातवे। तुमर्थे तवेन्प्रत्ययः। अभिमतप्राप्त्यर्थं प्राजीगः। प्रकर्षेण स्तौति। यद्वा युवां प्रति स्तुतीरुद्गिरति ॥ गॄ शब्दे। गॄ निगरणे वा। एताभ्यां लुङि बहुलं छंदसीति विकरणस्य श्लुः। बहुलं छंदसीत्यभ्यासस्येत्वं। दीर्घश्छांदसः। गुणे कृते हल्ङ्यादिना तिपो लोपः ॥ किंच सुदिनेव सुदिनेष्वन्नानि यथालंकुर्वंति। यद्वा सुदिना सुदिनौ। अहोरात्रयोः प्रवर्त-

त्वेन तद्वंतौ सूर्याचंद्रमसौ स्वरश्मिभिर्यथान्नान्यलंकुरुतस्तद्वद्युवां पृक्षः। अन्न-नामैतत्। भोक्तृभिः संपृच्यंत इति पृक्षोऽन्नानि। आ तंसयेथे। समंतादलंकुरुथः। तसि भूष अलंकारे। तौदादिकः॥

॥ अथ द्वितीया ॥

उष्टारेव फर्वरेषु श्रयेथे प्रायोगेव श्वात्र्या शासुरेथः।

दूतेव हि ष्ठो यशसा जनेषु माप स्थातं महिषेवावपानात् ॥२॥

उष्टाराऽइव। फर्वरेषु। श्रयेथे इति। प्रायोगाऽइव। श्वात्र्या। शासुः। आ। इथः।

दूताऽइव। हि। स्थः। यशसा। जनेषु। मा। अप। स्थातं। महिषाऽइव। अवऽपानात् ॥२॥

उष्टारेव। उष्टः कामयतौ गंतव्यं देशमित्युष्टारौ प्रासंगस्य वोढारावनड्वाहा-विव। वश कांतावित्यस्मात्तृचि छांदसं संप्रसारणमिडभावश्च। तौ यथा संपूर्ण-घासेषु संचरतस्तद्वत्फर्वरेषु स्तुतिभिर्हविर्भिश्च पूरयितृषु जनेषु श्रयेथे। तत्स्वीक-रणार्थमाश्रयथः। फर्वतिः पूरणार्थः। अस्मादौणादिको रन्प्रत्ययः। प्रायोगेव प्रयोक्तव्यावनड्वाहाविव। प्रपूर्वाद्युजेः कर्मणि घञ्युपसर्गस्य दीर्घः। थाथादिस्व-रेणांतोदात्तः। तौ यथा श्वात्र्या श्वात्र्यौ। श्वु क्षिप्रमतनं श्वात्रं। तत्र साधू भवतः। तद्वत्। यद्वा युद्धार्थं प्रयोक्तव्यावश्वाविव श्वात्र्यौ। श्वात्रमिति धननाम। तत्र भवौ। धनस्य साधकावित्यर्थः। तौ युवां शासुः शंसितुः स्तोतुः स्तुतिं प्रत्येथः। आगच्छथः। इण् गतौ। आदादिकः। दूतेव दूताविव यथा राज्ञः प्रियतमौ दूतौ जनपदेषु यशस्विनौ भवतस्तद्वज्जनेषु स्तोतृषु यशसा यशस्विनौ स्थो हि। भवथः खलु। अस्तेर्लेटि रूपं। हियोगादनिघातः। महिषेव महिषाविव यथा श्रांतौ महिषा-ववपानात्। पीयतेऽस्मिन्निति पानं ह्रदादि। अधिकरणे ल्युट्। पानमेवावपानं। संनिकृष्टात्पानादपगच्छतस्तद्वद्युवामस्मदीयाद्धविषः स्तोत्राच्च माप स्थातं। माप-क्रम्य तिष्ठतं। तिष्ठतेर्लुङि गातिस्थेति सिचो लुक्। न माङ्योग इत्यडभावः॥

॥ अथ तृतीया ॥

साकंयुजा शकुनस्येव पक्षा पश्वेव चित्रा यजुरा गमिष्टं।

अग्निरिव देवयोर्दीदिवांसा परिज्मानेव यजथः पुरुत्रा ॥३॥

साकंऽयुजा। शकुनस्यऽइव। पक्षा। पश्वाऽइव। चित्रा। यजुः। आ। गमिष्टं।

अग्निःऽइव। देवऽयोः। दीदिऽवांसा। परिज्मानाऽइव। यजथः। पुरुऽत्रा ॥३॥

शकुनस्येव पक्षिण इव। यथा पक्षिणः पक्षा पक्षौ संहत्य वर्तमानौ तद्वत्साकंयुजा साकंयुजौ सहावियुज्य वर्तमानौ भवथः। युजेः सत्सूद्विषेत्यादिना क्विप्। पश्वेव पशू इव। सुप आकारः। तौ यथा चायनीयौ तद्वच्चित्रा चित्रौ चायनीयौ युवां यजुर्यजनावस्मदीयावा गमिष्टं। आगच्छतं। यजेरौणादिको भाव उसिन्प्रत्ययः। गमिष्टं। गमेर्लेटि सिब्बहुलं लेटीति सिप्। सिप आर्धधातुकत्वाद्गमेरिट् परस्मैपदेषु। पा॰ ७.२.५८.। इतीडागमः। देवयोर्देवानिच्छतो यजमानस्य यज्ञेऽग्निरिवाग्निर्यथा हविर्भिः स्तुतिभिश्च दीप्यते तद्वद्दीदिवांसा दीदिवांसौ स्तुतिभिर्दीप्तौ भवथः। दीव्यतेः क्वसौ वस्वेकाजादिति नियमादिडभावः। वलि लोपे तुजादित्वादभ्यासस्य दीर्घः। परिज्मानेव परिज्मानाविव। परितोऽजतो गच्छतः कर्मकरणार्थमिति परिज्मानावध्वर्यू इव स्थितौ युवां पुरुत्रा बहुषु देशेषु यजथः। देवान्पूजयथः। अश्विनौ हि देवानामध्वर्यू इत्याम्नानात्। यद्वा परिज्मानेव परितो गंतारौ पुरो वा पश्चाद्वा तौ यथा बहुषु देशेषु यजथः संगच्छमानौ भवथः। यज देवपूजासंगतिकरणदानेषु। पुरुत्रा। देवमनुष्येत्यादिना त्राप्रत्ययः॥

॥ अथ चतुर्थी ॥

आपी वो॑ अ॒स्मे पि॒तरे॑व पु॒त्रोग्रेव॑ रु॒चा नृ॒पती॑व तु॒र्यै।
इ॒र्येव॑ पु॒ष्ट्यै कि॒रणे॑व भु॒ज्यै श्रु॒ष्टीवा॑नेव॒ हव॒मा ग॑मिष्टं ॥४॥

आ॒पी इति॑। वः॒। अ॒स्मे इति॑। पि॒तरा॑ऽइव। पु॒त्रा। उ॒ग्राऽइ॑व। रु॒चा। नृ॒पती॑ इवेति॑ नृ॒पती॑ऽइव। तु॒र्यै।
इ॒र्या॑ऽइव। पु॒ष्ट्यै। कि॒रणा॑ऽइव। भु॒ज्यै। श्रु॒ष्टीवा॑ना॑ऽइव। हव॑म्। आ। ग॒मि॒ष्टं॒ ॥४॥

अस्मे अस्माकं वो युवां। पूजायां बहुवचनं। आपी प्राप्तौ बंधुभूतौ भवथः। पितरेव पितराविव। यथाच पितरौ प्रति पुत्रा पुत्रौ बंधुभूतौ भवतस्तद्वत्। यद्वा। पुत्रा। षष्ठ्या आकारः। पुत्राणां पितरौ बंधू। तथोग्रेवोग्राविव। यथोग्रौ स्वतेजसोद्गूर्णौ। अग्न्यादित्यौ यथा रुचा रोचमानौ भवतस्तद्वत्। रुचा दीप्त्या युक्तौ। रोचतेर्भावे क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं। यद्वा रुचा रोचमानौ भवथः। रोचतेरिगुपधलक्षणः कः। सुप आकारः। नृपतीव यथा नृणां पालयितारौ राजानौ संभ्रमयुक्तायै सेनायै रक्षकत्वेन भवतस्तद्वत्तुर्यै कर्मार्थं त्वरमाणायै संभ्रमवत्यै जनतायै युवामभीष्टदातृत्वेन भवथः। तुर त्वरणे। इगुपधात्किदितीन्प्रत्ययः। कृदिकारादक्तिन इति ङीष्। उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं।

इर्येव। इर्याविव। इराान्नं। तत्र भवौ। भावार्थे यत्। अन्नवंतावाढ्यौ स्वजनपरितोषणाय भवतः। तद्वद्युवां पुष्ट्यै धनादिदानेनास्माकं परितोषणाय भवथः। किरणेव किरणाविव। यथाग्न्यादित्यकिरणौ सर्वेषां प्रकाशनादिद्वारेण भोगाय भवतस्तद्वद्भुज्यौ स्तोतॄणां परिभोगाय भवथः। श्रुष्टीवानेव श्रुष्टिवंताविव। श्रुष्टीति क्षिप्रनाम। मत्वर्थीयो वनिप्। तद्वंतावश्वौ यथा लक्ष्यं देशं प्रति शीघ्रं गच्छतस्तद्वत्। यद्वा श्रुष्टीवानेव। श्रुष्टीति सुखनाम। तद्वंतौ पुरुषौ यथा क्रीडार्थमागच्छतस्तद्वद्युवां हवमस्मदीयमाह्वानं प्रत्या गमिष्टं। आगच्छतं। हवं। भावेऽनुपसर्गस्येति ह्वयतेरप् संप्रसारणं च ॥

॥ अथ पंचमी ॥

वंसंगेव पूषर्या शिंबाता मित्रेव ऋता शतरा शातपंता।
वाजेवोच्चा वयसा घर्म्येष्ठा मेषेवेषा सपर्या३ पुरीषा ॥५॥

वंसंगाऽइव। पूषर्या। शिंबाता। मित्राऽइव। ऋता। शतरा। शातपंता।
वाजाऽइव। उच्चा। वयसा। घर्म्येऽस्था। मेषाऽइव। इषा। सपर्या। पुरीषा ॥५॥

वंसगेव वंसगाविव वननीयगमनौ वृषभाविव। तौ यथा पूषर्या पूषर्यौ पूषणे भवौ। पुष्टावयवावित्यर्थः। तद्वद्युवां स्फीतांगावयवौ। पुष पुष्टौ। अस्मादौणादिको भावेऽरन्प्रत्ययः। तदंताद्भावे छंदसीति यत्। तित्स्वरितं। तथा शिंबाता शिंबातौ। सुखनामैतत्। शिंबेन दुःखानां तनूकरणेन हेतुनातितं प्राप्तमिति। शिञ् निशाने। अस्माच्छिंबमिति बाहुलकाद्वप्रत्ययो मुक् च निपात्यते। अततेः कर्मणि घञ्। सुप आलादेशः। सुखकरौ भवथः। मित्रेव मित्राविव। मित्रशब्देन वरुणोऽप्युपलक्ष्यते। सहावस्थितमित्रावरुणाविवर्ततौ सत्यभूतौ तद्वद्यथार्थदर्शिनौ भवथः। तथा शतरा शतं शतसंख्याकानि बहूनि रायो धनानि ययोः संति तौ तथोक्तौ। सुपो डादेशः। यद्वा शतमनेकमिंद्रियप्रसादादि राति ददातीति शतरा सुखं। तेन तद्वंतौ। शातपंता शातपंतौ तीक्ष्णस्तुतिकौ। शातं तीक्ष्णं। पंतं। पनतेर्बाहुलकात्तन्। उ॰ ३.८६.। यद्वा शातपंता शातेन दुःखानां तनूकरणेन पन्यते स्तूयत इति शातपंतं सुखं। शो तनूकरणे। निष्ठा। पनतेस्तन्। तेन युवां सुखवंतौ भवथः। यद्यपि शिंबाता शतरा शातपंतेति त्रीण्यपि सुखनामानि तथापि कालत्रयेऽप्यश्विनोः सुखस्य विवक्षितत्वेन विषयभेदादपौनरुक्त्यं। वाजेव वाजाविव यथाश्वौ घासादिनोन्नतौ संपूर्णावयवौ तद्वद्वयसा हवीरूपेणान्नेन हेतुनोच्चैर्वर्तमानौ। पुष्टा-

वित्यर्थः । उच्चा । उच्चैःशब्दात्सुपो डादेशः । डित्त्वाट्टिलोपः । घर्म्येष्ठा घर्मस्थौ । घर्मे दीप्तमंतरिक्षं । तत्संबंधिनि देशे सूर्याचंद्रमसौ रूपेणावस्थितौ भवथः । सूर्याचंद्रमसाविति यास्कः । यद्वा घर्मे प्रवर्ग्ये भवं घर्म्यं हविः । तत्र देवतात्वेनावस्थितौ भवथः । तिष्ठतेरन्येभ्योऽपि दृश्यंत इति विच् । तत्पुरुषे कृति बहुलमिति पूर्वपदस्य सप्तम्या अलुक् । मेषेव मेषाविव । तौ यथान्नेन परिचरणीयौ तद्वद्युवामिषा हवीरूपेणान्नेन सपर्या सपर्यौ परिचरणीयौ भवथः । सपरशब्दः कंड्वादिः । सपर्यतिः परिचरणकर्मा । पुरीषा पुरीषौ धनादिदानेन स्तोतॄणां पोषयितारौ । यद्वा हविर्भिः पोषणीयौ भवथः । पुरीषं पृणातेः पोषयतेर्वेति यास्कः ॥

॥ इत्यष्टमस्य षष्ठे प्रथमो वर्गः ॥

॥ अथ षष्ठी ॥

सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥ ६ ॥

सृण्याऽइव । जर्भरी इति । तुर्फरीतू इति । नैतोशाऽइव । तुर्फरी इति । पर्फरीका ।
उदन्यजाऽइव । जेमना । मदेरू इति । ता । मे । जरायु । अजरं । मरायु ॥ ६ ॥

सृण्येव सृण्याविव । सृणिरंकुशः । तत्र साधुरिति यत् । अंकुशार्हौ मत्तगजाविव जर्भरी गात्रविनामं कुर्वंतौ । जभ जृभि गात्रविनामे । अस्मादौणादिकोऽरिप्रत्ययः । यद्वा सृण्येव । सृणिर्द्विविधा मत्तगजस्यैकत्रावस्थापयित्र्येका । अपरा बाधयित्री । सर्तेः किच्च । उ॰ ४.४९.१०४. । इत्यौणादिको निप्रत्ययः । कित्त्वादगुणः । कृदिकारादक्तिन इति ङीष् । सुप आकारः । उदात्तस्वरितयोर्यण इति स्वरितः । तादृश्यौ सृण्याविव जर्भरी भर्तारावेकत्रैवावस्थापकौ । तथा तुर्फरी तुर्फरीतारौ शत्रूणां हंतारौ । जर्भरी । भरतेर्यङ्लुगंतादौणादिक इप्रत्ययः । अभ्यासस्य जकारश्छांदसः । तृफ तृंफ हिंसायां । अस्मात्तृजंतस्य तुर्फरीतारावित्यस्य पृषोदरादित्वाद्वर्णविकारः । यद्वास्माद्बाहुलकादौणादिकोऽरीतुप्रत्ययः । उक्तं चात्र निरुक्ते । द्विविधा सृणिर्भवति भर्ता च हंता च तथाश्विनौ चापि भर्तारौ जर्भरी भर्तारावित्यर्थस्तुर्फरीतू हंतारावित्यादि । नि॰ १३.५. । नैतोशेव । नितोशतिर्वधकर्मा । नितोशयतीति नितोशः । तस्यापत्यं नैतोशः । ताविव तुर्फरी शत्रूणां हंतारौ । तृफतिर्हिंसार्थः । अस्मादौणादिकोऽरिप्रत्ययः । उक्तं च । पर्फरीका पर्फरीकौ शत्रूणां विदारयितारौ । ञिफला विशरणे । अस्मात्पर्फरीकादयश्च । उ॰ ४.२०. । इतीकप्रत्ययांतो निपात्यते । यद्वा

स्तोतृजनानां धनादिदानेन पूरयितारौ। पॄ पालनपूरणयोः। अस्मादीकनि पूर्ववत्सर्वं निपात्यते। पर्वतेः पूरणार्थाद्वा। उदन्यजेव। उदके भवमुदन्यं। पद्दन्नोमा इत्यादिनाशस्प्रभृतिष्वप्युदन्नादेशः। तत्र जाताविव निर्मलौ। कांतियुक्तावित्यर्थः। जेमना जेमनौ जयशीलौ। जयतेरन्येभ्योऽपि दृश्यंत इति मनिन्। दीर्घाभावश्छांदसः। मदेरू बलातिशयेन मत्तौ स्तुत्यौ वा। ता तौ पूर्वोक्तगुणावश्विनौ युवां मे मदीयं जरायु जरायुजमत एव मरायु मरणशीलं शरीरमजरं जरारहितं मरणधर्मरहितं कुरुतं। नञो जरमरमित्रमृता इति नञ उत्तरस्य जरशब्दस्याद्युदात्तत्वं॥

॥ अथ सप्तमी ॥

पज्रेव चर्चरं जारं मरायु क्षद्मेवार्थेषु तर्तरीथ उग्रा।

ऋभू नापत्खरमज्रा खरज्रुर्वायुर्न पर्फरत्क्षयद्रयीणां ॥७॥

पज्राऽइव। चर्चरं। जारं। मरायु। क्षद्मऽइव। अर्थेषु। तर्तरीथः। उग्रा।

ऋभू इति। न। आपत्। खरमज्रा। खरऽज्रुः। वायुः। न। पर्फरत्। क्षयत्। रयीणां॥७॥

हे उग्रोग्रावुद्गूर्णतेजस्कावश्विनौ पज्रेव पज्राविव प्रार्जितबलौ वीराविव स्थितौ। यद्वा पज्रेव। जि ज्रि अभिभवे। पादाभ्यामभिभवंतौ समर्थाविव स्थितौ युवां चर्चरं चरणशीलं जारं जरायुक्तमत एव मरायु मरणशीलं मदीयं शरीरमर्थेषु गंतव्येषु तरीतव्येष्वापदादिषु क्षद्मेव। उदकनामैतत्। उदकमिव तर्तरीथः। अत्यंतं तारयथः। तॄ प्लवनतरणयोः। यङ्लुगंताल्लटि छंदस्युभयथेति थस आर्धधातुकत्वेनेडागमः। वृत्तो वेति दीर्घः। ऋभू न। ऋभू इव। दार्ष्टांतिकसाम्यादत्र द्विवचनं। ऋभू यथा स्वनिर्मितो रथ आपत् तद्वत् खरमज्रा। खरं तीक्ष्णं। मज्जयितारौ शोधयितारौ। अत्यंतं शुद्धबलावित्यर्थः। टुमस्जो शुद्धौ। अस्मादौणादिको रप्रत्ययः। तादृशौ युवां खरज्रुस्तीक्ष्णगतिरतिशयेन वेगवानृभुभिर्दत्तो रथो युवामापत्। आप्नोत्। आप्लृ व्याप्तौ। लुङि लृदित्त्वाच्च्लेरङ्। स रथो वायुरिव पर्फरत्। सर्वत्रापूरयत्। सर्वत्र व्याप्तवानित्यर्थः। फर्व पूरणे। अस्माल्लेटि बहुलं छंदसीति शपः श्लुः। अभ्यासस्य रुगागमो वलोपश्च। लेटोऽडाटावित्यडागमः। ततः स रथो रयीणां धनानां धनानि क्षयत्। शत्रुभ्य आगमयत्। क्षि निवासगत्योः। अस्मादंतर्णीतण्यर्थाल्लेट्यडागमः। यद्वा। क्षयतिरैश्वर्यकर्मा। धनानामीष्टे। छांदसमनुदात्तत्वं॥

॥ अथाष्टमी ॥

घर्मेव मधु जठरे सनेरू भगेऽविता तुर्फरी फारिवारं ।
पतरेव चचरा चंद्रनिर्णिङ्मनऋंगा मनन्या३न जग्मी ॥८॥
घर्माऽइव। मधु। जठरे। सनेरू इति। भगेऽअविता। तुर्फरी इति। फारिवा। अरं।
पतराऽइव। चचरा। चंद्रऽनिर्निक्। मनःऽऋंगा। मनन्या। न। जग्मी इति ॥८॥

घर्मेव घर्माविव महावीराविव जठरे स्वोदरे मधु मधुनः। षष्ठ्या लुक्। घृतस्य सनेरू संभक्तारौ। वन षण संभक्तौ। अस्मादौणादिक एरुप्रत्ययः। भगेऽविता। भगो धनं। तद्विषयरक्षणयुक्तौ। अवतेर्भावे क्तः। तत्पुरुषे कृति बहुलमिति बहुलवचनाद्बहुव्रीहावप्यलुक्। यद्वा। अवतेस्तृजंतस्य सुपो डादेशः। स्वरस्तु छांदसः। अरमलं तुर्फरी शत्रूणां हिंसितारौ। अत एव फारिवा। फारिरायुधं। तद्वंतौ भवतः। स्फुरतिर्वधकर्मा। अस्मात्खिचि चिस्फुरोर्णावित्यात्वं। तदंतादिप्रत्ययः। सकारलोपश्छांदसः। छंदसीवनिपाविति मत्वर्थीयो वनिप्। सुपो डादेशः। पतरेव पतराविव पतनशीलौ पक्षिणाविव चचरा संचरंतौ चंद्रनिर्णिक्। निर्णिगिति रूपनाम। सुपो लुक्। चंद्रनिर्णिजौ चंद्रसदृशरूपयुक्तौ। यद्वा चंद्रमाह्लादिकं रूपं ययोस्तौ वर्तेते। मनऋंगा मनसा प्रसाधनं ययोस्तौ। ऋंजतिः प्रसाधनकर्मा। अस्माद्भावे घञ्। बहुव्रीहिस्वरः। मनन्या न मनन्यौ यथा। मनने साधू। स्तुत्यावित्यर्थः। मननशब्दात्तत्र साधुरिति यत्। तित्स्वरितं। तादृशाविव जग्मी यज्ञं प्रत्यागमनशीलौ भवतः। गमेरादृगमहन इति किन्प्रत्ययः ॥

॥ अथ नवमी ॥

बृहंतेव गंभरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः।
कर्णेव शासुरनु हि स्मराथोऽशेव नो भजतं चित्रमप्नः ॥९॥
बृहंताऽइव। गंभरेषु। प्रतिऽस्थां। पादाऽइव। गाधं। तरते। विदाथः।
कर्णाऽइव। शासुः। अनु। हि। स्मराथः। अंशाऽइव। नः। भजतं। चित्रं। अप्नः ॥९॥

बृहंतेव बृहंताविव प्रांशू पुरुषौ यथा गंभरेषु गहनेषु जलेषु प्रतिष्ठां विंदतस्तद्वद्गह्वरेषु गंभीरेषु दुष्प्रवेशेषु स्थानेषु प्रतिष्ठामवस्थितिमासदं युवां विदाथः। जानीथः। पादेव पादाविव यथा तरते। षष्ठ्यर्थे चतुर्थी। तरतः पुरुषस्य पादौ यथा गाधं

जलं वित्तस्तद्वद्युवां तार्येषु जलेषु गाधं विदाथः। जानीथः। विद ज्ञाने। लेट्यड्-डागमः। कर्णेव यथा कर्णावुक्तं शब्दं विदतुस्तद्वद्युवां शासुः शासितारं स्तुतिं कुर्वाणं जनमनु हि स्मराथः। अनुकूलं जानीथः खलु। स्मरतेर्लेट्यडागमः। हियोगादनिघातः। अधीगर्थदयेशां कर्मणीति शासुरित्यस्य षष्ठी। अंशेवांशाविव यथावयवौ तद्वत्तं यज्ञं भजेते तद्वद्युवां नोऽस्मदीयं चित्रं चायनीयमप्नः कर्म भजतं। आश्रयतं। अप्नः। आप्ऌ व्याप्तौ। अस्मादापः कर्माख्यायां ह्रस्वो नुट् च वा। उ॰ ४.२०७.। इत्यसुन् तत्संनियोगेन ह्रस्वो नुडागमश्च। नित्स्वरेणाद्युदात्तः॥

॥ अथ दशमी ॥

आरंगरेव मध्वेरयेथे सारघेव गवि नीचीनबारे।
कीनारेव स्वेदमासिष्विदाना क्षामेवोर्जा सूयवसात्सचेथे ॥१०॥

आरंगराऽइव। मधु। आ। ईरयेथे इति। सारघाऽइव। गवि। नीचीनऽबारे।
कीनाराऽइव। स्वेदं। आऽसिस्विदाना। क्षामऽइव। ऊर्जा। सुयवसऽअत्। सचेथे इति ॥१०॥

आरंगरेव। गॄ शब्दे। अस्माद्भाव ऋदोरप्। अरमलं पर्याप्तं गरः शब्दनं। तस्य संबंधिनौ। तस्येदमित्यण्। शब्दवंतौ मेघाविव यथा मधु जलं प्रेरयतस्तद्वद्युवामेरयेथे। प्रेरयथः। ईर प्रेरणे। चौरादिकः। सारघेव सारघाविव। सरघा मधुमक्षिका। सरघैव सारघा। प्रज्ञादित्वाण्। ते यथा नीचीनबारे नीचीनद्वारे मधुपुष्पे मधु प्रेरयतस्तद्वद्युवां नीचीनबारे न्यग्भूतद्वारे गवि गोरूधसि क्षीरं प्रक्षिपथः। कीनारेव कीनाराविव कुत्सितमनुष्यौ यथा स्विद्यमानौ भवतस्तद्वत्स्वेदं स्विद्यमानं जलमासिस्विदाना समंतात् स्वेदयंतौ प्रक्षारयंतौ भवथः। ञिष्विदा गात्रप्रक्षरणे। अनुदात्तेत्। तस्माच्छांदसे लिटि कानजादेशः। क्षामेव। क्षै जै षै क्षये। अस्मादातो मनिन्। ह्रस्वश्छांदसः। क्षामा क्षीणा गौः सुयवसात्। अदेः क्विप्। शोभनं यवसं घासादिकं भक्षयंती क्षीररूपेणान्नेन समवेता यथा भवति तद्वद्युवामूर्जा हवीरूपेणान्नेन सचेथे। संगच्छेथे। षच समवाये॥

॥ अथैकादशी ॥

ऋध्याम स्तोमं सनुयाम वाजमा नो मंत्रं सरथेहोप यातं।
यशो न पक्वं मधु गोष्वंतरा भूतांशो अश्विनोः काममप्राः ॥११॥

ऋध्याम॑। स्तोम॑म्। स॒नु॒याम॑। वाज॑म्। आ। नः॒। मंत्र॑म्। स॒ऽरथा॑। इ॒ह। उप॑। या॒त॒म्।
यशः॑। न। प॒क्वम्। मधु॑। गोषु॑। अ॒न्तः। आ। भू॒तऽअ॑ंशः। अ॒श्विनोः॑। काम॑म्। अ॒प्राः॒॥११॥

हे अश्विनौ वयं स्तोमं त्रिवृत्पंचदशादिकमृध्याम। ऋध्यास्म। वर्धयेम। ऋधु वृद्धौ। अस्मादाशीर्लिङि किदाशिषीति यासुटः कित्त्वं। वाजं हविर्लक्षणमन्नं युवाभ्यां सनुयाम। प्रयच्छेम। षणु दाने। तानादिकः। विधिलिङ्। वाक्यभेदादनिघातः। तस्माद्युवां सरथा सरथौ समानरथावेकमेव रथमारूढौ संताविहास्मिन्कर्मणि नोऽस्मदीयं मंत्रं मननीयं स्तोत्रमुप यातं। उपागच्छतं। गोष्वंतर्गोरूधस्यवस्थितं पक्वं परिणतमत एव मधु मधुरं यशो न। यश इत्यन्ननाम। नश्चार्थे। क्षीराज्यादिलक्षणं महावीरेऽवनीयमानमन्नं चापेक्ष्यागच्छतमिति संबंधः। एवमुक्तप्रकारेण भूतांश एतन्नामर्षिरश्विनोः काममभिलाषमात्मीयाभिः स्तुतिभिरप्राः। आपूरयत्। संपूर्णमकार्षीदित्यर्थः। प्रा पूरणे। आदादिकः। व्यत्ययेन मध्यमः॥ अत्राश्विने सूक्ते सर्वाण्यपि पदानि दुर्व्युत्पादान्यस्माभिर्दिङ्मात्रं प्रदर्शितानि। एवं निरुक्तव्याकरणादिभिरर्थविशेषे बुद्धिमद्भिरूनेयानि॥

॥ इत्यष्टमस्य षष्ठे द्वितीयो वर्गः॥

आविरित्येकादशर्चमष्टमं सूक्तं। दिव्यो नामांगिरस ऋषिः। प्रजापतेः सुता दक्षिणा सा वर्षिका। शतधारं वायुमिति चतुर्थी जगती शिष्टा दश त्रिष्टुभः। अनेन सूक्तेनर्त्विग्भ्यो दीयमाना दक्षिणा तद्दातारो यजमाना वा स्तूयंते। अतः सैव देवता। तथा चानुक्रांतं। आविर्दिव्यो दक्षिणा वा प्राजापत्या दक्षिणां तद्दातॄन्वास्तौच्चतुर्थी जगतीति। गतो विनियोगः॥

॥ तत्र प्रथमा॥

आविर॑भून्महि॒ माघो॑नमेषां॒ विश्वं॑ जी॒वं तम॑सो॒ निर॑मोचि।
महि॒ ज्योतिः॑ पि॒तृभि॑र्द॒त्तमागा॑दु॒रुः पंथा॑ दक्षि॑णाया अदर्शि॥१॥

आविः। अ॒भू॒त्। महि॑। माघो॑नम्। ए॒षा॒म्। विश्व॑म्। जी॒वम्। तम॑सः। निः। अ॒मो॒चि॒।
महि॑। ज्योतिः॑। पि॒तृऽभिः॑। द॒त्तम्। आ। अ॒गा॒त्। उ॒रुः। पंथाः॑। दक्षि॑णायाः। अ॒द॒र्शि॒॥१॥

इदं सूक्तं दक्षिणाया वा तद्दातॄणां वा स्तावकं। दक्षिणा तु यागांगं यागस्तु सायंकाले न क्रियते। न सायमस्ति देवया अजुष्टं। ऋग्वे॰५.७७.२.। इत्यादिश्रवणात्। तस्मादह्न्येव कर्तव्यः। अहश्च सूर्योदयात्पश्चाद्भवतीति सूक्तादौ सूर्यो-

दयोऽभिधीयते। माघोनं। मघवेंद्रः। इंद्रश्च सूर्यश्चेचमासे तयोरिंद्र इति स्मरणात्। तस्य संबंधि। तस्येदमित्यण्। अतद्धिते प्रत्यये संप्रसारणमभिहितं। पा॰ ६.४.१३३.। सर्वविधीनां छंदसि विकल्पितत्वादत्र तद्धितेऽपि संप्रसारणं। सूर्यात्मकस्येंद्रस्य स्वभूतं महि महत्तेज एषां यजमानानां यागसिद्ध्यर्थमाविरभूत्। प्रकाशितमुन्नत-मभूत्। तत्र विश्वं सर्वं जीवं स्थावरजंगमात्मकं जगत्तमसः सकाशान्निरमोचि। निर्मुक्तमभूत्। मुंचतेः कर्मलुङि चिणि रूपं। अथानंतरं पितृभिर्येत्पितृभिर्देवैर्दत्तं नो हविषामागमनाय तन्महि महज्ज्योतिः सूर्याख्यमागात्। आगच्छति। पश्चाद्द-क्षिणाया यागांगभूताया उरुर्महान् पंथा मार्गोऽदर्शि। सर्वैर्यजमानैर्दृष्टोऽभूत्। सर्वे यागं कृत्वर्त्विग्भ्यो दक्षिणां दत्तवंत इत्यर्थः ॥

॥ अथ द्वितीया ॥

उच्चा दिवि दक्षिणावंतो अस्थुर्ये अश्वदाः सह ते सूर्येण।
हिरण्यदा अमृतत्वं भजंते वासोदाः सोम प्र तिरंत आयुः ॥२॥

उच्चा। दिवि। दक्षिणाऽवंतः। अस्थुः। ये। अश्वऽदाः। सह। ते। सूर्येण।
हिरण्यऽदाः। अमृतऽत्वं। भजंते। वासःऽदाः। सोम। प्र। तिरंते। आयुः ॥२॥

दक्षिणावंतो दक्षिणाया देयत्वेन तद्वंतो दक्षिणां दत्तवंतो यजमाना उच्चोच्चैः स्थानैः स्थिते दिवि द्युलोकेऽस्थुः। तिष्ठंति। सामान्येनोक्त्वा दातृविशेषाणां फल-विशेषमाह। अश्वदा अश्वानां दातारो ये यजमानास्ते सूर्येण सर्वस्य स्वस्वकर्मणि प्रेरकेणादित्येन सह तिष्ठंति। ये हिरण्यदा हिरण्यदातारस्तेऽमृतत्वममरणधर्मत्वं देवत्वं भजंते। अमृतं वै हिरण्यमित्याम्नानात्। तथा सौम्यं वै वास इति श्रव-णात्सोम एव संबोध्यते। हे सोम वासोदास्त्वद्देवत्यवस्त्राणां दातारो ये संति ते त्वया सह तिष्ठंतीति शेषः। एते सर्वे आयुर्जीवनं प्रतिरंते। प्रवर्धयंति। प्रपूर्वस्ति-रतिर्वृद्ध्यर्थः ॥

॥ अथ तृतीया ॥

दैवी पूर्तिर्दक्षिणा देवयज्या न कवारिभ्यो नहि ते पृणंति।
अथा नरः प्रयतदक्षिणासोऽवद्यभिया बहवः पृणंति ॥३॥

दैवी। पूर्तिः। दक्षिणा। देवऽयज्या। न। कवऽअरिभ्यः। नहि। ते। पृणंति।
अथ। नरः। प्रयतऽदक्षिणासः। अवद्यऽभिया। बहवः। पृणंति ॥३॥

दैवी देवसंबंधिनी । देवाद्यञञावित्यञ् । तादृशी पूर्तिः पालिनी तत्साध्या देवयज्या । छंदसि निष्टर्क्येति निपातितः । देवयागः । तदंगभूता दक्षिणा न कवारिभ्यः । ऋ गतावित्यस्याच इः । उ॰ ४.१३८. । इतीप्रत्ययः । कुत्सितगंतृभ्यो ऽयष्टृभ्यः । एतेभ्यो न भवति । यद्वा देवानां स्वभूता पूर्तिः पूरयित्री स्तुतिभिर्हविर्भिश्च तादृशी देवयज्या दक्षिणा च तेभ्यो न भवतः । तत्र हेतुरुच्यते । हि यस्मात्ते कुत्सितगंतारो न हि पृणंति देवान्स्तुतिभिर्हविर्भिर्वा न प्रीणयंति । पृण प्रीणने । तौदादिकः । अथेति प्रश्ने । यष्टॄणां देवयागादि कथं भवति । उच्यते । नरः कर्मणां नेतारः । अत एव प्रयतदक्षिणासो दत्तदक्षिणा बहवो यजमाना अवद्यभिया । अवद्यपण्यवर्या गर्ह्येति यत्प्रत्ययांतत्वेन निपातितः । पापभिया । विहिताननुष्ठाने दुरितानि भवंति खलु । तस्मात्तद्भीत्या पृणंति । देवान्प्रीणयंति । तस्माद्यष्टॄणां देवपालनयागदक्षिणा भवतीत्यर्थः ॥

॥ अथ चतुर्थी ॥

शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते हविः ।
ये पृणंति प्र च यच्छंति संगमे ते दक्षिणां दुहते सप्तमातरं ॥४॥

शतऽधारं । वायुं । अर्कं । स्वःऽविदं । नृऽचक्षसः । ते । अभि । चक्षते । हविः ।
ये । पृणंति । प्र । च । यच्छंति । संऽगमे । ते । दक्षिणां । दुहते । सप्तऽमातरं ॥४॥

शतधारं बहुधारेणोपेतं वायुमेतन्नामकं स्वर्विदं स्वर्गस्य लंभकं सर्वस्य वेत्तारं वार्कमर्चनीयमादित्यं च तौ नृचक्षसो नृणां द्रष्टॄनन्यानिंद्रादीन्देवांश्चाभिलक्ष्य ते यजमाना हविश्चक्षते । तेभ्यो दातुं पश्यंति जानंति । चष्टेर्लटि रूपं । किंच । संगमे । कर्मकरणार्थमृत्विजोऽत्र संगच्छंत इति संगमः । ग्रहवृदृनिश्चिगमश्चेत्यधिकरणेऽप् । थाथादिस्वरः । तस्मिन्यज्ञे ये यष्टारः पृणंति स्तुतिभिः प्रीणयंति । ये च तेभ्यो देवेभ्यो हवींषि प्रयच्छंति । उभयत्र यद्योगादनिघातः । ते सप्तमातरं सप्तसंख्याका मातृभूता अग्निष्टोमादिसंस्था यस्यां भवंति सा । यद्वा । सप्तसंख्याका मातरः कर्मणां निर्मातारः कर्तारो होत्रादयः संति । तादृशीं दक्षिणां दुहते । ऋत्विग्भ्यो दुहंति ॥

॥ अथ पंचमी ॥

दक्षिणावान्प्रथमो हूत एति दक्षिणावान्ग्रामणीरग्रमेति ।
तमेव मन्ये नृपतिं जनानां यः प्रथमो दक्षिणामाविवाय ॥५॥

दक्षिणाऽवान्। प्रथमः। हूतः। एति। दक्षिणाऽवान्। ग्रामऽनीः। अग्रं। एति।
तं। एव। मन्ये। नृऽपतिं। जनानां। यः। प्रथमः। दक्षिणां। आऽविवाय॥५॥

हूत ऋत्विग्भिराहूतो दक्षिणावान्यजमानः प्रथमः सर्वेषां मुख्यः सन् एति। सर्वत्र गच्छति। तथा ग्रामणीर्ग्रामाणां नेता धनवत्त्वेन तेषां कर्ता दक्षिणावान् सोऽग्रमेति। सर्वेषां प्रथममेव गच्छति। तमेव नृपतिं नराणां पालयितारमिति मन्य ऋषिरहमवबुध्ये प्रथमो यो जनानां दक्षिणामाविवाय। आगमयति। वी गत्यादिषु। तस्य लिटि रूपं। तं नृपतिमिति मन्ये। यद्वा जनानामिति पूर्ववाक्यशेषः। जनानां मध्ये तमेव मनुष्याणां स्वामिनमिति मन्ये॥

॥ इत्यष्टमस्य षष्ठे तृतीयो वर्गः ॥

॥ अथ षष्ठी ॥

तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासं।
स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध॥६॥

तं। एव। ऋषिं। तं। ऊं इति। ब्रह्माणं। आहुः। यज्ञऽन्यं। सामऽगां। उक्थऽशसं।
सः। शुक्रस्य। तन्वः। वेद। तिस्रः। यः। प्रथमः। दक्षिणया। रराध॥६॥

तमेव दक्षिणाया दातारमृषिमतींद्रियार्थदर्शिनं। यद्वा। सत्कर्मकरणेनर्षिमित्याहुः। तथा तमु तमेव ब्रह्माणमाहुः। किंच। तमेव यज्ञन्यं। णीञ् प्रापणे। क्विप्। उदात्तस्वरितयोर्यण इत्यमः स्वरितत्वं। यज्ञस्य नेतारमध्वर्युमित्याहुः। तमेव सामगां साम्नां गातारमिति। तथोक्थशासं। शंसु स्तुतौ। क्विप्। संहितायां दीर्घश्छांदसः। उक्थशसं शस्त्राणां शंसितारं होतारमिति ब्रुवंति। दक्षिणादानेन तत्कर्मणः परिग्रहात्। स दाता शुक्रस्य दीप्यमानस्य ज्योतिषस्तिस्रस्तन्वोऽग्निवैद्युतादित्यात्मकानि त्रीणि शरीराणि वेद। जानाति। यद्वा शुक्रस्य दीप्तस्याग्नेराहवनीयाद्यात्मकानि त्रीणि शरीराणि जानाति। प्रथमो मुख्यो यो जनो दक्षिणया रराध। ऋत्विगादीनाराधयति। राध संसिद्धौ। लिटि रूपं। लित्स्वरः॥

॥ अथ सप्तमी ॥

दक्षिणाश्वं दक्षिणा गां ददाति दक्षिणा चंद्रमुत यद्धिरण्यं।
दक्षिणान्नं वनुते यो न आत्मा दक्षिणां वर्म कृणुते विजानन्॥७॥

दक्षिणा। अश्वं। दक्षिणा। गां। ददाति। दक्षिणा। चंद्रं। उत। यत्। हिरण्यं।
दक्षिणा। अन्नं। वनुते। यः। नः। आत्मा। दक्षिणां। वर्म। कृणुते। विऽजानन्॥७॥

दक्षिणा तद्दातृभ्योऽश्वं ददाति। तथा गां च ददाति तथा चंद्रं सुवर्णं ददाति। उतापि च यद्धिरण्यं रजतमस्ति। रजतं हिरण्यमित्याम्नानात्। तच्च ददाति। किंच सान्नं वनुते ददाति। वनोतिरत्र दानार्थः। तस्मान्नोऽस्मदीयो य आत्मास्ति स वर्म विजानन् कवचं यथायुधानां निवारकं तद्वद्दुरितानि वारयतीति कवचमिति विजानन् दक्षिणामश्वादिदानशीलां कृणुते। ऋत्विग्भ्यः करोति॥

॥ अथाष्टमी ॥

न भोजा मम्रुर्न न्यर्थमीयुर्न रिष्यंति न व्यथंते ह भोजाः।
इदं यद्विश्वं भुवनं स्वश्चैतत्सर्वं दक्षिणैभ्यो ददाति॥८॥

न। भोजाः। मम्रुः। न। निऽअर्थं। ईयुः। न। रिष्यंति। न। व्यथंते। ह। भोजाः।
इदं। यत्। विश्वं। भुवनं। स्वरिति स्वः। च। एतत्। सर्वं। दक्षिणा। एभ्यः। ददाति॥८॥

भोजा भोजयितारो धनादिदानेन दातारो न मम्रुः। न म्रियंते। देवत्वं भजंत इत्यर्थः। अत एव न्यर्थं। ऋ गतौ। उषिकुषिगर्तिभ्यस्थन्। समासे थाथादिस्वरः। निकृष्टां गतिं नेयुः। न प्राप्नुवंति। इण् गतौ। लिटि दीर्घ इणः कितीति दीर्घः। तथा न रिष्यंति। कैश्चिदप्यहिंसिता भवंति। कर्मणि व्यत्ययेन परस्मैपदं। अत एव भोजा दातारो न व्यथंते। परस्परं न भीता न बाधिता वा भवंति। ह प्रसिद्धौ। किंच। इदं परिदृश्यमानं विश्वं सर्वं भुवनं यद्भूतजातमस्ति स्वश्च स्वर्गलोकश्च एतत्सर्वं दक्षिणा स्वयमेभ्यस्तद्दातृभ्यो ददाति। प्रयच्छति॥

॥ अथ नवमी ॥

भोजा जिग्युः सुरभिं योनिमग्रे भोजा जिग्युर्वध्वं या सुवासाः।
भोजा जिग्युरंतःपेयं सुराया भोजा जिग्युर्ये अहूताः प्रयंति॥९॥

भोजाः। जिग्युः। सुरभिं। योनिं। अग्रे। भोजाः। जिग्युः। वध्वं। या। सुऽवासाः।
भोजाः। जिग्युः। अंतःऽपेयं। सुरायाः। भोजाः। जिग्युः। ये। अहूताः। प्रऽयंति॥९॥

भोजा दातारोऽग्रे प्रथममेव योनिं क्षीरादेरुत्पत्तिस्थानं सुरभिं धेनुं जिग्युः। शत्रुभ्यो जितवंतः। जि जये। लिटि सन्लिँटोर्जेरित्यभ्यासादुत्तरस्य कवर्गादेशः।

तथा भोजा दातारो वध्वं वधूं नवोढां स्त्रीं जिग्युः। या स्त्री सुवासाः शोभनवासा अस्ति तां जिग्युः। किंच। भोजाः शत्रूणां सुराया अंतःपेयमंतःपानं जिग्युः। पा पाने। भावे यत्। ईद्यतीतीत्वं। आर्धधातुकलक्षणो गुणः। कृदुत्तरपदप्रकृतिस्वरत्वं। ये शत्रवोऽहूता बलाधिक्येनाहूयमानाः प्रयंति प्रमुखमागच्छंति तान्भोजा दक्षिणाया दातारो जना जिग्युः। जयंति ॥

॥ अथ दशमी ॥

भोजायाश्वं सं मृजंत्याशुं भोजायास्ते कन्या३ शुंभमाना।
भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रं ॥ १० ॥

भोजाय। अश्वं। सं। मृजंति। आशुं। भोजाय। आस्ते। कन्या। शुंभमाना।
भोजस्य। इदं। पुष्करिणीऽइव। वेश्म। परिऽकृतं। देवमानाऽइव। चित्रं ॥ १० ॥

भोजाय दात्र आशुं शीघ्रगामिनमश्वं सं मृजंति। परिचारकाः सम्यगलंकुर्वंति। मृजू शौचालंकारयोः। तथा कन्या। कन्यात्वेनात्र संनिकर्षादभिनवं यौवनं लक्ष्यते। अभिनवयौवना शुंभमाना शरीरावयवशोभया वस्त्राद्यलंकारशोभया च शोभमाना स्त्री तस्मै भोजाय दात्र आस्ते। तथा भोजस्य दातुरेव हृदयाह्लादकरं वेश्म गृहं भवति। कीदृशं। पुष्करिणीव। पुष्कराणि पद्मानि यस्याः संतीति पुष्करिणी सरसी। सा यथा पद्महंसादिभिरलंकृता भवति तद्वत् परिष्कृतं वितानादिभिरलंकृतं। परिपूर्वस्य करोतेर्भूषणार्थे संहितायां सुडागमः। परिनिविभ्य इति सुटः षत्वं। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। तथा देवमानेव। सुपां सुलुगिति प्रथमैकवचनस्याकारः। देवमानमिव चित्रं मनोहरं वेश्म तस्य भवति ॥

॥ अथैकादशी ॥

भोजमश्वाः सुष्ठुवाहो वहंति सुवृद्रथो वर्तते दक्षिणायाः।
भोजं देवासोऽवता भरेषु भोजः शत्रून्त्समनीकेषु जेता ॥ ११ ॥

भोजं। अश्वाः। सुष्ठुऽवाहः। वहंति। सुऽवृत्। रथः। वर्तते। दक्षिणायाः।
भोजं। देवासः। अवत। भरेषु। भोजः। शत्रून्। संऽअनीकेषु। जेता ॥ ११ ॥

सुष्ठुवाहः। वह प्रापणे। वहश्चेति ण्विप्रत्ययः। शोभनवहनसमर्था अश्वा भोजं दातारं वहंति। लक्ष्यं देशं प्रापयंति। ततो दक्षिणाया दातुर्यजमानस्य सुवृत्।

सुष्ठु चक्रादिवर्तनं यस्य सोऽश्वादिसहितो रथो वर्तते। अथ प्रत्यक्षः। हे देवासो हे देवा इंद्रादयो भरेषु। भ्रियत आहवनीयादिरूपेणाग्निरत्रेति भरा यज्ञाः। यद्वा। भृ भर्त्सने। भृणंति भर्त्सयंति योद्धारोऽत्रेति भराः संग्रामाः। तेषु भोजं दातारमवत। रक्षत। ततो युष्माभिः पालितो भोजो धनादिदानेन जनानां भोजयिता सन् समनीकेषु संग्रामेषु शत्रूञ्जेता जयशीलो भवति। जि जये। ताच्छीलिकस्तृन्। अत एव न लोकाव्ययेति शत्रुशब्दस्य षष्ठीप्रतिषेधः॥

॥ इत्यष्टमस्य षष्ठे चतुर्थो वर्गः ॥

किमिच्छंतीत्येकादशर्चं नवमं सूक्तं त्रैष्टुभं। ऐंद्रपुरोहितस्य बृहस्पतेर्गोषु वलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेंद्रेण गवामन्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च महतीं नदीमुत्तीर्य वलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श। अथ तस्मिन्नंतरे पणय इदं वृत्तांतमवगच्छंत एनां मित्रीकर्तुं संवादमकुर्वन्। तत्र प्रथमातृतीयाद्या अयुजोऽंत्यावर्जिताः पणीनां वाक्यानि। अत्र त ऋषयः। सरमा देवता। द्वितीयाचतुर्थ्याद्या युज एकादशी च षट् सरमाया वाक्यानि। अतस्तासु सर्षिः पणयो देवता। तथा चानुक्रांतं। किमिच्छंती पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनीमिंद्रेण प्रहितामयुग्भिः पणयो मित्रीयंतः प्रोचुः स तान्युग्मांत्याभिरनिच्छंती प्रत्याचष्ट इति। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

किमिच्छंती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः।
कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि ॥१॥

किं। इच्छंती। सरमा। प्र। इदं। आनट्। दूरे। हि। अध्वा। जगुरिः। पराचैः।
का। अस्मेऽहितिः। का। परिऽतक्म्या। आसीत्। कथं। रसायाः। अतरः। पयांसि॥१॥

अनयागच्छंतीं सरमां दृष्ट्वा पणयो वदंति। सरमा सरणशीलैतन्नामिका देवशूनी किमिच्छंती किं प्रार्थयमाना सतीदमस्मदीयं स्थानं प्रानट्। प्राप्नोत्। आङ्पूर्वो नशिर्व्याप्तिकर्मा। तस्य लुङि मंत्रे घसेत्यादिना च्लेर्लुक्। छंदस्यपि दृश्यत इत्याडागमः। पराचैः। परांचि पराङ्मुखान्यावृत्तिवर्जितानि यानि गमनानि तैर्जगुरिरुद्गूर्णः। महता प्रयत्नेनापि गंतुं न शक्यत इत्यर्थः। गॄ निगरणे। आदृगम-

हनेत्यादिना क्निप्प्रत्ययः। बहुलं छंदसि। पा॰ ७.१.१०३.। इत्युत्वं। तादृशोऽयमध्वा दूरे हि। विप्रकृष्टः खलु। यद्वा। पराचैः परांचनैर्जगुरिरत्यर्थं गंत्री पार्ष्णिभागमनालोकमाना सतीदं स्थानं प्राप्नोति। दूरेऽयमध्वा यदृच्छया गंतुं न शक्यते। अतो वयमेतां पृच्छामः। हे सरमे का कीदृश्यस्मेहितिः। कोऽस्मास्वर्थहितिः। कोऽस्मासु त्वदपेक्षितार्थो निहितः। यद्वा। अस्मासु कोऽर्थो गतः। दधातेर्हिनोतेर्वा क्तिनि रूपं। आगच्छंत्यास्तव का कीदृशी परितक्म्या रात्रिरासीत्। यद्वा तकतिर्गत्यर्थः। परितकनं परितो गमनं भ्रमणं वा कीदृशमासीत्। कथं च रसायाः शब्दायमानाया अंतरिक्षनद्या योजनशतविस्तीर्णायाः पयांस्युदकान्यतरः। तीर्णवत्यसि। एतद्वद। अत्र किमिच्छंती सरमेदं प्रानडित्यादिकं निरुक्तं द्रष्टव्यं ॥

॥ अथ द्वितीया ॥

इंद्रस्य दूतीरिषिता चरामि मह इच्छंती पणयो निधीन्वः।
अतिष्कदो भियसा तन्न आवत्तथा रसाया अतरं पयांसि ॥२॥
इंद्रस्य। दूतीः। इषिता। चरामि। महः। इच्छंती। पणयः। निऽधीन्। वः।
अतिऽस्कदः। भियसा। तत्। नः। आवत्। तथा। रसायाः। अतरं। पयांसि ॥२॥

अनया तान्सरमा प्रत्युवाच। हे पणय एतन्नामका असुरा इंद्रस्य दूतीः। सुपां सुलुगिति प्रथमैकवचनस्य सुश्छांदसः। अहमिषिता तेनैव प्रेषिता सती चरामि। युष्मदीयं स्थानमागच्छामि। किमर्थं। वो युष्मदीयान्युष्मदीये पर्वतेऽधिष्ठापितान्महो महतो निधीन्बृहस्पतेर्गोनिधीनिच्छंती कामयमाना सती चरामि। किंच। अतिष्कदः। स्कंदिर्गतिशोषणयोः। भावे क्विप्। अतिष्कंदनादतिक्रमणाज्जातेन भियसा भयेन तन्नदीजलं नः। पूजायां बहुवचनं। मामावत्। अरक्षत्। तथा तेन प्रकारेण रसाया नद्याः पयांस्युदकान्यतरं। तीर्णवत्यस्मि ॥

॥ अथ तृतीया ॥

कीदृङ्ङिंद्रः सरमे का दृशीका यस्येदं दूतीरसरः पराकात्।
आ च गच्छान्मित्रमेना दधामाथा गवां गोपतिर्नो भवाति ॥३॥
कीदृङ्। इंद्रः। सरमे। का। दृशीका। यस्य। इदं। दूतीः। असरः। पराकात्।
आ। च। गच्छात्। मित्रं। एन। दधाम। अथ। गवां। गोऽपतिः। नः। भवाति ॥३॥

तेषां वाक्यं। हे सरमे तव स्वामींद्रः कीदृक्। कियत्पराक्रमवान्। का दृशीका। तस्य कीदृशी दृष्टिः। दृष्टिरूपा सेना कियती। यस्य दूतीर्दूती त्वमिदमस्मदीयं स्थानं पराकादतिदूरादसरः। आगमः। इति तामुक्त्वेदानीं ते परस्परमाहुः। एषा सरमा गच्छाच्च। आगच्छतु च। गमेर्लेट्याडागमः। स्वामी भवाति। भवतु। न ह्येकस्या गोः किंतु बहूनां गवां स्वामी भवतु। वृत्तावृत्तिभ्यां स्वामित्वं बाहुल्यं च विवक्ष्यते॥

॥ अथ चतुर्थी ॥

नाहं तं वेद दभ्यं दभत्स यस्येदं दूतीरसरं पराकात्।

न तं गूहंति स्रवतो गभीरा हता इंद्रेण पणयः शयध्वे॥४॥

न। अहं। तं। वेद। दभ्यं। दभत्। सः। यस्य। इदं। दूतीः। असरं। पराकात्।

न। तं। गूहंति। स्रवतः। गभीराः। हताः। इंद्रेण। पणयः। शयध्वे॥४॥

सरमा वदति। हे पणयः तमिंद्रं दभ्यं हंतव्यमिति न वेद। न जानामि। दभेरचो यत्। कथं। स इंद्रो दभत्। सर्वाञ्जनान्दभति। हिनस्त्येव। दभेर्लेटि रूपं। वाक्यभेदादनिघातः। यस्य दूतीर्दूत्यहमिदं युष्मदीयं स्थानं पराकादतिदूराद्देशादसरं। प्राप्ताभूवं। इंद्रो हिंसितव्यो न भवतीत्यत्र युक्तिमाह। स्रवतः। स्रवणं स्रवः। तमाचरंति। आचारार्थे क्विप्। तुगागमः। जसि रूपं। स्रवणशीला गभीरा गंभीरा नद्यस्तमिंद्रं न गूहंति। न संवृण्वंति। नाच्छादयंति। किंत्वाविष्कुर्वंति। वयं यस्य महिम्ना समुद्रं प्रतिसरामः। तस्मादहिंस्य इत्येनं प्रकटीकुर्वंति। गुहू संवरणे। भौवादिकः। तस्माद्धे पणयो यूयमिंद्रेण तादृशपराक्रमेण हताः संतः शयध्वे। शीङ् स्वप्ने। बहुलं छंदसीति शपो लुगभावः॥

॥ अथ पंचमी ॥

इमा गावः सरमे या ऐच्छः परि दिवो अंतान्सुभगे पतंती।

कस्त एना अव सृजादयुध्व्युतास्माकमायुधा संति तिग्मा॥५॥

इमाः। गावः। सरमे। याः। ऐच्छः। परि। दिवः। अंतान्। सुऽभगे। पतंती।

कः। ते। एनाः। अव। सृजात्। अयुध्वी। उत। अस्माकं। आयुधा। संति। तिग्मा॥५॥

क्रुद्धाः पणयः प्रत्यूचुः। हे सुभगे शोभनसौभाग्यवति हे सरमे दिवो द्युलोकस्यांतान्पर्यंतान्परि पतंती कुत्र गावस्तिष्ठंतीति परितो गच्छंती त्वमिमाः परि-

दृश्यमाना या गावः। सुब्व्यत्ययः। गा ऐच्छः कामयसे ता एना गास्ते त्वदीयः कोऽयुध्व्ययुद्ध्वाव सृजात्। अस्मात्पर्वतादवसृजेत्। विनिर्गमयेत्। सृजेर्लेटि रूपं। अयुध्वी युधेः क्त्वाप्रत्यये स्नात्व्यादयश्चेति निपातितः। नञ्समासत्वाल्ल्यबादेशाभावः। नञः प्रकृतिस्वरत्वं। उतापि च। अस्माकं तिग्मा तीक्ष्णान्यायुधायुधानि संति। तस्मादस्माभिर्युद्धमकृत्वा को नाम गा आहरति॥

॥ इत्यष्टमस्य षष्ठे पंचमो वर्गः॥

॥ अथ षष्ठी॥

असेन्या वः पणयो वचांस्यनिषव्यास्तन्वः संतु पापीः।

अधृष्टो व एतवा अस्तु पंथा बृहस्पतिर्व उभया न मृळात्॥६॥

असेन्या। वः। पणयः। वचांसि। अनिषव्याः। तन्वः। संतु। पापीः।

अधृष्टः। वः। एतवै। अस्तु। पंथाः। बृहस्पतिः। वः। उभया। न। मृळात्॥६॥

सा तान्विराह। हे पणयो वो युष्माकं वचांसि पूर्वोक्तानि वचनान्यसेन्यासेन्यानि। सेनार्हाणि न भवंति। सेनाशब्दात्तदर्हतीत्यर्थे छंदसि चेति यत्प्रत्ययः। नञा समासः। ययतोश्चातदर्थ इत्युत्तरपदांतोदात्तत्वं। तथा तन्वो युष्मदीयानि शरीराण्यनिषव्या इष्वर्हाणि न संतु पराक्रमराहित्येन। पूर्ववत्प्रत्ययः। ओर्गुण इति गुणः। स्वरश्च तादृक्। यतः पापीः पापयुक्तानि खलु। छंदसीवनिपाविती-प्रत्ययः। जसः शः। किंच। वो युष्मदीयः पंथा मार्ग एतवै गंतुमधृष्टोऽसमर्थोऽस्तु। इण् गतावित्यस्य तुमर्थे तवैप्रत्ययः। तवै चांतश्च युगपदिति धातोः प्रत्ययस्य च युगपदुदात्तत्वं। तत्र हेतुमाह। वो युष्मदीयानुभयोभयविधान्पूर्वोक्तांस्तन्वो देहान्बृहस्पतिरिंद्रप्रेरितो न मृळात्। न सुखयतु। किंतु बाधेत। मृड सुखने। लेटयाडागमः॥

॥ अथ सप्तमी॥

अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः।

रक्षंति तं पणयो ये सुगोपा रेकु पदमलकमा जगंथ॥७॥

अयं। निऽधिः। सरमे। अद्रिऽबुध्नः। गोभिः। अश्वेभिः। वसुऽभिः। निऽऋष्टः।

रक्षंति। तं। पणयः। ये। सुऽगोपाः। रेकु। पदं। अलकं। आ। जगंथ॥७॥

ते पुनराहुः । हे सरमे अयं निधिरस्मदीयः कोशोऽद्रिबुध्नः । बंध बंधने । बंधेर्ब्रधिबुधी चेति नप्रत्ययः । बुध इत्यादेशः । अद्रिर्बंधको यस्य तादृशः । तथा-हृतैर्गोभिरश्वैभिरश्वैश्च वसुभिरात्मीयैर्धनैश्च न्यृष्टो नितरां प्राप्तो भवति । ऋषी गतौ । क्तप्रत्यये श्वीदितो निष्ठायामितीट्प्रतिषेधः । गतिरनंतर इति गतेः प्रकृति-स्वरत्वं । सुगोपाः । गुपू रक्षणे । आयप्रत्ययांतात्क्विपातोलोपयलोपौ । सुष्ठु गो-पायितारो ये पणयस्तेऽसुरास्तं निधिं रक्षंति । पालयंति । रेकु । रेकृ शंकायां । औणादिक उप्रत्ययः । शंकितं गोभिः शब्दायमानं पदमस्माभिः पालितं स्थान-मलकं व्यर्थमेवाजगंथ । आगतवत्यसि । गमेर्लिटि रूपं ॥

॥ अथाष्टमी ॥

एह गमन्नृषयः सोमशिता अयास्यो अंगिरसो नवग्वाः ।

त एतमूर्वं वि भजंत गोनामथैतद्वचः पणयो वमन्नित् ॥८॥

आ । इह । गमन् । ऋषयः । सोमऽशिताः । अयास्यः । अंगिरसः । नवऽग्वाः ।

ते । एतं । ऊर्वं । वि । भजंत । गोनां । अथ । एतत् । वचः । पणयः । वमन् । इत् ॥८॥

सरमा पुनः प्रत्युवाच । हे पणयः सोमशिताः सोमेन तीक्ष्णीकृताः सोमपानेन मत्ताः । शिञ् निशाने । कर्मणि क्तप्रत्ययः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । तादृशा नवग्वा नवगतयः । यद्वा । अंगिरसां सत्त्रमासीनानां मध्ये केचन नवसु माःस्वध्यतिष्ठन् ते नवग्वाः । अनेन दशग्वा अप्युपलक्ष्यंते । उभयविधास्तेऽंगिरस ऋषयः । तेषां प्रथमोऽयास्य एतन्नामा च । त एत इह युष्मदीये स्थान आ गमन् । आगच्छेयुः । गमेश्छंदसि लुङ्लङ्लिट इति सार्वकालिको लुङ् । लृदित्त्वाच्लेरङ् । आगत्य च ते गोनां । गोः पादांत इति छंदसि नुडागमः । गवामूर्वं तं समूहं वि भजंत । विभागं कुर्युः । अत्रापि पूर्ववत्सार्वकालिको लुङ् । अथानंतरं पणयो यूयमेतद्वचः पूर्वं यद्व्यर्थमागतासीति यद्वाक्यमवोचत तद्वाक्यं तदा वमन्निद्वमंतः परित्यजंत एव भवथ । वमु उद्गिरणे । शतरि सुपां सुलुगिति जसो लुक् । नुमा-गमः । संयोगांतस्य लोपः । यद्वा लङि रूपं । स्वरश्छांदसः ॥

॥ अथ नवमी ॥

एवा च त्वं सरम आजगंथ प्रबाधिता सहसा दैव्येन ।

स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम ॥९॥

एव । च । त्वं । सरमे । आऽजगंथ । प्रऽबाधिता । सहसा । दैव्येन ।
स्वसारं । त्वा । कृणवै । मा । पुनः । गाः । अप । ते । गवां । सुऽभगे । भजाम ॥९॥

तयैवमुक्ते सति पणयः प्रणयवाक्यमाहुः । हे सरमे त्वं दैव्येन देवसंबंधिना सहसा बलेन प्रबाधिता यथा तथा वलपुरं प्राप्य तत्र स्थिता गा दृष्ट्वा पुनरागच्छेति तेन प्रपीडिता त्वमेवं चेदाजगंथागतवत्यसि ॥ चशब्दश्चेदर्थे । निपातैर्यद्यदिहंतेति तिङो निघाताभावः । गमेर्लिटि थलि रूपं । सह सुपेत्यत्र सहेति योगविभागात्समासः । तिङि चोदात्तवतीति गतेर्निघातः । लित्स्वरः ॥ तर्हि त्वा त्वां स्वसारं भगिनीं कृणवै । करवै । समूहापेक्षैकवचनं । त्वं तु पुनर्मा गाः । इंद्रादीन्मा गच्छ । अपि तर्हि हे सुभगे सरमे ते त्वदीयानां गवां समूहं पर्वतादपगमय्य भजाम । त्वं च वयं च विभजाम । विभागं करवामेत्यर्थः ॥

॥ अथ दशमी ॥

नाहं वेद भ्रातृत्वं नो स्वसृत्वमिंद्रो विदुरंगिरसश्च घोराः ।
गोकामा मे अच्छदयन्यदायमपात इत पणयो वरीयः ॥१०॥

न । अहं । वेद । भ्रातृऽत्वं । नो इति । स्वसृऽत्वं । इंद्रः । विदुः । अंगिरसः । च । घोराः ।
गोऽकामाः । मे । अच्छदयन् । यत् । आयं । अप । अतः । इत । पणयः । वरीयः ॥१०॥

सा तान्प्रत्याचष्टे । हे पणयः अहं भ्रातृत्वं न वेद । न जानामि । तथा स्वसृत्वं च नो वेद । नैव जानामि । के जानंति । तानाह । इंद्रो घोराः शत्रूणां भयंकरा अंगिरसश्च विदुः । जानंति । किंच । अस्मात्स्थानादहं यद्यदायमिंद्रादीन्प्राप्नवं । अय पय गतौ । लङि रूपं । तदा मे मदीया गोकामा युष्माभिरपहृता गाः कामयमाना इंद्रादय अच्छदयन् । युष्मदीयं स्थानमाच्छादयंति । छद अपवारणे । अतः कारणाद्धे पणयो वरीय उरुतरं गवां वृंदं परित्यज्यापेत । अन्यत्स्थानं प्रति गच्छत । यद्वा वरीयः प्रभूतमतिदूरं देशं गच्छत । इत । इण् गतौ । लोटि रूपं । वरीयः । उरुशब्दादीयसुनि प्रियस्थिरेत्यादिना वरादेशः ॥

॥ अथैकादशी ॥

दूरमित पणयो वरीय उद्गावो यंतु मिनतीर्ऋतेन ।
बृहस्पतिर्या अविंदन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः ॥११॥

दूरं । इत । पणयः । वरीयः । उत् । गावः । यंतु । मिनतीः । ऋतेन ।

बृहस्पतिः । याः । अविंदत् । निऽगूळ्हाः । सोमः । ग्रावाणः । ऋषयः । च । विप्राः ॥११॥

हे पणयः यूयं वरीय उरुतरं दूरं दूरदेशमित । गच्छत । युष्माभिरपहृता गाव ऋतेन सत्येन मिनतीर्मिनत्यो द्वारस्य पिधायकं पर्वतं हिंसत्यो विदारयंत्य उद्यंतु । तस्मादुद्गच्छंतु । यद्वा मिनतीः । व्यत्ययेन कर्मणि शतृ । मीयमाना युष्माभिर्बाध्यमानास्ता गावः । सुब्व्यत्ययः । गा ऋतेन स्तुतिभिर्गंतव्येनेंद्रेण सहायेन बृहस्पत्यादय उद्यंतु । पर्वतादुद्गमयंतु । निगूढा नितरां स्थापिता या गा बृहस्पतिरविंदत् । लप्स्यते । तथा सोमस्तदभिषवकारिणो ग्रावाणश्च विप्रा मेधाविन ऋषयोऽंगिरसश्च लप्स्यंते । विद्लृ लाभे । तौदादिकः । तस्माच्छंदसि लुङ्लङ्लिट इति भविष्यदर्थे लङ् । शे मुचादीनामिति नुमागमः ॥

॥ इत्यष्टमस्य षष्ठे षष्ठो वर्गः ॥

तेऽवदन्निति सप्तर्चं दशमं सूक्तं । जुहूर्नाम ब्रह्मवादिन्यृषिः । ब्रह्मपुत्र ऊर्ध्वनाभा नाम वा । षष्ठीसप्तम्यावनुष्टुभौ । शिष्टाः पंच त्रिष्टुभः । विश्वे देवा देवता । तथा चानुक्रांतं । तेऽवदन्सप्त जुहूर्ब्रह्मजाया ब्राह्मो वोर्ध्वनाभा वैश्वदेवं द्व्यनुष्टुबंतमिति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

तेंऽवदन्प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा ।

वीळुहरास्तप उग्रो मयोभूरापो देवीः प्रथमजा ऋतेन ॥१॥

ते । अवदन् । प्रथमाः । ब्रह्मऽकिल्बिषे । अकूपारः । सलिलः । मातरिश्वा ।

वीळुऽहराः । तपः । उग्रः । मयःऽभूः । आपः । देवीः । प्रथमऽजाः । ऋतेन ॥१॥

अत्रेतिहासमाचक्षते । जुहूरिति वाङ्नाम । सा ब्रह्मणो जाया च । बृहस्पतेर्वाचस्पतित्वाद्बृहस्पतेर्जुहूर्नाम भार्या बभूव । कदाचिदस्य किल्बिषमस्या दौर्भाग्यरूपेणासांचक्रे । अत एव स एनां पर्यत्याक्षीत् । अनंतरमादित्यादयो देवा मिथो विचार्यैनामकिल्बिषां कृत्वा पुनर्बृहस्पतये प्रादुरिति । तदत्र वर्ण्यते । प्रथमा मुख्यास्ते देवा ब्रह्मकिल्बिषे । षष्ठीसमासः । समासस्वरः । ब्रह्मणो बृहस्पतेः किल्बिषे पापे जुहूदौर्भाग्यरूपे विषयेऽवदन् निष्कृत्युपायमवोचन् । वकारपरत्वादत्र प्रकृतिभावाभावः । के ते । अकूपारः । अत्र यास्कः । आदित्योऽप्यकूपार उच्यतेऽकूपारो

भवति दूरपारः। नि॰ ४.१८.। इति। अकुत्सितपारो महागतिरादित्यः। सलिलो ऽब्देवता वरुणः। मातरिश्वा वायुर्वीळुहराः। हरतेरसुनि रूपं हर इति। हरति विनाशयति तमांसीति हरस्तेजः। प्रभूततेजस्कः। तपः। तृतीयायाः सुः। तपसा तापनेनोग्र उद्गूर्णोऽग्निः। मयोभूः सुखस्य भावयिता सोमः। देवीर्देव्य आपः। कीदृश्यः। ऋतेन सत्यभूतेन ब्रह्मणा प्रथमजा आदित एवोत्पादिताः। एत उपायमुक्त्वा प्रायश्चित्तमप्यकारयन्निति भावः ॥

॥ अथ द्वितीया ॥

सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः।
अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्या निनाय ॥२॥

सोमः। राजा। प्रथमः। ब्रह्मऽजायां। पुनरिति। प्र। अयच्छत्। अहृणीयमानः।
अनुऽअर्तिता। वरुणः। मित्रः। आसीत्। अग्निः। होता। हस्तऽगृह्य। आ। निनाय ॥२॥

प्रथमो मुख्यः सोमो राजाहृणीयमाणः। पापापगमनेनालज्जमानः सन् तामेनामकिल्बिषां ब्रह्मजायां पुनर्बृहस्पतये प्रायच्छत्। ततो वरुणोऽन्वर्तिता। ऋतिः सौत्रो धातुर्घृणायां वर्तते। तस्य तृचि रूपं। सोममनुमोदयितासीत्। सर्वथा त्वं परिगृहाणेति दयामकार्षीत्। तथा मित्रश्च। अनंतरं होता देवानामाह्वाता मनुष्याणां होमनिष्पादको वाग्निर्हस्तगृह्य तां हस्ते गृहीत्वा निनाय। आनैषीत्। प्रादादित्यर्थः। हस्तगृह्य। नित्यं हस्ते पाणावुपयमने। पा॰ १.४.७७.। इति हस्तशब्दस्य गतिसंज्ञायां ग्रहिणा समासे ल्यप्। एकारलोपश्छांदसः। यद्वा हस्तशब्दात्परस्य गृहेश्छांदसौ समासल्यपौ ॥

॥ अथ तृतीया ॥

हस्तेनैव ग्राह्य आधिरस्या ब्रह्मजायेयमिति चेदवोचन्।
न दूताय प्रह्ये तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ॥३॥

हस्तेन। एव। ग्राह्यः। आऽधिः। अस्याः। ब्रह्मऽजाया। इयं। इति। च। इत्। अवोचन्।
न। दूताय। प्रऽह्ये। तस्थे। एषा। तथा। राष्ट्रं। गुपितं। क्षत्रियस्य ॥३॥

देवा बृहस्पतिमूचुः। हे बृहस्पते अस्या आधिः। आधीयंत आभरणान्यत्रेत्याधिः शरीरं। उपसर्गे घोः किरिति किप्रत्ययः। अस्याः शरीरं हस्तेनैव ग्राह्यो गृही-

तव्यमेव। पुनस्ते देवा इदानीमियं ब्रह्मजायेत्येवावोचन्। अवादिषुः। चशब्दश्चे-दर्थे। अत एव निपातैर्यद्यदिहंतेति तिङो निघाताभावः। ब्रूञ् व्यक्तायां वाचि। लुङि ब्रुवो वचिः। अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङादेशः। वच उमित्यु-मागमः। अडागमस्वरः। इदवधारणे। एषा ब्रह्मजाया पुरा प्रह्मे। हि गतौ वृद्धौ च। कर्मण्यौणादिकः क्विप्। तुगभावश्छांदसः। ङिद्वचने संज्ञापूर्वकस्य विधेर-नित्यत्वाद्गुणाभावः। उदात्तस्वरितयोर्यण इति सुपः स्वरितत्वं। प्रहिताय त्वया भार्यान्वेषणार्थं प्रेषिताय दूताय तथा न तस्थे। स्वात्मानं न प्रकाशयति। तिष्ठ-तेर्लिटि प्रकाशनस्थेयाख्ययोश्च। पा॰ १.३.२३.। इत्यात्मनेपदं। श्लाघह्नुङ्स्थाशपा-मिति दूतस्य संप्रदानसंज्ञा। तत्र दृष्टांतः। यथा क्षत्रियस्य राज्ञो गुपितं रक्षितं राष्ट्रं राज्यं शत्रवे यथा न प्रकाशयति तद्वदसौ दौर्भाग्ययुक्ततया तस्मै स्वात्मानं न प्रकाशितवती। इदानीं तु तद्राहित्येन प्रकाशमानेयं ब्रह्मजायैवेत्यब्रुवन्॥

॥ अथ चतुर्थी ॥

देवा एतस्यामवदंत पूर्वे सप्तऋषयस्तपसे ये निषेदुः।

भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधाति परमे व्योमन्॥४॥

देवाः। एतस्यां। अवदंत। पूर्वे। सप्तऽऋषयः। तपसे। ये। निऽसेदुः।

भीमा। जाया। ब्राह्मणस्य। उपऽनीता। दुःऽधां। दधाति। परमे। विऽओमन्॥४॥

पूर्वे चिरंतना देवा आदित्यादय एतस्यां विषयेऽवदंत। इयं पापरहितेत्यवा-दिषुः। तथा ये सप्तर्षयः। समासस्वरः। सप्तसंख्याका ऋषयस्तपसे तपश्चरणाय निषेदुर्निषण्णा बभूवुः। सदेर्लिटि रूपं। उपसर्गेण समासः। यद्योगादनिघातः। तेऽप्यवादिषुः। ततो भीमा शत्रुरूपाणां पापानां भयंकरी पतिवत्न्येषा जाया ब्राह्म-णस्य बृहस्पतेरुपनीता। समीपे देवैः स्थापिता। णीञ् प्रापणे। कर्मणि क्तः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। तथा हि। तपःप्रभावो दुर्धां दुर्धानामपि परमे व्योमन् व्योमन्युत्तमे स्थाने दधाति। विदधाति खलु। तस्मादेनामपि देवतापरि-ग्रहरूपस्तपोमहिमा बृहस्पतेरंतिके स्थापयति॥

॥ अथ पंचमी ॥

ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमंगं।

तेन जायामन्वविंदद्बृहस्पतिः सोमेन नीतां जुह्वं१न देवाः॥५॥

ब्रह्मऽचारी। चरति। वेविषत्। विषः। सः। देवानां। भवति। एकं। अंगं।
तेन। जायां। अनु। अविंदत्। बृहस्पतिः। सोमेन। नीतां। जुह्वं। न। देवाः ॥५॥

बृहस्पतिर्भामलभतेति जुहूः परोक्षतया वदति। हे देवाः पूर्वं स ब्रह्मचारी जायाभावेन ब्रह्मचारी चरति। अत एव विषः सर्वेषु यज्ञेषु व्याप्तवान्देवान्वेविषत्। स्तुतिभिर्हेविर्भिश्च व्याप्नुवन् देवानामेकमंगं भवति। जायापती यज्ञस्य द्वे अंगे खलु। वेविषत्। विष्लृ व्याप्तौ। जौहोत्यादिकः। निजां त्रयाणां गुणः श्लौ। पा॰ ७. ४.७५.। इत्यभ्यासस्य गुणः। शतुर्नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः। अभ्यस्तानामादिरित्याद्युदात्तत्वं। तेन देवानां परिचरणेन बृहस्पतिर्जायां जुहूनामिकां मामन्वविंदत्। अनुगम्यालभत। नशब्द उपमार्थे। पूर्वं यथा सोमेन नीतां सोमो ददद्गंधर्वायेत्यादिक्रमेण नीतां जुह्वं जुहूं यथा लब्धवान् तद्वदिदानीमपि। जुह्वं। हु दानादानयोः। अन्येभ्योऽपि दृश्यंत इति क्विप्। जुहोतेर्द्वे चेति द्विर्वचनं दीर्घश्च। उदात्तयणो हल्पूर्वादिति विभक्त्युदात्तत्वे प्राप्ते नोङ्धात्वोरिति प्रतिषेध उदात्तस्वरितयोर्यण इति स्वरितत्वं ॥

॥ अथ षष्ठी ॥

पुनर्वै देवा अददुः पुनर्मनुष्या उत।
राजानः सत्यं कृण्वाना ब्रह्मजायां पुनर्ददुः ॥६॥

पुनः। वै। देवाः। अददुः। पुनः। मनुष्याः। उत।
राजानः। सत्यं। कृण्वानाः। ब्रह्मऽजायां। पुनः। ददुः ॥६॥

लाभहेतुमाह। देवा ब्रह्मजायां जुहूं बृहस्पतये पुनरददुः। वैशब्दः प्रसिद्धिवाची। उतात्यर्थे। मनुष्या अपि पुनरददुः। एवं देवमनुष्यैः कृतं दानं सत्यं यथार्थं कृण्वानाः कुर्वाणा राजानोऽपि पुनस्तस्मै ददुः। एवमव्यवहार्यनिमित्तं पापमपि व्यनाशयन्निति भावः ॥

॥ अथ सप्तमी ॥

पुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्बिषं।
ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते ॥७॥

पुनःऽदाय। ब्रह्मऽजायां। कृत्वी। देवैः। निःऽकिल्बिषं।
ऊर्जं। पृथिव्याः। भक्त्वाय। उरुऽगायं। उप। आसते ॥७॥

देवैः । सुपां सुपो भवंतीति जसस्तृतीयादेशः । देवा निकिल्बिषं । अर्थाभावेऽव्ययीभावः । समासस्वरः । तस्याः किल्बिषाभावं कृत्वी । स्नात्व्यादयश्चेति निपातितः । कृत्वा ब्रह्मजायां ब्रह्मणो बृहस्पतेर्भार्यां पुनर्दाय पुनर्दत्त्वा । पुनश्चनसोश्छंदसि गतिसंज्ञा वक्तव्येति पुनःशब्दस्य गतिसंज्ञायां समासल्यपौ । न ल्यपीतीत्वप्रतिषेधः । कृदुत्तरपदप्रकृतिस्वरत्वं । पृथिव्या ऊर्जं रसभूतमन्नं हवीरूपं भक्त्वाय । क्त्वो यगिति यगागमः । भक्त्वा विभज्योरुगायं बहुकीर्तिं बहुभिः स्तोतव्यं वा बार्हस्पत्यं यज्ञमुपासते । सेवंते ॥

॥ इत्यष्टमस्य षष्ठे सप्तमो वर्गः ॥

समिद्ध इत्येकादशर्चमेकादशं सूक्तं त्रैष्टुभं । भार्गवो जमदग्निर्ऋषिः । तस्य पुत्रो रामो वा यः परशुराम इति प्रख्यातः । आप्रीसूक्तमिदं । अतः समिदाद्याः सतनूनपातो नराशंसवर्जिताः प्रत्यृचं देवताः । तथा चानुक्रांतं । समिद्ध एकादश जमदग्निस्तत्सुतो वा राम आप्रिय इति ॥ पशौ जामदग्न्यानामिदमाप्रीसूक्तं यज्ञाविशेषेण सर्वेषां । सूचितं च । समिद्धो अद्येति यथर्षि वा । आ॰ ३. २. । इति ॥ अग्निचयनांगभूते प्राजापत्ये पशौ सर्वेषां नित्यमिदमाप्रीसूक्तं । सूचितं च । प्राजापत्ये तु जामदग्न्यः सर्वेषां । आ॰ ३. २. । इति ॥

॥ तत्र प्रथमा ॥

समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।

आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ॥ १ ॥

संऽइद्धः । अद्य । मनुषः । दुरोणे । देवः । देवान् । यजसि । जातऽवेदः ।

आ । च । वह । मित्रऽमहः । चिकित्वान् । त्वं । दूतः । कविः । असि । प्रऽचेताः ॥ १ ॥

हे जातवेदो जातप्रज्ञाग्ने देवः स्वतेजसा दीप्यमानस्त्वं मनुषो मनुष्यस्य यष्टुर्दुरोणे । गृहनामैतत् । दुरवन आयासेन रक्षितव्ये गृहेऽद्यास्मिन्कर्मणि समिद्धः सम्यक् प्रज्वालितः सन् देवानिंद्रादीन्यजसि । हविर्भिः पूजय । समिद्धः । इंधी दीप्तौ । कर्मणि क्ते श्वीदितो निष्ठायामितीट्प्रतिषेधः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । हे मित्रमहः स्तुत्यस्तोतृलक्षणत्वेन मित्रभूतानां स्तोतॄणां पूजयितः तैः पूज्यमान वाग्ने चिकित्वान् तैः कृताः स्तुतीः प्रजानन् चेतनावान्वा त्वमस्मदीये यज्ञे देवाना वह च । आप्रापय । वह प्रापणे । लोटि रूपं । चवायोगे प्रथमेति

न निघातः। तथा कविः क्रांतप्रज्ञोऽत एव प्रचेताः प्रकृष्टज्ञानस्त्वं दूतो देवानां हविःप्रापणेन हितकारी भवसि ॥

॥ अथ द्वितीया ॥

तनूनपात्पथ ऋतस्य यानान्मध्वा समंजन्स्वदया सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृंधन्देवत्रा च कृणुह्यध्वरं नः ॥२॥

तनूऽनपात्। पथः। ऋतस्य। यानान्। मध्वा। संऽअंजन्। स्वदय। सुऽजिह्व।
मन्मानि। धीभिः। उत। यज्ञं। ऋंधन्। देवऽत्रा। च। कृणुहि। अध्वरं। नः ॥२॥

हे तनूनपात्। नपादित्यनंतरापत्यनामधेयं। गौरत्र तनूरुच्यते। तता अस्यां भोगाः क्षीरादय इति। तस्याः पयो जायते पयस आज्यं तस्मादग्निः। यद्वांतरिक्षे तता आपस्तन्वः। ताभ्य ओषध्यादयः। तेभ्योऽग्निरिति। एवंरूप हे सुजिह्व शोभनज्वाल। यद्वा जिह्वेति वाङ्नाम। शोभनवागग्ने ऋतस्य यज्ञस्य यानान्फलप्राप्तिहेतून्पथो मार्गान्हविराख्यान्मध्वा मदकरेण रसेन। यद्वा वाग्जनितेन रसेन समंजन् सम्यग्दीपयन् स्वदय। स्वादयस्व। स्वादुकुरु। स्वद आस्वादने। णिच्युपधावृद्ध्यभावश्छांदसः। किंच। मन्मानि। मन्यतेरर्चतिकर्मणः। मननीयान्यस्मदभिप्रेतानि स्तोत्राणि धीभिः प्रज्ञाभिः कर्मभिर्वोतापि च यज्ञं यजनीयं हविश्च ऋंधन् समृद्धानि कुर्वन् नोऽस्मदीयमध्वरं यज्ञं देवत्रा देवेषु कृणुहि। कुरु। देवशब्दाद्देवमनुष्येत्यादिना सप्तम्यर्थे त्राप्रत्ययः ॥

॥ अथ तृतीया ॥

आजुह्वान ईड्यो वंद्यश्चा याह्यग्ने वसुभिः सजोषाः।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥३॥

आऽजुह्वानः। ईड्यः। वंद्यः। च। आ। याहि। अग्ने। वसुऽभिः। सऽजोषाः।
त्वं। देवानां। असि। यह्व। होता। सः। एनान्। यक्षि। इषितः। यजीयान् ॥३॥

हे अग्ने त्वमस्मत्कर्मण्या याहि। आगच्छ। कीदृशः। आजुह्वानः। देवानामाह्वाता। हु दानादानयोः। जौहोत्यादिकः। अभ्यस्तस्वरः। ईड्यः। ईडिरध्येषणाकर्मा। अध्येष्यः प्रार्थ्यमानः। वंद्यः स्तोतव्यः। वसुभिर्देवैः सजोषाः सह प्रीयमाणः। आगत्य च हे यह्व। महन्नामैतत्। हे महन् स त्वं देव देवानां होताह्वा-

तासि । ततो यजीयान् । यष्टृशब्दादीयसुनि तुरिष्ठेमेयःस्विति तृचो लोपः । यष्टृतरः स त्वमिषितोऽस्माभिरध्येषितः प्रार्थितः सन् एतान्देवान्यक्षि । यज । हविषा पूजय ॥

॥ अथ चतुर्थी ॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नां ।

वि उ प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनं ॥४॥

प्राचीनं । बर्हिः । प्रऽदिशा । पृथिव्याः । वस्तोः । अस्याः । वृज्यते । अग्रे । अह्नां ।

वि । ऊं इति । प्रथते । विऽतरं । वरीयः । देवेभ्यः । अदितये । स्योनं ॥४॥

यदिदं प्राचीनं प्रागंचितं प्राङ्मुखं बर्हिरस्ति तदिदं पृथिव्या वेदिलक्षणाया वस्तोः । वस आच्छादने । तुन्प्रत्ययः । चतुर्थ्यर्थे बहुलं छंदसीति षष्ठी । यद्वा भावलक्षणे तोसुन् द्रष्टव्यः । वसनायाच्छादनार्थमह्नामग्रे पूर्वाह्णे प्रदिशा प्रकर्षेण दिश्यमानेन मंत्रेणास्याः प्राच्या दिशो वृज्यते । लूयते । आह्रियते । तथा च निगमः । त आ वहंति कवयः पुरस्तादित्यादि । तच्चाहृतं वरीय उरुतरं बर्हिर्वितरं विस्तीर्णतरं यथा भवति तथा वि प्रथते । विविधमेव वेद्यां प्रस्तृतं भवति । तथा देवेभ्योऽदितये वेदिलक्षणायै पृथिव्यै च स्योनं सुखकरं भवति । विस्तीर्णे बर्हिषि देवाः सुखं निषीदंति ॥

॥ अथ पंचमी ॥

व्यचस्वतीरुर्विया वि श्रयंतां पतिभ्यो न जनयः शुंभमानाः ।

देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥५॥

व्यचस्वतीः । उर्विया । वि । श्रयंतां । पतिऽभ्यः । न । जनयः । शुंभमानाः ।

देवीः । द्वारः । बृहतीः । विश्वंऽइन्वाः । देवेभ्यः । भवत । सुप्रऽअयनाः ॥५॥

व्यचस्वतीः । व्यचो व्यापनं । तद्वत्यः । वा छंदसीति पूर्वसवर्णदीर्घः । ता द्वारदेवता उर्विया । उरुशब्दात्तृतीयैकवचन इयाडियाजीकाराणामुपसंख्यानमितीयादेशः । उरुत्वेन वि श्रयंतां । विशेषेणाश्रिता भवंतु । तत्र दृष्टांतः । पतिभ्यो न यथा पतीनामर्थाय संभोगकाले शुंभमानाः शोभमाना जनयो जाया विश्रयंति तद्वदस्मिन्कर्मणि विश्रयंतां । हे बृहतीर्महत्यः । हे विश्वमिन्वाः । इविः प्रीणनार्थः । तस्मात्कर्मण्युपपदेऽण् । इदित्वान्नुम् । तत्पुरुषे कृति बहुलमित्यच बहुलवचना-

द्वितीयाया अयलुक्। सर्वस्य प्रीणयित्र्यः। हे द्वारो देवीर्द्वाराभिमानिन्यो हे देव्यो यूयं देवेभ्यो देवानामर्थाय सुप्रायणाः सुप्रगमनाः सुविवृता भवत ॥

॥ इत्यष्टमस्य षष्ठेऽष्टमो वर्गः ॥

॥ अथ षष्ठी ॥

आ सुष्वयंती यजते उपाके उषासानक्ता सदतां नि योनौ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥६॥

आ। सुस्वयंती इति। यजते इति। उपाके इति। उषसानक्ता। सदतां। नि। योनौ। दिव्ये इति। योषणे इति। बृहती इति। सुरुक्मे इति सुऽरुक्मे। अधि। श्रियं। शुक्रऽपिशं। दधाने इति ॥६॥

सुस्वयंती। अय पय गतौ। शतर्युपसर्गस्य सोर्द्विर्वचनं छांदसं। सुष्वयंत्यौ गच्छंत्यौ। यद्वा स्वपेर्ण्यंतस्य वर्णलोपः। सुष्वापयंत्यौ। यजते यष्टव्ये उपाके उपक्रांते उषसानक्ता। उषश्च नक्तं च। द्वंद्व उषासोषस इत्युषासादेशः। देवताद्वंद्वे चेति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं। अहोरात्रदेव्यौ योनावस्मिन्यज्ञस्थाने नि नितरां नियमेन वा सदतां। आसीदतां। सदेर्लुङि लृदित्त्वाच्च्लेरङ्। कीदृश्ये। दिव्ये दिविभवे योषणे योषिताविव प्रीणयित्र्यौ। यद्वा योषणे समिते परस्परतोऽविविक्ते बृहती गुणैर्महत्यौ सुरुक्मे शोभनदीप्ते। रुक्मं। रोचतेर्मक्प्रत्यये कुत्वे च कृते रूपं। शुक्रपिशं शोचमानरूपां श्रियमधि दधाने। अधिकं धारयंत्यौ ॥

॥ अथ सप्तमी ॥

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै।
प्रचोदयंता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशंता ॥७॥

दैव्या। होतारा। प्रथमा। सुऽवाचा। मिमाना। यज्ञं। मनुषः। यजध्यै। प्रऽचोदयंता। विदथेषु। कारू इति। प्राचीनं। ज्योतिः। प्रऽदिशा। दिशंता ॥७॥

दैव्या। देवाद्यञञाविति यञ्प्रत्ययः। देवसंबंधिनौ होतारौ होमनिष्पादकौ होतृनामकावग्न्यादित्यावस्मिन्यज्ञ आसीदतां। कीदृशौ। प्रथमा मनुष्यहोतुः पूर्वभाविनौ। सुवाचा शोभनस्तोत्रौ मनुषो मनुष्यस्य सर्वस्य यष्टुर्यजध्यै यागनिवृत्तये। यजेस्तुमर्थे शध्यैन्प्रत्ययः। यज्ञं मिमाना निर्मिमानावुत्पादयंतौ। विदथेषु। विदं-

त्यचर्त्विजः स्वस्वकर्माणीति विदथा यज्ञाः। तेषृत्विजो यजमानांश्च प्रचोदयंता प्रेरयंतौ। कारू स्तुतीनां कर्तारौ प्राचीनं पूर्वस्यां दिशि यष्टव्यत्वेन स्थितमाहवनीयाख्यं ज्योतिः प्रदिशा प्रकृष्टेनोपदिष्टमार्गेण यद्वा प्रदिश्यमानेन मंत्रेण दिशंता निर्वहंतौ ॥

॥ अथाष्टमी ॥

आ नो॑ य॒ज्ञं भार॑ती॒ तूय॑मे॒त्विळा॒ मनु॒ष्वदि॒ह चे॒तय॑न्ती।
ति॒स्रो दे॒वीर्ब॒र्हिरेदं स्यो॒नं सर॑स्वती॒ स्वप॑सः सदंतु ॥८॥

आ। नः॒। य॒ज्ञं। भार॑ती। तूय॑ं। ए॒तु॒। इळा॑। म॒नु॒ष्वत्। इ॒ह। चे॒तय॑न्ती।
ति॒स्रः। दे॒वीः। ब॒र्हिः। आ। इ॒दं। स्यो॒नं। सर॑स्वती। सु॒ऽअप॑सः। स॒दं॒तु॒ ॥८॥

भारती। भरत आदित्यः। तस्य स्वभूता दीप्तिः। तस्येदमित्यर्थे उत्सादित्वादञ्। टिड्ढाणञिति ङीप्। नोऽस्मदीयं यज्ञं तूयं क्षिप्रमेतु। आगच्छतु। तथा मनुष्वन्मनुष्यो यथेदं मया कर्तव्यमिति जानाति तद्वच्चेतयंती जानतीळा देवी चेहास्मिन्कर्मण्यागच्छतु। तथा सरस्वती च। स्वपसः सुकर्माणः। अप इति कर्मनाम। आप्नोतेरसुन्यापः कर्माख्यायां ह्रस्वः। बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। एतास्तिस्रो देवीर्देव्यः स्योनं सुखकरमिदं बर्हिरिमं यज्ञमा सदंतु। आसीदंतु। प्राप्नुवंतु। सदेर्लोटि सीदादेशाभावश्छांदसः ॥

त्वाष्ट्रस्य पशोर्वपायां य इमे इत्येषानुवाक्या। सूत्रितं च। य इमे द्यावापृथिवी जनित्री तन्नस्तुरीपमध पोषयित्नु। आ॰ ३.८.। इति ॥

॥ सैषा नवमी ॥

य इ॒मे द्यावा॑पृथि॒वी जनि॑त्री रू॒पैरपिं॑शद्भुव॑नानि॒ विश्वा॑।
तम॒द्य हो॑तरिषि॒तो यजी॑यान्दे॒वं त्वष्टा॑रमि॒ह य॑क्षि वि॒द्वान् ॥९॥

यः। इ॒मे इति॑। द्यावा॑पृथि॒वी इति॑। जनि॑त्री इति॑। रू॒पैः। अपिं॑शत्। भुव॑नानि। विश्वा॑।
तं। अ॒द्य। हो॒त॒रिति॑। इ॒षि॒तः। यजी॑यान्। दे॒वं। त्वष्टा॑रं। इ॒ह। य॒क्षि॒। वि॒द्वान् ॥९॥

यस्त्वष्टा देवो जनित्री विश्वस्य जनयित्र्याविमे द्यावापृथिवी। द्वंद्वे दिवो द्यावेति द्यावादेशः। आद्युदात्तः। पृथिवीशब्दो ङीषंतत्वेनाद्युदात्तः। देवताद्वंद्वे चेति पूर्वोत्तरपदयोः प्रकृतिस्वरत्वं। द्यावापृथिव्यौ रूपैर्देवतिर्यङ्मनुष्याद्याकारैरपिंशद्रूपवत्या-

वकरोत्। पिश अवयवे तौदादिकः। शे मुचादीनामिति नुमागमः। तथा विश्वा सर्वाणि भुवनानि भूतजातानि रूपयुक्तान्यकरोत्। हे होतर्यजीयान्यष्टृतमो विद्वान् सर्वं जानंस्त्वमिषितोऽस्माभिरध्येषितः प्रार्थितः सन् इहास्मिन्कर्मण्यद्यास्मिन्दिने तं त्वष्टारं देवं यक्षि। स्तुतिभिर्हविर्भिर्वा यज। पूजय॥

॥ अथ दशमी ॥

उपावसृज त्मन्या समंजन्देवानां पाथ ऋतुथा हवींषि।
वनस्पतिः शमिता देवो अग्निः स्वदंतु हव्यं मधुना घृतेन ॥१०॥

उपऽअवसृज। त्मन्या। संऽअंजन्। देवानां। पाथः। ऋतुऽथा। हवींषि।
वनस्पतिः। शमिता। देवः। अग्निः। स्वदंतु। हव्यं। मधुना। घृतेन॥१०॥

हे वनस्पते यूप त्मन्या। आत्मशब्दस्य तृतीयैकवचने यादेशः। मंत्रेष्वाङ्यादेरात्मन इत्याकारलोपः। आत्मनैवर्तुयर्तावृतौ प्राप्ते काले देवानामर्थाय पाथः पशुलक्षणमन्नमन्यानि च हवींषि समंजन् सम्यग्व्यक्तीकुर्वन् उपावसृज। उपागम्य प्रयच्छ। गतिर्गताविति गतेर्निघातः। किंच वनस्पतिर्योऽयं यूपः शमितैतन्नामको देवः। यद्वा शामित्रोऽग्निर्देवो दीप्यमान आहवनीयाख्योऽग्निश्चैते त्रयो मधुना मधुरेण घृतेन। यद्वा मधुनोदकेन प्रोक्षणोपनयनादिगतेन घृतेन च हव्यं हवनयोग्यं स्वदंतु। स्वादु कुर्वंतु॥

॥ अथैकादशी ॥

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदंतु देवाः॥११॥

सद्यः। जातः। वि। अमिमीत। यज्ञं। अग्निः। देवानां। अभवत्। पुरःऽगाः।
अस्य। होतुः। प्रऽदिशि। ऋतस्य। वाचि। स्वाहाऽकृतं। हविः। अदंतु। देवाः॥११॥

अयमग्निः सद्यस्तदानीमेव जातो जायमान एव यज्ञं व्यमिमीत। विशेषेण निर्मिमीते। उत्पादयति। माङ् माने शब्दे च। जौहोत्यादिकः। अत एवायमग्निर्देवानां पुरोगाः प्रथमगामी मुख्योऽभवत्। गमेर्विट्प्रत्यय आत्वे च कृते रूपं। ततः प्रदिशि प्रकृष्टायां दिशि प्राच्यामृतस्याहवनीयात्मनागतस्यास्य होतुर्होमनिष्पादकस्याग्नेर्वाचि। अत्र वागाश्रय आस्यं लक्ष्यते। वाच्यास्ये स्वाहाकृतं स्वाहा-

कारेण प्रक्षिप्तं हविः सर्वे देवा अदंतु । भक्षयंतु । इदं सूक्तं यास्केन सम्यगभ्यधायि । नि° ८.५-२१.। तदत्रानुसंधीयतां ॥

॥ इत्यष्टमस्य षष्ठे नवमो वर्गः ॥

मनीषिण इति दशर्चं द्वादशं सूक्तं वैरूपस्याष्ट्रादंष्ट्रस्यार्षं त्रैष्टुभमैंद्रं । तथा चानुक्रम्यते । मनीषिणो दशाष्ट्रादंष्ट्र इति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

मनीषिणः प्र भरध्वं मनीषां यथायथा मतयः संति नृणां ।

इंद्रं सत्यैरेरयामा कृतेभिः स हि वीरो गिर्वणस्युर्विदानः ॥१॥

मनीषिणः । प्र । भरध्वं । मनीषां । यथाऽयथा । मतयः । संति । नृणां ।

इंद्रं । सत्यैः । आ । ईरयाम । कृतेभिः । सः । हि । वीरः । गिर्वणस्युः । विदानः ॥१॥

हे मनीषिणः स्तोतारो मनीषां मनस ईशित्रीं स्तुतिमिंद्राय प्र भरध्वं । कुरुत । नृणां कर्मनेतृणां युष्माकं यथायथा मतयः संति भवंति तथा बुद्ध्यानुसारेण स्तुतिं कुरुध्वं । वयं च कृतेभिः कृतैः सत्यैर्यथार्थभूतैः स्तोत्रैरिंद्रमेरयाम । यज्ञं प्रत्यागमयाम । ईर गतौ । ण्यंतस्य लोट् । हि यतो विदानो जानानः समर्थः स इंद्रो गिर्वणस्युः । गीर्भिर्वनंति संभजंत इति गीर्वणसः स्तोतारः । वनतेरसुनि रूपं । उपपदस्य दीर्घाभावश्छांदसः । तदंतात्क्यच् । क्याच्छंदसीत्युप्रत्ययः । स्तोतॄन्कामयमानः खलु । अतस्तमभिष्टुत ॥

॥ अथ द्वितीया ॥

ऋतस्य हि सदसो धीतिरद्यौत्सं गार्ष्टेयो वृषभो गोभिरानट् ।

उदतिष्ठत्तविषेणा रवेण महांति चित्सं विव्याचा रजांसि ॥२॥

ऋतस्य । हि । सदसः । धीतिः । अद्यौत् । सं । गार्ष्टेयः । वृषभः । गोभिः । आनट् ।

उत् । अतिष्ठत् । तविषेण । रवेण । महांति । चित् । सं । विव्याच । रजांसि ॥२॥

ऋतस्योदकस्य सदसः स्थानस्यांतरिक्षस्य धीतिर्धारकः स इंद्रोऽद्यौत् । द्योतते । प्रकाशते । हि प्रसिद्धौ । द्युत दीप्तौ । लुङि द्युद्भ्यो लुङीति परस्मैपदं । च्लेर्लुक् छांदसः । हलंतलक्षणा वृद्धिरपि । यद्वा । अद्यौत् । तादृश इंद्रो यज्ञमभिगच्छति । द्यु अभिगमे । आदादिकः । लङ् । उतो वृद्धिर्लुकि हलीति वृद्धिः । गार्ष्टेयः । सकृत्प-

सूता धेनुर्गृष्टिः। तस्या अपत्यं वृषभो गोभिः समानट्। संव्याप्नोति। तथैषोऽपि सर्वं स्वमहिम्ना व्याप्नोति। तथा तविषेण। महन्नामैतत्। महता रवेण शब्देनोदतिष्ठत्। उच्छ्रित उन्नतोऽभवत्। अत एव महांति चिन्महांत्यपि रजांस्युदकानि भुवनानि वा सं विव्याच। संव्याप्नोति ॥

॥ अथ तृतीया ॥

इंद्रः किल श्रुत्या अस्य वेद स हि जिष्णुः पथिकृत्सूर्याय।
आन्मेनां कृण्वन्नच्युतो भुवद्गोः पतिर्दिवः सनजा अप्रतीतः ॥३॥
इंद्रः। किल। श्रुत्यै। अस्य। वेद। सः। हि। जिष्णुः। पथिऽकृत्। सूर्याय।
आत्। मेनां। कृण्वन्। अच्युतः। भुवत्। गोः। पतिः। दिवः। सनऽजाः। अप्रतिऽइतः॥३॥

अस्यास्मदीयस्य स्तोत्रस्य श्रुत्यै श्रवणायेंद्रः किलेंद्र एव वेद। जानाति। स हि स एव जिष्णुः शत्रूणां जयशीलः सूर्याय पथिकृन्मार्गकर्ता भवति। किंच। अच्युतः शत्रुभिरगंतव्यो वृषणश्वस्य मेनामात्मानं कृण्वन् कुर्वन् इंद्र आत्। आगच्छत्यस्मदीयं यज्ञं। मेनाभवो वृषणश्वस्य सुक्रतो।१.५१.१३.। इति मंत्रांतरं। अस गतिदीप्त्यादानेषु। भौवादिकः। ˜ ˜। दिवो द्युलोकस्य च पतिर्भुवत्। अभूत्। भवतेर्लेट्। वाक्यभेदादनिघातः ॥

॥ अथ चतुर्थी ॥

इंद्रो मह्ना महतो अर्णवस्य व्रतामिनादंगिरोभिर्गृणानः।
पुरूणि चिन्नि तताना रजांसि दाधार यो धरुणं सत्यताता ॥४॥
इंद्रः। मह्ना। महतः। अर्णवस्य। व्रता। अमिनात्। अंगिरःऽभिः। गृणानः।
पुरूणि। चित्। नि। ततान। रजांसि। दाधार। यः। धरुणं। सत्यऽताता ॥४॥

इंद्रोऽंगिरोभिर्ऋषिभिर्गृणानः स्तूयमानः सन् महतोऽर्णवस्य। अर्णसः सलोपश्चेति वप्रत्ययः। उदकवतो मेघस्य व्रता व्रतानि कर्माणि मह्ना स्वमहिम्नैवामिनात्। अहिंसीत्। मीङ् हिंसायां। लङि मीनातेर्निगम इति ह्रस्वः। ततः पुरूणि चिद्बहून्येव रजांस्युदकानि नि ततान। नीचीनान्यकरोत्। य इंद्रः सत्यताता सत्यैर्देवैस्तते। यद्वा सत्यशब्दादपि स्वार्थिकस्तातिल् द्रष्टव्यः। सत्ये द्युलोके धरुणं धारकं बलं दाधार। अधारयत् ॥

॥ अथ पंचमी ॥

इंद्रो दिवः प्रतिमानं पृथिव्या विश्वा वेद सवना हंति शुष्णं ।

महीं चिद्द्यामातनोत्सूर्येण चास्कंभ चित्कंभनेन स्कभीयान् ॥५॥

इंद्रः । दिवः । प्रतिऽमानं । पृथिव्याः । विश्वा । वेद । सवना । हंति । शुष्णं ।

महीं । चित् । द्यां । आ । अतनोत् । सूर्येण । चास्कंभ । चित् । स्कंभनेन । स्कभीयान् ॥५॥

दिवो द्युलोकस्य पृथिव्याश्च प्रतिमानं महत्त्वेन प्रतिनिधिरिंद्रो विश्वा सर्वाणि सवना सवनानि वेद । सोमपानार्थं जानाति । शुष्णं सर्वस्य शोषकमेतन्नामानमसुरं हंति । वाक्यभेदादनिघातः । अपि च । महीं चिन्महतीमपि द्यां सूर्येणातनोत् । सर्वत्र प्रकाशयुक्तामकरोत् । स्कभीयान् स्कंभयितृणां मध्ये श्रेष्ठः स स्कंभनेन चिन्निरोधनसाधनेन सामर्थ्येनैव चास्कंभ । द्युलोकमवरुद्धमकरोत् । स्कंभिः सौत्रो धातुः । लिटि तुजादीनामिति दीर्घः । चित्कंभनेनेत्यत्र संहितायां सलोपः । उत्पूर्वस्य स्तंभेरुदः स्थास्तंभोरिति सलोप उक्तः । चित्पूर्वस्य स्कंभेरपि भवति छंदोविषयत्वात् ॥

॥ इत्यष्टमस्य षष्ठे दशमो वर्गः ॥

॥ अथ षष्ठी ॥

वज्रेण हि वृत्रहा वृत्रमस्तरदेवस्य शूशुवानस्य मायाः ।

वि धृष्णो अत्र धृषता जघंथाथाभवो मघवन्बाह्वोजाः ॥६॥

वज्रेण । हि । वृत्रऽहा । वृत्रं । अस्तः । अदेवस्य । शूशुवानस्य । मायाः ।

वि । धृष्णो इति । अत्र । धृषता । जघंथ । अथ । अभवः । मघऽवन् । बाहुऽओजाः ॥६॥

हे इंद्र वृत्रहा वृत्रस्य हंता वज्रेण वृत्रमस्तः । अस्तृणाः । अवधीः । स्तृणातेर्लेङि बहुलं छंदसीति विकरणस्य लुक् । सिपि गुणः । हियोगादनिघातः । अनंतरं हे धृष्णो धर्षणशील त्वमदेवस्याद्योतमानस्य शूशुवानस्य स्वबलेन वर्धमानस्य तस्य माया धृषता समर्थेन वज्रेणात्रास्मिन्काल एव वि जघंथ । विनाशितवानसि । हंतेर्लिटि थल्यभ्यासाच्चेति कुत्वं । अथ हे मघवन् धनवन्निंद्र बाह्वोजा भुजबलवानभवः ॥

॥ अथ सप्तमी ॥

सचंत यदुषसः सूर्येण चित्रामस्य केतवो रामविंदन्।
आ यन्नक्षत्रं ददृशे दिवो न पुनर्यतो नकिरद्धा नु वेद ॥७॥
सचंत। यत्। उषसः। सूर्येण। चित्रां। अस्य। केतवः। रां। अविंदन्।
आ। यत्। नक्षत्रं। ददृशे। दिवः। न। पुनः। यतः। नकिः। अद्धा। नु। वेद ॥७॥

यद्यदोषस उषःकालाः सूर्येण सूर्यात्मकेनेंद्रेण सचंत संगच्छंते। सच समवाये भौवादिकः। तदानीमस्य स्वभूताः केतवः सर्वस्य प्रज्ञापका रश्मयश्चित्रां नानावर्णां रां रायं श्रियमविंदन्। अलभंत। पुनरुदयानंतरं यद्यदा दिवो नक्षत्रं न ददृशे न दृश्यते। दृशेः कर्मणि लिट्। यद्योगादनिघातः। तदानीं यतः। शत्रंतस्य शसि शतुरनुमो नद्यजादी इति विभक्तेरुदात्तत्वं। सर्वत्र गच्छतोऽस्य रश्मीन्नकिर्न कश्चिन्नु वेद। जानाति। एतदद्धा सत्यमेव ॥

॥ अथाष्टमी ॥

दूरं किल प्रथमा जग्मुरासामिंद्रस्य याः प्रसवे सस्रुरापः।
क्व स्विदग्रं क्व बुध्न आसामापो मध्यं क्व वो नूनमंतः ॥८॥
दूरं। किल। प्रथमाः। जग्मुः। आसां। इंद्रस्य। याः। प्रऽसवे। सस्रुः। आपः।
क्व। स्वित्। अग्रं। क्व। बुध्नः। आसां। आपः। मध्यं। क्व। वः। नूनं। अंतः ॥८॥

आसामपां मध्ये प्रथमाः प्रथमगामिन्यस्ता आपो दूरं किल जग्मुः। दूरमेव गताः। या आप इंद्रस्य प्रसवे प्रेरणे। षू प्रेरणे। जवसवौ चेति वक्तव्यमित्यपवादेऽच्। थाथघञ्क्ताजबित्रकाणामित्युत्तरपदांतोदात्तत्वं। तस्याज्ञायां सस्रुः। सरंति गच्छंति खलु। अथ प्रत्यक्षकृतः। हे आप आसां युष्माकमग्रं क्व स्वित्। कुत्र वर्तते। बुध्नो मूलं च क्व। तथा वो युष्माकं मध्यं च क्व नूनमिदानीं युष्माकमंतोऽवसानं च क्व। सर्वगतत्वादनिर्ज्ञायमानगमना आसन्नित्यर्थः। क्व। किम्शब्दात् सप्तम्यर्थे किमोऽदित्यत्प्रत्ययः। क्वातीति क्वादेशः। तित्स्वरितः। अंतः। अमेर्गत्यर्थस्यासिहसीत्यादिना तन्प्रत्ययः ॥

॥ अथ नवमी ॥

सृजः सिंधूँरहिना जग्रसानाँ आदिदेताः प्र विविज्रे जवेन ।
मुमुक्षमाणा उत या मुमुचेऽधेदेता न रमंते नितिक्ताः ॥ ९ ॥

सृजः । सिंधून् । अहिना । जग्रसानान् । आत् । इत् । एताः । प्र । विविज्रे । जवेन ।
मुमुक्षमाणाः । उत । याः । मुमुचे । अध । इत् । एताः । न । रमंते । निऽतिक्ताः ॥ ९ ॥

हे इंद्र अहिनाहंतव्येन वृत्रेण मेघेन वा जग्रसानान्। ग्रस अदने। अनुदात्तेत्। छंदसि लिटः कानच्। ग्रस्ताः सिंधून् स्यंदमाना अपः सृजः। असृजः। निरगमयः। आदित्। इदवधारणे। अनंतरमेवैता आपो जवेन वेगेन प्र विविज्रे। सर्वत्रात्यंतं चलिता बभूवुः। ओविजी भयचलनयोः। उदात्तेत्। लिटीरयो रे। पा॰ ६.४.७६.। इतीरयो रे आदेशः। उतापि च। मुमुक्षमाणा इंद्रेण मोचयितुमिष्यमाणा या आपो मुमुचे। इंद्रेण मोचिता अभूवन्। मुचेः कर्मणि लिट्। अधेदनंतरमेव नितिक्ता नितरां शुद्धा आपो न रमंते। एकत्र न क्रीडंते। किंतु सर्वत्र गमनशीला इत्यर्थः ॥

॥ अथ दशमी ॥

सध्रीचीः सिंधुमुशतीरिवायन्त्सनाज्जार आरितः पूर्भिदासां ।
अस्तमा ते पार्थिवा वसून्यस्मे जग्मुः सूनृता इंद्र पूर्वीः ॥ १० ॥

सध्रीचीः । सिंधुं । उशतीःऽइव । आयन् । सनात् । जारः । आरितः । पूःऽभित् । आसां ।
अस्तं । आ । ते । पार्थिवा । वसूनि । अस्मे इति । जग्मुः । सूनृताः । इंद्र । पूर्वीः ॥ १० ॥

अंचतेश्चोपसंख्यानमिति ङीप्। अल्लोपदीर्घौ। वा छंदसीति पूर्वसवर्णदीर्घः। सहांचनाः सहगमना आपः सिंधुं समुद्रं भर्तारमायन्। आगच्छन्। तत्र दृष्टांतः। उशतीरिव। यथा कामयमानाः स्त्रियः स्वपतिमभिगच्छंति तद्वत्। जारः शत्रूणां जारयिता पूर्भिदिंद्रः सनाच्चिरादेवासामपामारितः प्रेरकत्वेन स्वामी भवति। हे इंद्र अस्मे अस्माकं स्वभूतानि पार्थिवा पार्थिवानि वसूनि धनवत्प्रीणयितॄणि हवींषि पूर्वीर्बह्व्यः सूनृता वाचः स्तुतिलक्षणाश्च ते त्वदीयमस्तं गृहमा जग्मुः। आगच्छंतु। यद्वा। अस्मदीयाः स्तुतयस्ते गृहं गच्छंतु। अस्माकं गृहं त्वदीयानि पार्थिवानि धनान्यभिगच्छंतु। गमेश्छंदसि सार्वकालिको लिट् ॥

॥ इत्यष्टमस्य षष्ठ एकादशो वर्गः ॥

इंद्र पिबेति दशर्चं त्रयोदशं सूक्तं त्रैष्टुभमैंद्रं नभःप्रभेदनो नाम विरूपगोत्र ऋषिः। तथा चानुक्रम्यते। इंद्र पिब नभःप्रभेदन इति। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

इंद्र पिब प्रतिकामं सुतस्य प्रातःसावस्तव हि पूर्वपीतिः।
हर्षस्व हंतवे शूर शत्रूनुक्थेभिष्टे वीर्या३प्र ब्रवाम ॥१॥
इंद्र। पिब। प्रतिऽकामं। सुतस्य। प्रातःऽसावः। तव। हि। पूर्वऽपीतिः।
हर्षस्व। हंतवे। शूर। शत्रून्। उक्थेभिः। ते। वीर्या। प्र। ब्रवाम ॥१॥

हे इंद्र त्वं प्रतिकामं ये ये कामास्तांस्तान्प्रति। अव्ययीभावसमासः। तस्य स्वरः। यथेच्छं सुतस्याभिषुतस्य यो भागस्तुभ्यं दातव्यस्तं पिब। आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः। प्रातःसावः प्रातःसवनेऽभिषूयमाणः सोमस्तव हि। तृतीयार्थे षष्ठी। त्वयैव पूर्वपीतिः प्रथमत एव पातव्यः। यद्वा प्रातःसावः। सप्तम्याः सुः। प्रातःसवने तवैव प्रथमपानं खलु। ऐंद्रवायवग्रहे ह्यादित एवेंद्रः पिबति। तत्पुरुषे दासीभारादित्वात्पूर्वपदांतोदात्तत्वं। यद्वा बहुव्रीहिः। ततो हे शूर समर्थ त्वं शत्रून्हंतवे हंतुं हर्षस्व। हृष्टो भव। अथ ते त्वदीयानि वीर्या वृत्रहननादिलक्षणानि वीर्याण्युक्थेभिरुक्थैः शस्त्रैः प्र ब्रवाम। प्रकर्षेण वदाम॥

॥ अथ द्वितीया ॥

यस्ते रथो मनसो जवीयानेंद्र तेन सोमपेयाय याहि।
तूयमा ते हरयः प्र द्रवंतु येभिर्यासि वृषभिर्मंदमानः ॥२॥
यः। ते। रथः। मनसः। जवीयान्। आ। इंद्र। तेन। सोमऽपेयाय। याहि।
तूयं। आ। ते। हरयः। प्र। द्रवंतु। येभिः। यासि। वृषऽभिः। मंदमानः ॥२॥

हे इंद्र मनसोऽपि जवीयानतिशयेन गंता ते त्वदीयो यो रथोऽस्ति तेन रथेन सोमपेयायास्मदीयं सोमं पातुमा याहि। आगच्छ। पा पाने। भावेऽचो यत्। ईद्यतीतीत्वं। आर्धधातुकलक्षणो गुणः। कृदुत्तरपदप्रकृतिस्वरत्वं। तथा ते त्वदीया हरयो रथे संयुक्ता अश्वास्तूयं क्षिप्रमाभिमुख्येन प्र द्रवंतु। प्रगच्छंतु। वृषभिः सेक्तृभिर्येभिर्यैरश्वैर्मंदमानो मोदमानः सन् यासि गच्छसि। हरी इंद्रस्येति वचनादिंद्रस्य द्वावेवाश्वाविति न चोदनीयमात्वा सहस्रमा शतमित्यादिनिगमांतरे दर्शनात्। ऋग्वे॰ ८.१.२४.॥

॥ अथ तृतीया ॥

हरित्वता वर्चसा सूर्यस्य श्रेष्ठै रूपैस्तन्वं स्पर्शयस्व ।
अस्माभिरिंद्र सखिभिर्हुवानः सध्रीचीनो मादयस्वा निषद्य ॥३॥
हरित्वता । वर्चसा । सूर्यस्य । श्रेष्ठैः । रूपैः । तन्वं । स्पर्शयस्व ।
अस्माभिः । इंद्र । सखिऽभिः । हुवानः । सध्रीचीनः । मादयस्व । निऽसद्य ॥३॥

हे इंद्र हरित्वता । हरिच्छब्दान्मतुपो ऋय इति वत्वं । हरिद्वर्णयुक्तेन सूर्यस्य वर्चसा तेजसा तत्सदृशैः श्रेष्ठैः प्रशस्यतमैरात्मीयै रूपैस्तन्वमात्मीयं शरीरं मदीयं वा । यद्वा तायत इति तनूर्यज्ञः । तं स्पर्शयस्व । तेजोयुक्तं कुरु । किंच । सध्रीचीनः । विभाषांचेरदिक्स्त्रियामिति खप्रत्ययः । मरुद्भिः सहांचनस्त्वं सखिभिः सखिभूतैरस्माभिर्हुवान आहूयमानः सन् निषद्य यज्ञे निषण्णो भूत्वा मादयस्व । सोमपानेन हृष्टो भव ॥

॥ अथ चतुर्थी ॥

यस्य त्यत्ते महिमानं मदेष्विमे मही रोदसी नाविविक्तां ।
तदोक आ हरिभिरिंद्र युक्तैः प्रियेभिर्याहि प्रियमन्नमच्छ ॥४॥
यस्य । त्यत् । ते । महिमानं । मदेषु । इमे इति । मही इति । रोदसी इति । न । अविविक्तां ।
तत् । ओकः । आ । हरिऽभिः । इंद्र । युक्तैः । प्रियेभिः । याहि । प्रियं । अन्नं । अच्छ ॥४॥

हे इंद्र इमे मही महत्यौ रोदसी द्यावापृथिव्यौ यस्य ते तव सोमपानेन जनितेषु मदेषु संभूतं त्यत्तं महिमानं नाविविक्तां न पृथक्कुरुतः । किंतु यस्य महिम्न्येव तिष्ठतः । विचिर् पृथग्भावे । जौहोत्यादिकः । लङि संज्ञापूर्वको विधिरनित्य इत्यभ्यासस्य गुणाभावः । यद्योगादनिघातः । प्रियेभिः प्रियतमै रथे युक्तैर्हरिभिरश्वैः प्रियं प्रीणनकरमन्नं सोमलक्षणमच्छाभिलक्ष्य तदोकोऽस्मदीयं यज्ञसदनमा याहि । आगच्छ ॥

॥ अथ पंचमी ॥

यस्य शश्वत्पपिवाँ इंद्र शत्रूननानुकृत्या रण्या चकर्थ ।
स ते पुरंधिं तविषीमियर्ति स ते मदाय सुत इंद्र सोमः ॥५॥

यस्य । शश्वत् । पपिऽवान् । इंद्र । शत्रून् । अननुऽकृत्या । रण्या । चकर्थ ।
सः । ते । पुरंऽधिं । तविषीं । इयर्ति । सः । ते । मदाय । सुतः । इंद्र । सोमः ॥५॥

हे इंद्र पपिवान् । पिबतेः क्वसौ वस्वेकाजाद्घसामितीडागमः । सोमं पीतवांस्त्वं । अनानुकृत्यानुकरणरहितेन सकृत्प्रहारेण शत्रुहननसमर्थेन रण्या सांयुगीनेनायुधेन । रणशब्दात्साध्वर्थे प्राग्घितीयो यत् । यस्य यजमानस्य शत्रूञ्शश्वद्बहुवारं चकर्थ हतवानसि । कृञ् हिंसायां । लिटि थलि यद्योगादनिघाते लित्स्वरः । स यष्टा ते त्वदर्थं तविषीं महतीं पुरंधिं बह्वीं स्तुतिमियर्ति । प्रेरयति । ऋ गतौ । जौहोत्यादिकः । अर्तिपिपर्त्योरित्यभ्यासस्येत्वं । अभ्यासस्यासवर्णे इतीयङ् । हे इंद्र सुतोऽभिषुतः स सोमस्ते मदाय समर्थो भवति । यद्वा । स यष्टा सुतः सोमः । सुब्व्यत्ययः । अभिषुतं सोमं त्वन्मदाय प्रेरयति ॥

॥ इत्यष्टमस्य षष्ठे द्वादशो वर्गः ॥

॥ अथ षष्ठी ॥

इदं ते पात्रं सनवित्तमिंद्र पिबा सोममेना शतक्रतो ।
पूर्ण आहावो मदिरस्य मध्वो यं विश्व इदभिहर्यंति देवाः ॥६॥
इदं । ते । पात्रं । सनऽवित्तं । इंद्र । पिब । सोमं । एना । शतक्रतो इति शतऽक्रतो ।
पूर्णः । आऽहावः । मदिरस्य । मध्वः । यं । विश्वे । इत् । अभिऽहर्यंति । देवाः ॥६॥

हे इंद्र ते त्वदर्थं पात्रं चमसादिकं सनवित्तं । अस्माभिश्चिरादेव लब्धं । विद्लृ लाभे । कर्मणि निष्ठा । हे शतक्रतो बहुकर्मन्निंद्रैनैतेन पात्रेण सोमं पिब । यतो मदिरस्य मदकरस्य मध्वो मधुनः सोमस्याहावः पानस्थानीयपात्रविशेषः पूर्णः पूरितोऽभूत् । ह्वेञ् स्पर्धायां । निपानमाहाव इति निपातितः । स्तुतिभिराहूयमाना देवा अत्र सोमं पिबंतीति । थाथादिस्वरः । यमिद्यमाहावमेव विश्वे सर्वे देवा अभिहर्यंति । अभिकामयंते । हर्य गतिकांत्योः । भौवादिकः । यद्योगात्तिङो निघाताभावे तिङि चोदात्तवतीति गतेर्निघातः ॥

॥ अथ सप्तमी ॥

वि हि त्वामिंद्र पुरुधा जनासो हितप्रयसो वृषभ ह्वयंते ।
अस्माकं ते मधुमत्तमानीमा भुवन्त्सवना तेषु हर्य ॥७॥

वि। हि। त्वां। इंद्र। पुरुधा। जनासः। हितऽप्रयसः। वृषभ। ह्वयंते।
अस्माकं। ते। मधुमत्ऽतमानि। इमा। भुवन्। सवना। तेषु। हर्य ॥७॥

हे इंद्र वृषभ कामानां वर्षक हितप्रयसः। प्रय इत्यन्ननाम। प्रीणनकारित्वात्। संभृतहविष्का जनासो जनाः पुरुधा बहुधा। हिरवधारणे। त्वामेव वि ह्वयंते। विविधमाह्वयंति। ह्वेञ् स्पर्धायां। निसमुपविभ्यो ह्व इत्यात्मनेपदं। अस्माकं स्वभूतानीमेमानि सवना सवनानि ते त्वदर्थं मधुमत्तमान्यतिशयेन सोमवंति भुवन्। अभवन्। तस्मात्त्वं तेषु सवनेषु हर्य। सोमान्कामयस्व ॥

॥ अथाष्टमी ॥

प्र ते इंद्र पूर्व्याणि प्र नूनं वीर्या वोचं प्रथमा कृतानि।
सतीनमन्युरश्रथायो अद्रिं सुवेदनामकृणोर्ब्रह्मणे गां ॥८॥
प्र। ते। इंद्र। पूर्व्याणि। प्र। नूनं। वीर्या। वोचं। प्रथमा। कृतानि।
सतीनऽमन्युः। अश्रथयः। अद्रिं। सुऽवेदनां। अकृणोः। ब्रह्मणे। गां ॥८॥

हे इंद्र ते त्वदीयानि प्रथमादितः कृतानि पूर्व्याणि पुरातनानि च वीर्या वीर्याणि नूनमिदानीं प्र वोचं। प्रकर्षेण वदामि। एकः प्रशब्दः पूरणः। वोचं। लुङि ब्रुवो वचिः। वेरङ्। कानि तानि। सतीनमन्युः। सतीनमित्युदकनाम। उदकाभिवर्षणबुद्धियुक्तस्त्वमद्रिं मेघमश्रथयः। वज्रेणाहिंसीः। ब्रह्मणे बृहस्पतये गां पणिभिरपहृतां सुवेदनां सुष्ठु ज्ञापनीयामकृणोः। अकरोरित्यादीनि ॥

॥ अथ नवमी ॥

नि षु सीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनां।
न ऋते त्वत्क्रियते किं चनारे महामर्कं मघवञ्चित्रमर्च ॥९॥
नि। सु। सीद। गणऽपते। गणेषु। त्वां। आहुः। विप्रऽतमं। कवीनां।
न। ऋते। त्वत्। क्रियते। किं। चन। आरे। महां। अर्कं। मघऽवन्। चित्रं। अर्च ॥९॥

हे गणपते त्वं गणेषु स्तोतृगणेषु सु सुष्ठु नि षीद। स्तुतिश्रवणार्थं निषण्णो भव। यतः कवीनां क्रांतप्रज्ञानां मध्ये त्वा त्वां विप्रतममतिशयेन मेधाविनमित्याहुः। किंच त्वदृते। अन्यारादितरर्ते इति पंचमी। त्वां वर्जयित्वा किं चन कर्मारे दूरे समीपे वा न क्रियते। तस्मान्निषीद। ततो हे मघवन् धनवन्निंद्र महां महांत-

मर्कमर्चनीयमस्मदीयं त्रिवृत्पंचदशादिलक्षणं स्तोमं चित्रं नानारूपं कृत्वार्च। पूजय। विधेहि। अर्च पूजायां। भौवादिकः ॥

॥ अथ दशमी ॥

अभिख्या नो मघवन्नाधमानान्त्सखे बोधि वसुपते सखीनां।
रणं कृधि रणकृत्सत्यशुष्माभक्ते चिदा भजा राये अस्मान् ॥१०॥

अभिऽख्या। नः। मघऽवन्। नाधमानान्। सखे। बोधि। वसुऽपते। सखीनां।
रणं। कृधि। रणऽकृत्। सत्यऽशुष्म। अभक्ते। चित्। आ। भज। राये। अस्मान् ॥१०॥

हे मघवन् धनवन्निंद्र नाधमानान्। नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु। भौवादिकः। अनुदात्तेत्। याचमानान्नोऽस्मानभिख्याभिख्यापनेन तेजसा युक्तान्कुरु। प्रसिद्धान्वा कुरु। हे सखे धनदानेन हे वसुपते वसूनां स्वामिन् त्वं सखीनां स्तोतृत्वेन सखिभूतानामस्माकं स्वभूतानि स्तोत्राणि बोधि। बुध्यस्व। बुध अवगमने। भौवादिकः। लोटि छांदसः शपो लुक्। छंदस्युभयथेति हेरार्धधातुकत्वेनाङित्त्वादङितश्चेति हेर्धिभावः। अत एव गुणः। सार्वधातुकत्वेन ङित्त्वादंतोदात्तत्वं। वर्णलोपश्छांदसः। हे रणकृत् शत्रुभिः सह युद्धकर्तः अत एव हे सत्यशुष्म यथार्थबलोपेत त्वं रणं कृधि। कुरु। शत्रूञ्जहि। करोतेर्लोटि श्रुशृणुपृकृवृभ्यश्छंदसीति हेर्धिः। किंच। अभक्ते चिदसंभजनीये स्थानेऽप्यस्मान्राये धनाया भजा। भागिनः कुरु। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः ॥

॥ इत्यष्टमस्य षष्ठे त्रयोदशो वर्गः ॥

॥ इति सायणाचार्यविरचिते दाशतय्यां दशमे मंडले नवमोऽनुवाकः ॥

दशमेऽनुवाके षोडश सूक्तानि। तत्र तमस्येति दशर्चं प्रथमं सूक्तमैंद्रं। शतप्रभेदनो नाम वैरूप ऋषिः। अंत्या त्रिष्टुप् शिष्टा जगत्यः। तथा चानुक्रांतं। तमस्य शतप्रभेदनस्त्रिष्टुबंतमिति ॥ दशरात्रस्याष्टमेऽहनि मरुत्वतीय एतत्सूक्तं। सूत्रितं च। तमस्य द्यावापृथिवी महाँ इंद्रो नृवदिति मरुत्वतीयं। आ॰ ८.७.। इति ॥

॥ तत्र प्रथमा ॥

तमस्य द्यावापृथिवी सचेतसा विश्वेभिर्देवैरनु शुष्ममावतां।
यदैत्कृण्वानो महिमानमिंद्रियं पीत्वी सोमस्य क्रतुमाँ अवर्धत ॥१॥

तं। अस्य। द्यावापृथिवी इति। सऽचेतसा। विश्वेभिः। देवैः। अनु। शुष्मं। आवतां।
यत्। ऐत्। कृण्वानः। महिमानं। इंद्रियं। पीत्वी। सोमस्य। क्रतुऽमान्। अवर्धत ॥१॥

सचेतसा सह चेतयंत्यौ द्यावापृथिवी द्यावापृथिव्यौ विश्वेभिः सर्वेभिः सर्वैर्देवैः सह। अस्य। अन्वादेशेऽशादेशोऽनुदात्तः। एतस्येंद्रस्य तं शुष्मं शत्रूणां शोषकं बलमन्वावतां। रक्षतां। तस्य बलं पूर्वमस्मान्रक्षतु। पश्चादेते अपि रक्षतामिति भावः। अवतेर्लुङ्। कृण्वानो वृत्रवधादिकं कुर्वाणः स महिमानमिंद्रियमिंद्रस्यात्मनः पर्याप्तं वीर्यं च यद्यदैत्प्राप्नोत्। इण् गतौ। आदादिकः। आडजादीनामित्याडागमः। तदा क्रतुमान्कर्मवान् स सोमस्य पीत्वी सोमं पीत्वावर्धत। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानसंज्ञा। चतुर्थ्यर्थे बहुलं छंदसीति षष्ठी। पीत्वी। स्नात्व्यादयश्चेति निपातितः॥

॥ अथ द्वितीया ॥

तमस्य विष्णुर्महिमानमोजसांशुं दधन्वान्मधुनो वि रप्शते।
देवेभिरिंद्रो मघवा सयावभिर्वृत्रं जघन्वाँ अभवद्वरेण्यः ॥२॥

तं। अस्य। विष्णुः। महिमानं। ओजसा। अंशुं। दधन्वान्। मधुनः। वि। रप्शते।
देवेभिः। इंद्रः। मघऽवा। सयावऽभिः। वृत्रं। जघन्वान्। अभवत्। वरेण्यः ॥२॥

विष्णुरेतन्नामकः। व्याप्तो यज्ञो वा। मधुनो मदकरस्य सोमस्यांशुं लताखंडं दधन्वान् प्रेरयन्। धवेर्गत्यर्थस्य क्साविदित्त्वान्नुमागमे कृते वलि लोपः। ओजसा स्ववीर्येण संजातमस्येंद्रस्य तं महिमानं वि रप्शते। विविधं शब्दयति। स्तौति। मघवा धनवान् सयावभिः। यातेरातो मनिन्क्वनिति क्वनिप्। सहगंतृभिर्देवेभिर्देवैर्मरुद्भिश्च वृत्रं जघन्वान् हतवान्। इंद्रो वरेण्यः सर्वैर्वरणीयः संभजनीयोऽभवत्॥

॥ अथ तृतीया ॥

वृत्रेण यदहिना बिभ्रदायुधा समस्थिथा युधये शंसमाविदे।
विश्वे ते अत्र मरुतः सह त्मनावर्धन्नुग्र महिमानमिंद्रियं ॥३॥

वृत्रेण। यत्। अहिना। बिभ्रत्। आयुधा। संऽअस्थिथाः। युधये। शंसं। आऽविदे।
विश्वे। ते। अत्र। मरुतः। सह। त्मना। अवर्धन्। उग्र। महिमानं। इंद्रियं ॥३॥

युधये योधनायायुधायुधानि वज्रादीनि बिभ्रद्धारयन्निंद्रस्त्वं यद्यदाहिनाहंतव्येन

वृत्रेण समस्थिथाः सहास्थाः। तिष्ठतेर्लुङि समवप्रविभ्यः स्थ इत्यात्मनेपदं। स्थाघ्वोरिच्चेति सिचः किच्वमिकारश्चांतादेशः। ह्रस्वादंगादिति सिचो लोपः। यद्योगादनिघातः। तिङि चोदात्तवतीति गतेर्निघातः। तदाविदे। कृत्यार्थे केन्प्रत्ययः। तव वृत्रवधादिकं वीर्यं प्रज्ञापयितुं शंसं। अशंसं। शस्त्रैरहं स्तौमि। शंसु स्तुतौ। लङ्। वाक्यभेदादनिघातः। किंच। हे उग्रोद्गूर्णबल अत्रास्मिन्काल एव ते त्वदीयं महिमानमिंद्रियं वीर्यं च विश्वे सर्वे मरुतस्त्मनात्मना सहैवावर्धन्। वर्णलोपश्छांदसः। अवर्धयन्। मरुतो हींद्रस्य वीर्यं भवंति ॥

॥ अथ चतुर्थी ॥

जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभि पौंस्यं रणं।
अवृश्चदद्रिमव सस्यदः सृजदस्तभ्नान्नाकं स्वपस्यया पृथुं ॥४॥

जज्ञानः। एव। वि। अबाधत। स्पृधः। प्र। अपश्यत्। वीरः। अभि। पौंस्यं। रणं।
अवृश्चत्। अद्रिं। अव। सऽस्यदः। सृजत्। अस्तभ्नात्। नाकं। सुऽअपस्यया। पृथुं ॥४॥

स इंद्रो जज्ञान एव। जनी प्रादुर्भावे। छांदसस्य लिटः कानच्। जायमान एव स्पृधः शत्रून्व्यबाधत। अत्यर्थमपीडयत्। स्पृधः। स्पर्धा संघर्षे। क्विप्। अपस्पृधेथामिति निपातनेनैकत्र संप्रसारणदर्शनादन्यत्रापि भवति। अत एव वीरः समर्थः स रणं संग्राममभिलक्ष्य पौंस्यमात्मीयं बलं प्रापश्यत्। अस्यैतावद्बलमिति प्रकर्षेण पश्यति। जानाति। किंच। अद्रिं मेघमवृश्चत्। वर्षणार्थमच्छिनत्। अनंतरं सस्यदः। स्यंदू प्रस्रवणे। क्विप्। शसि नलोपः। सह स्यंदमाना अपोऽव सृजत्। अवाङ्मुखमसृजत्। निरगमयत्। तथा स पृथुं महांतं नाकं द्युलोकं स्वपस्यया। सुप आत्मनः क्यच्। अ प्रत्ययादिति स्त्रियामप्रत्ययः। शोभनकर्मेच्छयास्तभ्नात्। निरुद्धमकरोत्। स्तंभिः सौत्रो धातुः ॥

॥ अथ पंचमी ॥

आदिंद्रः सत्रा तविषीरपत्यत वरीयो द्यावापृथिवी अबाधत।
अवाभरद्धृषितो वज्रमायसं शेवं मित्राय वरुणाय दाशुषे ॥५॥

आत्। इंद्रः। सत्रा। तविषीः। अपत्यत। वरीयः। द्यावापृथिवी इति। अबाधत।
अव। अभरत्। धृषितः। वज्रं। आयसं। शेवं। मित्राय। वरुणाय। दाशुषे ॥५॥

आदपि च स इंद्रस्तविषीर्महतीः सेनाः सचा सहैवापत्यत। अगच्छत्। पद गतौ। दैवादिकः। वर्णव्यत्ययः। यद्वा पत्यत इत्यैश्वर्यकर्मा। सेनानामीष्टे। तासामीश्वरोऽभवदित्यर्थः। स एव द्यावापृथिवी द्यावापृथिव्यौ वरीयः। तृतीयायाः सुः। उरुतरेण महिम्नाबाधत। तयोरंतःस्थिताञ्शत्रूनवधीदित्यर्थः। धृषितः शत्रुवधे प्रगल्भः सन् आयसमयोमयं वज्रमवाभरत्। अधारयत्। किमर्थं। मित्राय वरुणाय दाशुषे हविर्दत्तवते यज्वने च शेवं सुखं कर्तुं ॥

॥ इत्यष्टमस्य षष्ठे चतुर्दशो वर्गः ॥

॥ अथ षष्ठी ॥

इंद्र॑स्या॒त्र तवि॑षीभ्यो॒ विर॒प्शिन॑ ऋघाय॒तो अ॑रंहयंत म॒न्यवे॑।
वृ॒त्रं यदु॒ग्रो व्यवृ॑श्च॒दोज॑सा॒पो बिभ्र॑तं॒ तम॑सा॒ परी॑वृतं ॥६॥
इंद्र॑स्य। अत्र॑। तवि॑षीभ्यः। वि॒ऽर॒प्शिनः॑। ऋ॒घा॒य॒तः। अ॒रं॒ह॒यं॒त। म॒न्यवे॑।
वृ॒त्रं। यत्। उ॒ग्रः। वि। अवृ॑श्चत्। ओज॑सा। अ॒पः। बिभ्र॑तं। तम॑सा। परि॑ऽवृतं॥६॥

अत्रास्मिन्काल एव विरप्शिनो महतो विविधं शब्दायमानस्य वर्घायतः शत्रून्हिंसत इंद्रस्य तविषीभ्यः। षष्ठ्यर्थे चतुर्थी। बलानां मन्यवे प्रख्यापनायारंहयंत। आपो निरगच्छन्। रंहिर्गत्यर्थः। उग्र उद्गूर्णः सोऽप उदकानि बिभ्रतं धारयंतं तमसा परीवृतं परितो वेष्टितं। वृणोतेः कर्मणि क्तः। गतिरनंतर इति स्वरः। संहितायामुपसर्गस्य घञि। पा॰ ६.३.१२२.। इति दीर्घः। तं वृत्रं यद्यस्मिन्काल ओजसा स्ववीर्येण व्यवृश्चत् अत्यर्थमवधीत् ॥

॥ अथ सप्तमी ॥

या वी॒र्या॑णि प्र॒थ॒मानि॒ कर्त्वा॑ महि॒त्वेभि॒र्यत॑मानौ स॒मी॒यतुः॑।
ध्वा॒न्तं तमोऽव॑ दध्वसे ह॒त इंद्रो॑ म॒ह्ना पूर्वहू॑तावपत्यत ॥७॥
या। वी॒र्या॑णि। प्र॒थ॒मानि॑। कर्त्वा॑। म॒हि॒ऽत्वेभिः॑। यत॑मानौ। स॒म्ऽई॒यतुः॑।
ध्वा॒न्तं। तमः॑। अव॑। द॒ध्व॒से॒। ह॒ते। इंद्रः॑। म॒ह्ना। पूर्व॑ऽहूतौ। अ॒प॒त्य॒त॒ ॥७॥

महित्वेभिर्महनीयैः स्वबलैर्यतमानौ युद्धाय प्रयत्नं कुर्वंताविंद्रवृत्रौ प्रथमानि पूर्वभावीनि कर्त्वा। कृत्यार्थे त्वन्प्रत्ययः। कर्तव्यानि यानि वीर्याणि समीयतुः संयोजयामासतुः। इण् गतौ। लिटि दीर्घ इणः कितीति दीर्घः। तयोर्मध्य इंद्रेण वृत्रे

हते सति ध्वांतमतिनिविडं तमोऽव दध्वसे। अवध्वस्तं विनष्टमभूत्। ध्वंसेर्लिट्। कित्वान्नलोपः। इंद्रस्तु मह्ना स्वमहिम्ना पूर्वहूतौ प्रथमाह्वानेऽपत्यत। अगच्छत्। शूराणां मध्येऽयमेव प्रथममाहूयमानोऽभवदित्यर्थः ॥

॥ अथाष्टमी ॥

विश्वे देवासो अध वृष्ण्यानि तेऽवर्धयन्त्सोमवत्या वचस्यया।
रद्धं वृत्रमहिमिंद्रस्य हन्मनाग्निर्न जंभैस्तृष्वन्नमावयत् ॥८॥

विश्वे। देवासः। अध। वृष्ण्यानि। ते। अवर्धयन्। सोमऽवत्या। वचस्यया।
रद्धं। वृत्रं। अहिं। इंद्रस्य। हन्मना। अग्निः। न। जंभैः। तृषु। अन्नं। आवयत् ॥८॥

हे इंद्र अध वृत्रहननानंतरं विश्वे देवासो देवा ऋत्विजः सोमवत्या सोमयुक्तया वचस्यया स्तुतीच्छया ते त्वदीयानि वृष्ण्यानि बलान्यवर्धयन्। वर्धयंति। इंद्रस्य हन्मना हननसाधनेन वज्रेण रद्धं। रध हिंसासंराद्ध्योः। हिंसितमहिं वृत्रमपामावरकं मेघं तृषु शीघ्रमन्नमावयत्। अभक्षयत्। तज्जन्येनोदकेन संपादितमन्नं जनोऽभक्षयदित्यर्थः। आवयतिरत्तिकर्मा। तत्र दृष्टांतः। अग्निर्न। यथाग्निर्जंभैरात्मीयैर्दंतैरन्नं भक्षयति तद्वत् ॥

॥ अथ नवमी ॥

भूरि दक्षेभिर्वचनेभिर्ऋक्वभिः सख्येभिः सख्यानि प्र वोचत।
इंद्रो धुनिं च चुमुरिं च दंभयञ्छ्रद्धामनस्या शृणुते दभीतये ॥९॥

भूरि। दक्षेभिः। वचनेभिः। ऋक्वऽभिः। सख्येभिः। सख्यानि। प्र। वोचत।
इंद्रः। धुनिं। च। चुमुरिं। च। दंभयन्। श्रद्धाऽमनस्या। शृणुते। दभीतये ॥९॥

हे स्तोतारो दक्षेभिर्वर्धनहेतुभिर्ऋक्वभिः। छंदसीवनिपाविति वनिप्प्रत्ययः। अयस्मयादित्वेन भत्वाज्जस्त्वाभावः। पदत्वात्कुत्वं। मंत्रयुक्तैः सख्येभिः। तदर्हतीत्यर्थे छंदसि चेति यत्प्रत्ययः। सख्युरिंद्रस्य योग्यैर्वचनेभिर्वचनैः स्तोत्रैः सख्यानि स्तुत्यस्तोतृलक्षणान्यभिलक्ष्य भूरि बहुवारमिंद्रं प्र वोचत। प्रब्रूत। अभिष्टुत। इंद्रस्तु दभीतय एतन्नामकाय राजर्षये धुनिं च चुमुरिं चैतन्नामकौ द्वावसुरौ दंभयन् हिंसन् श्रद्धामनस्या। मनःशब्दात्क्यच्। श्रद्धायुक्तया मनस इच्छया शृणुते। युष्माभिः कृतानि स्तोत्राणि शृणोति ॥

॥ अथ दशमी ॥

त्वं पुरूण्या भरा स्वश्व्या येभिर्मंसै निवचनानि शंसन्।
सुगेभिर्विश्वा दुरिता तरेम विदो षु ण उर्विया गाधमद्य ॥१०॥

त्वं। पुरूणि। आ। भर। सुऽअश्व्या। येभिः। मंसै। निऽवचनानि। शंसन्।
सुऽगेभिः। विश्वा। दुःऽइता। तरेम। विदो इति। सु। नः। उर्विया। गाधं। अद्य ॥१०॥

हे इंद्र त्वं स्वश्व्या स्वश्व्यानि शोभनाश्वयुक्तानि पुरूणि बहूनि धनानि मह्यमा भर। आहर। प्रयच्छ। निवचनानि नितरां वक्तव्यानि स्तोत्राणि शंसन्नहं येभिर्धनैर्मंसै। मन्यतिरर्चतिकर्मा। देवान्पूजयानि तानि देहि। मन्यतेर्लेटि बहुलं छंदसीति विकरणस्य लुक्। सिप्यडागमः। सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वरः। सुगेभिः सुष्ठु गंतव्यैस्तैर्धनैः स्तोत्रैर्वा विश्वा सर्वाणि दुरिता दुरितानि पापानि तरेम। हे इंद्र अद्यास्मिन्कर्मणि गाधं ग्रथ्यमानं क्रियमाणं नोऽस्मदीयं स्तोत्रमुर्वियोरुत्वेन बहुमानेन षु सुष्ठु विदो। विद उ। जानीह्येव ॥

॥ इत्यष्टमस्य षष्ठे पंचदशो वर्गः ॥

घर्मेति दशर्चं द्वितीयं सूक्तं। सध्रिर्नाम वैरूप ऋषिः। तपसः पुत्रो घर्मो वा। चतुर्थी जगती। शिष्टास्त्रिष्टुभः। तथा चानुक्रांतं। घर्मा सध्रिस्तापसो वा घर्मो वैश्वदेवं चतुर्थी जगतीति। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

घर्मा समंता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम।
दिवस्पयो दिधिषाणा अवेषन्विदुर्देवाः सहसामानमर्कं ॥१॥

घर्मा। संऽअंता। त्रिऽवृतं। वि। आपतुः। तयोः। जुष्टिं। मातरिश्वा। जगाम।
दिवः। पयः। दिधिषाणाः। अवेषन्। विदुः। देवाः। सहऽसामानं। अर्कं ॥१॥

समंता समंतौ संव्याप्तदिगंतौ घर्मा। घृ क्षरणदीप्त्योः। घर्मौ दीप्यमानावग्न्यादित्यौ। त्रिवृतं। त्रयो वा इमे त्रिवृतो लोका इत्याम्नानात्। त्रैलोक्यं व्यापतुः। स्वतेजोभिर्व्याप्तवंतौ। मातरिश्वांतरिक्षे वर्तमानो वायुस्तयोरग्न्यादित्ययोर्जुष्टिं प्रीतिं जगाम। गतवान्। यदा सहसामानं। सामशब्द उपलक्षकः। वेदत्रयतेजःसहितं। सर्वं तेजः सामरूपं ह शश्वदित्याम्नानात्। ईदृशमर्कमर्चनीयं सूर्यं देवा

दीप्यमानाः स्वरश्मयो विदुर्विविदुः। लेभिरे। प्रापुः। तदा दिधिषाणा लोकधारणशीलास्ते दिवो द्युलोकस्य संबंधि पय उदकमवेषन्। व्याप्नुवंतः। ववर्षुरित्यर्थः। दिवस्पय इत्यत्र षष्ठ्याः पतिपुत्रेति सत्वं। दिधिषाणाः। धिष धारणे। चानश्। शपः श्लुः। यद्वा धि धारणे। सनंतस्य चानश्। अज्झनगमां सनीति दीर्घाभावश्छांदसः। यद्वा समंतौ संगतौ घर्मौ स्वयं दीप्यमानौ जीवेश्वरौ त्रिवृतं सत्त्वरजस्तमोगुणात्मिकां मायां व्यापतुः। नियंतृनियंतव्यभावेन मातरिश्वा परमात्मा तयोर्जुष्टिं संभोक्तृव्यपदार्थैः संजातां प्रीतिं जगाम। गतवान्। तं परमात्मानं वेदमयमिमं सूर्यमिति देवा जानंति ॥

॥ अथ द्वितीया ॥

तिस्रो देष्ट्राय निर्ऋतीरुपासते दीर्घश्रुतो वि हि जानंति वह्नयः।
तासां नि चिक्युः कवयो निदानं परेषु या गुह्येषु व्रतेषु ॥२॥
तिस्रः। देष्ट्राय। निःऽऋतीः। उप। आसते। दीर्घऽश्रुतः। वि। हि। जानंति। वह्नयः।
तासां। नि। चिक्युः। कवयः। निऽदानं। परेषु। याः। गुह्येषु। व्रतेषु ॥२॥

निर्ऋतीः। पृथिवीनामैतत्। अनेनेतरलोकावुपलक्ष्येते। तत्राधिष्ठितास्तिस्रोऽग्न्यादिदेवता देष्ट्राय हविषां प्रदानायोपासते। यजमाना उपासनं कुर्वते। ततो दीर्घश्रुतः प्रभूतकीर्त्तयो वह्नयो जगतः प्रापिकास्ता देवता वि जानंति। एतैः कृतामुपासनां मन्वत एव। यद्वा निर्ऋतीः। निःशेषेणर्च्छंति गच्छंतीति निर्ऋतयः। तास्तिस्रः सृष्टिस्थितिसंहृतीर्देष्ट्रायात्मनः कर्मभोगदानायोपासते ते दीर्घश्रुतो दीर्घे संसारे शृण्वंतो मंतव्यद्रष्टव्यादिपदार्थं जानंतो मंत्रदृष्ट्यादिरूपमजानंत इत्यर्थः। अत एव वह्नयः संसारस्य वोढारस्ता न जानंति। कवयः क्रांतदर्शिनस्तु तासां सृष्ट्यादीनामग्न्यादीनां वा निदानं मूलकारणं परमात्मानं नि चिक्युः। नितरां चिन्वंति जानंति। परेषूत्कृष्टेषु वा गुह्येषु वा गोप्तव्येषु कर्मसु यमनियमादिषु व्रतेषु याः प्रवृत्तयः संति तासां निदानं नि चिक्युः। जानंति। चिञ् चयने। लिटि विभाषाचेरित्यभ्यासादुत्तरस्य कवर्णादेशः। यद्वा। चायतेर्लिटि चायः की। पा॰ ६.१.३५.। इति छंदसि कीत्यादेशः ॥

॥ अथ तृतीया ॥

चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।
तस्यां सुपर्णा वृषणा नि षेदतुर्यत्र देवा दधिरे भागधेयं ॥३॥
चतुःऽकपर्दा । युवतिः । सुऽपेशाः । घृतऽप्रतीका । वयुनानि । वस्ते ।
तस्यां । सुऽपर्णा । वृषणा । नि । सेदतुः । यत्र । देवाः । दधिरे । भागऽधेयं ॥३॥

चतुष्कपर्दा चतुष्कोणा युवतिः स्त्रीरूपा सुपेशाः शोभनालंकारा घृतप्रतीका घृतप्रमुखहविष्कैताद्दशी वेदिर्वयुनानि ज्ञातव्यानि पदार्थजातानि कर्माणि स्तोत्राणि वा वस्ते । आच्छादयति । तस्यां वेद्यां वृषणा वृषणौ हविषां वर्षितारौ सुपर्णा सुपर्णौ सुपतनौ जायापती यजमानब्रह्माणौ वा नि षेदतुः । निषण्णौ भवतः । यत्र यस्यां वेद्यां देवा अग्न्यादयो भागधेयं । स्वार्थिको धेयप्रत्ययः । स्वस्वभागं हविर्दधिरे । धारयंति ॥ यद्वा चतुष्कपर्दा नामाख्यातोपसर्गनिपाताश्चत्वारः कपर्दस्थानीया यस्याः सा युवतिस्तरुणी नित्या घृतप्रतीका दीप्यमानवर्णावयवेषौपनिषदी वाग्वयुनानि ज्ञानानि वस्ते । आच्छादयति । तस्यां वाचि सुपर्णा सुपर्णौ जीवपरमात्मानौ निषण्णौ भवतः । यत्र । इतराभ्योऽपि दृश्यंत इति तृतीयार्थे त्रल्प्रत्ययः । यया वाचा देवा भागं धारयंति ॥

॥ अथ चतुर्थी ॥

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे ।
तं पाकेन मनसापश्यमंतितस्तं माता रेळ्हि स उ रेळ्हि मातरं ॥४॥
एकः । सुऽपर्णः । सः । समुद्रं । आ । विवेश । सः । इदं । विश्वं । भुवनं । वि । चष्टे ।
तं । पाकेन । मनसा । अपश्यं । अंतितः । तं । माता । रेळ्हि । सः । ऊं इति । रेळ्हि ।
मातरं ॥४॥

एकः सर्वकार्येष्वसहायः सुपर्णः सुपतनो मध्यमस्थानो देवः समुद्रमंतरिक्षमा विवेश । आविशति । आविश्य च स इदं विश्वं सर्वं भुवनं भूतजातं वि चष्टे । अनुग्राह्यतयाभिपश्यति । तमेवंरूपं देवं पाकेन परिपक्वेन मनसांतितः समीपेऽहमपश्यं । अदर्शं । किंच मातोदकानां निर्मात्री माध्यमिका वाक् तां रेळ्हि । आस्वादयति । उपजीवनमात्रमत्र लक्ष्यते । स उ स खलु मातरं वाचं रेळ्हि ।

लेढि। तामेवोपजीवति। लिह आस्वादने॥ यद्वा सुपर्णः पक्षवान् निराधारसंचार्येकः प्राणवायुः परमात्मा वा समुद्रं। समुद्रवंत्यापोऽस्मादिति समुद्रमंतरिक्षं। यद्वा समुद्रवं सर्वतो गमनं। तच्छीलं प्रपंचजातमाविष्टवान्। सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः। वायुपक्षे वाय्वादिरूपेण विवेश। स इदं विश्वं सर्वं लोकं विचष्टे। विशेषेण ख्यापयति। सति हि प्राणे परमात्मनि वा जीवंतः पुरुषा लोकं विख्यातं कुर्वंति। तं देवमुपासकोऽहं पाकेन परिपक्वज्ञानेन मनसांतितः। अंतिकशब्दात्तसिः। अंतिकस्य तसि कादिलोपो भवत्याद्युदात्तत्वं च। पा॰ ६.४.१४९.४.। इति कादिलोपः। अंतिके समीपे स्वहृदयेऽपश्यं। तं प्राणं माता वाग्रेळ्हि। वाक् प्राणेऽंतर्भवतीत्यर्थः। स्वापे हि वाग्व्यापारो न दृश्यते प्राणव्यापारस्तु दृश्यत इति॥

॥ अथ पंचमी ॥

सुपर्णं विप्राः कवयो वचोभिरेकं संतं बहुधा कल्पयंति।
छंदांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश॥५॥

सुऽपर्णं। विप्राः। कवयः। वचःऽभिः। एकं। संतं। बहुधा। कल्पयंति।
छंदांसि। च। दधतः। अध्वरेषु। ग्रहान्। सोमस्य। मिमते। द्वादश॥५॥

विप्रा मेधाविनः कवयः क्रांतप्रज्ञा मनुष्याः सुपर्णं सुपतनमेकं संतं परमात्मानं वचोभिः स्तुतिलक्षणैर्वचनैर्बहुधा बहुप्रकारं कल्पयंति। कुर्वंति। किंच त एव कवयोऽध्वरेषु यज्ञेषु छंदांसि गायत्र्यादीनि सप्त छंदांसि दधतः स्तोत्रशस्त्रादिना धारयंतो द्वादशसंख्याकान्सोमस्य ग्रहान् ग्रहणसाधनानि पात्राण्युपांश्वंतर्यामादीनि मिमते। निर्मिमते। ग्रहान्। गृह्यत एभिरिति ग्रहाः। ग्रहवृदनिश्चिगमश्चेति करणेऽप्प्रत्ययः। सोमस्येति कर्मणि षष्ठी। द्वादशेत्यत्र संख्येति पूर्वपदप्रकृतिस्वरत्वं॥

॥ इत्यष्टमस्य षष्ठे षोडशो वर्गः॥

॥ अथ षष्ठी ॥

षट्त्रिंशांश्च चतुरः कल्पयंतश्छंदांसि च दधत आद्वादशं।
यज्ञं विमाय कवयो मनीष ऋक्सामाभ्यां प्र रथं वर्तयंति॥६॥

षट्ऽत्रिंशान्। च। चतुरः। कल्पयंतः। छंदांसि। च। दधतः। आऽद्वादशं।
यज्ञं। विऽमाय। कवयः। मनीषा। ऋक्ऽसामाभ्यां। प्र। रथं। वर्तयंति॥६॥

पूर्वं सामान्येन यज्ञग्रहानुक्त्वेदानीं सर्वग्रहादिपूर्वको यज्ञोऽभिधीयते। षट्त्रिंशान्। द्वावुपांश्वंतर्यामौ। ऐंद्रवायवादयस्त्रयो द्विदेवत्यग्रहाः। द्वौ शुक्रामंथिनौ। आग्रयण उक्थ्यो ध्रुवश्चेति त्रयः। ऋतुग्रहा द्वादश। ऐंद्राग्नो वैश्वदेवश्च द्वौ। त्रयो मरुत्वतीयाः। एको माहेंद्रः। आदित्यसावित्रौ द्वौ। वैश्वदेवः पात्नीवतो हारियोजन इति त्रयो ग्रहाः। एवं षट्त्रिंशद्भवंति। अत्यग्निष्टोमे पूर्वे षट्त्रिंशद्ग्रहा द्वावंश्वदाभ्यौ दधिग्रहः षोडशीति चेति चत्वारः। एतांश्चत्वारिंशत्संख्याकान्ग्रहान्कल्पयंतः सोमेन पूरयंतः। किंच। आद्वादशं। आङ्मर्यादाभिविध्योः। पा॰ २.१.१३.। इत्यव्ययीभावसमासः। तस्य स्वरः। द्वादशसंख्याकप्रउगादिशस्त्रसमाप्तिपर्यंतं छंदांसि गायत्र्यादीनि दधतः संतः शस्त्रादिरूपेण धारयंतः कवयो मनीषा। तृतीयाया आकारः। मनीषया बुद्ध्यैवं यज्ञं विमाय निर्माय रथं। रमंत्यत्रेति रथो यज्ञः। तं रथं यज्ञमृक्सामाभ्यां प्र वर्तयंति। प्रकर्षेण संपादयंति। चतुर इत्यत्र चतुरः शसीत्यंतोदात्तत्वं ॥

॥ अथ सप्तमी ॥

चतु॑र्दशान्ये म॑हि॒मानो॑ अ॒स्य॒ तं धीरा॑ वा॒चा प्र ण॑यंति स॒प्त।
आप्ना॑नं ती॒र्थं क इ॒ह प्र वो॑च॒द्येन॑ प॒था प्र॒पिबं॑ते सु॒तस्य॑ ॥७॥

चतुः॑ऽदश। अ॒न्ये। म॒हि॒मानः॑। अ॒स्य॒। तं। धीराः॑। वा॒चा। प्र। न॒यं॒ति॒। स॒प्त।
आप्ना॑नं। ती॒र्थं। कः। इ॒ह। प्र। वो॑च॒त्। येन॑। प॒था। प्र॒ऽपिबं॑ते। सु॒तस्य॑ ॥७॥

अस्य यज्ञरूपस्य परमात्मनोऽन्ये चतुर्दश चतुर्दशसंख्याका महिमानो विभूतयो भवंति। तं यज्ञं सप्त सप्तसंख्याका धीरा धीमंतो होत्रादयो वाचा शस्त्ररूपया प्र णयंति। प्रकर्षेण नयंति। आप्नानं। आप्लृ व्याप्तौ। ताच्छीलिके चानशि व्यत्ययेन विकरणस्य व्यत्ययः। व्यापनशीलं तीर्थं पापोत्तारणसमर्थं चात्वालोत्करमध्यदेशमिहास्मिन्यज्ञे कः प्र वोचत्। को वक्ति। न कोऽपीत्यर्थः। येन पथा येन यज्ञमार्गेण सुतस्याभिषुतं सोमं प्रपिबंते देवा अतिशयेन पिबंति। पा पाने। पाघ्रेत्यादिना पिबादेशः। व्यत्ययेनात्मनेपदं। उपसर्गेण समासः। यद्योगादनिघाते तिङि चोदात्तवतीति गतेर्निघातः ॥

॥ अथाष्टमी ॥

स॒ह॒स्र॒धा पं॑चद॒शान्यु॒क्था याव॒द्द्यावा॑पृथि॒वी ताव॒दित्तत्।
स॒ह॒स्र॒धा म॑हि॒मानः॑ स॒हस्रं॒ याव॒द्ब्रह्म॒ विष्ठि॑तं॒ ताव॑ती॒ वाक् ॥८॥

सहस्रधा। पंचऽदशानि। उक्था। यावत्। द्यावापृथिवी इति। तावत्। इत्। तत्।
सहस्रधा। महिमानः। सहस्रं। यावत्। ब्रह्म। विऽस्थितं। तावती। वाक्॥८॥

सहस्रधा सहस्रसंख्याकेषु ब्रह्मादिस्तंबपर्यंतेषु देहेषु पंचदशानि चक्षुः श्रोत्रं मनो वाक् प्राण इत्येतानि पंच। तदाधारत्वेन मातापित्रोः सकाशादागतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि भूतानि मिलितानि दश। एवं पंचदशसंख्याकान्युक्थान्युत्कृष्टान्यंगानि विद्यंते प्राणिदेहेषु जातेषु। द्यावापृथिवी। षष्ठीद्विवचनस्य सुपां सुलुगिति पूर्वसवर्णदीर्घः। द्यावापृथिव्योर्यावद्यत्परिमाणमस्ति तावदित्तत्परिमाणमेवात्माधिष्ठितं प्राणिदेहजातं भवति। यावत्तावच्छब्दयोर्यत्तदेतेभ्यः परिमाणे वतुप्या सर्वनाम्न इति दीर्घः। किंच। सहस्रधा सहस्रसंख्याकेषु सहस्रं महिमानः सहस्रसंख्याका महांतो व्यवहारविशेषा भवंति। प्रतिविषयं प्रतिलक्षणं दर्शनश्रवणादिव्यवहारनिष्पत्तेः। सहस्रधेत्यत्र विधार्थे धाप्रत्ययः। ब्रह्म जगत्कारणं वस्तु यावन्नानाविधप्राणिदेहरूपेण यावत्परिमाणं भूत्वा विष्ठितं विशेषेण स्थितं वाक् तावती तत्परिमाणा भवति। एकैकस्याभिधेयार्थस्यैकैकनामापेक्षणात्। अन्यत्रापि श्रूयते। सर्वाणि रूपाणि विचिंत्य धीरो नामानि कृत्वाभिवदन्यदास्त इति। सहस्रधा पंचदशान्युक्थेति पंच हि दशतो भवंतीत्यादिकमारण्यकमत्रानुसंधेयं। ऐ॰ आ॰ १.१६.॥

॥ अथ नवमी ॥

कश्छंदसां योगमा वेद धीरः को धिष्ण्यां प्रति वाचं पपाद।
कमृत्विजामष्टमं शूरमाहुर्हरी इंद्रस्य नि चिकाय कः स्वित्॥९॥
कः। छंदसां। योगं। आ। वेद। धीरः। कः। धिष्ण्यां। प्रति। वाचं। पपाद।
कं। ऋत्विजां। अष्टमं। शूरं। आहुः। हरी इति। इंद्रस्य। नि। चिकाय। कः। स्वित्॥९॥

धीरो धीमान् को मानुषश्छंदसां गायत्र्यादीनां योगं स्तुतशस्त्रात्मना नियोगमा वेद। आजानाति। को वा धिष्ण्यां। धिष्ण्यानि होत्रादीनां सप्त स्थानानि। तदर्हां वाचं प्रति पपाद। प्रतिपादयति। करोति। किंच। ऋत्विजां होत्रादीनां सप्तानामष्टममष्टसंख्यापूरकं शूरं स्वतंत्रं कमाहुः। वदंति। कः स्वित् कः खल्विंद्रस्य हरी ऋक्सामरूपौ द्वावश्वौ। ऋक्सामे वा इंद्रस्य हरी इत्याम्नायते। तादृशौ हरी नि चिकाय। नितरां पूजयति। जानाति। वेदिता प्रतिपादयिताष्टसंख्यापूरकस्य देवस्य ज्ञाता वा परमात्मनोऽन्यो नास्तीत्यर्थः॥

॥ अथ दशमी ॥

भूम्या अंतं पर्येके चरंति रथस्य धूर्षु युक्तासो अस्थुः ।
श्रमस्य दायं वि भजंत्येभ्यो यदा यमो भवति हर्म्ये हितः ॥१०॥

भूम्याः । अंतं । परि । एके । चरंति । रथस्य । धूःऽसु । युक्तासः । अस्थुः ।
श्रमस्य । दायं । वि । भजंति । एभ्यः । यदा । यमः । भवति । हर्म्ये । हितः ॥१०॥

एके केचनाश्वा भूम्याः पृथिव्याः । अनेन द्युलोकोऽप्युपलक्ष्यते । द्युलोकस्य चांतं पर्यंतं परि चरंति । तदानीं सर्वत आगच्छंति । तदा च तेऽश्वा रथस्य धूर्षु युगादिभारेषु युक्तासो युक्ताः संतोऽस्थुः । तिष्ठंति । एभ्योऽश्वेभ्यः श्रमस्य दायं । दो अवखंडने । घञ् । कर्षात्वत इत्यंतोदात्तत्वं । श्रमस्य नाशकं घासादिकं वि भजंति । देवाः प्रयच्छंति । यदा यस्मिन्काले यमो नियंता सूर्यो हर्म्ये हर्म्यस्थानीये रथे हितो निहितो भवति तदैते भजंतीत्यर्थः ॥

॥ इत्यष्टमस्य षष्ठे सप्तदशो वर्गः ॥

चित्र इति नवर्चं तृतीयं सूक्तमाग्नेयं । उपस्तुतो नाम वृष्टिहव्यपुत्र ऋषिः । अष्टमी त्रिष्टुप् । नवमी शक्वरी । आदितः सप्त जगत्यः । तथा चानुक्रांतं । चित्र इन्नव वार्ष्टिहव्य उपस्तुत आग्नेयं जागतं त्रिष्टुप्शक्वर्यंतमिति ॥ प्रातरनुवाकाश्विनशस्त्रयोर्जागते छंदसीदं सूक्तं । सूत्रितं च । चित्र इच्छिशोर्वसुं न चित्रमहसमिति जागतं । आ॰ ४.१३. । इति ॥

॥ तत्र प्रथमा ॥

चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे ।
अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं१ चरन् ॥१॥

चित्रः । इत् । शिशोः । तरुणस्य । वक्षथः । न । यः । मातरौ । अपिऽएति । धातवे ।
अनूधाः । यदि । जीजनत् । अध । च । नु । ववक्ष । सद्यः । महि । दूत्यं । चरन् ॥१॥

शिशोः शिशुभूतस्यात एव तरुणस्य नूतनस्याग्नेर्वक्षथः । वक्षेरौणादिकोऽथप्रत्ययः । हविर्वहनं चित्र इदाश्चर्यभूतमेव यो जातोऽग्निर्मातरौ सर्वस्य निर्मात्र्यौ मातृपितृभूते द्यावापृथिव्यावरण्यौ वा धातवे नाप्येति । धेट् पाने । तुमर्थे तवेन्प्रत्ययः । पानायापि न गच्छति । इण् गतौ । लट्युपसर्गेण समासः । तिङि चोदात्तवतीति गतेर्निघातः । अनूधाः । नञ्बहुव्रीहिः । समासांतस्यानङः स्त्रियामिष्ट-

त्वाद्वानङ्भावः। पा॰ ५.४.१३१.। प्रत्येकविवक्षयैकवचनं। ऊधोरहितोऽयं लोको ऽसौ लोकश्चैनमग्निं यदि जीजनदजीजनदजनयत्। तर्हि स्तनपानाय न गच्छतीति युक्तं। तथा न भवति। किंतु द्यावापृथिव्यौ सर्वेषां कामदुघे खलु। तथापि न पाति। तस्मादस्य हविर्वहनं चित्रं। अध चोत्पत्त्यनंतरमेव न्वद्यास्मिन्दिने सद्य- स्तदानीमेव शीघ्रं महि महद्दूत्यं। दूतस्य भागकर्मणी इति कर्मणि यत्प्रत्ययः। दूतकर्म चरन् ववक्ष। देवान्प्रति हवींषि वहति ॥

॥ अथ द्वितीया ॥

अग्निर्ह नाम धायि दन्नपस्तमः सं यो वना युवते भस्मना दता।
अभिप्रमुरा जुह्वा स्वध्वर इनो न प्रोथमानो यवसे वृषा ॥२॥
अग्निः। ह। नाम। धायि। दन्। अपःऽतमः। सं। यः। वना। युवते। भस्मना। दता।
अभिऽप्रमुरा। जुह्वा। सुऽअध्वरः। इनः। न। प्रोथमानः। यवसे। वृषा ॥२॥

अपस्तमः। अपःशब्दस्यांतोदात्तत्वेन मत्वर्थो लुप्त इति ज्ञायते। अन्यथापः कर्मा- ख्यायामित्यसुनि कृत आद्युदात्तत्वमेव स्यात्। अपस्वितमः कर्मवत्तमोऽग्निर्नाम। तृतीयाया लुक्। नाम्ना नमयितृणा हविषा स्तोत्रेण वा धायि। यजमानैर्धार्यते खलु यतो दन् यष्टॄणां धनदाता। डुदाञ् दाने। हेतौ छंदस्युभयथेति शतुरार्धधातु- कत्वेनाकारलोपः। अत एव शपोऽसंभवः। योऽग्निर्भस्मना भासकेन प्रकाशकेन तेजसा दता दंतेन च वना वनान्यरण्यानि सं युवते संयुनक्ति। संदहतीति यावत्। यु मिश्रणामिश्रणयोः। व्यत्ययेन शः। आत्मनेपदं च। दता। दंतशब्दस्य पद्दन्नित्या- दिना दन्नावः। ऊडिदमिति विभक्तेराद्युदात्तत्वं। किंच। अभिप्रमुरा। मूर्छा मोह- समुच्छ्राययोः। अस्मात्क्विपि राल्लोप इति छकारलोपः। मुर संवेष्टन इत्यस्माद्वा क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वं। अभितः समुच्छ्रितेनोद्यतेन। यद्वा सर्वतो हविर्भिः संवेष्टितेन जुह्वैतन्नामकेन पात्रविशेषेण स्वध्वरः शोभनयज्ञोऽग्निरदनीये हविषि चरतीति शेषः। तत्र दृष्टांतः। इनो न। समर्थः प्रोथमानः पर्याप्तः पुष्टांगो वृषा यवसे न। यथा वृषभो घासादिषु चरति ॥

॥ अथ तृतीया ॥

तं वो विं न द्रुषदं देवमंधस इंदुं प्रोथंतं प्रवपंतमर्णवं।
आसा वह्निं न शोचिषा विरप्शिनं महिव्रतं न सरजंतमध्वनः ॥३॥

तं। वः। विं। न। द्रुऽसदं। देवं। अंधसः। इंदुं। प्रोथंतं। प्रऽवपंतं। अर्णवं।

आसा। वह्निं। न। शोचिषा। विऽरप्शिनं। महिऽव्रतं। न। सरजंतं। अध्वनः ॥३॥

हे स्तोतारो वो यूयं तमग्निमभिष्टुत। कीदृशं। विं न पक्षिणमिव द्रुषदं। दुर्वृक्षः। अरणिलक्षणे वृक्षे सीदंतं देवं द्योतमानं। अंधस इंदुं स्तोतॄणामन्नस्य क्लेदयितारं। प्रापयितारं। उंदेरिच्चादेरित्युप्रत्ययः। निदित्यनुवृत्तेराद्युदात्तत्वं। प्रोथंतं शब्दायमानं प्रवपंतमत्यर्थं वनानां दाहकं। अर्णवं। अर्णसः सलोपश्चेति मत्वर्थीयो वः। अग्नौ प्रास्ताहुतिरित्यादिक्रमेणोदकवंतं। आसा। आस्यशब्दस्य पद्दन्नित्यादिनासन्नादेशः। वर्णलोपश्छांदसः। आस्येन वह्निं हविषां वोढारं। यद्वासा। अंतिकनामैतत्। देवानां समीपे हविषां प्रापकं। वहने दृष्टांतः। वह्निं न। वह्निर्वा अनड्वानिति श्रवणादनड्वाहमिव वहने समर्थं शोचिषा स्वदीप्त्या विरप्शिनं। महन्नामैतत्। महांतं महिव्रतं न महाकर्माणमादित्यमिवाध्वनः सरजंतं। मार्गान्सह युगपदेव रंजयंतं। एवंगुणमग्निमभिष्टुत। सरजंतं। रंज रागे। रंजेः शतरि रंजेश्च। पा॰ ६.४.२६.। इति नलोपे सहस्य सभावे च कृते रूपं। यद्वा। सरतीति सरः। सरस्योदकस्य जनयितारं। जनेस्तृप्रत्यये कृते रूपमिति वा। व्युत्पत्त्यनवधारणादनवग्रहः ॥

॥ अथ चतुर्थी ॥

वि यस्य ते ज्रयसानस्याजर धक्षोर्न वाताः परि संत्यच्युताः।

आ रण्वासो युयुधयो न सत्वनं त्रितं नशंत प्र शिषंत इष्टये ॥४॥

वि। यस्य। ते। ज्रयसानस्य। अजर। धक्षोः। न। वाताः। परि। संति। अच्युताः।

आ। रण्वासः। युयुधयः। न। सत्वनं। त्रितं। नशंत। प्र। शिषंतः। इष्टये ॥४॥

हे अजर जरारहिताग्ने ज्रयसानस्य। ज्रयतिर्गत्यर्थः। बाहुलकादस्मादप्यसानच् प्रत्ययः। गमनशीलस्य धक्षोः। दहेः सन्। द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यमिति द्विर्वचनाभावः। तदंतादुप्रत्ययः। अरण्यदहनेच्छोर्यस्य ते तव स्वभूता अच्युताः शत्रुभिरच्यवनीयाः प्रभावा वाता न वायव इव वि परि संति। सर्वतो विशेषेण वर्तंते। संति। अस्तेर्लट्। यद्योगादनिघातः। युयुधयो न। युधेः किन्प्रत्ययः। योद्धार इव रण्वासः शीघ्रं गंतारः शब्दायमाना वर्त्विज इष्टये यागाय प्र शिषंतः प्रकर्षेण सिषंतः सिषासंतः संभक्तुमिच्छंतः सत्वनं बलवंतं त्रितं त्रि-

ष्वाहवनीयादिषु स्थानेषु ततं विस्तृतं त्वामा नशंत। स्तुतिभिर्हविर्भिश्च व्याप्नुवंति। आङ्पूर्वो नशिर्व्याप्तिकर्मा। आक्षाण आनडिति व्याप्तिकर्मसु पाठात् ॥

॥ अथ पंचमी ॥

स इद॒ग्निः कण्व॑तमः॒ कण्व॑सखा॒र्यः पर॒स्यांत॑रस्य॒ तरु॑षः ।
अ॒ग्निः पा॑तु गृ॒णतो॑ अ॒ग्निः सू॒रीन॒ग्निर्द॑दातु॒ तेषा॒मवो॑ नः ॥५॥

सः। इत्। अ॒ग्निः। कण्व॑ऽतमः। कण्व॑ऽसखा। अ॒र्यः। पर॑स्य। अंत॑रस्य। तरु॑षः।
अ॒ग्निः। पा॒तु॒। गृ॒णतः॑। अ॒ग्निः। सू॒रीन्। अ॒ग्निः। द॒दा॒तु॒। तेषां॑। अवः॑। नः॒ ॥५॥

कण्वतमः। कणतेः शब्दार्थादशूप्रुषीत्यादिना वन्प्रत्ययः। अतिशयेन स्तोता। अत एव कण्वसखा। बहुव्रीहित्वात्समासांतोदात्ताभावः। कण्वाः स्तोतारः सखायो यस्य स तादृशोऽर्यः। स्वामिन्यंतोदात्तत्वं वक्तव्यमित्यंतोदात्तत्वं। स्वामी सर्वस्येश्वरः स इत् स एवाग्निः परस्य च प्रकृष्टस्य च बाह्यस्यांतरस्याव्यवहितस्य समीपे वर्तमानस्य शत्रोस्तरुषस्तारयिता विनाशयिता भवति। सोऽग्निर्गृणतः स्तोतॄनस्मान्पातु। रक्षतु। गॄ शब्दे। क्र्यादिकः। शतुरनुमो नद्यजादी इति विभक्तेरुदात्तत्वं। तथा सूरीन्। षू प्रेरणे। हविषां प्रेरयितॄनस्मान्रक्षतु। किंच तेषामेषां नोऽस्माकमवो रक्षणमन्नं वाग्निर्ददातु। प्रयच्छतु ॥

॥ इत्यष्टमस्य षष्ठेऽष्टादशो वर्गः ॥

॥ अथ षष्ठी ॥

वा॒जिंत॑माय॒ सह्य॑से सुपित्र्य तृ॒षु च्यवा॑नो॒ अनु॑ जा॒तवे॑दसे ।
अ॒नु॒द्रे चि॒द्यो धृ॑ष॒ता वरं॑ स॒ते म॒हिंत॑माय॒ धन्व॒नेद॑विष्य॒ते ॥६॥

वा॒जिन्ऽत॑माय। सह्य॑से। सु॒ऽपि॒त्र्य॒। तृ॒षु। च्यवा॑नः। अनु॑। जा॒तऽवे॑दसे।
अ॒नु॒द्रे। चि॒त्। यः। धृ॒ष॒ता। वरं॑। स॒ते। म॒हिन्ऽत॑माय। धन्व॑ना। इ॒त्। अ॒वि॒ष्य॒ते॥६॥

हे सुपित्र्य। पितुरागतः पित्र्यः। पितुर्यच्चेति यत्प्रत्ययः। शोभनपित्र्य हे अग्ने वाजिंतमायातिशयेनान्नवतेऽत्यंतं बलवते वा। नाद्वस्येति नुडागमः। सह्यसे सहीयसे शत्रूणामतिशयेनाभिभवित्रे जातवेदसे जातप्रज्ञाय तुभ्यं त्वां स्तोतुं तृषु क्षिप्रमनु च्यवानः स्तुतिभिरनुगत उद्युक्तोऽस्मि। क्रियार्थोपपदस्य च कर्मणीति जातवेदःशब्दस्य चतुर्थी। सह्यसे। सहस्विन्शब्दादीयसुनि विन्मतोर्लुगितीयसुन

ईकारलोपश्छांदसः। अनुद्रे चिदुदकवर्जिते स्थाने। आपदीत्यर्थः। शत्रुभिः संजातायामापदि धृषता शत्रुधर्षणसमर्थेन धन्वनेदात्मीयेन धनुषैवाविष्यते पालकाय सते भूषणवे। शतुरनुम इति विभक्तेरुदात्तत्वं। महिंतमाय पूज्यतमाय दातृतमाय वेहशायाग्नये योऽहं वरं वरणीयं हविः प्रयच्छामि सोऽहं स्तुतिमपि तस्मै करोमीत्यर्थः ॥

॥ अथ सप्तमी ॥

एवाग्निर्मर्तैः सह सूरिभिर्वसुं ष्टवे सहसः सूनरो नृभिः।
मित्रासो न ये सुधिता ऋतायवो द्यावो न द्युम्नैरभि संति मानुषान् ॥७॥

एव। अग्निः। मर्तैः। सह। सूरिऽभिः। वसुः। स्तवे। सहसः। सूनरः। नृऽभिः।
मित्रासः।न।ये।सुऽधिताः।ऋतऽयवः।द्यावः।न।द्युम्नैः।अभि।संति।मानुषान्॥७॥

सहसो बलस्य सूनरः सुष्ठु प्रेरकः। यद्वा सूनुरित्यस्य वर्णव्यत्ययः। सूनरः सूनुः। बलेन मथ्यमानत्वात्तस्य पुत्रोऽग्निर्नृभिः कर्मनेतृभिर्मर्तैर्मनुष्यैः सह सूरिभिर्विद्वद्भिरस्माभिर्वसु धनमभिलक्ष्यैवैवं स्तवे। स्तूयते। वसु ष्टव इत्यत्र संहितायां पूर्वपदादिति षत्वं। मित्रासो न सुहृद इव सुधिताः सुहितास्तृप्ताः। दधातेर्निष्ठायां सुधितवसुधितेति निपातितः। सुधितार्थास्तृप्त्यर्था इति काशिकायामुक्तं। ऋतयवो यज्ञं कामयमानाः। न छंदस्यपुत्रस्येति दीर्घत्वयोः प्रतिषेधः। ईदृशा ये सूरयो द्यावो न द्योतमाना इव द्युम्नैः। द्युम्नं द्योततेर्यशो वान्नं वेति यास्कः। अग्निप्रदत्तैर्बलैरात्मीयैर्यशोभिर्वा मानुषाञ्शात्रवाञ्जनानभि संति। अभिभवंति। यद्वृत्तयोगादनिघातः ॥

॥ अथाष्टमी ॥

ऊर्जो नपात्सहसावन्निति त्वोपस्तुतस्य वंदते वृषा वाक्।
त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ॥८॥

ऊर्जः। नपात्। सहसाऽवन्। इति। त्वा। उपऽस्तुतस्य। वंदते। वृषा। वाक्।
त्वां। स्तोषाम। त्वया। सुऽवीराः। द्राघीयः। आयुः। प्रऽतरं। दधानाः ॥८॥

ऊर्जो नपात्। नपादित्यपत्यनाम। अन्नस्य पुत्रं। अन्नं वा आज्यमिति श्रवणात्तेन प्रवृध्यमानत्वात् बलस्य वा पुत्र। सुबामंत्रिते परांगवत्स्वर इत्यूर्ज इत्यस्य परांगवद्भावेनामंत्रितत्व आमंत्रितस्य चेति षाष्ठिकमाद्युदात्तत्वं। हे सहसावन्

सहस्विन्नग्ने त्वा त्वामित्येवमुपस्तुतस्यैतन्नामकस्यर्षेर्मम वृषा हविषां वर्षयित्री तैः सहिता वाक् स्तुतिर्वदते। स्तौति। वृषा। इगुपधज्ञेति कः। अजाद्यतष्टाप्। किंच वयं त्वां स्तोषाम। स्तवाम। स्तौतेर्लेट्यडागमः। ततस्त्वया सुवीराः शोभनपुत्राः स्याम द्राघीयो दीर्घतममायुर्जीवनं प्रतरमत्यर्थं दधाना धारयंतो भवेम॥

॥ अथ नवमी ॥

इति॑ त्वाग्ने वृ॒ष्टिह॑व्यस्य पु॒त्रा उ॑पस्तु॒तास॒ ऋष॑योऽवोचन्।
तांश्च॑ पा॒हि गृ॑ण॒तश्च॑ सू॒रीन्वष॒ड्वष॒ळित्यू॒र्ध्वासो॑ अनक्ष॒न्नमो॒ नम॒ इत्यू॒र्ध्वासो॑ अन-
क्षन्॥९॥

इति॑। त्वा॒। अ॒ग्ने॒। वृ॒ष्टिऽह॑व्यस्य। पु॒त्राः। उ॒प॒ऽस्तु॒तासः॑। ऋष॑यः। अ॒वो॒च॒न्।
तान्। च॒। पा॒हि। गृ॒ण॒तः। च॒। सू॒रीन्। वष॑ट्। वष॑ट्। इति॑। ऊ॒र्ध्वासः॑। अ॒न॒क्ष॒न्।
नमः॑। नमः॑। इति॑। ऊ॒र्ध्वासः॑। अ॒न॒क्ष॒न्॥९॥

हे अग्ने त्वा त्वामित्येवमुक्तप्रकारेण वृष्टिहव्यस्यैतन्नामकस्यर्षेः पुत्रा उपस्तुतास उपस्तुता एतदभिधाना ऋषयः सूक्तद्रष्टारोऽवोचन्। अभ्यष्टुवन्। तानृषींश्च त्वं पाहि। रक्ष। वायोगे प्रथमेति न निघातः। तथा गृणानः स्तोतॄन् सूरीन्विदुषश्च पाहि। वषड्वषडिति मंत्रेणोर्ध्वासो हविःप्रदानार्थमूर्ध्वमुखहस्ताः संतोऽनक्षन्। व्याप्नुवन्। नक्षतिर्व्याप्तिकर्मा। नमो नम इत्येवमूर्ध्वासः स्तोतुमुद्युक्ता अनक्षन्। य उक्तगुणास्तानुभयविधान्यष्टॄन् स्तोतॄन्पालय॥

॥ इत्यष्टमस्य षष्ठ एकोनविंशो वर्गः ॥

पिबेति नवर्चं चतुर्थं सूक्तं त्रैष्टुभमैंद्रं। स्थूरनाम्नः पुत्रोऽग्नियुताख्य ऋषिरग्नियूपाख्यो वा। तथा चानुक्रम्यते। पिब स्थौरोऽग्नियुतोऽग्नियूपो वेति। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

पिबा॒ सोम॑ँ मह॒त इँ॑द्रि॒याय॒ पिबा॑ वृ॒त्राय॒ हंत॑वे शविष्ठ।
पिब॑ रा॒ये शव॑से हू॒यमा॑नः॒ पिब॒ मध्व॑स्तृ॒पदि॒न्द्रा वृ॑षस्व॥१॥

पिब॑। सोम॑म्। म॒ह॒ते। इं॒द्रि॒याय॑। पिब॑। वृ॒त्राय॑। हंत॑वे। श॒वि॒ष्ठ॒।
पिब॑। रा॒ये। शव॑से। हू॒यमा॑नः। पिब॑। मध्वः॑। तृ॒पत्। इं॒द्र॒। आ। वृ॒ष॒स्व॒॥१॥

हे इंद्र त्वं महे महते प्रभूतायेंद्रियायेंद्रस्यात्मनो जुष्टाय वीर्याय सोममस्माभिर्दीयमानं पिब। इंद्रियमिंद्रलिंगेत्यादिनेंद्रियशब्दो यजंतत्वेन निपातितः। हे शविष्ठातिशयेन प्रवृद्ध वृत्राय हंतवे वृत्रं हंतुं सोमं पिब। क्रियाग्रहणं कर्तव्यमिति वृत्रस्य संप्रदानत्वं। तथा हूयमानोऽस्माभिराहूयमानस्त्वं राये धनाय। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। शवसेऽन्नाय। धनान्नयोः प्रदानाय सोमं पिब। मध्वो मदकरान्सर्वान्सोमान्पिब। वा छंदसीति पूर्वसवर्णदीर्घाभावः। अनंतरं हे इंद्र तृपत्तृप्तो भवन् आ वृषस्व। अस्मदभिलषितान्यासिंच। ददस्व। तृपत्। तृंप तृप्तौ। तौदादिकः। अनित्यमागमशासनमिति नुंमभावः॥

॥ अथ द्वितीया ॥

अस्य पिब क्षुमतः प्रस्थितस्येंद्र सोमस्य वरमा सुतस्य।
स्वस्तिदा मनसा मादयस्वार्वाचीनो रेवते सौभगाय ॥२॥

अस्य। पिब। क्षुऽमतः। प्रऽस्थितस्य। इंद्र। सोमस्य। वरं। आ। सुतस्य।
स्वस्तिऽदाः। मनसा। मादयस्व। अर्वाचीनः। रेवते। सौभगाय ॥२॥

हे इंद्र क्षुमतः स्तुतियुक्तस्य। यद्वा हवीरूपान्नवतः प्रस्थितस्य हविर्धानादुत्तरवेदिं प्रति प्रस्थापितस्य सुतस्याभिषुतस्य सोमस्य वरं वरणीयं त्वदीयं भागमाभिमुख्येन पिब। प्रस्थितस्य। तिष्ठतेः कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। ततः स्वस्तिदाः कल्याणस्य दाता त्वं मनसांतःकरणेन मादयस्व। हृष्टो भव। यद्वास्मानपि हृष्टान्कुरु। तदेवोच्यते। रेवते धनवते सौभगाय सौभाग्याय तदस्मभ्यं दातुमर्वाचीनोऽभिमुखांचनो भव। विभाषांचेरदिक्स्त्रियामिति खः। रयिशब्दान्मतुपश्छंदसीर इति वत्वं। रयेर्मतौ बहुलमिति संप्रसारणं। पूर्वरूपत्वे गुणः। सौभगाय। उद्गात्रादिषु सुभग मंत्र इति पठ्यते। तस्योत्तरपदस्य हृद्भगेति वृद्धिर्नेष्यते सर्वविधीनां छंदसि विकल्पितत्वात्। ञित्स्वरेणाद्युदात्तत्वं॥

॥ अथ तृतीया ॥

ममत्तु त्वा दिव्यः सोम इंद्र ममत्तु यः सूयते पार्थिवेषु।
ममत्तु येन वरिवश्चकर्थ ममत्तु येन निरिणासि शत्रून् ॥३॥

ममत्तु। त्वा। दिव्यः। सोमः। इंद्र। ममत्तु। यः। सूयते। पार्थिवेषु।
ममत्तु। येन। वरिवः। चकर्थ। ममत्तु। येन। निऽरिणासि। शत्रून् ॥३॥

हे इंद्र त्वा त्वां दिव्यो दिवि भवः सोमो ममत्तु। आत्मीयकलाप्रदानेन मादयतु। देवा ह्यपरपक्षे सोमस्य कलां पिबंति। मदेर्लोटि व्यत्ययेन श्नुः। भीह्रीत्यादिना पितः पूर्वस्योदात्तत्वं। तथा पार्थिवेषु पृथिव्यां भवेषु देवयजनेषु यः सोमोऽस्माभिः सूयतेऽभिषूयते सोऽप्यस्माभिर्दत्तो ममत्तु। त्वां हर्षयतु। येन सोमेन वरिवो वरणीयं धनं चकर्थ कृतवानसि स च ममत्तु। करोतेर्लिट्। यद्योगादनिघाते लित्स्वरः। किंच येन शत्रून्निर्ऋणासि निर्गमयसि। सोऽपि ममत्तु। त्वां मादयतु। रिणासि। री गतिरेषणयोः। क्र्यादिः। प्वादीनां ह्रस्वत्वं॥

॥ अथ चतुर्थी ॥

आ द्विबर्हा अमिनो यात्विंद्रो वृषा हरिभ्यां परिषिक्तमंधः।
गव्या सुतस्य प्रभृतस्य मध्वः सत्रा खेदामरुशहा वृषस्व ॥४॥

आ। द्विऽबर्हाः। अमिनः। यातु। इंद्रः। वृषा। हरिऽभ्यां। परिऽसिक्तं। अंधः।
गवि। आ। सुतस्य। प्रऽभृतस्य। मध्वः। सत्रा। खेदां। अरुशऽहा। आ। वृषस्व ॥४॥

द्विबर्हा द्वयोर्लोकयोः परिवृढः। यद्वा द्वाभ्यां स्तुतशस्त्राभ्यां वर्धनीयः। वृहेर्वर्धनार्थस्य कर्तरि कर्मणि वासुन्। अमिनः। अमतेर्गत्यर्थादौणादिक इनच्। सर्वत्र गंता। यद्वा कांत्यर्थात्। सर्वैः काम्यमानोऽत एव वृषाभिलषितानां वर्षक इंद्रः परिषिक्तं वसतीवरीभिः परितः सिक्तमंधोऽस्मदीयं सोमलक्षणमन्नं प्रति हरिभ्यामेतन्नामकाभ्यामश्वाभ्यां सहा यातु। आगच्छतु। अथ प्रत्यक्षः। हे इंद्र अरुशहा। अरुशाः शत्रवः। तेषां हंता। अर्तेरौणादिक उशन्। बहुलं छंदसीति हंतेः क्विप्। सत्रा। सप्तम्या डादेशः। अस्मदीये सत्रे यज्ञे गव्यानडुहे चर्मणि सुतस्याभिषुतस्य प्रभृतस्य पात्रेषु प्रहृतस्य। हृग्रहोर्भः। ईदृशस्य मध्वो मदकरस्य सोमस्य पानेन हृष्टः सन् खेदां खिद्यमानानां शत्रूणामुत्खित्तय आभिमुख्येन वृषस्व। वृष इवाचर। वृषशब्दादाचारार्थे क्विप्। व्यत्ययेनात्मनेपदं। खेदां। खिद दैन्ये। कर्मणि घञंतस्यामि नुडागमाभावश्छांदसः॥

॥ अथ पंचमी ॥

नि तिग्मानि भ्राशयन्भ्राश्यान्यव स्थिरा तनुहि यातुजूनां।
उग्राय ते सहो बलं ददामि प्रतीत्या शत्रून्विगदेषु वृश्च ॥५॥

नि । तिग्मानि । भ्राशयन् । भ्राश्यानि । अव । स्थिरा । तनुहि । यातुऽजूनां ।
उग्राय । ते । सहः । बलं । ददामि । प्रतिऽइत्य । शत्रून् । विऽगदेषु । वृश्च ॥५॥

हे इंद्र भ्राश्यानि प्रकाश्यानि तिग्मानि तीक्ष्णान्यायुधानि नितरां भ्राशयन् प्रकाशयन् । भ्राशृ दीप्तौ । स त्वं यातुजूनां । जु इति सौत्रो धातुः । भ्राजभासेत्यत्र जवतेर्दीर्घः । क्विप्चेति क्विप् । दीर्घस्यामि नुडागमश्छांदसः । यातुधानानां स्थिरा स्थिराणि दृढान्यपि शरीराण्यव तनुहि । अवस्तात्तनुभूतान्पातय । उग्रायोद्गूर्ण-बलाय ते तुभ्यं सहः शत्रुसहनसमर्थं बलं बलहेतुकं हविर्ददामि । अहं प्रयच्छामि । ततो विगदेषु । विविधं गदंति शब्दायंते । गदेर्घञर्थे कविधानमित्यधिकरणे कः । शत्रून्प्रतीत्य प्रतिगम्य प्रतिकूलं गत्वा वृश्च । तांश्छिंद्धि । ओव्रश्चू छेदने । तौदा-दिकस्य लोट् ॥

॥ इत्यष्टमस्य षष्ठे विंशो वर्गः ॥

॥ अथ षष्ठी ॥

व्य१र्य इंद्र तनुहि श्रवांस्योजः स्थिरेव धन्वनोऽभिमातीः ।
अस्मद्र्यग्वावृधानः सहोभिरनिभृष्टस्तन्वं वावृधस्व ॥६॥
वि । अर्यः । इंद्र । तनुहि । श्रवांसि । ओजः । स्थिराऽइव । धन्वनः । अभिऽमातीः ।
अस्मद्र्यक् । ववृधानः । सहःऽभिः । अनिऽभृष्टः । तन्वं । ववृधस्व ॥६॥

हे इंद्र अर्यः स्वामी त्वं श्रवांस्यन्नानि । श्रव इत्यन्ननाम । अस्मभ्यं वि तनुहि । विस्तारय । प्रयच्छ । तनोतेर्लोट्युतश्च प्रत्ययाच्छंदसि वावचनमिति हेर्लुगभावः । तथाभिमातीः । अभितो मातिर्मानं येषां तेऽभिमातयः शत्रवः । तान्प्रत्योज आत्मीयं वीर्यं स्थिरेव स्थिराण्येव धन्वनो धनूंषि च विस्तारय । तैः शत्रूञ्जहीत्यर्थः । अपि च । अस्मद्र्यगस्मदभिमुखांचनः । विष्वग्देवयोश्च टेरद्र्यंचतावित्यद्र्यादेशः । अद्रिसध्र्योरंतोदात्तत्वेन निपातनादुदात्तस्वरितयोर्यण इति धातोरकारस्यानुदात्तस्य स्वरितत्वं । सहोभिरात्मीयैर्बलैर्वावृधानः प्रवृद्धोऽत एवानिभृष्टः । शत्रुभिरपरि-भवनीयस्त्वं तन्वमात्मीयं शरीरं वावृधस्व । वर्धय । यद्वा तन्वं । तन्यत इति तनूर्यज्ञः । तं वर्धय । त्वदागमनेन हि यज्ञो वर्धते ॥

॥ अथ सप्तमी ॥

इ॒दं ह॒विर्म॑घव॒न्तुभ्यं॑ रा॒तं प्रति॑ सम्रा॒ळहृ॑णानो गृभाय ।
तुभ्यं॑ सु॒तो म॑घव॒न्तुभ्यं॑ प॒क्वो॒३॑ऽद्धीं॑द्र पिब॑ च॒ प्रस्थि॑तस्य ॥७॥
इ॒दं । ह॒विः । म॒घ॒ऽव॒न् । तुभ्यं॑ । रा॒तं । प्रति॑ । सं॒ऽरा॒ट् । अहृ॑णानः । गृ॒भा॒य॒ ।
तुभ्यं॑ । सु॒तः । म॒घ॒ऽव॒न् । तुभ्यं॑ । प॒क्वः॑ । अ॒द्धि । इं॒द्र॒ । पिब॑ । च॒ । प्रऽस्थि॑तस्य ॥७॥

हे मघवन्धनवन् सम्राट् सम्यग्राजमान सर्वेषामीश्वरेति वा । इदं सोमादिलक्षणं रातमस्माभिर्दत्तं हविर्हे इंद्र तुभ्यमहृणानोऽक्रुध्यन् प्रति गृभाय । प्रतिगृहाण । ग्रहेर्लोटि श्नाप्रत्ययस्य छंदसि शायजपीति शायजादेशः । हृग्रहोर्भ इति भः । संनिपातपरिभाषाया अनित्यत्वाद्धेर्लुक् । हे मघवन् तुभ्यमेवायं सोमः सुतः । ङयि चेत्याद्युदात्तत्वं । तुभ्यमेवायं पुरोडाशादिः पक्वः । हे इंद्र तं पुरोडाशमद्धि । भक्षय । किंच प्रस्थितस्य हविर्धानादुत्तरवेदिं प्रति प्रस्थापितं सोमं पिब । वाक्यभेदादनिघातः । यद्वामंत्रितस्याविद्यमानत्वेन तिङ उत्तरत्वादनिघातः ॥

॥ अथाष्टमी ॥

अ॒द्धीदिं॑द्र॒ प्रस्थि॑ते॒मा ह॒वींषि॒ चनो॑ दधिष्व पच॒तोत सोमं॑ ।
प्रय॑स्वंत॒ः प्रति॑ हर्यामसि त्वा स॒त्याः सं॑तु॒ यज॑मानस्य॒ कामाः॑ ॥८॥
अ॒द्धि । इत् । इं॒द्र॒ । प्रऽस्थि॑ता । इ॒मा । ह॒वींषि॑ । चनः॑ । द॒धि॒ष्व॒ । प॒च॒ता । उ॒त । सोमं॑ ।
प्रय॑स्वंतः । प्रति॑ । ह॒र्या॒म॒सि॒ । त्वा॒ । स॒त्याः । सं॒तु॒ । यज॑मानस्य । कामाः॑ ॥८॥

हे इंद्र प्रस्थिता प्रस्थितान्युत्तरवेदिं प्रतीमेमानि । उभयत्र डादेशः । हवींष्यद्धीत् । इदवधारणे । भक्षयैव । चनः । चन इत्यन्ननाम । तद्दधिष्व । धारय । उदरे प्रक्षिप । दधातेर्लोटि छंदस्युभयथेति थास आर्धधातुकत्वादिडागमः । पचता पचतानि सवनीयपुरोडाशादीनि च धारय । पचेर्भृमृदृशीत्यादिना कर्मण्यतच्प्रत्ययः । उतापि च सोमं पिब । ततः प्रयस्वंतः । प्रीणयतीति प्रयोऽन्नं । तेन तद्वंतः संतस्त्वा त्वां प्रति हर्यामसि । हर्यामः । कामयामहे धनादीनि । हर्यतिः प्रेप्साकर्मा । इदंतो मसिः । तस्माद्यजमानस्य यागं कुर्वाणस्य कामा धनादिविषया अभिलाषाः सत्या यथार्थाः संतु । पूङ्यजोः शानन्निति यजेः शानन्प्रत्ययः । नित्त्वादाद्युदात्तः ॥

॥ अथ नवमी ॥

प्रेंद्राग्निभ्यां सुवचस्यामियर्मि सिंधाविव प्रेरयं नावमर्कैः ।
अया इव परि चरंति देवा ये अस्मभ्यं धनदा उद्भिदश्च ॥९॥

प्र । इंद्राग्निऽभ्यां । सुऽवचस्यां । इयर्मि । सिंधौऽइव । प्र । ईरयं । नावं । अर्कैः ।
अयाःऽइव । परि । चरंति । देवाः । ये । अस्मभ्यं । धनऽदाः । उत्ऽभिदः । च ॥९॥

इंद्राग्निभ्यां देवाभ्यां सुवचस्यां । छंदसि चेति यत्प्रत्ययः । सुवचनार्हां स्तुतिमहं प्रेयर्मि । प्रेरयामि । ऋ गतौ । जौहोत्यादिकः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं । देवताद्वंद्वे चेतींद्राग्न्योरुभयपदप्रकृतिस्वरत्वे प्राप्ते नोत्तरपदेऽनुदात्तादाविति प्रतिषेधः । सिंधाविव सिंधौ नद्यां यथा नावं प्रेरयंति तद्वदर्कैरर्चनीयैर्मंत्रैः सहितां स्तुतिं प्रेरयं । प्रावादिषं । ईर गतौ । ण्यंतस्य लङ्युत्तमस्यामादेशः । स्तुतास्ते देवा अया इव । अयंति कर्मकरणार्थं गच्छंतीत्यया ऋत्विजः कर्मकरा वा । तद्वत्परि चरंति । अस्मान्धनादिदानेन पूजयंति । ये देवा अस्मभ्यं धनदा धनस्य दातार उद्भिदो ऽस्मच्छत्रूणामुद्भेत्तारश्च ये संति ॥

॥ इत्यष्टमस्य षष्ठ एकविंशो वर्गः ॥

न वा इति नवर्चं पंचमं सूक्तं । भिक्षुर्नामांगिरस ऋषिः । प्रथमाद्वितीये जगत्यौ शिष्टाः सप्त त्रिष्टुभः । अत्र धनस्यान्नस्य च दानं स्तूयते । अतस्तद्देवत्यमिदं । तथा चानुक्रांतं । न वा उ भिक्षुर्धनान्नदानप्रशंसाद्ये जगत्याविति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

न वा उ देवाः क्षुधमिद्वधं ददुरुताशितमुप गच्छंति मृत्यवः ।
उतो रयिः पृणतो नोप दस्यत्युतापृणन्मर्डितारं न विंदते ॥१॥

न । वै । ऊं इति । देवाः । क्षुधं । इत् । वधं । ददुः । उत । आशितं । उप । गच्छंति । मृत्यवः ।
उतो इति । रयिः । पृणतः । न । उप । दस्यति । उत । अपृणन् । मर्डितारं । न । विंदते ॥१॥

भिक्षुः प्रथमं व्यतिरेकमुखेनान्नदानं प्रशंसति । देवा वै देवाः खलु सर्वेषां क्षुधं न ददुः । न प्रायच्छन् । किंतु वधमिद्वधमेव दत्तवंतः । एतादृशीं वधरूपां क्षुधमन्नदानेन यः शमयति स दाता खलु । उ इति पूरणः । योऽदत्त्वा भुंक्ते तमाशितं भुंजानं पुरुषमपि मृत्यवो मरणान्युप गच्छंति । समीपे यांति । आशितः

र्त्ता। पा॰ ६.१.२०७.। इत्याद्युदात्तत्वं। क्षुधार्त्तानां भोक्तॄणां च मरणं समानं। किं दानेन धननाशरूपेण। अत आह। उतो। उतशब्दोऽप्यर्थे। पृणतः प्रयच्छतः पुरुषस्य रयिर्धनं नोप दस्यति। नोपक्षीयते। दसु उपक्षये। दैवादिकः। पृण दाने। तौदादिकः। तस्य शत्रंतस्य शतुरनुमो नद्यजादी इति विभक्तेराद्युदात्तत्वं। दानप्रसंगेनादातारं दूषयति। अपृणन् अप्रयच्छन् पुरुषस्तु मर्डितारमात्मनः सुखयितारं न विंदते। न कुत्रापि लभते। इह बंधवोऽप्रदानान्न सुखयंति। देवा अपि हविःप्रदानाभावात्॥

॥ अथ द्वितीया ॥

य आध्राय चकमानाय पित्वोऽन्नवान्त्सन्रफितायोपजग्मुषे।
स्थिरं मनः कृणुते सेवते पुरोतो चित्स मर्डितारं न विंदते ॥२॥

यः। आध्राय। चकमानाय। पित्वः। अन्नऽवान्। सन्। रफिताय। उपऽजग्मुषे।
स्थिरं। मनः। कृणुते। सेवते। पुरा। उतो इति। चित्। सः। मर्डितारं। न। विंदते ॥२॥

यः पुरुषः स्वयमन्नवानप्याध्राय। आधार्यतेऽसावित्याध्रो दुर्बलः। तस्मै पित्वः पितूनन्नानि चकमानाय। चकमानः कांतिकर्मा। रफिताय। रफतिर्हिंसार्थः। दारिद्र्येण हिंसितायोपजग्मुषे गृहं प्रत्यागतायातिशयेन मन आत्मीयमंतःकरणमदाने स्थिरं कृणुते कुरुते। मनःस्थैर्यकरणेन तं क्लेशयतीत्यर्थः। कृणुते। कृवि हिंसाकरणयोः। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। करोतेर्व्यत्ययेन श्नुः। विकरणस्वरः सति शिष्टोऽपि लसार्वधातुकस्वरं न बाधत इति लसार्वधातुकस्वरः। न केवलं क्लेशकरणमपि तु पुरा तस्य पुरस्तादेव सेवते भोगान् सोऽपि मर्डितारमात्मनः सुखयितारं न विंदते। न कुत्रापि लभते॥

॥ अथ तृतीया ॥

स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय।
अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायं ॥३॥

सः। इत्। भोजः। यः। गृहवे। ददाति। अन्नऽकामाय। चरते। कृशाय।
अरं। अस्मै। भवति। यामऽहूतौ। उत। अपरीषु। कृणुते। सखायं ॥३॥

अन्वयमुखेन प्रशंसति। स इत् स एव भोजो दाता खलु यो गृहवे। ग्रहेर्मृगय्वादित्वात्कुप्रत्ययः। प्रतिग्रहीत्रेऽन्नकामायान्नं याचमानाय चरते गृहमागतवते

कृशाय दारिद्र्येणैतादृशायातिशयेऽन्नं ददाति प्रयच्छति। अभ्यस्तानामादिरित्याद्युदात्तत्वं। यामहूतौ। यामा गंतारो देवाः। अत्र यातेरर्तिस्तुसुहुसृ इत्यादिना मन्प्रत्ययः। त आहूयंतेऽत्रेति यामहूतिर्यज्ञः। तस्मिन् तस्मै दात्रे फलमरमलं पर्याप्तं भवति। कामप्रदानं भवतीत्यर्थः। उतापि चापरीषु। केवलमामकेति ङीप्। अन्यासु शात्रवीषु सेनासु सखायं कृणुते। तद्वदाचरतीत्यर्थः। तस्य सर्वे सखाय एव न शत्रव इत्यर्थः॥

॥ अथ चतुर्थी ॥

न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः।
अपास्मात्प्रेयान्न तदोको अस्ति पृणंतमन्यमरणं चिदिच्छेत् ॥४॥

न। सः। सखा। यः। न। ददाति। सख्ये। सचाऽभुवे। सचमानाय। पित्वः।
अप। अस्मात्। प्र। इयात्। न। तत्। ओकः। अस्ति। पृणंतं। अन्यं। अरणं। चित्। इच्छेत्॥४॥

व्यतिरेकेण निंदामाह। स पुरुषः सखा न भवति यः पुरुषः सचाभुवे सर्वदा सहभवनशीलाय सचमानाय सेवमानायोपसर्जनीभूताय सख्ये सखिजनाय पित्वः पितूनन्नानि न ददाति। न प्रयच्छति। स सुहृन्न भवतीत्यर्थः। अस्माददातुः सख्युः सोऽप प्रेयात्। अपगच्छेत्। यद्येनं परित्यज्य गच्छेत्। इण् गतौ। लिङि यासुट्। तर्हि तदोको निवासः सदनं नास्ति। न भवति। सदनं हि बंधुभिः परिवृतं। स गतः पुरुषः पृणंतमन्नादिकं प्रयच्छंतमन्यमरणं चिदर्यं स्वामिनमेवेच्छेत्। कामयेत॥

॥ अथ पंचमी ॥

पृणीयादिन्नाधमानाय तव्यान्द्राघीयांसमनु पश्येत पंथां।
ओ हि वर्तंते रथ्येव चक्रान्यमन्यमुप तिष्ठंत रायः ॥५॥

पृणीयात्। इत्। नाधमानाय। तव्यान्। द्राघीयांसं। अनु। पश्येत। पंथां।
ओ इति। हि। वर्तंते। रथ्याऽइव। चक्रा। अन्यंऽअन्यं। उप। तिष्ठंत। रायः॥५॥

धनवंतं पुरुषं दाने प्रेरयति। तव्यान् तवीयान्धनैरतिशयेन प्रवृद्धः पुरुषो नाधमानाय याचमानायातिशये पृणीयादित्। धनानि दद्यादेव। पृ पालनपूरणयोः। क्र्यादिः। प्वादीनां ह्रस्वः। यदि दद्याद्द्राघीयांसं। दीर्घशब्दादीयसुनि प्रियस्थिरेत्यादिना द्राघीत्यादेशः। दीर्घतमं पंथां पंथानं सुकृतमार्गमनु पश्येत। अनुपश्येत्। व्यत्ययेनात्मनेपदं। तत्र कारणमाह। रायो धनान्यो हि। आ उ। आवर्तंते खलु।

एकत्र नितिष्ठंतीत्यर्थः। तत्र दृष्टांतः। रथ्येव। यथा रथ्यानि। रथाद्यदिति तस्ये-दमित्यर्थे यत्। रथसंबंधीनि चक्राख्युपर्यधोभावेनावर्तंते तद्वदावृत्तिमेव दर्शयति। अन्यमन्यं पुरुषं धनान्युप तिष्ठंत। उपतिष्ठंते। समवेतानि भवंति। उपाद्देवपूजा-संगतकरण। पा॰ १.३.२५.१.। इत्यात्मनेपदं। तस्माद्धनानि देयानीति भावः॥

॥ इत्यष्टमस्य षष्ठे द्वाविंशो वर्गः॥

॥ अथ षष्ठी ॥

मोघमन्नं विंदते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥ ६॥
मोघं। अन्नं। विंदते। अप्रऽचेताः। सत्यं। ब्रवीमि। वधः। इत्। सः। तस्य।
न। अर्यमणं। पुष्यति। नो इति। सखायं। केवलऽअघः। भवति। केवलऽआदी॥ ६॥

अदातारं दूषयति। अप्रचेता अप्रकृष्टज्ञानः। दाने चेतो मनो यस्य न भवति स मोघं व्यर्थमेवान्नं विंदते। लभते। विद्लृ लाभे। तौदादिकः। शे मुचादीनामिति नुमागमः। इदं सत्यं यथार्थमेवेति ब्रवीमि। ऋषिरहं वदामि। न केवलं व्यर्थं किंतु तस्य पुरुषस्य स वध इद्वध एवान्नं परामृशतः। तच्छब्दस्य वधसामानाधि-करण्यात्पुंल्लिंगता। यथा णेरणावित्यत्र। पा॰ १.३.६७.। यत्कर्म स एव कर्तेति। अथवा स निरर्थको वध एव यः पुरुषोऽर्यमणं। उपलक्षणमिदं। सर्वान्देवानर्य-मादीन्न पुष्यति हविःप्रदानेन न पोषयति। नो नापि सखायं समानख्यानम-भ्यागतमतिथिं मित्रवर्गं च न पोषयति। पुष पुष्टौ। दैवादिकः। यच्छब्दाध्या-हारादनिघातः। अत एव केवलादी। अदेः सुप्यजाताविति णिनिः। अत उप-धालक्षणा वृद्धिः। केवलमसाक्षिकमन्नं भुंजानः स केवलाघो भवति। केवल-पापवान्भवति। अघमेव केवलं तस्य शिष्यते। ऐहिकामुष्मिकमिति। तस्माद्य-थाकथंचिद्दातव्यमित्यभिप्रायः॥

॥ अथ सप्तमी ॥

कृषन्नित्फाल आशितं कृणोति यन्नध्वानमप वृंक्ते चरित्रैः।
वदन्ब्रह्मावदतो वनीयान्पृणन्नापिरपृणंतमभि ष्यात् ॥ ७॥
कृषन्। इत्। फालः। आशितं। कृणोति। यन्। अध्वानं। अप। वृंक्ते। चरित्रैः।
वदन्। ब्रह्मा। अवदतः। वनीयान्। पृणन्। आपिः। अपृणंतं। अभि। स्यात्॥ ७॥

कृषन् कृषिं कुर्वन्फाल आशितं कर्षकं भोक्तारं कृणोति। करोति। तथाध्वानं मार्गं यन्। इणः शतरि नुमागमः। गच्छन्पुरुषश्चरित्रैरात्मीयैर्गमनैरप वृंक्ते। स्वामिनो धनमावर्जयति। वृजी वर्जने। आदादिकः। अनुदात्तेत्। वदन् शास्त्रार्थं ब्रुवाणो ब्रह्मा ब्राह्मणोऽवदतः शास्त्रार्थमब्रुवानाज्जनाद्वनीयान्। संभक्तृतमः प्रियकरो भवति। वनतेस्तृजंतस्येयसुनि तुरिष्ठेमेयःस्विति तृचो लोपः। ते यथा स्वकर्मणि प्रवर्तमानाः परेषामुपकारकास्तथा पृणन् दाता पुरुषोऽपृणंतमदातारं जनमभ्यभिलक्ष्यापिः स्यात्। बंधुर्भवेत्॥

॥ अथाष्टमी ॥

एकपाद्भूयो द्विपदो वि चक्रमे द्विपात्त्रिपादमभ्येति पश्चात्।
चतुष्पादेति द्विपदामभिस्वरे संपश्यन्पंक्तीरुपतिष्ठमानः॥८॥

एकऽपात्। भूयः। द्विऽपदः। वि। चक्रमे। द्विऽपात्। त्रिऽपादं। अभि। एति। पश्चात्।
चतुःऽपात्। एति। द्विऽपदां। अभिऽस्वरे। संऽपश्यन्। पंक्तीः। उपऽतिष्ठमानः॥८॥

अत्र पादशब्दो भागवचनः। एकपादेकभागधनः पुरुषो द्विपदो द्विगुणधनस्य मार्गं भूयः। तृतीयायाः सुः। भूयसा कालेन वि चक्रमे। विविधं गच्छति। वेः पादविहरण इत्यात्मनेपदं। तथा द्विपात्पुरुषस्त्रिपादं त्रिभागधनं पुरुषं पश्चादभ्येति। अभिगच्छति। चतुष्पाच्चतुर्भागधनस्तु द्विपदां। बहुवचनादेकपादादय उपलक्ष्यंते। एकपादधनादीनां पंक्तीरभिस्वरेऽभिगमने संपश्यन् सम्यगीक्षमाणः सन्नुपतिष्ठमान एति। गच्छमानो भवति। अन्योन्यापेक्षया सर्वं उत्तमाधमाः। तस्मात्त्वमहमेव धनवानिति न मन्येः किंत्वतिथिभ्यो धनानि ददस्वेत्यर्थः॥

॥ अथ नवमी ॥

समौ चिद्धस्तौ न समं विविष्टः संमातरा चिन्न समं दुहाते।
यमयोश्चिन्न समा वीर्याणि ज्ञाती चित्संतौ न समं पृणीतः॥९॥

समौ। चित्। हस्तौ। न। समं। विविष्टः। संऽमातरा। चित्। न। समं। दुहाते इति।
यमयोः। चित्। न। समा। वीर्याणि। ज्ञाती इति। चित्। संतौ। न। समं। पृणीतः॥९॥

अतिथिभ्यो धनमप्रयच्छन्नपि मम भ्राता दास्यतीति चेत्तत्र हेतुमाह। समौ चिद्धस्तौ समावपि समं समानं न विविष्टः। कार्यं न व्याप्नुतः। विष्लृ व्याप्तौ।

जौहोत्यादिकः। संज्ञापूर्वकस्य विधेरनित्यत्वादभ्यासस्य गुणाभावः। तथा संमातरा वत्सस्य मातरौ धेनू समे अपि समं समानं पयो न दुहाते। यमयोश्चित् सहजातयोः पुत्रयोरपि समा समानि वीर्याणि न संति। तस्माज्ज्ञाती चिदेकस्मिन्कुले संतौ जातावपि समं न पृणीतः। न प्रयच्छतः। तस्माद्यस्य धनमस्ति स एव दद्यादित्यर्थः॥

॥ इत्यष्टमस्य षष्ठे त्रयोविंशो वर्गः॥

अग्ने हंसीति नवर्चं षष्ठं सूक्तममहीयुगोत्रस्योरुक्षयस्यार्षं गायत्रं। रक्षोहाग्निर्देवता। तथा चानुक्रम्यते। अग्ने हंस्युरुक्षय आमहीयव आग्नेयं राक्षोघ्नं गायत्रं त्विति॥ मथ्यमानेऽग्नावजायमान इदमनुवक्तव्यं। सूचितं च। अजायमाने त्वेतस्मिन्नेवावसानेऽग्ने हंसि न्यत्रिणमिति सूक्तमावपेत। आ॰ २.१६.। इति॥ प्रातरनुवाकाश्विनशस्त्रयोरपि गायत्रे छंदसीदं सूक्तं। सूचितं च। अग्ने हंस्यग्निं हिन्वंतु नः। आ॰ ४.१३.। इति॥ दशमेऽहनि धिष्ण्यांगाराभिविहरण आद्या जप्या। सूचितं च। परि त्वाग्ने पुरं वयमित्येतस्याः स्थानेऽग्ने हंसि न्यत्रिणं। आ॰ ८.१२.। इति॥

॥ तत्र प्रथमा॥

अग्ने हंसि न्य१त्रिणं दीद्यन्मर्त्येष्वा।
स्वे क्षये शुचिव्रत॥१॥
अग्ने। हंसि। नि। अत्रिणं। दीद्यत्। मर्त्येषु। आ।
स्वे। क्षये। शुचिऽव्रत॥१॥

हे शुचिव्रत पूतकर्मन् दीप्यमानतेजस्क हे अग्ने अत्रिणमत्तारं शत्रुं तमोरूपं नितरां हंसि। विनाशय। आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः। किं कुर्वन्। मर्त्येषु मनुष्येषु यजमानेष्वाभिमुख्येन दीद्यत्। कर्मसिद्ध्यर्थं प्रकाशमानः। दीदितिर्दीप्तिकर्मा। तथा स्व आत्मीये निवासभूत आहवनीयादिस्थाने दीप्यमानः। क्षयो निवास इत्याद्युदात्तत्वं॥

॥ अथ द्वितीया॥

उत्तिष्ठसि स्वाहुतो घृतानि प्रति मोदसे।
यत्त्वा स्रुचः समस्थिरन्॥२॥

उत्। तिष्ठसि। सुऽआहुतः। घृतानि। प्रति। मोदसे।
यत्। त्वा। स्रुचः। संऽअस्थिरन् ॥२॥

हे अग्ने स्वाहुतोऽस्माभिः सुष्ठ्वाहूयमानः सन् उत्तिष्ठसि। अरणीभ्यामुन्नतो भव। ऊर्ध्वकर्मत्वादात्मनेपदाभावः। उन्नत्य च घृतानि घृतेन सहितान्यस्माभिर्दीयमानानि हवींषि प्रति मोदसे। हृष्टो भव। मुद हर्षे। भौवादिकः। अनुदात्तेत्। यद्यदा त्वा त्वां स्रुचो जुह्वादीनि पात्राणि समस्थिरन्। संगतान्यभवन्। समवप्रविभ्यः स्थ इति लुङ्यात्मनेपदं। स्थाघ्वोरिच्चेति सिचः कित्त्वमिकारश्चांतादेशः। ह्रस्वादंगादिति सिचो लोपः। व्यत्ययेन झस्य रन्। तिङि चोदात्तवतीति गतेर्निघातः ॥

॥ अथ तृतीया ॥

स आहुतो वि रोचतेऽग्निरीळेन्यो गिरा।
स्रुचा प्रतीकमज्यते ॥३॥
सः। आऽहुतः। वि। रोचते। अग्निः। ईळेन्यः। गिरा।
स्रुचा। प्रतीकं। अज्यते ॥३॥

आहुत आभिमुख्येन हुतः। गतिरनंतर इति गतेः प्रकृतिस्वरः। गिरा स्तुतिलक्षणया वाचेळेन्यः स्तोतव्यः सोऽग्निर्वि रोचते। अत्यर्थं दीप्यते। तथा प्रतीकं सर्वेषां देवानां पूर्वमेव स्रुचा घृतसहितयाज्यते। सिच्यते ॥

॥ अथ चतुर्थी ॥

घृतेनाग्निः समज्यते मधुप्रतीक आहुतः।
रोचमानो विभावसुः ॥४॥
घृतेन। अग्निः। सं। अज्यते। मधुऽप्रतीकः। आऽहुतः।
रोचमानः। विभाऽवसुः ॥४॥

अग्निर्घृतेन हविषा समज्यते। सम्यक् सिक्तो भवति। कीदृशः। मधुप्रतीकः। घृतप्रयुक्तावयवः। आहुतः। स्तुतिभिर्हविर्भिर्वा रोचमानो दीप्यमानः। विभावसुः स्वदीप्त्या सर्वमाच्छादयन्। यद्वा दीप्तिरेव धनं यस्य सः ॥

अग्नोर्यामे होतुरतिरिक्तोक्थ्ये जरमाणः समिध्यस इत्यनुरूपस्तृचः। सूचितं च। जराबोध तद्विविड्ढि जरमाणः समिध्यसे। आ॰ ९.११.। इति ॥ तत्र प्रथमा सूक्ते पंचमी ॥

जरमाणः समिध्यसे देवेभ्यो हव्यवाहन।
तं त्वा हवंत मर्त्याः ॥५॥
जरमाणः। सं। इध्यसे। देवेभ्यः। हव्यऽवाहन।
तं। त्वा। हवंत। मर्त्याः ॥५॥

हे हव्यवाहन हव्यानां प्रापयितः। हव्येऽनंतःपादं। पा॰ ३.२.६६.। इति ञ्युट्। जरमाणः स्तोतृभिः स्तूयमानः। जरतिः स्तुतिकर्मा। स त्वं देवेभ्यो देवार्थं समिध्यसे। हविर्भिः सम्यग्दीप्यसे। तं तादृशं त्वा त्वां मर्त्या मनुष्येषु साधवो यजमाना हवंत। आह्वयंति। ह्वयतेर्लेङि बहुलं छंदसीति संप्रसारणं ॥

॥ इत्यष्टमस्य षष्ठे चतुर्विंशो वर्गः ॥

॥ अथ षष्ठी ॥

तं मर्ता अमर्त्यं घृतेनाग्निं सपर्यत।
अदाभ्यं गृहपतिं ॥६॥
तं। मर्ताः। अमर्त्यं। घृतेन। अग्निं। सपर्यत।
अदाभ्यं। गृहऽपतिं ॥६॥

हे मर्ता ऋत्विजः अमर्त्यं मनुष्यधर्मरहितमग्निं घृतेन हविषा सपर्यत। परिचरत। सपरशब्दः कंड्वादिः। कीदृशं। अदाभ्यं। कैश्चिदप्यहिंस्यं। दभेश्चेति वक्तव्यमिति ण्यत्। गृहपतिं गृहस्य स्वामिनं यजमानरूपं। पत्यावैश्वर्ये इति पूर्वपदप्रकृतिस्वरः ॥

॥ अथ सप्तमी ॥

अदाभ्येन शोचिषाग्ने रक्षस्त्वं दह।
गोपा ऋतस्य दीदिहि ॥७॥
अदाभ्येन। शोचिषा। अग्ने। रक्षः। त्वं। दह।
गोपाः। ऋतस्य। दीदिहि ॥७॥

हे अग्ने त्वमदाभ्येनाहिंस्येन शोचिषा तेजसा रक्षः। जातावेकवचनं। सर्वान्राक्षसान्दह। विनाशय। किंच। ऋतस्य यज्ञस्य गोपा गोपायिता सन् दीदिहि। दीप्यस्व॥

॥ अथाष्टमी॥

स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः।

उरुक्षयेषु दीद्यत्॥८॥

सः। त्वं। अग्ने। प्रतीकेन। प्रति। ओष। यातुऽधान्यः।

उरुऽक्षयेषु। दीद्यत्॥८॥

हे अग्ने स त्वं प्रतीकेन त्वदवयवभूतेन तेजसा यातुधान्यो यातुधानी राक्षसीः प्रत्योष। प्रतिकूलं दह। उष दाहे। भौवादिकः। लोटि हेर्लुक्। जातेरस्त्रीविषयादिति यातुधानशब्दस्य ङीष्। उदात्तस्वरितयोर्यण इति स्वरितत्वं। किं कुर्वन्। उरुक्षयेषु विस्तीर्णेषु निवासेष्वाहवनीयादिषु दीद्यत्। दीप्यमानः॥

॥ अथ नवमी॥

तं त्वा गीर्भिरुरुक्षया हव्यवाहं समीधिरे।

यजिष्ठं मानुषे जने॥९॥

तं। त्वा। गीःऽभिः। उरुऽक्षयाः। हव्यऽवाहं। सं। ईधिरे।

यजिष्ठं। मानुषे। जने॥९॥

हे अग्ने उरुक्षया बहुनिवासा यजमाना हव्यवाहं हविषां वोढारं मानुषे मनुष्यसंबंधिनि जने जनमध्ये यजिष्ठं यष्टृतमं तं त्वा त्वां गीर्भिः स्तुतिभिस्तत्सहितैर्हविर्भिः समीधिरे। सम्यगदीदिपन्। इंधेर्लिटींधिभवतिभ्यां चेति किस्त्वे नलोपः॥

॥ इत्यष्टमस्य षष्ठे पंचविंशो वर्गः॥

इति वा इति त्रयोदशर्चं सप्तमं सूक्तं गायत्रं। इंद्रो लवरूपमास्थाय सोमपानं कुर्वन् तदानीमृषिभिः दृष्टः सन् स्वात्मानमनेन सूक्तेनास्तावीत्। अतो लवरूपापन्न इंद्र ऋषिः। स एव देवता। तथा चानुक्रम्यते। इति वै सप्तोनैंद्रो लव आत्मानं तुष्टावेति। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

इति वा इति मे मनो गामश्वं सनुयामिति ।
कुवित्सोमस्यापामिति ॥१॥

इति । वै । इति । मे । मनः । गां । अश्वं । सनुयां । इति ।
कुवित् । सोमस्य । अपां । इति ॥१॥

इति वा इति खल्वित्येवंप्रकारेण मे मदीयं मनो वर्तते । तं प्रकारं दर्शयति । गामश्वं च सनुयां स्तोतृभ्यः प्रयच्छामीति । षणु दाने । तानादिकः । इतिशब्दो हेतौ । यस्मात् कुविद्बहुवारं सोमस्य सोममपां । पीतवानस्मि । क्रियाग्रहणं कर्तव्यमिति सोमस्य संप्रदानसंज्ञा । चतुर्थ्यर्थे बहुलमिति षष्ठी । पा पाने । लुङि गातिस्थेति सिचो लुक् । कुविद्योगादनिघातः ॥

॥ अथ द्वितीया ॥

प्र वाता इव दोधत उन्मा पीता अयंसत ।
कुवित्सोमस्यापामिति ॥२॥

प्र । वाताःऽइव । दोधतः । उत् । मा । पीताः । अयंसत ।
कुवित् । सोमस्य । अपां । इति ॥२॥

दोधतो भृशं कंपयमाना वाता इव वायवो यथा वृक्षादीनुद्यच्छंते तद्वत्पीताः सोमा मा मां प्रकर्षेणोदयंसत । उद्यच्छंते । यमेर्लुङि समुदाङ्भ्यो यमोऽग्रंथे । पा॰ १.३.७५. । इत्यात्मनेपदं । यस्माद्बहुवारं सोममपां ॥

॥ अथ तृतीया ॥

उन्मा पीता अयंसत रथमश्वा इवाशवः ।
कुवित्सोमस्यापामिति ॥३॥

उत् । मा । पीताः । अयंसत । रथं । अश्वाःऽइव । आशवः ।
कुवित् । सोमस्य । अपां । इति ॥३॥

पीताः सोमा मामुदयंसत । उद्यच्छंते । तत्र दृष्टांतः । रथमश्वा इव । यथाशवः क्षिप्रगामिनो गमनेन व्याप्ता वाश्वा रथमुद्गमयंति तद्वत् ॥

॥ अथ चतुर्थी ॥

उप मा मतिरस्थित वाश्रा पुत्रमिव प्रियं।

कुवित्सोमस्यापामिति ॥४॥

उप। मा। मतिः। अस्थित। वाश्रा। पुत्रंऽइव। प्रियं।

कुवित्। सोमस्य। अपां। इति ॥४॥

मतिः स्तोतृभिः क्रियमाणा स्तुतिर्मा मामुपास्थित। संयोजयति। उपाद्देवपूजासंगतिकरणेत्यात्मनेपदं। कथमिव। वाश्रा पुत्रमिव। यथा वाश्रा शब्दायमाना धेनुः प्रियं पुत्रं वत्सं संगच्छति तद्वत् ॥

॥ अथ पंचमी ॥

अहं तष्टेव वंधुरं पर्यचामि हृदा मतिं।

कुवित्सोमस्यापामिति ॥५॥

अहं। तष्टाऽइव। वंधुरं। परि। अचामि। हृदा। मतिं।

कुवित्। सोमस्य। अपां। इति ॥५॥

तष्टेव। तक्षा यथा वंधुरं सारथिनिवासस्थानं। तद्वान्वोपलक्ष्यते। तत्स्थानं रथं वा साधुकरोति तद्वदहं मतिं स्तुतिं हृदात्मीयेन मनसा पर्यचामि। साधुकरणाय परिगच्छामि ॥

॥ अथ षष्ठी ॥

नहि मे अक्षिपच्चनाच्छांत्सुः पंच कृष्टयः।

कुवित्सोमस्यापामिति ॥६॥

नहि। मे। अक्षिऽपत्। चन। अच्छांत्सुः। पंच। कृष्टयः।

कुवित्। सोमस्य। अपां। इति ॥६॥

चनेति निपातसमुदायोऽप्यर्थे। पंच कृष्टयोऽपि निषादपंचमाश्चत्वारो वर्णाः पंच जनाः। यद्वा देवमनुष्यादयः। मे मदीयमक्षिपच्चक्षुःपतनं दृष्टिसंचारं न ह्यच्छांत्सुः। न ह्यपवृण्वंति। न हि द्रष्टुर्हष्टेर्विपरिलोपो विद्यत इति हि श्रुतेः। श॰ ब्रा॰ १४.७.१.२३.॥ छदि अपवरणे। चुरादीनामिति वा ण्यंतत्वादत्र ण्यभावे लुङि हलंतलक्षणा वृद्धिः। पा॰ ७.२.३.॥ यस्माद्बहुवारं सोममपां ॥

॥ इत्यष्टमस्य षष्ठे षड्विंशो वर्गः ॥

॥ अथ सप्तमी ॥

नहि मे रोदसी उभे अन्यं पक्षं चन प्रति ।
कुवित्सोमस्यापामिति ॥७॥

नहि । मे । रोदसी इति । उभे इति । अन्यं । पक्षं । चन । प्रति ।
कुवित् । सोमस्य । अपां । इति ॥७॥

उभे रोदसी द्यावापृथिव्यौ मे मदीयमन्यं पक्षं चन पक्षमपि प्रति समाने न भवतः ॥

॥ अथाष्टमी ॥

अभि द्यां महिना भुवमभी३मां पृथिवीं महीं ।
कुवित्सोमस्यापामिति ॥८॥

अभि । द्यां । महिना । भुवं । अभि । इमां । पृथिवीं । महीं ।
कुवित् । सोमस्य । अपां । इति ॥८॥

उक्तमर्थं प्रतिपादयति । महिना महिम्नात्मीयेन द्यां द्युलोकमभि भुवं । अभि-भवामि । तथा महीं महतीमिमां पृथिवीं स्वमहिम्नाभि भवामि । भवतेर्लङि छांदसो विकरणस्य लुक् । भूसुवोस्तिङीति गुणे प्रतिषिद्ध उवङादेशः ॥

॥ अथ नवमी ॥

हंताहं पृथिवीमिमां नि दधानीह वेह वा ।
कुवित्सोमस्यापामिति ॥९॥

हंत । अहं । पृथिवीं । इमां । नि । दधानि । इह । वा । इह । वा ।
कुवित् । सोमस्य । अपां । इति ॥९॥

हंतेति संभावनायामनुज्ञायां वा । संभावयाम्येतदनुजानामि वा । किं तत् । अहमिमां पृथिवीमिह वांतरिक्षे नि दधानि । इह वा द्युलोक इति हस्तेन निर्दि-शति । दधातेर्लोटि मेर्निः ॥

॥ अथ दशमी ॥

ओषमित्पृथिवीमहं जंघनानीह वेह वा ।
कुवित्सोमस्यापामिति ॥१०॥

ओषं। इत्। पृथिवीं। अहं। जंघनानि। इह। वा। इह। वा।
कुवित्। सोमस्य। अपां। इति ॥१०॥

अहं पृथिवीमभिलक्ष्यौषं स्वतेजसा तापकमादित्यमिह वांतरिक्ष इह वा द्युलोके जंघनानि। भृशं यापयानि। इदिति पूरणः। हंतेर्गत्यर्थस्य यङ्लुगंतस्य लोटि शपो लुगभावश्छांदसः ॥

॥ अथैकादशी ॥

दिवि मे अन्यः पक्षो३ऽधो अन्यमचीकृषं।
कुवित्सोमस्यापामिति ॥११॥
दिवि। मे। अन्यः। पक्षः। अधः। अन्यं। अचीकृषं।
कुवित्। सोमस्य। अपां। इति ॥११॥

मे मदीयोऽन्यः पक्षो दिवि द्युलोके स्थापितः। अधः। पूर्वाधरावराणामसी-त्यादिनासिप्रत्ययः। प्रकृतेरधादेशश्च। अधस्तात्पृथिव्यामन्यं पक्षमचीकृषं। अकार्षं। कृष विलेखने। णयंतस्य लुङि चङि नित्यं छंदसीत्यृकारादेशः। विलेखनं नामो-त्पादनं। उत्पादयं। आस्थापयमित्यर्थः ॥

॥ अथ द्वादशी ॥

अहमस्मि महामहोऽभिनभ्यमुदीषितः।
कुवित्सोमस्यापामिति ॥१२॥
अहं। अस्मि। महाऽमहः। अभिऽनभ्यं। उत्ऽईषितः।
कुवित्। सोमस्य। अपां। इति ॥१२॥

अभिनभ्यं नभौ मध्यस्थाने भवं नभ्यमंतरिक्षं। उगवादिभ्यो यत्। पा० ५.१.२.। इति यत्प्रत्ययः। तत्रैव पाठान्नभादेशश्च। लक्षणेनाभिप्रती आभिमुख्ये। पा० २. १.१४.। इत्यव्ययीभावसमासस्वरः। अंतरिक्षमभ्युदीषित उन्नतः सूर्यात्माहं महा-महोऽस्मि। महतामपि महानस्मि। यद्वा महत्प्रभूतं महस्तेजो यस्य। प्रभूततेज-स्कोऽस्मि। आन्महत इत्यात्वं ॥

॥ अथ त्रयोदशी ॥

गृहो याम्यरंकृतो देवेभ्यो हव्यवाहनः ।
कुवित्सोमस्यापामिति ॥१३॥

गृहः । यामि । अरंऽकृतः । देवेभ्यः । हव्यऽवाहनः ।
कुवित् । सोमस्य । अपां । इति ॥१३॥

गृहो हविषां गृहीतारंकृतो यजमानैरलंकृतोऽहं देवेभ्य इंद्रादिभ्यो हव्यवाहनो हविषां वोढा प्रापयिताग्न्यात्मा सन्यामि। हवींषि प्रापयामि। या प्रापणे। लट्। हव्येऽनंतःपादमिति वहेर्ञ्युट्। ञित्त्वादाद्युदात्तः। समासे कृदुत्तरपदप्रकृतिस्वरः। इति यस्मात्कुविद्बहुवारं सोमस्य सोममपां पीतवानस्मि। तस्मादेतान्यकार्षमितींद्रः स्वात्मानमेवास्तावीत् ॥

॥ इत्यष्टमस्य षष्ठे सप्तविंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्येऽष्टमाष्टके षष्ठोऽध्यायः ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

तत्राष्टमाष्टके षष्ठाध्यायं व्याख्याय सप्तमाध्याय आरभ्यते। दशममंडलस्य दशमेऽनुवाके सूक्तसप्तकं व्याख्यातं । तदिदिति नवर्चमष्टमं सूक्तमथर्वणः पुत्रस्य बृहद्दिवस्यार्षं त्रैष्टुभमैंद्रं। तथा चानुक्रांतं। तदिन्नवाथर्वणो बृहद्दिव इति ॥ चातुर्विंशिकेऽहनि निष्केवल्य इदं सूक्तं । सूचितं च । तदिदासेति च पुरस्तात्सूक्तस्य शंसेत्। आ॰ ७.३.। इति ॥ व्योमविश्वदेवस्तुत्पंचशारदीयेष्वप्येकाहेष्विदमेव निष्केवल्यनिविद्धानं। सूचितं च। एतेषां त्रयाणां कया शुभा तदिदासेति मध्यंदिनः

। आ० ९.८.। इति ॥ राशिमरायाख्ययोरेकाहयोरपीदं निष्केवल्यनिविद्धानं। सूचितं च। राशिमराययोश्च कायाशुभीयतदिदासीये। आ० ९.८.। इति ॥ महाव्रते निष्केवल्येऽप्येतत्सूक्तं। तथैव पंचमारण्यके शौनकेन सूचितं। तदिदास भुवनेषु ज्येष्ठं तां सु ते कीर्तिं मघवन्महित्वेति ॥

॥ तत्र प्रथमा ॥

तदिदा॑स॒ भुव॑नेषु॒ ज्येष्ठं॒ यतो॑ ज॒ज्ञ उ॒ग्रस्त्वे॒षनृ॑म्णः ।
स॒द्यो ज॑ज्ञा॒नो नि रि॑णाति॒ शत्रू॒ननु॒ यं विश्वे॒ मद॒न्त्यूमाः॑ ॥१॥

तत्। इत्। आ॒स॒। भुव॑नेषु। ज्येष्ठं॑। यतः॑। ज॒ज्ञे। उ॒ग्रः। त्वे॒षऽनृ॑म्णः।
स॒द्यः। ज॒ज्ञा॒नः। नि। रि॒णा॒ति॒। शत्रू॑न्। अनु॑। यं। विश्वे॑। मद॑न्ति। ऊमाः॑ ॥१॥

तज्जगत्कारणत्वेन सर्ववेदांतप्रसिद्धं। इच्छब्दोऽवधारणे। भुवनेषु। भू सत्तायां। सत्सु पृथिव्यादिषु लोकेषु मध्ये जगत्कारणं ब्रह्मैव ज्येष्ठं प्रशस्ततममास। बभूव। तस्य परमार्थत्वात् तद्व्यतिरिक्तानां व्यावहारिकत्वाच्च। यद्वा ज्येष्ठं वृद्धतमं जगत्कारणत्वेन सर्वेषामादिभूतं बभूव। अस्तेर्लिटि छंदस्युभयथेति सार्वधातुकत्वादस्तेर्भूरिति भूभावाभावः। यद्वा वृद्धं तदेव ब्रह्म स्वप्रकाशतयास। दिदीपे। अस गतिदीप्त्यादानेषु। अस्माल्लिटि रूपं। यत उपादानभूताद्यस्माद्ब्रह्मण उग्र उद्गूर्णस्त्वेषनृम्णः प्रदीप्तबलः सूर्यात्मक इंद्रो जज्ञे। जातो बभूव। श्रूयते हि चक्षोः सूर्यो अजायतेति। सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयदिति च। जनिकर्तुः प्रकृतिः। पा० १.४.३०.। इति प्रकृतेरपादानसंज्ञायां यत इति पंचमी। जनेर्लिटि गमहनेत्यादिनोपधालोपः। द्विर्वचनेऽचीति तस्य स्थानिवद्भावाद्द्विर्वचनादि। यद्वृत्तान्नित्यमिति निघातप्रतिषेधः। स च जज्ञानो जायमान एव सद्यः शीघ्रं शत्रूञ्शातयितॄन्मंदेहादीन्राक्षसान्नि रिणाति। निहिनस्ति। यद्वोपासकानां पापरूपाञ्शत्रून्निहंति। तथा च ब्राह्मणं। सद्यो ह्येष जातः पाप्मानमपाहतेति। जज्ञान इति जनेर्लिटि कानचि रूपमेतत्। रिणाति। री गतिरेषणयोः। क्र्यादिः। प्वादीनां ह्रस्व इति ह्रस्वत्वं। विश्वे सर्वे ऊमाः। अवंति रक्षंतीत्यूमाः प्राणिनः। अवतेरौणादिको मन्प्रत्ययः। ज्वरत्वरेत्यादिना वकारोपधयोः स्थान ऊट्। सर्वे प्राणिनो यं सूर्यात्मकमुद्यंतमिंद्रमनुलक्ष्य मदर्थमुदगान्मदर्थमुदगादिति मदंति हृष्यंति। मदी हर्षे। व्यत्ययेन शप्। तथा च ब्राह्मणं। भूतानि वै विश्व ऊमास्त एनमनुमदंत्युदगादुदगादितीति। तैत्तिरीयकं च। तस्मात्सर्व एव मन्यंते मां प्रत्युदगादितीति। यद्वा यं स्तुत्यादिभिर्माद्यंतमनु पश्चात्सर्वे

प्राणिनोऽभीष्टप्राप्त्या हृष्यंति। अनुर्लक्षण इत्यनोः कर्मप्रवचनीयत्वात्कर्मप्रवचनीययुक्त इति द्वितीया। स इंद्रो जज्ञ इत्यन्वयः ॥

॥ अथ द्वितीया ॥

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति।
अव्यनच्च व्यनच्च सस्नि सं ते नवंत प्रभृता मदेषु ॥२॥

ववृधानः। शवसा। भूरिऽओजाः। शत्रुः। दासाय। भियसं। दधाति।
अविऽअनत्। च। विऽअनत्। च। सस्नि। सं। ते। नवंत। प्रऽभृता। मदेषु ॥२॥

शवसा बलेन ववृधानो वर्धमानोऽत एव भूर्योजा बहुबलः शत्रुः शातयितेंद्रो दासायोपक्षयकारिणे शत्रवे भियसं भीतिं दधाति। विदधाति करोति। अव्यनत्। विविधमनिति श्वसितीति व्यनत् प्राणवज्जंगमं। तद्विलक्षणमव्यनत् स्थावरं। तदुभयमपि सस्नि संस्नातमिंद्रेण सम्यक्छोधितं भवति। स्नातेरादृगमहन इति व्यत्ययेन कर्मणि किन्प्रत्ययः। यद्वांतर्णीतण्यर्थात्कर्तर्येव किन्। वृष्ट्यादिना सम्यक् स्नापयिता शोधयिता भवति। न लोकाव्ययेति कर्मणि षष्ठ्याः प्रतिषेधः। शिष्टः पादः प्रत्यक्षकृतः। हे इंद्र ते तव मदेषु हर्षेषु हविषा स्तुत्या च जातेषु सत्सु प्रभृता प्रभृतानि प्रकर्षेण धृतानि पोषितानि वा सर्वाणि भूतजातानि सं नवंत। संगच्छंते। स्तोतुं हवींषि च दातुं समूहीभवंतीत्यर्थः। नवतिर्गतिकर्मा। प्रभृता। बिभर्तेः कर्मणि निष्ठा। शेश्छंदसि बहुलमिति शेर्लोपः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं ॥

॥ अथ तृतीया ॥

त्वे क्रतुमपि वृंजंति विश्वे द्विर्यदेते त्रिर्भवंत्यूमाः।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ॥३॥

त्वे इति। क्रतुं। अपि। वृंजंति। विश्वे। द्विः। यत्। एते। त्रिः। भवंति। ऊमाः।
स्वादोः। स्वादीयः। स्वादुना। सृज। सं। अदः। सु। मधु। मधुना। अभि। योधीः ॥३॥

हे इंद्र त्वे त्वयि। सुपां सुलुगिति सप्तम्येकवचनस्य शे आदेशः। विश्वे सर्वे यजमानाः क्रतुमनुष्ठेयं कर्म वृंजंति। समापयंति। अपिशब्दो ब्राह्मणोक्तसर्वभूतानां सर्वमनसां समुच्चयार्थः। सर्वाणि पृथिव्यादीनि भूतानि सर्वेषां प्राणिनां मनांसि सर्वे यज्ञक्रतवश्च व्याप्ते त्वय्येव यजमानैः परिसमाप्यंत इत्यर्थः। तथा च

ब्राह्मणं। त्वयीमानि सर्वाणि भूतानि सर्वाणि मनांसि सर्वे क्रतवोऽपि वृंजंतीत्येव तदाहेति। यद्यस्मादेत ऊमास्तर्पकाः। अवतेस्तर्पणार्थादौणादिको मन्प्रत्ययः। ज्वरत्वरेत्यादिना वकारोपधयोरूट्। ईदृशा यजमानाः पूर्वमेकाकिनः संतः पश्चाद्द्विर्द्विवारं स्त्रीरूपेण पुंरूपेण च जाताः संतः पुनरपत्येन सार्धं त्रिस्त्रिवारं जन्मभाजो भवंति। एक एवात्मा स्त्रीपुंरूपेण जायते। अर्धो वा एष आत्मनो यत्पत्नीति श्रुतेः। पुत्रोऽप्यात्मैव। आत्मा वै पुत्रनामासि। श॰ ब्रा॰ १४.९.४.२६.। इति श्रुतेः। यत एवमेतेऽभिवृद्धा भवंति ततोऽवगम्यते त्वय्येवानुष्ठितं सर्वं कर्म परिसमापयंतीति। तथा च ब्राह्मणं। द्वौ वै संतौ मिथुनौ प्रजायेते प्राजापत्येति। हे इंद्र त्वं स्वादोः प्रियाद्गृहधनादेरपि स्वादीयः स्वादुतरं प्रियतरमपत्यं स्वादुना स्वादुभूतेन मिथुनेन मातापित्रात्मकेन सं सृज। संयोजय। यद्वा स्वादुना भावेनोत्पन्नं तदपत्यमपि संयोजय। एतदेवाह। अदस्तदपत्यं मधु मधुरं मधुना मदहेतुना मिथुनांतरेण पौत्रेण वा सु सुष्ठुभि योधीः। अभियोधय। अभितः क्रीडय। धातूनामनेकार्थत्वाद्युध्यतिरत्र क्रीडार्थे वर्तते। मिथुनं वै स्वादु प्रजा स्वाद्वित्यादि ब्राह्मणमत्रानुसंधेयं॥

॥ अथ चतुर्थी ॥

इतिं चिद्धि त्वा धना जयंतं मदेमदे अनुमदंति विप्राः।
ओजीयो धृष्णो स्थिरमा तनुष्व मा त्वा दभन्यातुधाना दुरेवाः ॥४॥
इतिं। चित्। हि। त्वा। धनां। जयंतं। मदेऽमदे। अनुऽमदंति। विप्राः।
ओजीयः। धृष्णो इतिं। स्थिरं। आ। तनुष्व। मा। त्वा। दभन्। यातुऽधानाः। दुःऽएवाः॥४॥

इति चिद्ध्येवमेव खलु हे इंद्र मदे मदे सोमपानजन्ये हर्षे सति धना शत्रुधनानि जयंतं जयेन प्राप्नुवंतं त्वामनु पश्चात्। लक्षणेऽनोः कर्मप्रवचनीयत्वं। विप्रा मेधाविनः स्तोतारो मदंति। हृष्यंति। यद्वा त्वामनुमदंति। अनुक्रमेण स्तुवंति। मदतिः स्तुतिकर्मा। हि चेति निघातप्रतिषेधः। हे धृष्णो शत्रूणां धर्षयितरिंद्र। त्रसिगृधिधृषिक्षिपेः क्नुः। ओजीयः। ओजस्विशब्दादीयसुनि विन्मतोर्लुगिति विनो लुक्। टेरिति टिलोपः। बलवत्तरमत एव स्थिरं दृढं धनमा तनुष्व। अभितोऽस्मदर्थं विस्तारय। त्वा त्वां च मा दभन् मा हिंसंतु दुरेवा दुर्गतयो यातुधाना राक्षसाः॥

॥ अथ पंचमी ॥

त्वया वयं शाशद्महे रणेषु प्रपश्यंतो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ॥५॥
त्वया । वयं । शाशद्महे । रणेषु । प्रऽपश्यंतः । युधेन्यानि । भूरि ।
चोदयामि । ते । आयुधा । वचःऽभिः । सं । ते । शिशामि । ब्रह्मणा । वयांसि ॥५॥

हे इंद्र त्वयानुगृहीता वयं रणेषु संग्रामेषु शाशद्महे । भृशं शत्रूञ्शातयामः । शद्लृ शातने । अस्माद्यङंतान्महिङ्श्छंदस्युभयथेत्यार्धधातुकत्वादतोलोपयलोपौ । किं कुर्वंतः । युधेन्यानि योधनार्हाणि । कृत्यार्थे तवैकेन्केन्यत्वन इति युधेरर्हार्थे केन्य-प्रत्ययः । भूरि बहूनि बहुलानि । सुपां सुलुगिति शसो लुक् । प्रपश्यंतः प्रकर्षेण जानंतः । अपि च ते तवायुधायुधान्यायोधनसाधनानि वज्रादीनि । शेश्छंदसि बहुलमिति शेर्लोपः । वचोभिः स्तुतिभिश्चोदयामि । शत्रून्प्रति प्रेरयामि । ते त्वदर्थं ब्रह्मणा मंत्रेण स्तुतिरूपेण सहितानि वयांसि । अन्ननामैतत् । हविर्लक्षणान्यन्नानि सं शिशामि । सम्यग्निश्यामि । संस्करोमीत्यर्थः । शो तनूकरणे । छांदसो विकरणस्य श्लुः । बहुलं छंदसीत्यभ्यासस्येत्वं ॥

॥ इत्यष्टमस्य सप्तमे प्रथमो वर्गः ॥

॥ अथ षष्ठी ॥

स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानां ।
आ दर्षते शवसा सप्त दानून्प्र साक्षते प्रतिमानानि भूरि ॥६॥
स्तुषेय्यं । पुरुऽवर्पसं । ऋभ्वं । इनऽतमं । आप्त्यं । आप्त्यानां ।
आ । दर्षते । शवसा । सप्त । दानून् । प्र । साक्षते । प्रतिऽमानानि । भूरि ॥६॥

स्तुषेय्यं स्तोतव्यं । स्तुवः स्केय्यश्छंदसि । उ० ३.९९. । इत्यौणादिकः क्सेय्यप्रत्ययः । पुरुवर्पसं बहुरूपमृभ्वमुरु भासमानमुरुभूतं वा । इनतममतिशयेनेश्वरं । आप्त्यानामाप्तव्यानां मध्य आप्त्यमाप्तव्यं । एवंभूतमिंद्रं स्तौमीति शेषः । य इंद्रः शवसा बलेन सप्त सप्तसंख्याकान्दानून्दानवान्वृत्रनमुचिकुयवादीना दर्षते । आदृणाति हिनस्ति । दॄ विदारणे । अस्माल्लेटि व्यत्ययेनात्मनेपदं । लेटोऽडाटावित्यडागमः । सिब्बहुलमिति सिप् । तथा प्रतिमानान्यसुराणां प्रतिरूपाणि भूरि भूरीणि बहून्य-

सुरबलानि प्र साक्षते य इंद्रः प्रसहते। यद्वा बहूनि प्रतिमानान्यसुराणां स्थानानि प्र साक्षते। प्राप्नोति। साक्षतिराप्नोतिकर्मेति यास्कः। षह अभिभवे। लेट्यडागमः। सिब्बहुलमिति सिप्। टत्वकत्वषत्वानि। छांदसो दीर्घः ॥

॥ अथ सप्तमी ॥

नि तद्दधिषेऽवरं परं च यस्मिन्नाविथावसा दुरोणे।

आ मातरा स्थापयसे जिगत्नू अत इनोषि कर्वरा पुरूणि ॥७॥

नि। तत्। दधिषे। अवरं। परं। च। यस्मिन्। आविथ। अवसा। दुरोणे।

आ। मातरा। स्थापयसे। जिगत्नू इति। अतः। इनोषि। कर्वरा। पुरूणि ॥७॥

तत्तस्मिन्यजमानस्य गृहेऽवरमल्पं भौमं धनं परमुत्कृष्टं दिवि भवं धनं च हे इंद्र त्वं नि दधिषे। निदधासि। निक्षिपसि यस्मिन्दुरोणे गृहेऽवसा। अन्ननामैतत्। तर्पकेणान्नेन हविर्लक्षणेनाविथ। अवसि तृप्यसि। अवतेस्तृप्त्यर्थाच्छंदसि लुङ्लङ्लिट इति सार्वकालिको लिट्। अत आदेरित्यभ्यासस्यात्वं। यद्वृत्तान्नित्यमिति निघातप्रतिषेधः। अपि च मातरा सकलस्य भूतजातस्य निर्मात्र्यौ द्यावापृथिव्यौ जिगत्नू गमनशीले इतस्ततः प्रचलंत्यावा स्थापयसे। स्वकीये स्थानेऽवस्थापयसि। नैश्चल्येन यथावतिष्ठेते तथा करोषीत्यर्थः। विष्वक्तस्तंभ पृथिवीमुत द्यामिति निगमांतरं। १०.८९.४.। हे इंद्र अतः कारणात्पुरूणि बहूनि कर्वरा। कर्मनामैतत्। कर्वराणि। शेश्छंदसि बहुलमिति शेर्लोपः। कर्माणि लौकिकानि वैदिकानि चेनोषि। प्राप्नोषि। इण् गतौ। व्यत्ययेन श्नुः ॥

॥ अथाष्टमी ॥

इमा ब्रह्म बृहद्दिवो विवक्तींद्राय शूषमग्रियः स्वर्षाः।

महो गोत्रस्य क्षयति स्वराजो दुरश्च विश्वा अवृणोदप स्वाः ॥८॥

इमा। ब्रह्म। बृहत्ऽदिवः। विवक्ति। इंद्राय। शूषं। अग्रियः। स्वःऽसाः।

महः। गोत्रस्य। क्षयति। स्वऽराजः। दुरः। च। विश्वाः। अवृणोत्। अप। स्वाः ॥८॥

बृहद्दिव ऋषिरिमेमानि ब्रह्म ब्रह्माणींद्राय शूषं सुखं यथा भवति तथा विवक्ति। प्रब्रवीतीत्यात्मन एव परोक्षनिर्देशः। वच परिभाषणे। आदादिकः। छांदसः शपः श्लुः। बहुलं छंदसीत्यभ्यासस्येत्वं। ऋषिर्विशेष्यते। अग्रियोऽग्रे भवः। ऋषीणां

प्रमुखः श्रेष्ठ इत्यर्थः । घच्छौ चेत्यग्रशब्दाद्भवार्थे घच् । स्वर्षाः स्वर्गस्य संभक्ता । यद्वा स्वरादित्य इंद्रः । असौ वा आदित्य इंद्र इति श्रुत्यंतरात् । तस्य संभक्ता सेवक इत्यर्थः । वन षण संभक्तौ । जनसनखनक्रमगमो विट् । विड्वनोरनुनासिकस्यादित्यात्वं । सनोतेरन इति षत्वं । य इंद्रो महतो गोत्रस्य पर्वतस्य वलेनासुरेण गवां पिधानार्थं निहितस्य स्वराजः स्वयमेव राजमानस्य । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । ईदृशं पर्वतं क्षयति । अपगमयति । क्षि क्षये । भौवादिकः । यद्वा गोशब्दात्समूहार्थे इनित्रकट्यचश्चेति त्रप्रत्ययः । गोत्रस्य गोसमूहस्य महो महतः स्वराजः स्वयमेव राजमानस्य य इंद्रः क्षयति । ईष्टे । क्षयतिरैश्वर्यकर्मा । स्वशब्दोपपदाद्राजतेः सत्सूद्विषेति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । दुरश्च विलद्वाराणि च विश्वाः सर्वाः स्वा वलासुरस्य स्वभूता अपावृणोत् । अपगतावरणा अकरोत् । उद्घाटितवानित्यर्थः । यद्वा दुरश्चापावृणोद्विश्वाः सर्वाः स्वाः स्वभूता गा विलमध्ये वर्तमाना अलभतेति शेषः । एवंभूतो य इंद्रस्तस्मा इंद्राय विवक्तीत्यन्वयः ॥

॥ अथ नवमी ॥

एवा महान्बृहद्दिवो अथर्वावोचत्स्वां तन्व१मिंद्रमेव ।
स्वसारो मातरिभ्वरीररिप्रा हिन्वंति च शवसा वर्धयंति च ॥९॥

एव । महान् । बृहत्ऽदिवः । अथर्वा । अवोचत् । स्वां । तन्वं । इंद्रं । एव ।
स्वसारः । मातरिभ्वरीः । अरिप्राः । हिन्वंति । च । शवसा । वर्धयंति । च ॥९॥

महान्गुणैरधिकोऽथर्वा । उपचाराज्जन्ये जनकशब्दः । अथर्वणः पुत्रो बृहद्दिवाख्य ऋषिर्देवेषु मध्य इंद्रमेव प्रति स्वामात्मीयां तन्वं विस्तृतां स्तुतिमेवमवोचत् । प्रोक्तवान् । वचेर्लुङ्अस्यतिवक्तीत्यादिना च्लेरङादेशः । वच उमित्युमागमः । पादादित्वान्न निहन्यते । अपि चैनमेवेंद्रं मातरिभ्वरीः । मातरि सकलस्य भूतजातस्य निर्मात्र्यां भूमौ भवंत्यो वर्तमानाः । भवतेरन्येभ्योऽपि दृश्यंत इति वनिप् । वनो र चेति ङीब्रेफौ । जसि वा छंदसीति पूर्वसवर्णदीर्घः । पृषोदरादित्वाद्वर्णलोपः । अरिप्रा अपापाः स्वसारः स्वयमेव सरंत्यः परस्परं भगिन्यो वा गंगाद्या नद्यो हिन्वंति । यागसाधनत्वेन प्रीणयंति । हिविः प्रीणनार्थः । भौवादिकः । व्यत्ययेन शः । इदित्वान्नुम् । यद्वा हि गतौ वृद्धौ च । स्वादिभ्यः श्नुः । वृद्ध्यर्थं तमिंद्रमुपगच्छंति गत्वा च शवसा यागजन्येन बलेन तं वर्धयंति च ॥

॥ इत्यष्टमस्य सप्तमे द्वितीयो वर्गः ॥

हिरण्यगर्भ इति दशर्चं नवमं सूक्तं प्रजापतिपुत्रस्य हिरण्यगर्भाख्यस्यार्षं त्रैष्टुभं। कशब्दाभिधेयः प्रजापतिर्देवता। तथा चानुक्रांतं। हिरण्यगर्भो दश हिरण्यगर्भः प्राजापत्यः कायमिति। गतः सूक्तविनियोगः॥ प्राजापत्यस्य पशोर्वपापुरोडाशहविषां क्रमेणादितस्तिस्रोऽनुवाक्यास्ततस्तिस्रो याज्याः। सूचितं च। हिरण्यगर्भः समवर्तताग्र इति षट् प्राजापत्याः। आ॰ ३.८.। इति ॥ वरुणप्रघासेषु कायस्य हविषो हिरण्यगर्भ इत्येषा याज्या। सूचितं च। कया नश्चित्र आ भुवद्धिरण्यगर्भः समवर्तताग्र इति प्रतिप्रस्थाता वाजिने तृतीयः। आ॰ २.१७.। इति ॥

॥ सैषा प्रथमा ॥

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥१॥

हिरण्यऽगर्भः। सं। अवर्तत। अग्रे। भूतस्य। जातः। पतिः। एकः। आसीत्।
सः। दाधार। पृथिवीं। द्यां। उत। इमां। कस्मै। देवाय। हविषा। विधेम ॥१॥

हिरण्यगर्भो हिरण्मयस्यांडस्य गर्भभूतः प्रजापतिर्हिरण्यगर्भः। तथा च तैत्तिरीयकं। प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वायेति। यद्वा हिरण्मयोऽंडो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते। अग्रे प्रपंचोत्पत्तेः प्राक् समवर्तत। मायाध्यक्षात्सिसृक्षोः परमात्मनः सकाशात्समजायत। यद्यपि परमात्मैव हिरण्यगर्भस्तथापि तदुपाधिभूतानां वियदादीनां सूक्ष्मभूतानां ब्रह्मण उत्पत्तेस्तदुपाहितोऽप्युत्पन्न इत्युच्यते। स च जातो जातमात्र एवैकोऽद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्मांडादेः सर्वस्य जगतः पतिरीश्वर आसीत्। न केवलं पतिरासीदेव अपि तर्हि स हिरण्यगर्भः पृथिवीं विस्तीर्णां द्यां दिवमुतापि चेमामस्माभिर्दृश्यमानां पुरो वर्तिनीमिमां भूमिं। यद्वा पृथिवीत्यंतरिक्षनाम। अंतरिक्षं दिवं भूमिं च दाधार। धारयति। छंदसि लुङ्लङ्लिट इति सार्वकालिको लिट्। तुजादित्वादभ्यासदीर्घः। कस्मै। अत्र किंशब्दोऽनिर्ज्ञातस्वरूपत्वात्प्रजापतौ वर्तते। यद्वा सृष्ट्यर्थं कामयत इति कः। कमेर्डप्रत्ययः। यद्वा कं सुखं। तद्रूपत्वात्क इत्युच्यते। अथवेंद्रेण पृष्टः प्रजापतिर्मदीयं महत्त्वं तुभ्यं प्रदायाहं कः कीदृशः स्यामित्युक्तवान्। स इंद्रः प्रत्यूचे यदीदं ब्रवीष्यहं कः स्यामिति तदेव त्वं भवेति। अतः कारणात्क इति प्रजापतिराख्यायते। इंद्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीदित्यादिकं ब्राह्मणमत्रानुसंधेयं। ऐ॰ ब्रा॰ ३.२१.॥ यदासौ किंशब्दस्तदा सर्वनाम-

त्वात्स्मैभावः सिद्धः। यदा तु यौगिकस्तदा व्यव्ययेनेति द्रष्टव्यं। सावेकाच इति प्राप्तस्य न गोश्वन्सावववर्णेति प्रतिषेधः। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी। कं प्रजापतिं देवाय देवं दानादिगुणयुक्तं हविषा प्राजापत्यस्य पशोर्वपारूपेणैककपालात्मकेन पुरोडाशेन वा विधेम। वयमृत्विजः परिचरेम। विधतिः परिचरणकर्मा ॥

॥ अथ द्वितीया ॥

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥२॥

यः। आत्मऽदाः। बलऽदाः। यस्य। विश्वे। उपऽआसते। प्रऽशिषं। यस्य। देवाः।
यस्य। छाया। अमृतं। यस्य। मृत्युः। कस्मै। देवाय। हविषा। विधेम ॥२॥

यः प्रजापतिरात्मदा आत्मनां दाता। आत्मानो हि सर्वे तस्मात्परमात्मन उत्पद्यंते। यथाग्नेः सकाशाद्विस्फुलिंगा जायंते तद्वत्। यद्वा। आत्मनां शोधयिता। दैप् शोधने। आतो मनिन्निति विच्। बलदा बलस्य च दाता शोधयिता वा। यस्य च प्रशिषं प्रकृष्टं शासनमाज्ञां विश्वे सर्वे प्राणिन उपासते प्रार्थयंते सेवंते वा। शासु अनुशिष्टौ। शास इदित्युपधाया इत्वं। शासिवसिघसीनां चेति षत्वं। कृदुत्तरपदप्रकृतिस्वरत्वं। आसेरनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। तिङि चोदात्तवतीति गतिरनुदात्ता। तथा देवा अपि यस्य प्रशासनमुपासते। अपि चामृतममृतत्वं। भावप्रधानो निर्देशः। यद्वामृतं मरणं नास्त्यस्मिन्नित्यमृतं सुधा। बहुव्रीहौ नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं। तदपि यस्य प्रजापतेश्छाया छायेव वर्ति भवति। मृत्युर्यमश्च प्राणापहारी छायेव भवति तस्मै कस्मै देवायेत्यादि समानं पूर्वेण हविषा पुरोडाशात्मनेति तु विशेषः ॥

॥ अथ तृतीया ॥

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥३॥

यः। प्राणतः। निऽमिषतः। महिऽत्वा। एकः। इत्। राजा। जगतः। बभूव।
यः। ईशे। अस्य। द्विऽपदः। चतुःऽपदः। कस्मै। देवाय। हविषा। विधेम ॥३॥

यो हिरण्यगर्भः प्राणतः प्रश्वसतः। अन प्राणने। आदादिकः। शतुरनुम इति

विभक्तेरुदात्तत्वं । निमिषतोऽक्षिपक्ष्मचलनं कुर्वतः । अत्रापि पूर्ववद्विभक्तिरुदात्ता । जगतो जंगमस्य प्राणिजातस्य महित्वा महत्त्वेन । सुपां सुलुगिति तृतीयाया आकारः । माहात्म्येनैक इद्द्वितीय एव सन् राजा बभूवेश्वरो भवति । भवतेर्णलि लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । अस्य परिदृश्यमानस्य द्विपदो पादद्वययुक्तस्य मनुष्यादेश्चतुष्पदो गवाश्वादेश्च यः प्रजापतिरीश ईष्टे । ईश ऐश्वर्ये । अदादिकोऽनुदात्तेत् । लोपस्त आत्मनेपदेष्विति तलोपः । अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । अस्य । ऊडिदमितीदमो विभक्तिरुदात्ता । द्वौ पादौ यस्य स द्विपात् । संख्यासुपूर्वस्येति पादशब्दस्यांत्यलोपः समासांतः । भसंज्ञायां पादः पदिति पद्भावः । द्विचिभ्यां पाद्दन्नित्येकादेशविकृतस्यानन्यत्वादुत्तरपदांतोदात्तत्वं । स्वरवर्जमेषैव चतुष्पद इत्यत्रापि प्रक्रिया । बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरः । पूर्वपदं त्रः संख्याया इत्याद्युदात्तत्वं । इदुदुपधस्य चाप्रत्ययस्येति विसर्जनीयस्य षत्वं । ईदृशो यः प्रजापतिस्तस्मै कस्मा इत्यादि सुबोधं हविषा हृदयाद्यात्मनेत्ययमत्र विशेषः ॥

॥ अथ चतुर्थी ॥

यस्येमे हिमवंतो महित्वा यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥४॥

यस्य । इमे । हिमऽवंतः । महिऽत्वा । यस्य । समुद्रं । रसया । सह । आहुः ।
यस्य । इमाः । प्रऽदिशः । यस्य । बाहू इति । कस्मै । देवाय । हविषा । विधेम ॥४॥

हिमा अस्मिन्संतीति हिमवान् । तेन बहुवचनांतेन सर्वे पर्वता लक्ष्यंते । यथा छत्रिणो गच्छंतीति । हिमवंतो हिमवदुपलक्षिता इमे दृश्यमानाः सर्वे पर्वता यस्य प्रजापतेर्महित्वा महत्त्वं माहात्म्यमैश्वर्यमित्याहुः । तेन सृष्टत्वात्तद्रूपेणावस्थानाद्वा । तथा रसया । रसो जलं । तद्वती रसा नदी । अर्शआदित्वादच् । जातावेकवचनं । रसाभिर्नदीभिः सह समुद्रं । पूर्ववदेकवचनं । सर्वान्समुद्रान्यस्य महाभाग्यमित्याहुः कथयंति सृष्टभिज्ञाः । यस्य चेमाः प्रदिशः प्राच्यारंभा आग्नेय्याद्याः कोणदिश ईशानांता वा । तथा बाहू । वचनव्यत्ययः । बाहवो भुजाः । भुजवत्प्राधान्ययुक्ताः प्रदिशश्च यस्य स्वभूताः । तस्मै कस्मा इत्यादि समानं पूर्वेण ॥

॥ अथ पंचमी ॥

येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अंतरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥५॥
येन । द्यौः । उग्रा । पृथिवी । च । दृळ्हा । येन । स्वरिति । स्तभितं । येन । नाकः ।
यः । अंतरिक्षे । रजसः । विऽमानः । कस्मै । देवाय । हविषा । विधेम ॥५॥

येन प्रजापतिना द्यौरंतरिक्षमुग्रोद्गूर्णं विशेषागहनरूपं वा । पृथिवी भूमिश्च दृळ्हा येन स्थिरीकृता । स्वः स्वर्गश्च येन स्तभितं स्तब्धं कृतं यथाधो न पतति तथोपर्यवस्थापितमित्यर्थः । ग्रसितस्कभितस्तभितेति निपात्यते । तथा नाक आदित्यश्च येनांतरिक्षे स्तभितः । यश्चांतरिक्षे रजस उदकस्य विमानो निर्माता तस्मै कस्मा इत्यादि गतं ॥

॥ इत्यष्टमस्य सप्तमे तृतीयो वर्गः ॥

॥ अथ षष्ठी ॥

यं क्रंदसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥६॥
यं । क्रंदसी इति । अवसा । तस्तभाने इति । अभि । ऐक्षेतां । मनसा । रेजमाने इति ।
यत्र । अधि । सूरः । उत्ऽइतः । विऽभाति । कस्मै । देवाय । हविषा । विधेम ॥६॥

क्रंदितवान्रोदितवाननयोः प्रजापतिरिति क्रंदसी द्यावापृथिव्यौ । श्रूयते हि । यदरोदीत्तदनयो रोदस्त्वं । तै॰ ब्रा॰ २. २. ९. ४. । इति । ते अवसा रक्षणेन हेतुना लोकस्य रक्षणार्थं तस्तभाने प्रजापतिना सृष्टे लब्धस्थैर्ये सत्यौ यं प्रजापतिं मनसा बुद्ध्याभ्यैक्षेतामावयोर्महत्त्वमनेनेत्यभ्यपश्येतां । ईक्ष दर्शने । लङ्यडादित्वादाद्युदात्तत्वं । कीदृश्यौ द्यावापृथिव्यौ । रेजमाने राजमाने दीप्यमाने । आकारस्य व्यत्ययेनैत्वं । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वा लिटः कानच् । फणां च सप्तानां । पा॰ ६. ४. १२५. । इत्येत्वाभ्यासलोपौ । छंदस्युभयथेति सार्वधातुकत्वाच्छप् । अभ्यस्तानामादिरित्याद्युदात्तत्वं । यत्राधि यस्मिन्नाधारभूते प्रजापतौ सूरः सूर्य उदित उदयं प्राप्तः सन् विभाति प्रकाशते । उत्पूर्वादेतेः कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । तस्मै कस्मा इत्यादि सुज्ञानं ॥

॥ अथ सप्तमी ॥

आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयंतीरग्निं ।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥७॥

आपः । ह । यत् । बृहतीः । विश्वं । आयन् । गर्भं । दधानाः । जनयंतीः । अग्निं ।
ततः । देवानां । सं । अवर्तत । असुः । एकः । कस्मै । देवाय । हविषा । विधेम ॥७॥

बृहतीर्बृहत्यो महत्यः । जसि वा छंदसीति पूर्वसवर्णदीर्घः । बृहन्महतोरुपसंख्यानमिति ङीप उदात्तत्वं । अग्निं । उपलक्षणमेतत् । अग्न्युपलक्षितं सर्वं वियदादिभूतजातं जनयंतीर्जनयंत्यः । तदर्थं गर्भं हिरण्मयांडस्य गर्भभूतं प्रजापतिं दधाना धारयंत्य आपो हाप एव विश्वमायन् । सर्वं जगद्व्याप्नुवन् । यद्यस्मात्ततस्तस्माद्धेतोर्देवानां देवादीनां सर्वेषां प्राणिनामसुः प्राणभूत एकः प्रजापतिः समवर्तत । समजायत । यद्वा यद्यं गर्भं दधाना आपो विश्वात्मनावस्थितास्ततो गर्भभूतात्प्रजापतेर्देवादीनां प्राणात्मको वायुरजायत । अथवा यत् । लिंगवचनयोर्व्यत्ययः । उक्तलक्षणा या आपो विश्वमावृत्य स्थितास्ततस्ताभ्योऽद्भ्यः सकाशादेकोऽद्वितीयोऽसुः प्राणात्मकः प्रजापतिः समवर्तत । निश्चक्राम । तस्मै कस्मा इत्यादि गतं ॥

॥ अथाष्टमी ॥

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयंतीर्यज्ञं ।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥८॥

यः । चित् । आपः । महिना । परिऽअपश्यत् । दक्षं । दधानाः । जनयंतीः । यज्ञं ।
यः । देवेषु । अधि । देवः । एकः । आसीत् । कस्मै । देवाय । हविषा । विधेम ॥८॥

यज्ञं यज्ञोपलक्षितं विकारजातं जनयंतीरुत्पादयंतीस्तदर्थं दक्षं प्रपंचात्मना वर्धिष्णुं प्रजापतिमात्मनि दधाना धारयित्रीः । दधातेर्हेतौ शानच् । अभ्यस्तानामादिरित्याद्युदात्तत्वं । ईदृशीरापः । व्यत्ययेन प्रथमा । अपः प्रलयकालीना महिना महिम्ना । छांदसो मलोपः । स्वमाहात्म्येन यश्च प्रजापतिः पर्यपश्यत् परितो दृष्टवान् यश्च देवेष्वधि देवेषु मध्ये देवः । तेषामपीश्वरः सन् एकोऽद्वितीय आसीत् । भवति । अस्तेश्छांदसो लङ् । अस्तिसिचोऽपृक्ते । पा॰ ७. ३. ९६. । इतीडागमः । तस्मै कस्मा इत्यादि गतं ॥

॥ अथ नवमी ॥

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चंद्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥९॥

मा । नः । हिंसीत् । जनिता । यः । पृथिव्याः । यः । वा । दिवं । सत्यऽधर्मा । जजान ।
यः । च । अपः । चंद्राः । बृहतीः । जजान । कस्मै । देवाय । हविषा । विधेम ॥९॥

स प्रजापतिर्नोऽस्मान्मा हिंसीन्मा बाधतां यः पृथिव्या भूमेर्जनिता जनयिता स्रष्टा । जनिता मंत्र इति णिलोपो निपात्यते । उदात्तयणो हल्पूर्वादिति पृथिवीशब्दाद्विभक्तेरुदात्तत्वं । यो वा यश्च सत्यधर्मा । सत्यमवितथं धर्म जगतो धारणं यस्य स तादृशः प्रजापतिर्दिवमंतरिक्षोपलक्षितान्सर्वाँल्लोकाञ्जजान । जनयामास । जनी प्रादुर्भावे । णिचि वृद्धौ जनीजृष्क्नसुरंज इति मित्त्वान्मितां ह्रस्व इति ह्रस्वत्वं । ततो लिड्यमंत्र इति निषेधादाम्प्रत्ययाभावे तिपो णलि वृद्धौ लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । यश्च बृहतीर्महतीश्चंद्रा आह्लादिनीरप उदकानि जजान जनयामास । ऊडिदमित्यादिनाप्शब्दादुत्तरस्य शस उदात्तत्वं । तस्मै कस्मा इत्यादि गतं ॥

इळादधाख्य इष्ट्ययने प्राजापत्यस्य हविषः प्रजापत इत्येषानुवाक्या । सूचितं च । प्राजापत्य इळादधः प्रजापते न त्वदेतान्यन्यः । आ॰ २.१४. । इति ॥ केशनखकीटादिभिर्दुष्टानि हवींष्यनयैवाप्सु प्रक्षिपेत् । सूचितं च । अपोऽभ्यवहरेयुः प्रजापते न त्वदेतान्यन्यः । आ॰ ३.१०. । इति ॥ चौलादिकर्मस्वप्येषा होमार्था । सूचितं च । तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च । आ॰ गृ॰ १.४. । इति ॥

॥ सैषा दशमी ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां ॥१०॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां ॥१०॥

हे प्रजापते त्वत् त्वत्तोऽन्यः कश्चिदेतानीदानीं वर्तमानानि विश्वा विश्वानि

सर्वाणि। शेश्छंदसि बहुलमिति शेर्लोपः। जातानि प्रथमविकारभांजि ता तानि सर्वाणि भूतजातानि न परि बभूव। न परिगृह्णाति। न व्याप्नोति। त्वमेवैतानि परिगृह्य स्रष्टुं शक्नोषीति भावः। परिपूर्वो भवतिः परिग्रहार्थः। वयं च यत्कामा यत्फलं कामयमानास्ते तुभ्यं जुहुमो हवींषि प्रयच्छामस्तत्फलं नोऽस्माकमस्तु। भवतु। तथा वयं च रयीणां धनानां पतय ईश्वराः स्याम। भवेम। नामन्यतरस्यामिति नाम उदात्तत्वं॥

॥ इत्यष्टमस्य सप्तमे चतुर्थो वर्गः ॥

वसुं नेत्यष्टर्चं दशमं सूक्तं वसिष्ठपुत्रस्य चित्रमहस आर्षमाग्नेयं। आद्यापंचमी त्रिष्टुभौ शिष्टा जगत्यः। तथा चानुक्रांतं। वसुं नाष्टौ चित्रमहा वासिष्ठ आग्नेयं जागतमाद्यां पंचमीं चर्त इति॥ प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ जागते छंदसीदं सूक्तं। सूत्रितं च। वसुं न चित्रमहसमिति जागतं। आ० ४.१३.। इति॥

॥ तत्र प्रथमा ॥

वसुं न चित्रमहसं गृणीषे वामं शेवमतिथिमद्विषेण्यं।
स रासते शुरुधो विश्वधायसोऽग्निर्होता गृहपतिः सुवीर्यं ॥१॥
वसुं। न। चित्रऽमहसं। गृणीषे। वामं। शेवं। अतिथिं। अद्विषेण्यं।
सः। रासते। शुरुधः। विश्वऽधायसः। अग्निः। होता। गृहऽपतिः। सुऽवीर्यं॥१॥

वसुं न वासकं सूर्यमिव चित्रमहसं चायनीयतेजस्कमग्निं गृणीषे। गृणे स्तौमि। गृ शब्दे क्रैयादिकः। पुरुषव्यत्ययः। प्वादित्वाद्ध्रस्वः। यद्वा चित्रमहसमिति प्रथमार्थे द्वितीया। नेति संप्रत्यर्थे। संप्रति वासकमग्निमहं चित्रमहाः स्तौमि। कीदृशं। वामं वननीयं शेवं सुखकरमतिथिमतिथिवत्पूज्यं। यद्वा हविर्वहनाय सततगामिनं। अद्विषेण्यं द्वेष्यरहितं। द्विषेः कृत्यार्थे तवैकेनिति केन्यप्रत्ययः। नञा बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। सोऽग्निः शुरुधः शोकस्य रोधयित्रीर्निवारयित्रीर्विश्वधायसः क्षीरप्रदानादिना विश्वं सर्वं जगद्धारयंतीर्गाः सुवीर्यं शोभनवीर्यं च रासते। यजमानेभ्यो ददाति। रा दाने। अस्माल्लेट्। लेटोऽडागमः। सिब्बहुलमिति सिप्। व्यत्ययेनात्मनेपदं। विश्वशब्दोपधाद्धातेर्वहिहाधाञ्भ्य इत्यसुन्। णिदित्यनुवृत्तेरातो युक्चिणिति युक्। मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं। कीदृशोऽग्निः। होता देवानामाह्वाता होमनिष्पादको वा गृहपतिर्यजमानगृहाणा-

मीश्वरः। गेहे क इति ग्रहेः कप्रत्ययः। ग्रहिज्येत्यादिना संप्रसारणं। पत्यावैश्वर्ये इति पूर्वपदप्रकृतिस्वरत्वं। शोभनं वीर्यं यस्येति बहुव्रीहौ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं॥

॥ अथ द्वितीया ॥

जुषाणो अग्ने प्रति हर्य मे वचो विश्वानि विद्वान्वयुनानि सुक्रतो।
घृतनिर्णिग्ब्रह्मणे गातुमेरय तव देवा अजनयन्ननु व्रतं ॥२॥

जुषाणः। अग्ने। प्रति। हर्य। मे। वचः। विश्वानि। विद्वान्। वयुनानि। सुक्रतो इति सुऽक्रतो।
घृतऽनिर्निक्। ब्रह्मणे। गातुं। आ। ईरय। तव। देवाः। अजनयन्। अनु। व्रतं॥२॥

हे अग्ने जुषाणः प्रीयमाणस्त्वं मे मम वचो वचनं स्तोत्रं प्रति हर्य। कामयस्व। हर्य गतिकांत्योः। तथा हे सुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा त्वं विश्वानि सर्वाणि वयुनानि। ज्ञाननामैतत्। इह ज्ञातव्ये वर्तते। ज्ञातव्यान्यर्थजातानि विद्वाञ्जानन्वर्तसे। हेतौ शतृप्रत्ययः। यतो जानासि ततो हेतोर्मद्वचनं कामयस्वेत्यर्थः। हे घृतनिर्णिक् घृतेनाज्येन निर्णिज्यमान पुष्यमानशरीर। णिजिर् शौचपोषणयोः। यद्वा निर्णिगिति रूपनाम। दीप्तरूपाग्ने ब्रह्मणे ब्राह्मणाय यजमानाय गातुं गातव्यं ज्ञातव्यं वा यज्ञमेरय। आगमय। तव व्रतं त्वदीयं यज्ञकर्मानु पश्चाद्देवा इंद्रादयः सर्वेऽजनयन्। यजमानाय फलानि जनयंति। अतस्त्वदीयं यज्ञं यजमानाय प्रापयेत्यर्थः। लक्षणेऽनोः कर्मप्रवचनीयत्वं। व्रतमिति कर्मप्रवचनीययुक्त इति द्वितीया। जनेर्ण्यंताच्छांदसो लङ्। जनीजृष्क्नसुरंजो मंताश्चेति मित्त्वान्मितां ह्रस्व इति ह्रस्वत्वं॥

॥ अथ तृतीया ॥

सप्त धामानि परियन्नमर्त्यो दाशद्दाशुषे सुकृते मामहस्व।
सुवीरेण रयिणाग्ने स्वाभुवा यस्त आनट् समिधा तं जुषस्व ॥३॥

सप्त। धामानि। परिऽयन्। अमर्त्यः। दाशत्। दाशुषे। सुऽकृते। ममहस्व।
सुऽवीरेण। रयिणा। अग्ने। सुऽआभुवा। यः। ते। आनट्। संऽइधा। तं। जुषस्व॥३॥

हे अग्ने सप्त सप्तसंख्याकानि धामानि स्थानानि पृथिव्यादिलोकात्मकानि परियन् परितो गच्छन् अमर्त्यो मरणधर्मरहितस्त्वं यो यजमानः पुरोडाशादीनि

हवींषि दाशत् प्रयच्छति तस्मै दाशुषे दत्तवते सुकृते सुष्ठु यागं कृतवते मामहस्व। अपेक्षितं धनं ददस्व। महतिर्दानकर्मा। सुकर्मपापेत्यादिना सुपूर्वात्कृञो भूते काले क्विप्। यश्च यजमानः समिधा समिंधनसाधनेनेध्मेन हे अग्ने ते त्वामानट् प्राप्नोति। नशतिर्गतिकर्मा। अस्माच्छांदसो लङ्। बहुलं छंदसीति शपो लुक्। छंदस्यपि दृश्यत इत्याडागमः। अश्नोतेर्वा व्यत्ययेन श्नम्। तं यजमानं सुवीरेण। शोभनवीराः पुत्रा यस्य। वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं। तादृशेन स्वाभुवा सुष्ठु समंताद्भूष्णुना वर्धिष्णुना रयिणा धनेन दातव्येन सार्धं जुषस्व ॥

॥ अथ चतुर्थी ॥

यज्ञस्य केतुं प्रथमं पुरोहितं हविष्मंत ईळते सप्त वाजिनं।
शृण्वंतमग्निं घृतपृष्ठमुक्षणं पृणंतं देवं पृणते सुवीर्यं ॥४॥
यज्ञस्य। केतुं। प्रथमं। पुरःऽहितं। हविष्मंतः। ईळते। सप्त। वाजिनं।
शृण्वंतं। अग्निं। घृतऽपृष्ठं। उक्षणं। पृणंतं। देवं। पृणते। सुऽवीर्यं ॥४॥

यज्ञस्य यागस्य केतुं प्रज्ञापकं प्रथमं सर्वेषु देवेषु मुख्यं प्रथमस्थानं वा पुरोहितं पुरतो हितकारिणं। यद्वा पुरस्तात्पूर्वस्यां दिश्याहवनीयरूपेण निहितं। पूर्वाधरेत्यादिना पूर्वशब्दादसिः प्रत्ययः। तत्संनियोगेन प्रकृतेः पुरादेशश्च। तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञायां पुरोऽव्ययमिति गतिसंज्ञा। धाञः कर्मणि निष्ठा। दधातेर्हिः। ततः समासे गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। वाजिनं बलवंतमन्नवंतं वा शृण्वंतमस्मत्स्तुतीः श्रोत्रेण जानंतं घृतपृष्ठं दीप्तपृष्ठं दीप्तांगमुक्षणं यागद्वारेण वृष्टेः संभक्तारं यद्वा सेचनसमर्थं युवानं पृणते हविर्भिः प्रीणयित्रे यजमानाय। पृण प्रीणने। तौदादिकः। शतुरनुम इति विभक्तेरुदात्तत्वं। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी। हविर्भिः प्रीणयंतं यजमानं धनैः प्रीणयंतं। यद्वा पृणतिर्दानकर्मा। हवींषि ददते यजमानाय पृणंतं धनानि प्रयच्छंतं। सुवीर्यं शोभनवीर्योपेतं देवं द्योतमानं दानादिगुणयुक्तं वा। एवंगुणविशिष्टमग्निं हविष्मंतो हविर्भिर्युक्ताः सप्त होतृप्रमुखाः वषट्कर्तार ईळते। स्तुवंति। ईड स्तुतौ। आदादिकः ॥

॥ अथ पंचमी ॥

त्वं दूतः प्रथमो वरेण्यः स हूयमानो अमृताय मत्स्व।
त्वां मर्जयन्मरुतो दाशुषो गृहे त्वां स्तोमेभिर्भृगवो वि रुरुचुः ॥५॥

त्वं। दूतः। प्रथमः। वरेण्यः। सः। हूयमानः। अमृताय। मत्स्व।
त्वां। मर्जयन्। मरुतः। दाशुषः। गृहे। त्वां। स्तोमेभिः। भृगवः। वि। रुरुचुः॥५॥

हे अग्ने त्वं दूतो देवानां दूतकर्मणि नियुक्तः प्रथमो मुख्यः प्रथितः प्रख्यातो वा वरेण्यः संभजनीयश्चासि। स त्वममृतायामरणाय तदर्थं नोऽस्माभिर्हूयमानो हविषा तर्प्यमाणो वा सन् मत्स्व। तृप्यस्व। मदी हर्षे। छांदसो विकरणस्य लुक्। अपि च त्वां मध्यमस्थाने वैद्युतरूपेण वर्तमानं मरुतस्तत्रत्या देवगणा मर्जयन्। मार्जयंति। अलंकुर्वंति। तथा दाशुषो हवींषि दत्तवतो यजमानस्य गृहे स्तोमेभिः स्तोमैः स्तोत्रैर्भृगवो भृगुगोत्रा ऋषयस्त्वां वि रुरुचुः। विशेषेण दीपयंति। भृगुशब्दादुत्तरस्य तद्धितस्यात्रिभृगुकुत्सेत्यादिना बहुषु लुक्। रुरुचुः। रुच दीप्तौ। अस्माच्छांदसो लिट्॥

॥ इत्यष्टमस्य सप्तमे पंचमो वर्गः॥

॥ अथ षष्ठी॥

इषं दुहन्त्सुदुघां विश्वधायसं यज्ञप्रिये यजमानाय सुक्रतो।
अग्ने घृतस्नुस्त्रिर्ऋतानि दीद्यद्वर्तिर्यज्ञं परियन्त्सुक्रतूयसे॥६॥
इषं। दुहन्। सुऽदुघां। विश्वऽधायसं। यज्ञऽप्रिये। यजमानाय। सुक्रतो इति सुऽक्रतो।
अग्ने। घृतऽस्नुः। त्रिः। ऋतानि। दीद्यत्। वर्तिः। यज्ञं। परिऽयन्। सुक्रतुऽयसे॥६॥

हे सुक्रतो सुकर्मन् शोभनप्रज्ञ वाग्ने यज्ञप्रिये यज्ञैर्हविर्भिर्देवान्प्रीणयित्रे यजमानाय विश्वधायसं विश्वस्य सर्वस्य धारयित्रीं सुदुघां दोग्धुं सुशक्यां यज्ञरूपिणीं गामिषमिष्यमाणं यागफलरूपं पयो दुहन् क्षारयन् तथा घृतस्नुर्घृतेनाज्येन प्रस्नातः। स्नातेरौणादिकः कुप्रत्ययः। यद्वा घृतो दीप्तः स्नुः सानुः समुच्छ्रितो ज्वालासमूहो यस्य स तथोक्तः। पदादिषु मांस्पृत्स्नूनामुपसंख्यानमिति सानुशब्दस्य स्नुभावः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। ईदृशस्त्वं त्रिस्त्रिवारमावृत्तान्यृतानि सत्यभूतानि पृथिव्यादीनि त्रीणि स्थानानि यद्वा गार्हपत्यादीनि स्थानानि दीद्यद्दीपयन्वर्तिः सर्वं यज्ञगृहं सर्वमनुष्ठीयमानं यागं च परियन् परितो गच्छन् तत्तद्यज्ञगृहं तं तं यज्ञं च प्राप्नुवन् सुक्रतूयसे। शोभनं क्रतुं यज्ञमात्मन इच्छसि। यद्वा शोभनः क्रतुर्यस्यासौ सुक्रतुर्यजमानः। स इवाचरसि। स यथा सम्यगनुष्ठाने प्रवर्तत एवं त्वमपि स्वयमेव यागस्य सम्यग्निष्पत्त्यर्थं प्रवर्तस इत्यर्थः॥

॥ अथ सप्तमी ॥

त्वामिदस्या उषसो व्युष्टिषु दूतं कृण्वाना अयजंत मानुषाः ।
त्वां देवा महयाय्याय वावृधुराज्यमग्ने निमृजंतो अध्वरे ॥ ७ ॥

त्वां । इत् । अस्याः । उषसः । विऽउष्टिषु । दूतं । कृण्वानाः । अयजंत । मानुषाः ।
त्वां । देवाः । महयाय्याय । ववृधुः । आज्यं । अग्ने । निऽमृजंतः । अध्वरे ॥ ७ ॥

अस्या इदानीं दृश्यमानाया उषसो व्युष्टिषु विवासनेषु प्रभातेषु सत्सु हे अग्ने त्वामित्त्वामेव देवानां दूतं कृण्वानाः कुर्वाणा मानुषा मनुष्या अयजंत । यजंति । सर्वदेवात्मकं त्वामेव यजंतीत्यर्थः । तथा देवा अपि त्वां महयाय्याय पूजायै । मह पूजायां । अस्मादौणादिको भाव आय्यप्रत्ययः । आत्मनः पूजार्थं वावृधुः । वर्धयंति । किं कुर्वंतः । अध्वरे । ध्वरो हिंसानिमित्तः प्रत्यवायः । तद्रहिते याग आज्यं । उपलक्षणमेतत् । आज्योपलक्षितं सर्वं हविर्निमृजंतः । त्वयि निमार्जयंतः । प्रक्षिपंत इत्यर्थः ॥

॥ अथाष्टमी ॥

नि त्वा वसिष्ठा अह्वंत वाजिनं गृणंतो अग्ने विदथेषु वेधसः ।
रायस्पोषं यजमानेषु धारय यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

नि । त्वा । वसिष्ठाः । अह्वंत । वाजिनं । गृणंतः । अग्ने । विदथेषु । वेधसः ।
रायः । पोषं । यजमानेषु । धारय । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥

हे अग्ने विदथेषु । विदंत्यस्मिन्यष्टव्यान्देवानिति विदथो यज्ञः । तेषु वेधसः कर्मणां विधातारो गृणंतः स्तुवंतो वसिष्ठा वसिष्ठपुत्रा ऋषयो वाजिनमन्नवंतं बलवंतं वा त्वां न्यह्वंत । नितरामाह्वयन् । अस्ताविषुर्वा । ह्वेञो लुङि निसमुपविभ्यो ह्व इत्यात्मनेपदं । आत्मनेपदेष्वन्यतरस्यामिति च्लेरङादेशः । वसिष्ठशब्दाद्विहितस्यापत्यार्थप्रत्ययस्यात्रिभृगुकुत्सेत्यादिना बहुषु लुक् । स त्वं यजमानेष्वस्मासु रायो धनस्य पोषं पुष्टं धारय । अवस्थापय । ऊडिदमित्यादिना रैशब्दात्षष्ठ्या उदात्तत्वं । षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य सत्वं । गतमन्यत् । एकस्मिन्नप्यग्नौ पूजार्थं बहुवचनं ॥

॥ इत्यष्टमस्य सप्तमे षष्ठो वर्गः ॥

अयं वेन इत्यष्टर्चमेकादशं सूक्तं भार्गवस्य वेनस्यार्षं त्रैष्टुभं । वेनो देवता । तथा चानुक्रांतं । अयं वेनो वैन्यमिति ॥ प्रवर्ग्येऽभिष्टव आद्यानुवक्तव्या । सूचितं । स्रक्के

द्रप्सस्यायं वेनश्चोदयत्पृश्निगर्भाः । आ॰ ४.६.। इति ॥ वैश्वदेवशस्त्रेऽप्येषा धाय्या। सूचितं च । तक्षन्नयमयं वेनश्चोदयत्पृश्निगर्भाः । आ॰ ५.१८.। इति ॥

॥ सैषा प्रथमा ॥

अयं वेनश्चोदयत्पृश्निंगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहंति ॥१॥

अयं। वेनः। चोदयत्। पृश्निंऽगर्भाः। ज्योतिःऽजरायुः। रजसः। विऽमाने।
इमं। अपां। संऽगमे। सूर्यस्य। शिशुं। न। विप्राः। मतिऽभिः। रिहंति ॥१॥

वेनः कांत एतत्संज्ञो मध्यस्थानो देवो ज्योतिर्जरायुः। ज्योतिर्द्योतमानो मेघो जरायुः। उदरे गर्भो येन वेष्टितोऽवतिष्ठते तज्जरायु। तदिव वेष्टको यस्य स तथोक्तः। मेघमध्ये गर्भवदवस्थित इत्यर्थः। विमाने। विमीयंते निर्मीयंतेऽस्मिन्नाप इति विमानमंतरिक्षं । रजस उदकस्य निर्मातर्यंतरिक्षे स्थितः सन्नयं वेनः पृश्निगर्भाः । पृश्निरादित्यः। तस्य गर्भभूताः । यद्वा पृश्नयः सप्रोज्ज्वलवर्णाः सूर्यरश्मयः । तेषां गर्भभूता अंतरिक्षस्था अपश्चोदयत्। पृथिवीं प्रति प्रेरयति। अपामुदकानामांतरिक्ष्याणां सूर्यस्य च संगमे संगमनेऽंतरिक्षे स्थितमिमं वेनं विप्रा मेधाविनः स्तोतारो मतिभिः स्तुतिभी रिहंति। रिहतिरर्चतिकर्मा। अर्चंति पूजयंति। स्तुवंतीत्यर्थः। शिशुं न। यथा बालं पुत्रं मातापित्राद्या बांधवाः स्तुतिपदैरुपलालयंति तद्वत् ॥

तस्मिन्नेवाभिष्टवे समुद्रादूर्मिमित्येषा। सूत्र्यते हि। समुद्रादूर्मिमुदियर्ति वेनो द्रप्सः समुद्रमभि यज्जिगाति । आ॰ ४.७.। इति ॥

॥ सैषा द्वितीया ॥

समुद्रादूर्मिमुदियर्ति वेनो नभोजाः पृष्ठं हर्यतस्य दर्शि ।
ऋतस्य सानावधि विष्टपि भ्राट् समानं योनिमभ्यनूषत व्राः ॥२॥

समुद्रात्। ऊर्मिं। उत्। इयर्ति। वेनः। नभःऽजाः। पृष्ठं। हर्यतस्य। दर्शि।
ऋतस्य। सानौ। अधि। विष्टपि। भ्राट्। समानं। योनिं। अभि। अनूषत। व्राः॥२॥

समुद्द्रवंत्यस्मादाप इति समुद्रमंतरिक्षं । तस्मादूर्मिं जलसमूहमयं वेन उदि-

यति। उन्नमयति। अधः पातयतीत्यर्थः। कीदृशः। नभोजाः। नभस्याकाशे - - -।
इमं वेनमभि शब्दायंते। नु स्तुतौ। कुटादिः। छांदसो लुङ्॥

॥ अथ तृतीया ॥

समानं पूर्वीरभि वावशानास्तिष्ठन्वत्सस्य मातरः सनीळाः।
ऋतस्य सानावधि चक्रमाणा रिहंति मध्वो अमृतस्य वाणीः ॥३॥
समानं। पूर्वीः। अभि। वावशानाः। तिष्ठन्। वत्सस्य। मातरः। सऽनीळाः।
ऋतस्य। सानौ। अधि। चक्रमाणाः। रिहंति। मध्वः। अमृतस्य। वाणीः ॥३॥

पूर्वीर्बह्व्यः समानं वेनस्यात्मनश्च साधारणं स्थानं प्राप्याभि वावशाना अभितः शब्दायमानाः। यद्वा तमेव वेनमभिकामयमाना वत्सस्य वत्सस्थानीयस्य वैद्युताग्नेर्मातरो मातृभूताः सनीळाः समाननिलया एवंविधा आंतरिक्ष्या आपस्तिष्ठन्। तिष्ठंति। अपि च। ऋतस्योदकस्य सानावधि सानौ समुच्छ्रितेऽतरिक्षस्थाने चक्रमाणाः प्रवर्तमाना मध्वो मधुरस्यामृतस्योदकस्य वाणीर्वाण्यः शब्दा रिहंति। इमं वेनमर्चंति। अलंकुर्वंतीत्यर्थः॥

॥ अथ चतुर्थी ॥

जानंतो रूपमकृपंत विप्रा मृगस्य घोषं महिषस्य हि ग्मन्।
ऋतेन यंतो अधि सिंधुमस्थुर्विदद्गंधर्वो अमृतानि नाम ॥४॥
जानंतः। रूपं। अकृपंत। विप्राः। मृगस्य। घोषं। महिषस्य। हि। ग्मन्।
ऋतेन। यंतः। अधि। सिंधुं। अस्थुः। विदत्। गंधर्वः। अमृतानि। नाम ॥४॥

विप्रा मेधाविनः स्तोतारोऽस्य वेनस्य रूपं जानंतोऽकृपंत। स्तुवंति। कृपतिः स्तुतिकर्मा। कथमस्य रूपं जानंतीत्यत आह। मृगस्यान्वेषणीयस्य महिषस्य। महन्नामैतत्। महतो वेनस्य घोषं गर्जितलक्षणं मेघस्थं शब्दं हि यस्माद् ग्मन् अभिगच्छंत्यतस्तदीयं रूपं जानंतीत्यर्थः। गमेश्छांदसे लङि बहुलं छंदसीति शपो लुक्। गमहनेत्युपधालोपः। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। अपि च ऋतेन सत्यभूतेन स्तोत्रेण यज्ञेन वा यंतस्तं वेनं गच्छंतः प्राप्नुवंतो जनाः सिंधुं स्यंदनशीलं जलसमूहमध्यस्थुः। अधितिष्ठंति। तेषां स वेनो वृष्टिं करोतीत्यर्थः। तच्च किं कारणमिति चेत् यतोऽयं गंधर्वो गवामुदकानां धर्ता वेनोऽमृतान्यम-

रणहेतुभूतानि नाम। उदकनामैतत्। नमनशीलान्युदकानि विदत्। वेद जानाति। तस्य वशे वर्तंत इत्यर्थः। अतस्तद्भक्तानां वृष्टिः सुलभा ॥

॥ अथ पंचमी ॥

अप्सरा जारमुपसिष्मियाणा योषा बिभर्ति परमे व्योमन्।
चरत्प्रियस्य योनिषु प्रियः सन्त्सीदत्पक्षे हिरण्यये स वेनः ॥५॥

अप्सराः। जारं। उपऽसिष्मियाणा। योषा। बिभर्ति। परमे। विऽओमन्।
चरत्। प्रियस्य। योनिषु। प्रियः। सन्। सीदत्। पक्षे। हिरण्यये। सः। वेनः ॥५॥

अप्सरा अपां सारयित्र्यप्सु क्रीडार्थं सरंती वोपसिष्मियाणा कांतसमीपमुपगत्येषद्धसंती। स्मिङ् ईषद्धसने। छांदसो लिट्। तस्य लिटः कानज्वेति कानच्। ईदृशी योषा स्त्री विद्युद्रूपा जारमपां जारयितारं। यद्वा जार उपपतिः। स इव प्रियमिमं वेनं परम उत्कृष्टे व्योमन् व्योमन्यंतरिक्षे बिभर्ति। पोषयति। धारयति वा। यथा काचिद्रूपवती योषिज्जारमुपगम्येषद्धसंती तं निर्जने स्थले पुष्णाति तद्वदनेन वेनेन विद्युद्रमत इत्यर्थः। प्रियस्यास्य वेनस्य योनिषु स्थानेषु चरत्। विद्युद्रूपा योषिच्चरति गच्छति। अभिसारिकावृत्त्या स्वयमेव गच्छति। स च वेनः प्रियोऽस्या अनुकूलतमः सन् हिरण्यये हिरण्मये हिरण्मयवद्भास्वरे हितरमणीयरूपे वा पक्ष आत्मनः पक्षभूते मेघे सीदत्। सीदति। तया सहोपविशति ॥

॥ इत्यष्टमस्य सप्तमे सप्तमो वर्गः ॥

अभिष्टवे नाके सुपर्णमित्येषा। सूचितं च। नाके सुपर्णमुप यत्पतंतमिति समाप्य प्रणवेनोपविशेत्। आ॰४.७.। इति ॥

॥ सैषा षष्ठी ॥

नाके सुपर्णमुप यत्पतंतं हृदा वेनंतो अभ्यचक्षत त्वा।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युं ॥६॥

नाके। सुऽपर्णं। उप। यत्। पतंतं। हृदा। वेनंतः। अभि। अचक्षत। त्वा।
हिरण्यऽपक्षं। वरुणस्य। दूतं। यमस्य। योनौ। शकुनं। भुरण्युं ॥६॥

हे वेन त्वा त्वां हृदा हृदयेन मनसा वेनंतः कामयमानाः स्तोतारो नाकेऽंतरिक्षे यद्यदाभ्यचक्षताभिपश्यंति तदानीं त्वमुपागच्छसीति शेषः। कथंभूतं। सुपर्णं

शोभनपतनं पतंतमंतरिक्षे गच्छंतं हिरण्यपक्षं हिरण्मयाभ्यां पक्षाभ्यामुपेतं वरुणस्य जलाभिमानिनो देवस्य दूतं चारं यमस्य नियामकस्य वैद्युताग्नेर्योनौ स्थानेऽंतरिक्षे शकुनं पक्षिरूपेण वर्तमानं भुरण्युं भर्तारं। यद्वा वृष्टिप्रदानादिना सर्वस्य जगतः पोषकं। भुरण धारणपोषणयोः। कंड्वादिः। अस्मादौणादिक उप्रत्ययः ॥

॥ अथ सप्तमी ॥

ऊर्ध्वो गंधर्वो अधि नाके अस्थात्प्रत्यङ् चित्रा बिभ्रदस्यायुधानि।
वसानो अत्कं सुरभिं दृशे कं स्व१र्ण नाम जनत प्रियाणि ॥७॥
ऊर्ध्वः। गंधर्वः। अधि। नाके। अस्थात्। प्रत्यङ्। चित्रा। बिभ्रत्। अस्य। आयुधानि।
वसानः। अत्कं। सुरभिं। दृशे। कं। स्वः। न। नाम। जनत। प्रियाणि ॥७॥

ऊर्ध्व उपरिदेशे वर्तमानो गंधर्वो गवामुदकानां धर्ता। गवि गं धृञो व इति गोशब्दोपपदाद्धृञ् धारण इत्यस्माद्वप्रत्यय उपपदस्य गंभावश्च। ईदृशो वेनः प्रत्यङ् अस्मत्प्रत्यंचनोऽभिमुखः सन् नाकेऽध्यंतरिक्षेऽस्थात्। तिष्ठति। किं कुर्वन्। अस्यात्मनः स्वभूतानि चित्रा चित्राणि चायनीयान्याश्चर्यभूतानि वायुधानि बिभ्रद्धारयन्। बिभर्तेः शतरि भृञामिदित्यभ्यासस्येत्वं। नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः। अभ्यस्तानामादिरित्याद्युदात्तत्वं। तथा सुरभिं शोभनमत्कमात्मीयं व्याप्तं रूपं वसानः सर्वत्राच्छादयन्। किमर्थं। दृशे दर्शनार्थं। दृशे विख्ये चेति केप्रत्ययांतो निपात्यते। कमिति पूरणः। तत्र दृष्टांतः। स्वर्ण। स्वः शोभनारण आदित्यः। स यथात्मीयं रूपं दर्शनाय सर्वत्राच्छादयति तद्वत्। तदनंतरं नाम नामानि नमनशीलान्युदकानि प्रियाणि सर्वेषामनुकूलानि जनत। जनयति। वृष्टिमुत्पादयतीत्यर्थः ॥

प्रवर्ग्येऽभिष्टवे द्रप्सः समुद्रमित्येषा। सूचितं च। द्रप्सः समुद्रमभि यज्जिगाति सखे सखायमभ्या ववृत्स्व। आ॰ ४. ७.। इति ॥

॥ सैषाष्टमी ॥

द्रप्सः समुद्रमभि यज्जिगाति पश्यन्गृध्रस्य चक्षसा विधर्मन्।
भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥८॥
द्रप्सः। समुद्रं। अभि। यत्। जिगाति। पश्यन्। गृध्रस्य। चक्षसा। विऽधर्मन्।
भानुः। शुक्रेण। शोचिषा। चकानः। तृतीये। चक्रे। रजसि। प्रियाणि ॥८॥

विधर्मन्विधर्मणि विधारकेऽंतरिक्षे स्थितो द्रप्सो द्रवणशीलः । यद्वा द्रप्सा उदकबिंदवः । तद्वान् । अर्शआदित्वादच् । गृध्रस्य गृधो रसानभिकांक्षतः सूर्यस्य चक्षसा तेजसा पश्यन् प्रकाशमानो वेनो यद्यदा समुद्रं समुंदनशीलं मेघमभि जिगात्यभिगच्छति तदानीं भानुः सूर्यः शुक्रेण शुभ्रेण शोचिषा तेजसा तृतीये रजसि लोके चकानो दीप्यमानः प्रियाणि सर्वेषामभीष्टान्युदकानि चक्रे। करोति॥

॥ इत्यष्टमस्य सप्तमेऽष्टमो वर्गः ॥

इमं नो अग्न इति नवर्चं द्वादशं सूक्तं । द्वितीयाद्याभिस्तिसृभिरग्निर्ऋषिर्भूत्वा स्वात्मानं देवतारूपिणमस्तौत् । अतस्तासां स एवर्षिर्देवता च । शिष्टाभिरग्निवरुणसोमा अस्तुवन् । अतस्तासां षण्णां त ऋषयः । आद्याग्नेयी । नवमींद्रदेवत्या । शिष्टासु चतसृषु लिंगोक्तदेवता । सप्तमी जगती शिष्टास्त्रिष्टुभः । तथा चानुक्रांतं । इमं नो नवेंद्र्युत्तमा निहवोऽग्निवरुणसोमानामाद्याग्नेयी तिस्रश्चाग्नेरात्मस्तवः शिष्टा यथानिपातं सप्तमी जगतीति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

इमं नो अग्न उप यज्ञमेहि पंचयामं त्रिवृतं सप्ततंतुं ।
असो हव्यवाळुत नः पुरोगा ज्योगेव दीर्घं तम आशयिष्ठाः ॥१॥
इमं । नः । अग्ने । उप । यज्ञं । आ । इहि । पंचऽयामं । त्रिऽवृतं । सप्तऽतंतुं ।
असः । हव्यऽवाट् । उत । नः । पुरःऽगाः । ज्योक् । एव । दीर्घं । तमः । आ । अशयिष्ठाः ॥१॥

भ्रातृषु हविर्वहनेषु मृतेषु मरणभीत्या कृतपलायनं गुहायां निगूढमग्निमग्न्याद्याः सूक्तद्रष्टार ऋषयोऽनयाह्वयन् । हे अग्ने नोऽस्माकमिमं यज्ञमुपैहि । उपागच्छ प्राप्नुहि । मा पलायिष्ठाः । कीदृशं । पंचयामं । यजमानपंचमैर्ऋत्विग्भिर्नियमितं । यद्वा । धानाकरंभादिभिः पंचभिर्हविर्भिः पंचभिः प्रयाजैर्वा प्राप्तं । त्रिवृतं । पाकयज्ञहविर्यज्ञसोमयज्ञभेदेन सवनत्रयात्मना वा त्रिगुणं । सप्ततंतुं । सप्त तंतवस्तनितारः कर्मणां विस्तारयितारो होत्राद्याः सप्त वषट्कर्तारो यस्य । यद्वा । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोळशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तधा विस्तीर्यमाणं । ईदृशं यज्ञमुपगत्य चानंतरं नोऽस्माकं हव्यवाड्ढव्यानां हविषां वोढासः । भव । अस्तेर्लेट्यडागमः । उतापि च नोऽस्माकं पुरोगाः पुरतो गंता भव । जनसनखनक्रमगमो विट् । विड्वनोरनुनासिकस्यादित्यात्वं । ज्योक् चिरकालमे-

वास्मात्परित्यज्य दीर्घं तमो महदंधकारं गुहायामाशयिष्ठाः। आस्थाय शयनमकार्षीः। इत ऊर्ध्वं तस्मात्स्थानादस्मानागच्छेत्यर्थः ॥

॥ अथ द्वितीया ॥

अदे॑वाद्दे॒वः प्र॒चता॒ गुहा॒ यन्प्र॒पश्य॑मानो अमृत॒त्वमे॑मि ।
शि॒वं यत्सं॒तमशि॑वो ज॒हामि॒ स्वात्स॒ख्याद॒रणीं॒ नाभि॑मेमि ॥२॥

अदे॑वात्। दे॒वः। प्र॒ऽचता॑। गुहा॑। यन्। प्र॒ऽपश्य॑मानः। अ॒मृ॒त॒ऽत्वं। ए॒मि॒।
शि॒वं। यत्। सं॒तं। अशि॑वः। ज॒हा॑मि। स्वात्। स॒ख्यात्। अ॒रणीं॑। नाभिं॑। ए॒मि॒ ॥२॥

अदेवाददेवनशीलाद्गुहा गुहायां वर्तमानात्। सुपां सुलुगिति सप्तम्या लुक्। प्रचता देवानां प्रयाचनेन हेतुना यन् निर्गच्छन् देवो देवनशीलोऽहं प्रपश्यमानः देवैर्मदर्थं कल्पितं प्रयाजानुयाजादिलक्षणं हविर्भागं प्रपश्यमानो निरीक्षमाणः सन् अमृतत्वमेमि। मरणधर्मराहित्यं देवत्वं प्राप्नोमि। दृशेर्व्यत्ययेनात्मनेपदं। हविर्वहनाद्भीतः पलायितोऽबादिषु स्थानेषु निगूढः पुनर्देवैर्हविर्वहनाय प्रार्थ्यमानस्तैर्दत्तेन हविषाहं देवत्वं प्राप्तवानस्मीत्यर्थः। यद्यप्यहं गुहातो निर्गत्य प्रकाशमानः सन् शोभनं यज्ञं निवर्तयामि तथापि शिवं शोभनं संतं भवंतं यज्ञमशिवोऽशोभनरूपोऽप्रकाशमानः सन् यद्यस्मिन्समाप्तिकाले जहामि परित्यजामि तदानीं नाभिं नहनशीलां बंधनशीलामरणीमश्वत्थमेव स्वात्सख्यादात्मीयात्सखित्वाच्चिरकालमश्वरूपोऽहं तत्र न्यवात्समिति स्नेहवशादेमि। प्राप्नोमि ॥

॥ अथ तृतीया ॥

प॒श्यन्न॒न्यस्या॒ अति॑थिं व॒याया॑ ऋ॒तस्य॒ धाम॒ वि मि॑मे पु॒रूणि॑ ।
शंसा॑मि पि॒त्रे असु॑राय॒ शेव॑मयज्ञि॒याद्य॒ज्ञियं॑ भा॒गमे॑मि ॥३॥

प॒श्यन्। अ॒न्यस्याः॑। अति॑थिं। व॒याया॑ः। ऋ॒तस्य॑। धाम॑। वि। मि॒मे॒। पु॒रूणि॑।
शंसा॑मि। पि॒त्रे। असु॑राय। शेवं॑। अ॒य॒ज्ञि॒यात्। य॒ज्ञियं॑। भा॒गं। ए॒मि॒ ॥३॥

मम स्थानभूता या पृथिवी ततोऽन्यस्या वयाया गंतव्याया दिवः संबंधिनमतिथिं सततगामिनं सूर्यं पश्यञ्जानन् सूर्यस्य गतिमनुसृत्य वसंतादिकाल ऋतस्य यज्ञस्य धाम धामानि शरीराणि पुरूणि बहूनि वि मिमे। निर्मिमे। निष्पादयामि। ततः पित्रे पितृभूताय द्युलोकवर्तिने देवजनायासुराय शत्रुक्षेपणकुशलाय

शेवं सुखमुद्दिश्य होता भूत्वाहमुक्थानि शंसामि। यत एवं तस्मात्कारणादयज्ञि-याद्यज्ञानर्हात्प्रदेशान्निर्गत्य यज्ञियं यज्ञार्हं वेदिलक्षणं भूभागं हविर्लक्षणं वैमि। प्राप्नोमि। यज्ञशब्दादर्हार्थे यज्ञर्त्विग्भ्यां घखञाविति घप्रत्ययः ॥

॥ अथ चतुर्थी ॥

बह्वीः समा अकरमंतरस्मिन्निंद्रं वृणानः पितरं जहामि।
अग्निः सोमो वरुणस्ते च्यवंते पर्यावर्द्राष्ट्रं तदवाम्यायन् ॥४॥

बह्वीः। समाः। अकरं। अंतः। अस्मिन्। इंद्रं। वृणानः। पितरं। जहामि।
अग्निः। सोमः। वरुणः। ते। च्यवंते। परिऽआवर्त्। राष्ट्रं। तत्। अवामि। आऽयन् ॥४॥

अस्मिन्वेदिलक्षणस्थाने बह्वीः समाः संवत्सरानकरं। अकार्षं। चिरकालं न्यवात्सं। तच्चेंद्रं वृणानः संभजमानः पितरमुत्पादकमरण्यात्मकं जहामि। परि-त्यजामि। यदा त्वहं देवेभ्यो निर्गत्य गुहायां निगूढस्तदा ते देवा अग्निः सोमो वरुणश्च च्यवंते। राष्ट्रात्प्रच्युता अभवन्। एकस्याप्यग्नेर्हविर्वोढृत्वरूपेण देवतात्मना च पृथक्त्वात्परोक्षनिर्देशः। आयन् पुनरागच्छन्नहं यद्राष्ट्रमसुरैरपहृतं पर्यावर्त् पर्या-वर्तमानं मदभिमुखं पुनरावर्तमानं तद्राष्ट्रं राज्यं यज्ञभूमिमवामि। असुरेभ्यो रक्षामि। पर्यावर्त्। उपसृष्टाद्वृतेरन्येभ्योऽपि दृश्यंत इति विच्। रात्सस्येति नि-यमात्संयोगांतस्येति लोपाभावः ॥

॥ अथ पंचमी ॥

निर्माया उ त्ये असुरा अभूवन्त्वं च मा वरुण कामयासे।
ऋतेन राजन्ननृतं विविंचन्मम राष्ट्रस्याधिपत्यमेहि ॥५॥

निःऽमायाः। ऊं इति। त्ये। असुराः। अभूवन्। त्वं। च। मा। वरुण। कामयासे।
ऋतेन। राजन्। अनृतं। विऽविंचन्। मम। राष्ट्रस्य। अधिऽपत्यं। आ। इहि ॥५॥

त्ये तेऽसुरा मय्यग्नावागते सति निर्माया मायारहिता अभूवन्। आसुर्यः सर्वा माया मया दग्धा आसन्नित्यर्थः। हे वरुण त्वं च। अयं चशब्दश्चेदर्थे वर्तमान-श्चखिति निपातांतरं। अनेन युक्तत्वात्कामयास इति तिङ्विभक्तेर्निपातैर्यद्यदिहंतेति निघातप्रतिषेधः। हे वरुण त्वं चेन्मा कामयासे मां कामयेथास्तर्हि हे राजन् ईश्वर ऋतेन सत्येनास्मदीयेन कर्मणानृतमसत्यभूतं मायामयमासुरं चरित्रं विविंचन्

पृथक्कुर्वन् अपसारयन् मम राष्ट्रस्य मया यत्साधितं राज्यं तस्याधिपत्यमधिपतित्वमीश्वरत्वमेहि। प्राप्नुहि॥

॥ इत्यष्टमस्य सप्तमे नवमो वर्गः॥

॥ अथ षष्ठी ॥

इदं स्वरिदमिदास वाममयं प्रकाश उर्वन्तरिक्षं।
हनाव वृत्रं निरेहि सोम हविष्ट्वा संतं हविषा यजाम॥६॥
इदं। स्वः। इदं। इत्। आस। वामं। अयं। प्रऽकाशः। उरु। अंतरिक्षं।
हनाव। वृत्रं। निःऽएहि। सोम। हविः। त्वा। संतं। हविषा। यजाम॥६॥

इयमृगग्नेर्वरुणस्य वा वाक्यं। हे सोम इदं स्वरयं द्युलोकः। यद्वायं शोभनारणः सूर्य इदमिदिदमेव वामं वननीयमास। बभूव। इदंशब्देन प्रकृतं स्वः परामृश्यते। अयं च प्रकाशः प्रकाशस्याधारभूत उरु विस्तीर्णमिदमंतरिक्षं हे सोमैतत्सर्वं पश्य। अत एवास्मिन्समय आवां वृत्रं हनाव। हिनसाव। तदर्थं निरेहि। निष्क्रम्यागच्छ। हविः संतं लतारूपेण हविर्भवंतं देवतात्मानं त्वां हविषा चरुपुरोडाशादिना वयं यजाम॥

॥ अथ सप्तमी ॥

कविः कवित्वा दिवि रूपमासजदप्रभूती वरुणो निरपः सृजत्।
क्षेमं कृण्वाना जनयो न सिंधवस्ता अस्य वर्णं शुचयो भरिभ्रति॥७॥
कविः। कविऽत्वा। दिवि। रूपं। आ। असजत्। अप्रऽभूती। वरुणः। निः। अपः। सृजत्।
क्षेमं। कृण्वानाः। जनयः। न। सिंधवः। ताः। अस्य। वर्णं। शुचयः। भरिभ्रति॥७॥

कविः क्रांतदर्शी मित्रः कवित्वा कवित्वेन। सुपां सुलुगिति तृतीयाया आकारः। क्रांतदर्शनेन दिवि द्युलोके रूपमात्मीयं तेज आसजत्। आसक्तं करोति। षंज संगे। अस्माल्लङि शपि दंशसंजस्वंजां शपीति नलोपः। अप्रभूत्यप्रभूत्या। सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घः। अप्रभूष्णुनाल्पेनैव यत्नेन वरुणो मेघादपो निः सृजत्। निरगमयत्। वरुणेन विसृष्टास्ता आपः सिंधवः स्यंदनशीला नद्यो भूत्वा जनयो न जाया इव यथा जायाः पत्युः क्षेमकारिण्यो भवंति तथा क्षेमं कुर्वाणा जगतो रक्षणं कुर्वाणाः शुचयः शुद्धा दीप्यमाना वास्य वरुणस्य वर्णं

शुक्रं भास्वररूपं भरिभ्रति । भृशं बिभ्रति धारयंति । दाधर्त्यादिसूत्रे भरिभ्रदिति निपातनाद्बिभर्तेर्यङ्लुक्यभ्यासस्य जश्त्वाभावः ॥

॥ अथाष्टमी ॥

ता अस्य ज्येष्ठमिंद्रियं सचंते ता ईमा क्षेति स्वधया मदंतीः ।
ता ईं विशो न राजानं वृणाना बीभत्सुवो अप वृत्रादतिष्ठन् ॥८॥
ताः । अस्य । ज्येष्ठं । इंद्रियं । सचंते । ताः । ईं । आ । क्षेति । स्वधया । मदंतीः ।
ताः । ईं । विशः । न । राजानं । वृणानाः । बीभत्सुवः । अप । वृत्रात् । अतिष्ठन् ॥८॥

ताः पूर्वोक्ता वृष्टा आपोऽस्य वरुणस्य ज्येष्ठं वृद्धतममिंद्रियं वीर्यं सचंते । समवयंति । संभजंते । धारयंतीत्यर्थः । आपो वरुणस्य पत्न्य आसन्निति श्रुतेः । स्वधया । अन्ननामैतत् । हविर्लक्षणेनान्नेन मदंतीर्माद्यंतीः । यद्वा व्रीह्याद्युत्पादनद्वारेण हविषा मादयंतीस्ता अप ईमयं वरुण आ क्षेति । अभिगच्छति । क्षि निवासगत्योः । छांदसो विकरणस्य लुक् । ताश्चेमेनं वरुणं विशो न विशः प्रजा यथा राजानं स्वामिनं संभजंते तथा वृणानाः संभजमाना बीभत्सुवो भयेन कंपमानाः । यद्वा बद्धा वृत्रेणावृताः सत्यस्तस्मिन्हते सति तस्माद्वृत्रादपातिष्ठन् । अपक्रम्य तत्र तत्रावतिष्ठंते । बध बंधन इत्यस्माद्धातोर्मान्बधदान्शान्भ्यः । पा॰ ३. १.६. । इति सन् अभ्यासस्य च दीर्घः । सनाशंसभिक्ष उरित्युप्रत्ययः । जसि छांदस उवङादेशः ॥

॥ अथ नवमी ॥

बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरंतं ।
अनुष्टुभमनु चर्चूर्यमाणमिंद्रं नि चिक्युः कवयो मनीषा ॥९॥
बीभत्सूनां । सऽयुजं । हंसं । आहुः । अपां । दिव्यानां । सख्ये । चरंतं ।
अनुऽस्तुभं । अनु । चर्चूर्यमाणं । इंद्रं । नि । चिक्युः । कवयः । मनीषा ॥९॥

बीभत्सूनां कंपमानावयवानां यद्वा मेघेन बद्धानां । हंति गच्छतीति हंसः सूर्यः । तं सयुजं सखायमाहुः । ब्रह्मवादिनः कथयंति । एतदेवाह । दिव्यानां दिवि भवानामांतरिक्षाणामपां सख्ये सखित्वे चरंतं वर्तमानं । अनुष्टुभमनुष्टोभनीयं स्तोतव्यं । यद्वानुष्टुप्शब्देन तत्संबद्धो यागः स्तुतिर्वा लक्ष्यते । अनुष्टुप्संबद्धं यागमनुष्टुप्छंदसा युक्तं स्तुतिविशेषं वानुलक्ष्य चर्चूर्यमाणं पुनःपुनश्चरंतं गच्छंतं ।

चरतेर्यङ्लुगन्तस्यातः । पा॰ ७.४.८८. । इत्यभ्यासादुत्तरस्याकारस्योत्वं । चरफलोश्च । पा॰ ७.४.८७. । इति नुकि प्राप्ते व्यत्ययेनाभ्यासस्य रुगागमः । एवंगुणविशिष्टमिंद्रं कवयः क्रांतदर्शिन ऋषयो मनीषा मनीषया स्तुत्या नि चिक्युः । पूजयंति । यद्वा मनीषा बुद्ध्या नि चिक्युः । जानंति । मनीषाशब्दात्तृतीयायाः सुपां सुलुगिति लुक् । चायृ पूजानिशामनयोरित्यस्माच्छांदसे लिटि चायः कीति प्रकृतेः कीभावः । एरनेकाच इति यण् ॥

॥ इत्यष्टमस्य सप्तमे दशमो वर्गः ॥

अहमित्यष्टर्चं त्रयोदशं सूक्तं । अंभृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत् । अतः सर्षिः । सच्चित्सुखात्मकः सर्वगतः परमात्मा देवता । तेन ह्येषा तादात्म्यमनुभवंती सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चाहमेव सर्वं भवामीति स्वात्मानं स्तौति । द्वितीया जगती शिष्टाः सप्त त्रिष्टुभः । तथा चानुक्रांतं । अहमष्टौ वागांभृणी तुष्टावात्मानं द्वितीया जगतीति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिंद्राग्नी अहमश्विनोभा ॥ १ ॥

अहं । रुद्रेभिः । वसुऽभिः । चरामि । अहं । आदित्यैः । उत । विश्वऽदेवैः ।
अहं । मित्रावरुणा । उभा । बिभर्मि । अहं । इंद्राग्नी इति । अहं । अश्विना । उभा ॥ १ ॥

अहं सूक्तस्य द्रष्ट्री वागांभृणी यद्ब्रह्म जगत्कारणं तद्रूपा भवंती रुद्रेभी रुद्रैरेकादशभिः । इत्थंभावे तृतीया । तदात्मना चरामि । एवं वसुभिरित्यादौ तत्तदात्मना चरामीति योज्यं । तथा मित्रावरुणा मित्रं च वरुणं च । सुपां सुलुगिति द्वितीयाया आकारः । उभोभावहमेव ब्रह्मीभूता बिभर्मि । धारयामि । इंद्राग्नी अप्यहमेव धारयामि । उभोभावश्विनाश्विनावप्यहमेव धारयामि । मयि हि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तं सद्दृश्यते । माया च जगदाकारेण विवर्तते । तादृश्या मायाया आधारत्वेनासंगस्यापि ब्रह्मण उक्तस्य सर्वस्योत्पत्तिः ॥

॥ अथ द्वितीया ॥

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगं ।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ॥ २ ॥

अहं। सोमं। आहनसं। बिभर्मि। अहं। त्वष्टारं। उत। पूषणं। भगं।
अहं। दधामि। द्रविणं। हविष्मते। सुप्रऽअव्ये। यजमानाय। सुन्वते ॥२॥

आहनसमाहंतव्यमभिषोतव्यं सोमं। यद्वा शत्रूणामाहंतारं दिवि वर्तमानं देवतात्मानं सोममहमेव बिभर्मि। तथा त्वष्टारमुतापि च पूषणं भगं चाहमेव बिभर्मि। तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविर्देवानां प्रापयित्रे तर्पयित्रे। अवतेस्तर्पणार्थादवितॄस्तृतंत्रिभ्य ईरितीकारप्रत्ययः। चतुर्थ्येकवचने यण्युदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति सुपः स्वरितत्वं। सुन्वते सोमाभिषवं कुर्वते। शतुरनुम इति चतुर्थ्या उदात्तत्वं। ईदृशाय यजमानाय द्रविणं धनं यागफलरूपमहमेव धारयामि। एतच्च ब्रह्मणः फलदातृत्वं फलमत उपपत्तेः।३.२.३८.। इत्यधिकरणे भगवता भाष्यकारेण समर्थितं ॥

॥ अथ तृतीया ॥

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानां।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयंतीं ॥३॥
अहं। राष्ट्री। संऽगमनी। वसूनां। चिकितुषी। प्रथमा। यज्ञियानां।
तां। मा। देवाः। वि। अदधुः। पुरुऽत्रा। भूरिऽस्थात्रां। भूरि। आऽवेशयंतीं ॥३॥

अहं राष्ट्री। ईश्वरनामैतत्। सर्वस्य जगत ईश्वरी। तथा वसूनां धनानां संगमनी संगमयित्री। उपासकानां प्रापयित्री। चिकितुषी यत्साक्षात्कर्तव्यं परं ब्रह्म तज्ज्ञातवती। स्वात्मतया साक्षात्कृतवती। अत एव यज्ञियानां यज्ञार्हाणां प्रथमा मुख्या। यैवंगुणविशिष्टाहं तां मां भूरिस्थात्रां बहुभावेन प्रपंचात्मनावतिष्ठमानां भूरि भूरीणि बहूनि भूतजातान्यावेशयंतीं जीवभावेनात्मानं प्रवेशयंतीमीदृशीं मां पुरुत्रा बहुषु देशेषु व्यदधुः। देवा विदधति। कुर्वंति। उक्तप्रकारेण वैश्वरूप्येणावस्थानात्। यद्यत्कुर्वंति तत्सर्वं मामेव कुर्वंतीत्यर्थः ॥

॥ अथ चतुर्थी ॥

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तं।
अमंतवो मां त उप क्षियंति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥४॥

मया । सः । अन्नं । अत्ति । यः । विऽपश्यति । यः । प्राणिति । यः । ईं । शृणोति । उक्तं ।
अमंतवः । मां । ते । उप । क्षियंति । श्रुधि । श्रुत । श्रद्धिऽवं । ते । वदामि ॥४॥

योऽन्नमत्ति स भोक्तृशक्तिरूपया मयैवान्नमत्ति । यश्च विपश्यति । आलोकयतीत्यर्थः । यश्च प्राणिति श्वासोच्छ्वासादिव्यापारं करोति सोऽपि मयैव । यश्चोक्तं शृणोति । श्रु श्रवणे । श्रुवः शृ चेति श्रुधातोः शृभावः । य ईदृशीमंतर्यामिरूपेण स्थितां मां न जानंति तेऽमंतवोऽमन्यमाना अजानंत उप क्षियंति । उपक्षीणाः संसारेण हीना भवंति । मनेरौणादिकस्तुप्रत्ययः । नञ्समासे व्यत्ययेनांतोदात्तत्वं । यद्वा भावे तुप्रत्ययः । ततो बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । माममंतवो मद्विषयज्ञानरहिता इत्यर्थः । हे श्रुत विश्रुत सखे श्रुधि । मया वक्ष्यमाणं शृणु । छांदसो विकरणस्य लुक् । श्रुशृणुपृकृवृभ्य इति हेर्धिभावः । किं तच्छ्रोतव्यं । श्रद्धिवं । श्रद्धिः श्रद्धा । तया युक्तं । श्रद्धायत्नेन लभ्यमित्यर्थः । श्रदंतरोरुपसर्गवद्वृत्तिरिष्यते । पा० १. ४. ५७. २. । इति श्रच्छब्दस्योपसर्गवद्वर्तमानत्वादुपसर्गे घोः किरिति किप्रत्ययः । मत्वर्थीयो वः । ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदामि । उपदिशामि ॥

॥ अथ पंचमी ॥

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधां ॥५॥
अहं । एव । स्वयं । इदं । वदामि । जुष्टं । देवेभिः । उत । मानुषेभिः ।
यं । कामये । तंऽतं । उग्रं । कृणोमि । तं । ब्रह्माणं । तं । ऋषिं । तं । सुऽमेधां ॥५॥

अहं स्वयमेवेदं वस्तु ब्रह्मात्मकं वदामि । उपदिशामि । देवेभिर्देवैरिंद्रादिभिरपि जुष्टं सेवितं । उतापि च मानुषेभिर्मनुष्यैरपि जुष्टं । ईदृग्वस्त्वात्मिकाहं कामये यं पुरुषं रक्षितुमहं वांछामि तं तं पुरुषमुग्रं कृणोमि । सर्वेभ्योऽधिकं करोमि । तमेव ब्रह्माणं स्रष्टारं करोमि । तमेवर्षिमतींद्रियार्थदर्शिनं करोमि । तमेव सुमेधां शोभनप्रज्ञं च करोमि ॥

॥ इत्यष्टमस्य सप्तम एकादशो वर्गः ॥

॥ अथ षष्ठी ॥

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हंतवा उ ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥६॥
अहं । रुद्राय । धनुः । आ । तनोमि । ब्रह्मऽद्विषे । शरवे । हंतवै । ऊं इति ।
अहं । जनाय । सऽमदं । कृणोमि । अहं । द्यावापृथिवी इति । आ । विवेश ॥६॥

पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य । षष्ठ्यर्थे चतुर्थी । महादेवस्य धनुश्चापमहमा तनोमि । ज्ययाततं करोमि । किमर्थं । ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरुं हिंसकं त्रिपुरनिवासिनमसुरं हंतवै हंतुं हिंसितुं । हंतेस्तुमर्थे सेसेनिति तवैप्रत्ययः । अंतश्च तवै युगपदित्याद्यंतयोर्युगपदुदात्तत्वं । शॄ हिंसायामित्यस्माच्छृस्वृस्निहीत्यादिनोप्रत्ययः । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी । उशब्दः पूरकः । अहमेव समदं । समानं माद्यंत्यस्मिन्निति समत्संग्रामः । स्तोतृजनार्थं शत्रुभिः सह संग्राममहमेव कृणोमि । करोमि । तथा द्यावापृथिवी दिवं च पृथिवीं चांतर्यामितयाहमेवा विवेश । प्रविष्टवती ॥

॥ अथ सप्तमी ॥

अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वं१तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥७॥
अहं । सुवे । पितरं । अस्य । मूर्धन् । मम । योनिः । अप्ऽसु । अंतरिति । समुद्रे ।
ततः । वि । तिष्ठे । भुवना । अनु । विश्वा । उत । अमूं । द्यां । वर्ष्मणा । उप । स्पृशामि ॥७॥

द्यौः पितेति श्रुतेः पिता द्यौः । पितरं दिवमहं सुवे । प्रसुवे जनयामि । आत्मन आकाशः संभूत इति श्रुतेः । कुत्रेति तदाह । अस्य परमात्मनो मूर्धन् मूर्धन्युपरि । कारणभूते तस्मिन्हि वियदादिकार्यजातं सर्वं वर्तते तंतुषु पट इव । मम च योनिः कारणं समुद्रे । समुद्द्रवंत्यस्माद्भूतजातानीति समुद्रः परमात्मा । तस्मिन् अप्सु व्यापनशीलासु धीवृत्तिष्वंतर्मध्ये यद्ब्रह्म चैतन्यं तन्मम कारणमित्यर्थः । यत ईदृग्भूताहमस्मि ततो हेतोर्विश्वा विश्वानि सर्वाणि भुवनानि भूतजातान्यनु प्रविश्य वि तिष्ठे । विविधं व्याप्य तिष्ठामि । समवप्रविभ्यः स्थ इत्यात्मनेपदं । उतापि चामूं द्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकं । उपलक्षणमेतत् । एतदुपलक्षितं कृत्स्नं वि-

कारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेनोप स्पृशामि। यद्वा। अस्य भूलोकस्य मूर्धन्मूर्धन्युपर्यहं पितरमाकाशं सुवे। समुद्रे जलधावप्सूदकेष्वं-तर्मध्ये मम योनिः कारणभूतोऽंभृणाख्य ऋषिर्वर्तते। यद्वा समुद्रेऽंतरिक्षेऽप्स्वम्म-येषु देवशरीरेषु मम कारणभूतं ब्रह्म चैतन्यं वर्तते। ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि। अन्यत्समानं॥

॥ अथाष्टमी ॥

अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा।
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥८॥

अहं। एव। वातःऽइव। प्र। वामि। आऽरभमाणा। भुवनानि। विश्वा।
परः। दिवा। परः। एना। पृथिव्या। एतावती। महिना। सं। बभूव ॥८॥

विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याण्यारभमाणा कारण-रूपेणोत्पादयंत्यहमेव परेणानधिष्ठिता स्वयमेव प्र वामि। प्रवर्ते वात इव। यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत्। उक्तं सर्वं निगमयति। परो दिवा। पर इति सकारांतं परस्तादित्यर्थे वर्तते यथाध इत्यधस्तादर्थे। तद्योगे च तृतीया सर्वत्र दृश्यते। दिव आकाशस्य परस्तात्। एना पृथिव्या। द्वितीयाटौः स्वेन इतीदम एनादेशः। अस्याः पृथिव्याः परः परस्तात्। द्यावापृथिव्योरुपादानमु-पलक्षणं। एतदुपलक्षितात्सर्वाद्विकारजातात्परस्ताद्वर्तमानासंगोदासीनकूटस्थ-ब्रह्मचैतन्यरूपाहं महिना महिम्नैतावती सं बभूव। एतच्छब्देनोक्तं सर्वं परामृश्यते। एतत्परिमाणमस्याः। यत्तदेतेभ्यः परिमाण इति वतुप्। आ सर्वनाम्न इत्यात्वं। सर्वजगदात्मनाहं संभूतास्मि। महच्छब्दादिमनिचि टेरिति टिलोपः। ततः तृती-यायामुदात्तनिवृत्तिस्वरेण तस्या उदात्तत्वं। छांदसो मलोपः॥

॥ इत्यष्टमस्य सप्तमे द्वादशो वर्गः॥

न तमित्यष्टर्चं चतुर्दशं सूक्तं शिलूषपुत्रस्य कुल्मलबर्हिषस्यार्षं वामदेवपुत्रस्यां-होमुङ्नाम्नो वा। वैश्वदेवं। अष्टमी त्रिष्टुप् शिष्टा उपरिष्टाद्बृहत्यः। त्र्यष्टकद्वादशकवत्यु-परिष्टाद्बृहती। अंत्यश्चेदुपरिष्टाद्बृहतीति हि तल्लक्षणं। तथा चानुक्रांतं। न तं शैलूषः कुल्मलबर्हिषो वामदेव्यो वांहोमुग्वैश्वदेवमुपरिष्टाद्बार्हतमंत्या त्रिष्टुबिति। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

न तमंहो न दुरितं देवासो अष्ट मर्त्यं ।
सजोषसो यमर्यमा मित्रो नयंति वरुणो अति द्विषः ॥१॥

न । तं । अंहः । न । दुःऽइतं । देवासः । अष्ट । मर्त्यं ।
सऽजोषसः । यं । अर्यमा । मित्रः । नयंति । वरुणः । अतिं । द्विषः ॥१॥

हे देवासो देवाः । आज्जसेरसुक् । तं मर्त्यं मनुष्यमंहः पापं दुरितं तत्फलरूपं दुर्गमनं च नाष्ट । न प्राप्नोति । अशेश्छांदसे लुङि म्लेर्लुगिति सिचो लोपः । अडभावश्छांदसः । अरीन्नियच्छतीत्यर्यमा प्रमीतेस्त्रायको देवो मित्रः पापानां निवारयिता देवो वरुणः । एते त्रयो देवाः सजोषसः संगताः समानं प्रीयमाणा वा भवंतो द्विषो द्वेष्टॄञ्शत्रूनतिक्रम्य यं स्तोतारं नयंत्यभिमतं देशं प्रापयंति तं नाष्टेत्यन्वयः ॥

॥ अथ द्वितीया ॥

तद्धि वयं वृणीमहे वरुण मित्रार्यमन् ।
येना निरंहसो यूयं पाथ नेथा च मर्त्यमति द्विषः ॥२॥

तत् । हि । वयं । वृणीमहे । वरुण । मित्र । अर्यमन् ।
येन । निः । अंहसः । यूयं । पाथ । नेथ । च । मर्त्यं । अतिं । द्विषः ॥२॥

हिरवधारणे । तद्धि तदेव रक्षणं वयं वृणीमहे प्रार्थयामहे । सति शिष्टोऽपि विकरणस्य स्वरो लसार्वधातुकस्वरं न बाधत इति वचनात्तिङ एव स्वरः शिष्यते । हि चेति निघातप्रतिषेधः । हे वरुण हे मित्र हे अर्यमन् येन रक्षणेन मर्त्यं स्तोतारमंहसः पापाद्यूयं निः पाथ निःशेषेण रक्षथ । पा रक्षणे । आदादिकः । यद्वृत्तान्नित्यमिति निघातप्रतिषेधः । येन च रक्षणेन मर्त्यं मनुष्यं स्तोतारं द्विषोऽति नेथ । अतीत्य नयथाभीष्टं प्रापयथ तद्वृणीमह इत्यन्वयः । नयतेश्छांदसः शपो लुक् ॥

॥ अथ तृतीया ॥

ते नूनं नोऽयमूतये वरुणो मित्रो अर्यमा ।
नयिष्ठा उ नो नेषणि पर्षिष्ठा उ नः पर्षण्यति द्विषः ॥३॥

ते । नूनं । नः । अयं । ऊतये । वरुणः । मित्रः । अर्यमा ।
नयिष्ठाः । ऊं इति । नः । नेषणि । पर्षिष्ठाः । ऊं इति । नः । पर्षणि । अति । द्विषः ॥३॥

अयं वरुणो मित्रश्चार्यमा च देवा नोऽस्माकमूतये रक्षणाय नूनमवश्यं भवंतु । नेषणि नेतव्ये विषये हे वरुणादयो यूयं नोऽस्मान्नयिष्ठाः । नयत । वचनव्यत्ययः । यद्वा प्रत्येकाभिप्रायेणैकवचनं । छांदसो लुङ् । उशब्दः समुच्चये पदपूरणार्थो वा । पर्षणि पारयितव्ये विषये नोऽस्मान्द्विषोऽति पर्षिष्ठाः । अतिपारयथ । नयिष्ठा इतिवत्प्रक्रिया ॥

॥ अथ चतुर्थी ॥

यूयं विश्वं परि पाथ वरुणो मित्रो अर्यमा ।
युष्माकं शर्मणि प्रिये स्याम सुप्रणीतयोऽति द्विषः ॥४॥
यूयं । विश्वं । परि । पाथ । वरुणः । मित्रः । अर्यमा ।
युष्माकं । शर्मणि । प्रिये । स्याम । सुऽप्रनीतयः । अति । द्विषः ॥४॥

हे देवा वरुणादयो यूयं विश्वं सर्वं जगत्परि पाथ । परितो रक्षथ । हे सुप्रणीतयः शोभनप्रणयना मित्रादयो युष्माकं युष्मदीये युष्माभिर्दत्ते प्रियेऽनुकूले वेद्ये शर्मणि सुखे वयं स्याम । भवेम । द्विषो द्वेष्टॄंश्चाति क्रामेम ॥

॥ अथ पंचमी ॥

आदित्यासो अति स्रिधो वरुणो मित्रो अर्यमा ।
उग्रं मरुद्भी रुद्रं हुवेमेंद्रमग्निं स्वस्तयेऽति द्विषः ॥५॥
आदित्यासः । अति । स्रिधः । वरुणः । मित्रः । अर्यमा ।
उग्रं । मरुत्ऽभिः । रुद्रं । हुवेम । इंद्रं । अग्निं । स्वस्तये । अति । द्विषः ॥५॥

आदित्यासोऽदितेः पुत्रा वरुणादयो देवाः स्रिधो हिंसकाञ्शत्रूनस्मानति नयंतु । मरुद्भिः पुत्रैः सहितमुग्रमुद्गूर्णतेजसं रुद्रमिंद्रमग्निं च स्वस्तये क्षेमाय हुवेम । आह्वयेमहि । ह्वयतेराशीर्लिङि बहुलं छंदसीति संप्रसारणं । लिङ्याशिष्यङ् । आहूतास्तेऽस्मान्द्विषो द्वेष्टॄनति नयंतु ॥

॥ अथ षष्ठी ॥

नेतार ऊ षु णस्तिरो वरुणो मित्रो अर्यमा ।
अति विश्वानि दुरिता राजानश्चर्षणीनामति द्विषः ॥ ६ ॥
नेतारः । ऊं इति । सु । नः । तिरः । वरुणः । मित्रः । अर्यमा ।
अति । विश्वानि । दुःऽइता । राजानः । चर्षणीनां । अति । द्विषः ॥ ६ ॥

नेतारो नयनकुशलाः । नयतेः साधुकारिणि तृन् । वरुणादयो देवा नोऽस्माकं पापानि सु सुष्ठु तिरस्तिरोधानमदर्शनं नयंतु । उ इति पूरणः । चर्षणीनां मनुष्याणां राजानः स्वामिनो वरुणादयो देवा विश्वानि सर्वाणि दुरिता दुरितानि दुर्गमनानि पापफलरूपाण्यस्मानति नयंतु । द्विषो द्वेष्टॄञ्शत्रूंश्चाति नयंतु । नामन्यतरस्यामिति चर्षणिशब्दात्परस्य नाम उदात्तत्वं ॥

॥ अथ सप्तमी ॥

शुनमस्मभ्यमूतये वरुणो मित्रो अर्यमा ।
शर्म यच्छंतु सप्रथ आदित्यासो यदीमहे अति द्विषः ॥ ७ ॥
शुनं । अस्मभ्यं । ऊतये । वरुणः । मित्रः । अर्यमा ।
शर्म । यच्छंतु । सऽप्रथः । आदित्यासः । यत् । ईमहे । अति । द्विषः ॥ ७ ॥

वरुणादयो देवा ऊतये रक्षायै शुनं सुखमस्मभ्यं स्तोतृभ्यः प्रयच्छंतु । तथादित्यासोऽदितेः पुत्रास्ते सप्रथः सर्वतः पृथु विस्तीर्णं शर्म सुखं च यच्छंतु । अस्मभ्यं ददतु । यच्छर्म वयमीमहे याचामहे । द्विषश्चाति नयंतु ॥

॥ अथाष्टमी ॥

यथा ह त्यद्वसवो गौर्यं चित्पदि षितामर्मुंचता यजत्राः ।
एवो ष्व१स्मन्मुंचता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥ ८ ॥
यथा । ह । त्यत् । वसवः । गौर्यं । चित् । पदि । सितां । अमुंचत । यजत्राः ।
एवो इति । सु । अस्मत् । मुंचत । वि । अंहः । प्र । तारि । अग्ने । प्रऽतरं । नः । आयुः ॥ ८ ॥

हे वसवो वासका हे यजत्रा यागार्हा मित्रादयो देवाः । अमिनक्षीत्यादिना यजेरत्रन्प्रत्ययः । त्यत् ते प्रसिद्धा यूयं । सुपां सुलुगिति विभक्तेर्लुक् । यथा खलु

पदि पादे सितां बद्धां। पद्दन्नित्यादिना पादशब्दस्य पदादेशः। ऊडिदंपदादीत्यादिना सप्तम्या उदात्तत्वं। षिञ् बंधन इत्यस्मान्निष्ठा। ईदृशीं गौर्यं गौरीं गौरवर्णां सोमक्रयणीं गां। षिद्गौरादिभ्यश्चेति ङीष्। अमि पूर्व इत्यत्र वा छंदसीत्यनुवर्तनात्पूर्वरूपस्य पूर्वसवर्णदीर्घस्य चाभावे यण्। उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं। ईदृशीं गाममुंचत यथा खलु यूयं विश्वावसोर्गंधर्वान्मोचितवंत एवो एवमेवास्मदस्मत्तोऽंहः पापं सुष्ठु वि मुंचत। विश्लेषयत। हे अग्ने नोऽस्माकमायुर्जीवनं प्रतरं प्रतारि। प्रकर्षेण त्वया प्रवर्धतां। प्रपूर्वस्तिरतिर्वर्धनार्थः। प्रशब्दात्तरप्यमु च छंदसीत्यमुप्रत्ययः ॥

॥ इत्यष्टमस्य सप्तमे त्रयोदशो वर्गः ॥

रात्रीत्यष्टर्चं पंचदशं सूक्तं सोभरिपुत्रस्य कुशिकस्यार्षं। यद्वा भारद्वाजस्य सुता रात्र्याख्यास्य सूक्तस्यर्षिका। गायत्रं रात्रिदेवताकं। तथा चानुक्रांतं। रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवं गायत्रमिति ॥ दुःस्वप्नदर्शन उपोषितेन कर्त्रा पायसेन होतव्यं। तत्रैतत्सूक्तं करणत्वेन विनियुक्तं। तथा चारण्यके श्रूयते। स यद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वा। ऐ° आ° ४. १०.। इति ॥

॥ तत्र प्रथमा ॥

रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः।
विश्वा अधि श्रियोऽधित ॥१॥

रात्री। वि। अख्यत्। आऽयती। पुरुऽत्रा। देवी। अक्षऽभिः।
विश्वाः। अधि। श्रियः। अधित ॥१॥

आयत्यागच्छंती। आङ्पूर्वादेतेः शतर्यदादित्वाच्छपो लुक्। इणो यणिति यणादेशः। उगितश्चेति ङीप्। शतुरनुम इति नद्या उदात्तत्वं। अक्षभिरक्षिस्थानीयैः प्रकाशमानैर्नक्षत्रैः। छंदस्यपि दृश्यत इत्यक्षिशब्दस्यानङादेशः। यद्वा। अक्षभिरंजकैस्तेजोभिः पुरुत्रा बहुषु देशेषु देवी देवनशीला। देवमनुष्यपुरुषपुरुमर्त्येभ्य इत्यादिना पुरुशब्दात्सप्तम्यर्थे त्राप्रत्ययः। रात्रीयं रात्रिदेवता व्यख्यत्। विचष्टे। विशेषेण पश्यति। रात्रेश्चाजसाविति ङीप्। ख्यातेश्छांदसे लुङ्यस्यतिवक्तीत्यादिना च्लेरङादेशः। अपि चैषा विश्वाः सर्वाः श्रियः शोभा अध्यधित। अधिधारयति। दधातेर्लुङि स्थाघ्वोरिच्चेतीत्वं। सिचः कित्त्वं। ह्रस्वादंगादिति सिचो लोपः ॥

॥ अथ द्वितीया ॥

ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः ।
ज्योतिषा बाधते तमः ॥२॥

आ । उरु । अप्राः । अमर्त्या । निऽवतः । देवी । उत्ऽवतः ।
ज्योतिषा । बाधते । तमः ॥२॥

अमर्त्या मरणरहिता देवी देवनशीला रात्रिरुरु विस्तीर्णमंतरिक्षमाप्राः । प्रथमतस्तमसापूरयति । प्रा पूरणे । आदादिकः । लङि व्यत्ययेन मध्यमः । तथा निवतो नीचीनान् लतागुल्मादीन् उद्वत उन्नितान्वृक्षादींश्च स्वकीयेन तेजसावृणोति । तदनंतरं तत्तमोऽंधकारं ज्योतिषा ग्रहनक्षत्रादिरूपेण तेजसा बाधते । पीडयति ॥

॥ अथ तृतीया ॥

निरु स्वसारमस्कृतोषसं देव्यायती ।
अपेदु हासते तमः ॥३॥

निः । ऊं इति । स्वसारं । अकृत । उषसं । देवी । आऽयती ।
अप । इत् । ऊं इति । हासते । तमः ॥३॥

आयत्यागच्छंती देवी देवनशीला रात्रिः स्वसारं भगिनीमुषसं निरकृत । निष्करोति । प्रकाशेन संस्करोति । निवर्तयतीत्यर्थः । तस्यामुषसि जातायां नैशं तमोऽपेद्धासते । अपैव गच्छति । ओहाङ् गतौ । लेट्यडागमः । सिब्बहुलमिति सिप् ॥

॥ अथ चतुर्थी ॥

सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि ।
वृक्षे न वसतिं वयः ॥४॥

सा । नः । अद्य । यस्याः । वयं । नि । ते । यामन् । अविक्ष्महि ।
वृक्षे । न । वसतिं । वयः ॥४॥

अद्यास्मिन्काले नोऽस्माकं सा रात्रिदेवता प्रसीदतु यस्या रात्रेर्यामन्यामनि प्राप्तौ सत्यां वयं न्यविक्ष्महि निविशामहे । सुखेन गृह आस्महे । विशेर्लङि नेर्विशः

। पा॰ १.३.१७.। इत्यात्मनेपदं । छांदसः शपो लुक् । तत्र दृष्टांतः । वयः पक्षिणो वृक्षे न। यथा वृक्षे नीडाश्रये वसतिं रात्रौ निवासं कुर्वंति तथा निवसाम इत्यर्थः ॥

॥ अथ पंचमी ॥

नि ग्रामासो अविक्षत नि पद्वंतो नि पक्षिणः ।
नि श्येनासश्चिदर्थिनः ॥५॥

नि। ग्रामासः। अविक्षत। नि। पत्ऽवंतः। नि। पक्षिणः।
नि। श्येनासः। चित्। अर्थिनः ॥५॥

ग्रामासो ग्रामाः। अत्र ग्रामशब्दो जनसमूहे वर्तते यथा ग्राम आगत इति। सर्वे जना न्यविक्षत। तस्यां रात्रावागतायां निविशंते। शेरते। निपूर्वाद्विशते-श्छांदसे लुङि पूर्ववदात्मनेपदं। शल इगुपधादनिटः क्सः। क्सस्याचि। पा॰ ७. ३.७२.। इत्यकारलोपः। तथा पद्वतः पादयुक्ता गवाश्वादयश्च निविशंते। तथा पक्षिणः पक्षोपेताश्च निविशंते। अर्थिनः। अर्तेरर्थो गमनं। शीघ्रगमनयुक्ताः श्येनासश्चिच्छ्येना अपि तस्यां रात्र्यां निविशंते। एषा रात्रिः सर्वाणि भूतजातान्यहनि संचारेण श्रांतानि स्वयमागत्य सुखयतीत्यर्थः ॥

॥ अथ षष्ठी ॥

यावया वृक्यं१ वृकं यवय स्तेनमूर्म्ये ।
अथा नः सुतरा भव ॥६॥

यवय। वृक्यं। वृकं। यवय। स्तेनं। ऊर्म्ये।
अथ। नः। सुऽतरा। भव ॥६॥

हे ऊर्म्ये। रात्रिनामैतत्। रात्रे वृक्यं वृकस्य स्त्रियं वृकं चास्मान्हिंसंतं यवय। अस्मत्तः पृथक्कुरु। अस्मान्बाधितुं यथा न प्राप्नोति तथा। स्तेनं तस्करं च यवय। अस्मत्तो वियोजय। अथानंतरं नोऽस्माकं सुतरा सुखेन तरणीया क्षेमकरी भव ॥

॥ अथ सप्तमी ॥

उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित ।
उष ऋणेव यातय ॥७॥

उप॑ । मा॒ । पेपि॑शत् । तम॑ः । कृ॒ष्णं । विऽअ॑क्तं । अ॒स्थि॒त ।

उष॑ः । ऋ॒णाऽइ॑व । या॒त॒य ॥ ७ ॥

पेपिशद्भृशं पिंशत् सर्ववस्तुष्वाश्लिष्टं तमोऽधकारं कृष्णं कृष्णवर्णं व्यक्तं विशेषेण स्वभासा सर्वस्यांजकं स्पष्टरूपं वा । ईदृशं नैशं तमो मामुपास्थित । उपागच्छत् । संगतकरण आत्मनेपदं । हे उष उषोदेवते त्वमृणेवर्णानीव तत्तमो यातय । अपगमय । स्तोतॄणामृणानि यथा धनप्रदानेनापाकरोषि तथा तमोऽप्यपसारयेत्यर्थः ॥

॥ अथाष्टमी ॥

उप॑ ते॒ गा इ॒वाक॑रं वृणी॒ष्व दु॑हितर्दिवः ।

रात्रि॒ स्तोमं॒ न जि॒ग्युषे॑ ॥ ८ ॥

उप॑ । ते॒ । गाःऽइ॑व । आ । अ॒क॒रं॒ । वृ॒णी॒ष्व । दु॒हि॒तः॒ । दि॒वः॒ ।

रात्रि॑ । स्तोम॑ं । न । जि॒ग्युषे॑ ॥ ८ ॥

हे रात्रि रात्रिदेवते ते त्वां गा इव पयसो दोग्ध्रीर्धेनूरिवोपेत्याकरं । स्तुतिभिरभिमुखीकरोमि । करोतेश्छांदसे लुङि कृमृदृरुहिभ्य इति च्लेरङादेशः । दिवो दुहितः । द्योतमानस्य सूर्यस्य पुत्रि । यद्वा दिवसस्य तनये । परमपि छंदसीति परस्य षष्ठ्यंतस्य पूर्वामंत्रितांगवद्भावात्पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वं । त्वत्प्रसादाज्जिग्युषे शत्रूञ्जिग्युषो मम स्तोमं न स्तोत्रमिव हविरपि वृणीष्व । त्वं भजस्व । जयतेर्लिटः क्वसुः । सन्लिँटोर्जेरित्यभ्यासादुत्तरस्य जकारस्य कुत्वं । षष्ठ्यर्थे चतुर्थी वक्तव्येति चतुर्थी । वसोः संप्रसारणमिति संप्रसारणं ॥

॥ इत्यष्टमस्य सप्तमे चतुर्दशो वर्गः ॥

ममाग्न इति नवर्चं षोडशं सूक्तमांगिरसस्य विहव्यस्यार्षं वैश्वदेवं । अंत्या जगती शिष्टास्त्रिष्टुभः । अनुक्रम्यते हि । ममाग्ने नव विहव्यो वैश्वदेवं जगत्यंतमिति । संसवे निमित्तभूते वैश्वदेवसूक्तस्य पुरस्तादेतच्छंस्यं । सूचितं च । ममाग्ने वर्च इति वैश्वदेवसूक्तस्यापि वैतेष्वेव निविदो दध्यात् । आ॰ ६.६. । इति ॥ समावर्तनेऽनेन सूक्तेन सिष्णासुना प्रत्यृचं समिदाधातव्या । सूचितं च । ममाग्ने वर्च इति प्रत्यृचं समिधोऽभ्यादध्यात् । आ॰ गृ॰ ३.८. । इति ॥

॥ तत्र प्रथमा ॥

ममा॑ग्ने॒ वर्चो॑ विह॒वेष्व॑स्तु व॒यं त्वेंधा॑नास्त॒न्वं॑ पुषेम ।

मह्यं॑ नमंतां प्र॒दिश॒श्चत॑स्र॒स्त्वयाध्य॑क्षेण॒ पृत॑ना जयेम ॥१॥

मम॑ । अ॒ग्ने॒ । वर्चः॑ । वि॒ऽह॒वेषु॑ । अ॒स्तु॒ । व॒यं । त्वा॒ । इं॒धा॑नाः । त॒न्व॑ं । पु॒षे॒म॒ ।

मह्य॑ं । न॒मं॒तां॒ । प्र॒ऽदिशः॑ । चत॑स्रः । त्वया॑ । अधि॑ऽअक्षेण । पृत॑नाः । ज॒ये॒म॒ ॥१॥

हे अग्ने । विविधमाहूयंते येषु शूरा इति विहवाः संग्रामाः । यद्वा विविधं यागार्थं देवा आहूयंत एष्विति विहवा यज्ञाः । ह्वः संप्रसारणं च न्यभ्युपविषु । पा॰ ३. ३. ७२. । इत्यधिकरणेऽप् संप्रसारणं च । थाथादिनोत्तरपदांतोदात्तत्वं । संग्रामेषु यज्ञेषु वा वर्चो दीप्तिस्त्वदनुग्रहान्ममास्तु । भवतु । वयं च त्वा त्वामिंधानाः समिद्भिर्दीपयंतस्तन्वं तव शरीरं पुषेम । हविर्भिर्वर्धयेम । इंधेः शानचि श्नसोरल्लोप उदात्तनिवृत्तिस्वरेण शानच आद्युदात्तत्वे प्राप्ते विभाषा वेण्विंधानयोः । पा॰ ६. १. २१५. । इत्याद्युदात्तत्वं । तन्वं पुषेम । पुषेर्लिङि लिङ्याशिष्यङ् । अपि च मह्यं मदर्थं । ङयि चेत्यस्मद आद्युदात्तत्वं । चतस्रः प्रदिशः प्रकृष्टा दिशः । तद्वासिनो जना इत्यर्थः । नमंतां । स्वत एव प्रह्वीभवंतु । नमतेः कर्मकर्तरि लोटि न दुहस्नुनमामिति यक्प्रतिषेधः । त्वयास्माभिर्हविर्भिः प्रवर्धितेनाध्यक्षेणेश्वरेण सता पृतनाः शत्रुसेना जयेम । अभिभवेम ॥

॥ अथ द्वितीया ॥

मम॑ दे॒वा विह॑वे सं॑तु॒ सर्व॒ इंद्र॑वंतो म॒रुतो॒ विष्णु॑र॒ग्निः ।

ममां॒तरि॑क्षमु॒रुलो॑कमस्तु॒ मह्य॒ं वातः॑ पवतां॒ कामे॑ अ॒स्मिन् ॥२॥

मम॑ । दे॒वाः । वि॒ऽह॒वे । सं॒तु॒ । सर्वे॑ । इंद्र॑ऽवंतः । म॒रुतः॑ । विष्णुः॑ । अ॒ग्निः ।

मम॑ । अ॒ंतरि॑क्षं । उ॒रुऽलो॑कं । अ॒स्तु॒ । मह्य॑ं । वातः॑ । प॒व॒तां॒ । कामे॑ । अ॒स्मिन् ॥२॥

सर्वे देवा विहवे संग्रामे यज्ञे वा मम संतु । ममैव साधका भवंतु । के पुनस्ते । इंद्रवंत इंद्रेण युक्ता मरुतो विष्णुरग्निश्च । तथांतरिक्षं ममोरुलोकं विस्तीर्णप्रकाशकमस्तु । लोकृ दर्शने । भावे घञ् । लोक आलोकः प्रकाशः । उरुर्लोको यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अपि चास्मिन्कामे कामयितव्ये फले निमित्तभूते सति वातो वायुः पवतां । अनुगुणं प्रवातु । पूङ् पवने । भौवादिकः । ऊडिदमित्यादिनेदमः सप्तम्या उदात्तत्वं ॥

॥ अथ तृतीया ॥

मयि देवा द्रविणमा यजंतां मय्याशीरस्तु मयि देवहूतिः ।

दैव्या होतारो वनुषंत पूर्वेऽरिष्टाः स्याम तन्वा सुवीराः ॥३॥

मयि । देवाः । द्रविणं । आ । यजंतां । मयि । आऽशीः । अस्तु । मयि । देवऽहूतिः ।

दैव्याः । होतारः । वनुषंत । पूर्वे । अरिष्टाः । स्याम । तन्वा । सुऽवीराः ॥३॥

देवाः सर्वे द्रविणं धनं मयि स्तोतर्या यजंतां । गमयंतु । मह्यं ददत्वित्यर्थः । तथाशीराशंसनीयं यज्ञफलं च मय्येवास्तु । देवानां हूतिराह्वानमस्मिन्निति देवहूतिर्यज्ञः । स च मय्यस्तु । अपि च देवानामिमे दैव्याः । देवाद्यञञाविति यञ् । तादृशा होतारः साधुहोमनिष्पादका मदीया ऋत्विजः पूर्वेऽन्यदीयेभ्य ऋत्विग्भ्यः प्रथमभाविनः संतो वनुषंत । देवान्संभजंतां । वनतेश्छांदसे लङि व्यत्ययो बहुलमिति चयो विकरणा उप्रत्ययः सिप्शपौ च । अडभावश्छांदसः । वयं च तन्वा शरीरेणारिष्टा अहिंसिताः सुवीराः सुपुत्राश्च स्याम । भवेम । वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं ॥

॥ अथ चतुर्थी ॥

मह्यं यजंतु मम यानि हव्याकूतिः सत्या मनसो मे अस्तु ।

एनो मा नि गां कतमच्चनाहं विश्वे देवासो अधि वोचता नः ॥४॥

मह्यं । यजंतु । मम । यानि । हव्या । आऽकूतिः । सत्या । मनसः । मे । अस्तु ।

एनः । मा । नि । गां । कतमत् । चन । अहं । विश्वे । देवासः । अधि । वोचत । नः ॥४॥

मह्यं मदर्थं यजंतु । ऋत्विजो देवान्हविर्भिर्यजंतु । यद्वा षष्ठ्यर्थे चतुर्थी । मह्यं मदीया ऋत्विज इत्यर्थः । मम स्वभूतानि हव्यानि यानि हवींषि चरुपुरोडाशादीनि संति तैर्हविर्भिरित्यर्थः । तथा मे मनस आकूतिः संकल्पनमभीष्टस्य प्रार्थनं सत्या यथार्थमस्तु । अपि च । अहं कतमच्चन किमप्येनः पापं मा नि गां । मा नियतं निकृष्टतरं वा गच्छेयं । पापं मा कार्षमित्यर्थः । एतेर्माङि लुङीणो गा लुङीति गादेशः । गातिस्थेति सिचो लुक् । अपि च । हे विश्वे सर्वे देवासो देवा यूयं नोऽस्माकमधि वोचत । विवादेषु पक्षपातेन ब्रूत । वक्तेर्लोटि व्यत्ययेनाट् । वच उमित्युमागमः ॥

॥ अथ पंचमी ॥

देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वं ।
मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥५॥

देवीः । षट् । उर्वीः । उरु । नः । कृणोत । विश्वे । देवासः । इह । वीरयध्वं ।
मा । हास्महि । प्रऽजया । मा । तनूभिः । मा । रधाम । द्विषते । सोम । राजन् ॥५॥

हे षडुर्वीः षट्संख्याका उर्व्यः । एताश्चान्यचाम्नायंते । षण्मोर्वीरंहसः पांतु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्चेति । ईदृश्यो हे देवीर्देव्यः । जसि वा छंदसीति पूर्वसवर्णदीर्घः । नामंत्रिते समानाधिकरणे सामान्यवचनमित्यस्याविद्यमानत्वनिषेधेन षळुर्वीरित्यनयोरामंत्रितयोः पदात्परत्वादाष्टमिकमामंत्रितानुदात्तत्वं । ता यूयमुरु विस्तीर्णं धनं नोऽस्माकं कृणोत । कुरुत । कृवि हिंसाकरणयोः । धिन्विकृण्व्योरचेत्युप्रत्ययः । तप्तनप्तनथनाश्चेति तस्य तबादेशः । हे विश्वे सर्वे देवासो देवा यूयं चेहास्मिन्धने प्राप्तव्ये विषये वीरयध्वं । विक्रामयत । तथा वयं तद्धनं लभेमहि । तथा वीर्यवंतो यूयं प्रयच्छध्वमित्यर्थः । वीर विक्रांतौ । अपि च प्रजया पुत्रादिरूपया मा हास्महि । वयं मा परित्यज्येमहि । मा च तनूभिः शरीरैस्त्यज्येमहि । अस्मान्कदाचिदपि पुत्रादयः शरीराणि च मा परित्याक्षुरित्यर्थः । ओहाक् त्यागे । अस्मात्कर्मणि लुङि चिण्वद्भावाभावे रूपमेतत् । तथा हे राजन् राजमान । यद्वास्माकं स्वामिन् हे सोम द्विषतेऽप्रीतिं कुर्वते । द्विषेः शतर्यदादित्वाच्छपो लुक् । शतुरनुम इति विभक्तेरुदात्तत्वं । षष्ठ्यर्थे चतुर्थी वक्तव्येति चतुर्थी । द्विषतः शत्रोर्मा रधाम । मा वशं प्राप्नुयाम । तथा त्वं कुर्वित्यर्थः । रध्यतिर्वशगमन इति यास्कः । यद्वा द्विषते शत्रवे तदर्थं मा रधाम । परिपक्का हननार्हा मा भूम । रध हिंसासंराद्धोः । संराद्धिः पाक इति तद्वृत्तिः । माङि लुङि पुषादित्वाच्लेरङादेशः ॥

॥ इत्यष्टमस्य सप्तमे पंचदशो वर्गः ॥

॥ अथ षष्ठी ॥

अग्ने मन्युं प्रतिनुदन्परेषामदब्धो गोपाः परि पाहि नस्त्वं ।
प्रत्यंचो यंतु निगुतः पुनस्ते३मैषां चित्तं प्रबुधां वि नेशत् ॥६॥

अग्ने । मन्युं । प्रतिऽनुदन् । परेषां । अदब्धः । गोपाः । परि । पाहि । नः । त्वं ।
प्रत्यंचः । यंतु । निऽगुतः । पुनरिति । ते । अमा । एषां । चित्तं । प्रऽबुधां । वि । नेशत् ॥६॥

हे अग्ने परेषां शत्रूणां मन्युं क्रोधं प्रतिनुदन् प्रतिमुखं प्रेरयन् तिरस्कुर्वन् अदब्धः केनाप्यहिंसितो गोपा गोपायिता। गुपू रक्षण इत्यस्मादायप्रत्ययांतात्क्विपि वेरपृक्तस्य लोपात्पूर्वं वलि लोपे रूपमेतत्। ईदृशस्त्वं नोऽस्मान्परि पाहि। परितः सर्वतो रक्ष। ते शत्रवः प्रत्यंचः प्रत्यंचंतः प्रतिनिवर्तमाना निगुतः। गुङ् अव्यक्ते शब्दे। अस्मात्क्विपि तुक्। भयेन गद्गदरूपमव्यक्तं शब्दं नितरां कुर्वंतः पुनर्यंतु। स्वकीयं स्थानं पुनर्गच्छंतु। अपि च प्रबुधां प्रबुध्यमानानामेतेषां शत्रूणां चित्तं ज्ञानसाधनं मनोऽमा सह युगपदेव वि नेशत्। विनश्यतु। प्रत्येकाभिप्रायेणैकवचनं। णश् अदर्शन इत्यस्माच्छांदसो लुङ्। पुषादित्वाच्च्लेरङादेशः। नशिमन्योरलिट्येत्वं वक्तव्यमित्यकारस्यैत्वं ॥

॥ अथ सप्तमी ॥

धाता धातॄणां भुवनस्य यस्पतिर्देवं त्रातारमभिमातिषाहं।
इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पांतु यजमानं न्यर्थात् ॥७॥

धाता। धातॄणां। भुवनस्य। यः। पतिः। देवं। त्रातारं। अभिमातिऽसहं।
इमं। यज्ञं। अश्विना। उभा। बृहस्पतिः। देवाः। पांतु। यजमानं। निऽअर्थात् ॥७॥

धातॄणां स्रष्टॄणामपि धाता स्रष्टा भुवनस्य कृत्स्नस्य भूतजातस्य य इंद्रः सविता वा पतिः पालयिता तं देवं देवनशीलं त्रातारं सर्वेभ्यो भयेभ्यः पालयितारमभिमातिषाहमभिमातीनां शत्रूणां सोढारमभिभवितारं एवंगुणविशिष्टमिंद्रं सवितारं वा स्तौमीति शेषः। षह अभिभवे। छंदसि सह इति ण्विप्रत्ययः। छांदसं विभक्त्युदात्तत्वं। उभोभावश्विनौ बृहस्पतिश्चैतत्प्रमुखाः सर्वे देवा इमं यज्ञमनुष्ठीयमानं यजमानं च न्यर्थान्निकृष्टादर्थात्पापात्। यज्ञार्थस्य प्रयोजनस्याभावो न्यर्थं। तस्मात्पांतु। रक्षंतु। सफलं कुर्वंत्वित्यर्थः। नेरनिधाने। पा० ६.२.१९२.। इत्युत्तरपदांतोदात्तत्वं ॥

॥ अथाष्टमी ॥

उरुव्यचा नो महिषः शर्म यंसदस्मिन्हवे पुरुहूतः पुरुक्षुः।
स नः प्रजायै हर्यश्व मृळयेंद्र मा नो रीरिषो मा परा दाः ॥८॥

उरुऽव्यचाः। नः। महिषः। शर्म। यंसत्। अस्मिन्। हवे। पुरुऽहूतः। पुरुऽक्षुः।
सः। नः। प्रऽजायै। हरिऽअश्व। मृळय। इंद्र। मा। नः। रिरिषः। मा। परा। दाः ॥८॥

उरुव्यचा विस्तीर्णव्यापनो महिषो महान्पूज्यो वा पुरुहूतो बहुभिर्यजमानैराहूतः पुरुक्षुर्बहुनिवासः। क्षियतेर्मितद्र्वादिभ्य उपसंख्यानं। पा॰ ३.२.१८०.१.। इति डुप्रत्ययः। यद्वा पुरुभिर्बहुभिः शंस्यमानः स्तूयमानः। पूर्ववड्डुप्रत्ययः। औणादिके कर्मणि क्विपि वानित्यमागमशासनमिति तुगभावः। ईदृश इंद्रोऽस्मिन्हवे यज्ञे। हूयंतेऽस्मिन्हवींषीति हवो यज्ञः। जुहोतेरधिकरणेऽप्। यद्वास्मिन्हवे त्वद्विषय आह्वाने। भावेऽनुपसर्गस्येति ह्वयतेरप् संप्रसारणं च। नोऽस्मभ्यं शर्म सुखं यंसत्। यच्छतु। ददात्वित्यर्थः। यमेर्लेट्यडागमः। सिब्बहुलमिति सिप्। हे हर्यश्व। हरी अश्वौ यस्य तादृश हे इंद्र स त्वं नोऽस्माकं प्रजायै। द्वितीयार्थे चतुर्थी। प्रजां पुत्रपौत्रादिकां मृळय। सुखय। नोऽस्मान्मा रीरिषः। मा हिंसीः। मा च परा दाः। परादानं परित्यागः। मा परित्याक्षीरित्यर्थः॥

॥ अथ नवमी ॥

ये नः॑ स॒पत्ना॒ अप॒ ते भ॑वंत्विंद्रा॒ग्निभ्या॒मव॑ बाधामहे॒ तान्।
वस॑वो रु॒द्रा आ॑दि॒त्या उ॑परि॒स्पृशं॑ मो॒ग्रं चे॒त्तार॑मधिरा॒जम॑क्रन्॥९॥
ये। नः॒। स॒ऽपत्नाः॑। अप॑। ते। भ॒वं॒तु॒। इं॒द्रा॒ग्नि॒ऽभ्यां॑। अव॑। बा॒धा॒म॒हे॒। तान्।
वस॑वः। रु॒द्राः। आ॒दि॒त्याः। उ॒प॒रि॒ऽस्पृशं॑। मा। उ॒ग्रं। चे॒त्तार॑ं। अ॒धि॒ऽरा॒जं। अ॒क्र॒न्॥९॥

नोऽस्माकं ये सपत्नाः शत्रवस्तेऽप भवंतु। अपगता भवंतु। स्वस्थानादपगताः प्रच्युता भवंतु। तान्सपत्नानिंद्राग्निभ्यां हविर्भिः स्तुत्या च प्रसन्नाभ्यामनुगृहीता वयमव बाधामहे। निकृष्टतरं विनाशयामः। अपि च वसवो रुद्रा आदित्याश्च मा मामुपरिस्पृशमुन्नतपदस्य संस्प्रष्टारं सर्वेभ्यः श्रेष्ठमक्रन्। कुर्वंतु। तथोग्रमुद्गूर्णबलं चेत्तारं चेतितारं। छांदस इडभावः। सर्वस्य ज्ञातारमधिराजं सर्वेषामधीश्वरं च मां कुर्वंतु। करोतेश्छांदसे लुङि मंत्रे घसेत्यादिना च्लेर्लुक्॥

॥ इत्यष्टमस्य सप्तमे षोडशो वर्गः ॥

॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे दाशतय्यां दशमे मंडले दशमोऽनुवाकः ॥

एकादशेऽनुवाके त्रयोविंशतिसंख्यानि सूक्तानि। तत्र नासदासीदिति सप्तर्चं प्रथमं सूक्तं त्रैष्टुभं। परमेष्ठी नाम प्रजापतिर्ऋषिः। वियदादिभावानां सृष्टिस्थि-

तिप्रलयादीनामत्र प्रतिपाद्यत्वात्तेषां कर्ता परमात्मा देवता। तथा चानुक्रांतं। नासत्सप्त प्रजापतिः परमेष्ठी भाववृत्तं त्विति। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नंभः किमासीद्गहनं गभीरं ॥१॥

न। असत्। आसीत्। नो इति। सत्। आसीत्। तदानीं। न। आसीत्। रजः।
नो इति। विऽओम। परः। यत्।
किं। आ। अवरीवरिति। कुह। कस्य। शर्मन्। अंभः। किं। आसीत्। गहनं। गभीरं॥१॥

तपसस्तन्महिनाजायतैकमित्यादिनाग्रे सृष्टिः प्रतिपादयिष्यते। अधुना ततः प्रागवस्था निरस्तसमस्तप्रपंचा या प्रलयावस्था सा निरूप्यते। तदानीं प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तन्नासत्। शशविषाणवन्निरुपाख्यं नासीत्। न हि तादृशात्कारणादस्य सतो जगत उत्पत्तिः संभवति। तथा नो सत्। नैव सत्। आत्मवत्सत्त्वेन निर्वाच्यमासीत्। यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति तथापि भावाभावयोः सहावस्थानमपि संभवति। कुतस्तयोस्तादात्म्यमित्युभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः॥ ननु नो सदिति पारमार्थिकसत्त्वस्य निषेधः। तर्ह्यात्मनोऽप्यनिर्वाच्यत्वप्रसंगः। अथोच्येत। न। आनीदवातमिति तस्य सत्त्वमग्रे वक्ष्यते परिशेषान्मायाया एवात्र सत्त्वं निषिध्यत इति। एवमपि तदानीमिति विशेषणानर्थक्यं व्यवहारदशायामपि तस्याः पारमार्थिकसत्त्वाभावात्। अथ व्यावहारिकसत्त्वस्य। तदापि व्यावहारिकसत्ता पृथिव्यादीनां भावानां विद्यमानत्वात् कथं नो सदिति निषेधः। तत्राह। नासीद्रज इत्यादि। लोका रजांस्युच्यंत इति यास्कः। अत्र च सामान्यापेक्षमेकवचनं। व्योम्नो वक्ष्यमाणत्वात्तस्याधस्तनाः पातालादयः पृथिव्यंता नासन्नित्यर्थः। तथा व्योमांतरिक्षं तदपि नो नैवासीत्। पर इति सकारांतं परस्तादित्यर्थे वर्तते। परशब्दाच्छांदसस्तासेरर्थेऽसिप्रत्ययः। परो व्योम्नः परस्तादुपरिदेशे द्युलोकप्रभृतिसत्यलोकांतं यदस्ति तदपि नासीदित्यर्थः। अनेन चतुर्दशभुवनगर्भं ब्रह्मांडं स्वरूपेण निषिद्धं भवति। अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधयति किमावरीवरिति। किमावरणीयं तत्त्वमावरकभूतजातमावरीवः। अत्यंतमावृणुयात्। आवार्याभावात्तदावरकमपि नासीदित्यर्थः। वृणोतेर्यङ्लुगंताच्छांदसे

लङि तिपि रूपमेतत्। यद्वा किमिति प्रथमैव। किं तत्त्वमावरकमावृणुयात्। आवार्याभावादाव्रियमाणवत्तदपि स्वरूपेण नासीदित्यर्थः। आवृणवत्तत्त्वं कुह कुत्र देशेऽवस्थायावृणोति। आधारभूतस्तादृशो देशोऽपि नासीदित्यर्थः। किंशब्दात्सप्तम्यर्थे हप्रत्ययः। कु तिहोरिति प्रकृतेः क्वादेशः। कस्य शर्मन् कस्य वा भोक्तुर्जीवस्य शर्मणि सुखदुःखसाक्षात्कारलक्षणे वा निमित्तभूते सति तदावरकं तत्त्वमावृणुयात्। जीवानामुपभोगार्था हि सृष्टिः। तस्यां हि सत्यां ब्रह्मांडस्य भूतैरावरणं प्रलयदशायां च भोक्तारो जीवा उपाधिविलयात्प्रलीना इति कस्य कश्चिदपि भोक्ता न संभवतीत्यावरणस्य निमित्ताभावादपि तन्न घटत इत्यर्थः। एतेन भोग्यप्रपंचवद्भोक्तृप्रपंचोऽपि तदानीं नासीदित्युक्तं भवति। किंशब्दादुत्तरस्य ङसः सावेकाच इति प्राप्तस्योदात्तत्वस्य न गोश्वन्साववर्णेति प्रतिषेधः। सुपां सुलुगिति शर्मणः सप्तम्या लुक्। यद्यपि सावरणस्य ब्रह्मांडस्य निषेधेन तदंतर्गतमप्तत्त्वमपि निराकृतं तथाप्यापो वा इदमग्रे सलिलमासीदित्यादिश्रुत्या कश्चिदपां सद्भावमाशंकेत। तं प्रत्याचष्टेऽंभः किमासीदिति। गहनं दुःप्रवेशं गभीरं दुःखस्थानमत्यगाधं। ईदृशमंभः किमासीत्। तदपि नैवासीदित्यर्थः। श्रुतिस्त्ववांतरप्रलयविषया॥

॥ अथ द्वितीया ॥

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास॥२॥

न। मृत्युः। आसीत्। अमृतं। न। तर्हि। न। रात्र्याः। अह्नः। आसीत्। प्रऽकेतः। आनीत्। अवातं। स्वधया। तत्। एकं। तस्मात्। ह। अन्यत्। न। परः। किं। चन। आस॥२॥

ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स एव संहर्ता मृत्युर्विद्यत इत्यत आह। न मृत्युरासीदिति। ननु यदि स नासीत् तर्हि तदभावकृतममृतममरणं प्राणिनामवस्थानं तदानीमपि स्यात् तत्राह। अमृतं न तर्हीति। तर्हि तस्मिन्प्रतिहारसमये। अयं भावः। सर्वेषां प्राणिनां परिपक्कं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत्तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि संजिहीर्षा जायते। तथैव स मृत्युः सर्वं जगत्संहरत इति किमनेन मृत्युना संहर्त्रा तदभावकृतं वा कथममरणं स्यादिति। एतदेवाभिप्रेत्य कठैराम्नायते। यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनं। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः।२.२५.। इति॥ नन्वेतस्य

सर्वस्याधिकरणभूतः कालो विद्यत इत्यत आह। न राव्या इति। न राव्या अहृश्च प्रकेतः प्रज्ञानमासीत्। तद्धेतुभूतयोः सूर्याचंद्रमसोरभावात्। एतेनाहोरात्रनिषेधेन तदात्मको मासर्तुसंवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः। कथं तर्हि नो सदासीत्तदानीमिति कालवाची प्रत्ययः। उपचारादिति ब्रूमः। यथेदानींतननिषेधस्य कालोऽवच्छेदकस्तथा मायापि तदवच्छेदहेतुरित्यवच्छेदकत्वसाम्येनाकालेऽपि कालवाची प्रत्ययः॥ यदवादिष्म ब्रह्मणः परमार्थसत्त्वमग्रे वक्ष्यत इति तदिदानीं दर्शयत्यानीदिति। तत्सकलवेदांतप्रसिद्धं ब्रह्मतत्त्वमानीत्। प्राणितवत्। नन्वेवं प्राणनकर्तुर्जीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यात् न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः। अप्राणो ह्यमनाः शुभ्र इति तस्य प्राणसंबंधाभावात् तचाहानीदवातमिति। अयमाशयः। आनीदित्यत्र धात्वर्थक्रिया तत्कर्ता तस्य च भूतकालसंबंध इति त्रयोऽर्थाः प्रतीयंते। तत्र समुदायो न विधीयते यथाग्नेयोऽष्टाकपाल इति येन ब्रह्मणः सत्त्वं न स्यात्। किं तर्ह्यनेन कर्तृत्वमनूद्य भूतकालसत्तालक्षणो गुणो विधीयते दध्ना जुहोतीति वाक्यांतरविहिताग्निहोत्रानुवादेन तत्र गुणविधानं। तचाप्यनेन कर्तृत्वविशिष्टस्य न पूर्वकालसत्ता विधीयते तन्निषेधानुपपत्तिप्रसंगात् अतोऽनेन कर्तृत्वेनेदानींतनेनोपलक्षितं यन्निरुपाधिकं परं ब्रह्म तस्यैव भूतकालसत्ता विधीयत इति न कश्चिद्दोष इति॥ नन्वीदृशस्य ब्रह्मणो मायया सह संबंधासंभवात्सांख्याभिमता स्वतंत्रा सद्रूपा सत्त्वरजस्तमोगुणात्मिका मूलप्रकृतिरेवाभिमतेति कथं नो सदिति निषेधः। तचाह स्वधयेति। स्वस्मिन्धीयते ध्रियत आश्रित्य वर्तत इति स्वधा माया। तया तद्ब्रह्मैकमविभागापन्नमासीत्। सहयुक्तेऽप्रधाने। पा॰ २.३.१९। इति तृतीया सहशब्दयोगाभावेऽपि सहार्थयोगे भवति वृद्धो यूनेति निपातनाल्लिंगात्। अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातंत्र्यं निवार्यते। यद्यप्यसंगस्य ब्रह्मणस्तया सह संबंधो न संभवति तथापि तस्मिन्नविद्यया तत्स्वरूपमिव संबंधोऽप्यध्यस्यते यथा शुक्तिकायां रजतस्य। एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातं। ननु यदि माया ब्रह्मणा सहाविभागापन्ना तर्हि तस्या अनिर्वाच्यत्वाद्ब्रह्मणोऽपि तत्प्रसंग इति कथं तस्य सत्त्वमुक्तमानीदवातमिति। ब्रह्मणो वा सत्त्वात्तस्या अपि सत्त्वप्रसंग इति कथं नो सदासीदिति सत्त्वप्रतिषेधः। मैवं। अयुक्तिदृष्टैक्यावभासेऽपि युक्त्या विविच्य मायांशस्यानिर्वाच्यत्वं ब्रह्मणः सत्त्वं च प्रतिपादितं। ननु दृग्दृश्याविति द्वावेव पदार्थावानीदवातं स्वधयेति तौ चेदंगीक्रियेते तत्किमपरमवशिष्यते यन्नासीद्रज इत्यादिना प्रतिषिध्येत तचाह तस्मादिति।

तस्माद्ध तस्मात्खलु पूर्वोक्तान्मायासहिताद्ब्रह्मणोऽन्यत्किं चन किमपि वस्तु भूतभौतिकात्मकं जगन्नास। न बभूव। छंदस्युभयथेति लिटः सार्वधातुकत्वादस्तेर्भूभावाभावः। ननु तदानीमन्यस्य सत्त्वनिषेधो न शंक्यः। असत्त्वे चाप्रसक्तत्वान्न निषेधोपयोग इत्यत आह पर इति। परः परस्तात्सृष्टेरूर्ध्वं वर्तमानमिदं जगत्तदानीं न बभूवेत्यर्थः। अन्यथोक्तरीत्या क्वचिदपि निषेधो न स्यादिति भावः॥

॥ अथ तृतीया ॥

तम॑ आसीत्तम॑सा गू॒ळ्हमग्रे॑ऽप्रके॒तं स॑लि॒लं सर्व॑मा इ॒दं।
तु॒च्छ्येना॒भ्वपि॑हितं॒ यदासी॑त्तप॑स॒स्तन्म॑हि॒नाजा॑य॒तैकं॑॥३॥

तमः॑। आ॒सी॒त्। तम॑सा। गू॒ळ्हं। अग्रे॑। अ॒प्र॒ऽके॒तं। स॒लि॒लं। सर्वं॑। आः॒। इ॒दं।
तु॒च्छ्येन॑। आ॒भु। अपि॑ऽहितं। यत्। आसी॑त्। तप॑सः। तत्। म॒हि॒ना। अ॒जा॒य॒त॒। एकं॑॥३॥

ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत्कथं तर्हि तस्य जन्म। जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात् कारकं च कारणावांतरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वस्यावश्यंभावात्। अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते। कथं तस्य जन्म। अत आह। तमसा गूळ्हमग्र इति। अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत्तमसा गूळ्हं। यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत्। आत्मतत्त्वस्यावरकत्वान्मायापरसंज्ञं भावरूपाज्ञानमत्र तम इत्युच्यते। तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति। आच्छादकात्तस्मात्तमसो नामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते। एतेन कारणावस्थायामसदेव कार्यमुत्पद्यत इत्यसद्वादिनोऽसत्कार्यवादिनो ये मन्यंते ते प्रत्याख्याताः॥ ननु कारणे तमसि तज्जगदात्मकं कार्यं विद्यते चेत् कथं नासीद्रज इत्यादिनिषेधः। तत्राह तम आसीदिति। तमो भावरूपाज्ञानं मूलकारणं। तद्रूपता तदात्मनां। यतः सर्वं जगत्प्राक् तम आसीदतो निषिध्यत इत्यर्थः॥ नन्वावरकत्वादावरकं तमः कर्तृ आवार्यत्वाज्जगत्कर्म। कथं तयोः कर्मकर्त्रोस्तादात्म्यं। तत्राह। अप्रकेतमिति। अप्रकेतमप्रज्ञायमानं। अयमर्थः। यद्यपि जगतस्तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनं। अत एव मनुना स्मर्यते। आसीदिदं तमोभूतमप्रज्ञातमलक्षणं। अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वत इति। कुतो वा न प्रज्ञायते तत्राह। सलिलं। सल गतौ। औणादिक इलच्।

इदं दृश्यमानं सर्वं जगत्सलिलं कारणेन संगतमविभागापन्नमाः। आसीत्॥ अ-स्तेर्लेङि तिपि बहुलं छंदसीतीडभावे हल्ङ्याब्भ्य इति तिलोपे तिप्यनस्तेः। पा॰ ८.२.७३.। इति पर्युदासाद्दकाराभावः॥ यद्वा सलिलमिति लुप्तोपमं। सलिल-मिव। यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसाविभागापन्नं जगन्न शक्यविज्ञानमित्यर्थः॥ ननु विविधविचित्ररूपभूयसः प्रपंचस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः। तथा तमोऽपि क्षीरवज्जलवदित्येवोच्यते। तर्हि दुर्बलस्य जगतः सर्गसमयेऽपि नोद्भवसंभव इत्यत आह। तुच्छ्येनेति। आ समं-ताद्भवतीत्याभु। तुच्छ्येन। छांदसो यकारोपजनः। तुच्छेन तुच्छकल्पनेन सदस-द्विलक्षणेन भावरूपाज्ञानेनापिहितं छादितमासीत्। दधातेः कर्मणि निष्ठा। दधातेर्हि। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। एकमेकीभूतं कारणेन तमसावि-भागतां प्राप्तमपि तत्कार्यजातं तपसः स्रष्टव्यपर्यालोचनरूपस्य महिना माहात्म्ये-नाजायत। उत्पन्नं। तपसः स्रष्टव्यपर्यालोचनरूपत्वं चान्यत्राम्नायते। यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इति॥

॥ अथ चतुर्थी ॥

कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।
सतो बंधुमसति निरविंदन्हृदि प्रतीष्या कवयो मनीषा ॥४॥

कामः। तत्। अग्रे। सं। अवर्तत। अधि। मनसः। रेतः। प्रथमं। यत्। आसीत्।
सतः। बंधुं। असति। निः। अविंदन्। हृदि। प्रतिऽइष्य। कवयः। मनीषा ॥४॥

ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं तदेव किंनि-बंधनमित्यत आह कामस्तदग्र इति। अग्रेऽस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत। सम्यगजायत। सिसृक्षा जातेत्यर्थः। ईश्वरस्य सिसृक्षा वा किंहेतुकेत्यत आह मनस इति। मनसोऽंतःकरणस्य संबंधि वासना-शेषेण मायायां विलीनेऽंतःकरणे समवेतं। सामान्यापेक्षमेकवचनं। सर्वप्राण्यं-तःकरणेषु समवेतमित्यर्थः। एतेनात्मनो गुणाधारत्वं प्रत्याख्यातं। तादृशं रेतो भाविनः प्रपंचस्य वीजभूतं प्रथममतीते कल्पे प्राणिभिः कृतं पुण्यात्मकं कर्म यद्यतः कारणात्सृष्टिसमय आसीत्। अभवत्। भूष्णु वर्धिष्णुजायत परिपक्कं सत्फलोन्मु-खमासीदित्यर्थः। तत्ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षाजायतेत्यर्थः। तस्यां च जातायां स्रष्टव्यं पर्यालोच्य ततः सर्वं

जगत्सृजति। तथा चाम्नायते। सोऽकामयत बहुः स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत यदिदं किंचेति श्रुत्यात्मनेत्थमवगमितेऽर्थे विद्वदनुभवमप्यनुग्राहकत्वेन प्रमाणयति सत इति। सतः सत्त्वेनेदानीमनुभूयमानस्य सर्वस्य जगतो बंधुं बंधकं हेतुभूतं कल्पांतरे प्राण्यनुष्ठितं कर्मसमूहं कवयः क्रांतदर्शना अतीतानागतवर्तमानाभिज्ञा योगिनो हृदि हृदये निरुद्धया मनीषा मनीषया बुद्ध्या। सुपां सुलुगिति तृतीयाया लुक्। प्रतीष्य विचार्य। अन्येषामपीति सांहितिको दीर्घः। असति सद्विलक्षणेऽव्याकृते कारणे निरविंदन्। निःकृष्यालभंत। विविच्याजानन्नित्यर्थः॥

॥ अथ पंचमी ॥

तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त्।
रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥५॥

तिरश्चीनः। विऽततः। रश्मिः। एषां। अधः। स्वित्। आसी३त्। उपरि। स्वित्। आसी३त्।
रेतःऽधाः। आसन्। महिमानः। आसन्। स्वधा। अवस्तात्। प्रऽयतिः। परस्तात्॥५॥

एवमविद्याकामकर्माणि सृष्टेर्हेतुत्वेनोक्तानि। अधुना तेषां स्वकार्यजनने शैघ्र्यं प्रतिपाद्यते। येयं नासदासीदित्यविद्या प्रतिपादिता यश्च कामस्तदग्र इति कामो मनसो रेतः प्रथमं यदासीदिति यत्कर्मैषामविद्याकामकर्मणां वियदादिभूतजातानि सृजतां रश्मी रश्मिसदृशो यथा सूर्यरश्मिरुदयानंतरं निमेषमात्रेण युगपत्सर्वं जगद्व्याप्नोति तथा शीघ्रं सर्वत्र व्याप्नुवन् यः कार्यवर्गो विततो विस्तृत आसीत्। स्विदासीदिति वक्ष्यमाणमत्रापि संबध्यते॥ विचार्यमाणानां। पा॰ ८. २.९७.। इति प्लुतः। तत्रोदात्त इत्यनुवृत्तेः स चोदात्तः। स्विदिति वितर्के॥ स कार्यवर्गः प्रथमतः किं तिरश्चीनस्तिर्यगवस्थितो मध्ये स्थित आसीत् किंवाधोऽधस्तादासीत्। अहोस्विदुपर्युपरिष्टात्किमासीत्। उपरि स्विदासीदिति च। पा॰ ८. २.१०२.। इत्यनुदात्तः प्लुतः। आत्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरित्यादिकया पंचमीश्रुत्या तत उद्गातारं ततो होतारमितिवत्क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत्सर्गस्य शीघ्रव्यापनेन तस्य क्रमस्य दुर्लक्षणत्वादेतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते। एवं नाम शीघ्रं सर्वतो दिक्षु सर्गो निष्पन्न इत्यर्थः। एतदेव विभजते। सृष्टेषु कार्येषु मध्ये केचिद्भावा रेतोधा रेतसो वीजभूतस्य कर्मणो

विधातारः कर्तारो भोक्तारश्च जीवा आसन् अन्ये भावा महिमानः। स्वार्थिक इमनिच्। महांतो वियदादयो भोग्या आसन्। एवं मायासहितः परमेश्वरः सर्वं जगत्सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः। अयमेवार्थस्तैत्तिरीयके तत्सृष्ट्वा तदेवानुप्राविशदित्यारभ्य प्रतिपाद्यते। तत्र च भोक्तृभोग्ययोर्मध्ये स्वधा। अन्ननामैतत्। भोग्यप्रपंचोऽवस्तादवरो निकृष्ट आसीत्। प्रयतिः प्रयतिता भोक्ता परस्तात्पर उत्कृष्ट आसीत्। भोग्यप्रपंचं भोक्तृप्रपंचस्य शेषभूतं कृतवानित्यर्थः। विभाषा परावराभ्यां। पा॰ ५. ३. २९.। इति प्रथमार्थेऽस्तातिः। अस्ताति चेत्यवरशब्दस्यावादेशः। अवस्तादिति संहितायामीषा अक्षादित्वात्प्रकृतिभावः॥

॥ अथ षष्ठी ॥

को अद्धा वेद क इह प्र वोचत्कुत आजाता कुत इयं विसृष्टिः।

अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ॥६॥

कः। अद्धा। वेद। कः। इह। प्र। वोचत्। कुतः। आऽजाता। कुतः। इयं। विऽसृष्टिः।

अर्वाक्। देवाः। अस्य। विऽसर्जनेन। अथ। कः। वेद। यतः। आऽबभूव ॥६॥

एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता। एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद इतिवत्। अथेदानीं सा सृष्टिर्दुर्विज्ञानेति न विस्तरेणाभिहितेत्याह। को अद्धेति। कः पुरुषोऽद्धा पारमार्थ्येन वेद। जानाति। को वेहास्मिँल्लोके प्र वोचत् प्रब्रूयात्। इयं दृश्यमाना विसृष्टिर्विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः कस्मादुपादानकारणात् कुतः कस्माच्च निमित्तकारणादाजाता। समंताज्जाता। प्रादुर्भूता। एतदुभयं सम्यक्को वेद। को वा विस्तरेण वक्तुं शक्नुयादित्यर्थः। ननु देवा अजानंतः। सर्वज्ञास्ते ज्ञास्यंति वक्तुं च शक्नुवंतीत्यत आह। अर्वागिति। देवाश्चास्य जगतो विसर्जनेन वियदादिभूतोत्पत्त्यनंतरं विविधं यद्भौतिकं सर्जनं सृष्टिस्तेनार्वागर्वाचीनाः कृताः। भूतसृष्टेः पश्चाज्जाता इत्यर्थः। तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः। अजानंतो वा कथं प्रब्रूयुः। उक्तं दुर्विज्ञानत्वं निर्गमयति। अथैवं सति देवा अपि न जानंति किल। तद्व्यतिरिक्तः को नाम मनुष्यादिर्वेद तज्जगत्कारणं जानाति यतः कारणात्कृत्स्नं जगदाबभूव। अजायत॥

॥ अथ सप्तमी ॥

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योमन्त्सो अंग वेद यदि वा न वेद ॥७॥
इयं। विऽसृष्टिः। यतः। आऽबभूव। यदि। वा। दधे। यदि। वा। न।
यः। अस्य। अधिऽअक्षः। परमे। विऽओमन्। सः। अंग। वेद। यदि। वा। न। वेद ॥७॥

उक्तप्रकारेण यथेदं जगत्सर्जनं दुर्विज्ञानमेवं सृष्टं तज्जगद्धर्रमपीत्याह। इयमिति। यत उपादानभूतात्परमात्मन इयं विसृष्टिर्विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिराबभूवाजाता सोऽपि किल यदि वा दधे धारयति यदि वा न धारयति। एवं च को नामान्यो धर्तुं शक्नुयात्। यदि धारयेदीश्वर एव धारयेन्नान्य इत्यर्थः। एतेन कार्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मण उपादानकारणत्वमुक्तं भवति। तथा च पारमार्षं सूत्रं। प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधात्।१.४.२३.। इति। यद्वानेनार्धर्चेन पूर्वोक्तं सृष्टेर्दुर्ज्ञानत्वमेव दृढयति। को वेदेत्यनुवर्तते। इयं विविधा सृष्टिर्यत आबभूवा समंतादजायतेति को वेद। न कोऽपि। नास्त्येव जगतो जन्म कदाचिदनीदृशं जगदिति बहवो भ्रांता भवंत्यपि। यतः। जनिकर्तुः प्रकृतिरित्यपादानसंज्ञायां पंचम्यास्तसिल्। यस्मात्परमात्मन उपादानभूतादाबभूव तं परमात्मानं को वेद। न कोऽपि। प्रकृतितः परमाणुभ्यो वा जगज्जन्मेति हि बहवो भ्रांताः। तथा स एवोपादानभूतः परमात्मा स्वयमेव निमित्तभूतोऽपि सन् यदि वा दधे विदध इदं जगत्ससर्ज यदि वा न ससर्ज। असंदिग्धे संदिग्धवचनमेतच्छास्त्राणि चेत्प्रमाणं स्युरिति यथा। स एव विदधे। तं को वेद। अजानंतोऽपि बहवो जडात्प्रधानादकर्तृकमेवेदं जगत्स्वयमजायतेति विपरीतं प्रतिपन्ना विदधतो विधानमजानंतोऽपि। स एवोपादानभूत इत्यपि को वेद। न कोऽपि। उपादानादन्यस्तटस्थ एवेश्वरो विदध इति हि बहवः प्रतिपन्नाः। देवा अपि यन्न जानंति तदर्वाचीनानामेषां तत्परिज्ञाने कैव कथेत्यर्थः। यद्येवं जगत्सृष्टिरत्यंतदुरवबोधना तर्हि सा प्रमाणपद्धतिमध्यास्त इत्याशंक्य तत्सद्भाव ईश्वरो वेदं प्रमाणयति। यो अस्येति। अस्य भूतभौतिकात्मकस्य जगतो योऽध्यक्ष ईश्वरः परम उत्कृष्टे सत्यभूते व्योमन् व्योमन्याकाश आकाशवन्निर्मले स्वप्रकाशे। यद्वा। अवतेस्तर्पणार्थादन्येभ्योऽपि दृश्यंत इति मनिन्। नेड्वशि कृतीतीट्प्रतिषेधः। ज्वरत्वरेत्यादिना वकारोपधयोरूठ्। सप्तम्या लुक्। न ङिसंबुद्ध्योरिति नलोपप्रतिषेधः।

व्योमनि विशेषेण तृप्ते। निरतिशयानंदस्वरूप इत्यर्थः। यद्वावतिर्गत्यर्थः। व्योमनि विशेषेण गंतव्ये देशकालवस्तुभिरपरिच्छिन्न इत्यर्थः। अथवावतिर्ज्ञानार्थः। व्योमनि विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि। ईदृशे स्वात्मनि प्रतिष्ठितः। श्रूयते हि सनत्कुमारनारदयोः संवादे। स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि।छां॰ उ॰ ७.२४.। इति। ईदृशो यः परमेश्वरः सो अंग। अंगेति प्रसिद्धौ। सोऽपि नाम वेद जानाति। यदि वा न वेद न जानाति को नामान्यो जानीयात्। सर्वज्ञ ईश्वर एव तां सृष्टिं जानीयात् नान्य इत्यर्थः॥

॥ इत्यष्टमस्य सप्तमे सप्तदशो वर्गः॥

यो यज्ञ इति सप्तर्चं द्वितीयं सूक्तं प्रजापतिपुत्रस्य यज्ञाख्यस्यार्षं। आद्या जगती शिष्टास्त्रिष्टुभः। अत्रापि यज्ञादीनां केषांचिद्भावानां सृष्टिः प्रतिपाद्यते। अतः स्रष्टव्यत्वेन प्रधानभूतो योऽर्थः सैव देवता। तत्कर्ता प्रजापतिरेव देवता। तथा चानुक्रांतं। यो यज्ञो यज्ञः प्राजापत्यो जगत्याद्येति। गतो विनियोगः॥

॥ तत्र प्रथमा॥

यो यज्ञो विश्वतस्तंतुभिस्तत एकशतं देवकर्मेभिरायतः।
इमे वयंति पितरो य आययुः प्र वयाप वयेत्यासते तते॥१॥
यः। यज्ञः। विश्वतः। तंतुऽभिः। ततः। एकऽशतं। देवऽकर्मेभिः। आऽयतः।
इमे। वयंति। पितरः। ये। आऽययुः। प्र। वय। अप। वय। इति। आसते। तते॥१॥

तंतुभिस्तनितृभिर्विस्तारयितृभिर्वियदादिभूतैर्यः सर्गात्मको यज्ञो विश्वतः सर्वतस्ततो विस्तृतः। तथैकशतं। एकं च शतं चैकशतं। संख्येति पूर्वपदप्रकृतिस्वरत्वं। एकोत्तरशतमित्यर्थः। ब्रह्मा येषु शतसंख्येष्वात्मीयसंवत्सरेषु जीवति तदभिप्रायेणात्र शतसंख्या। जीवता तेन प्रजापतिना सार्धमेकशतमित्युच्यते। यथा शतायुर्वै पुरुषः शतवीर्य आत्मैकशत इति। अत्यंतसंयोगे द्वितीया। ब्रह्मणः शतसंवत्सरपर्यंतं देवकर्मेभिर्देवानुद्दिश्य भोक्तृभिः कृतैः कर्मभिरायतः। दीर्घीभूतः। तावत्कालावस्थायी। एवमायामविस्तारवान्। ¯ ¯। पितरः पालकाः प्रजापतेः प्राणभूता विश्वसृजो देवा वयंति। निर्मिमते। ये देवा आययुः स्रष्टव्यं सर्वं जगत्स्ववयनेन व्यापुः। अपि च प्र वयाप वयेति। प्रवाणं नाम प्रकृष्टस्य चेतनस्य भोक्तृप्रपंचस्य सर्जनं। अपवानं नामापकृष्टस्य निकृष्टस्याचेतनस्य भोग्यप्रपंचस्य सर्जनं। वेञ्

तंतुसंताने । समुच्चयेऽन्यतरस्यां । पा॰ ३.४.३. । इति लोट् । तस्य लोटो हिस्वावित्यनुवृत्तेर्हिरादेशः । शब्गुणायादेशाः । अतो हेरिति लुक् । प्र वयाप वयेति वयंतः प्रवाणमपवानं च कुर्वंत इत्यर्थः । एवंभूताः संतस्ते विश्वसृजस्तते विस्तृते सत्यलोक आसते । प्राणरूपेण प्रजापतिमुपासते ॥

यद्वा ज्योतिष्टोमादिर्यज्ञ एवंरूपकत्वेन पटात्मना वर्ण्यते । यो यज्ञो ज्योतिष्टोमादिस्तंतुभिस्तंतुस्थानीयैरग्निष्टोमात्यग्निष्टोमादिसंस्थाभेदैः सप्तभिश्छंदोभिर्वा सर्वतो विश्वतस्ततो विस्तृतः । तथैकशतं । तृतीयार्थे प्रथमा । एकाधिकेनाग्निचयनेन युक्तैर्देवकर्मेभिर्गवामयनप्रभृतिकैर्विश्वसृजामयनांतैरेकाहादिसत्रात्मकैर्वायतो दीर्घीभूत एवमायतो विस्तारवान्यज्ञात्मकोऽयं पटः प्रजापतिना सृष्टः । तं पटं पितरोऽस्माकं पितृभूता इमेऽंगिरसो वयंति । तस्य पटस्य प्राचीनतंतुस्थानीयानि स्तुतशस्त्राणि प्र वय त्वं कुरु अप वय तिरश्चीनतंतुस्थानीयानि यजूंषि त्वं कुर्वित्येवं परस्परं नियुंजाना आसते । नियुंजंति ॥ एवं विस्तृतस्य यज्ञस्य प्रजापतेः सकाशादुत्पत्तिरुत्तरया प्रतिपाद्यते ॥

॥ सैषा द्वितीया ॥

पुमाँ एनं तनुत उत्कृणत्ति पुमान्वि तत्ने अधि नाके अस्मिन् ।
इमे मयूखा उप सेदुरू सदः सामानि चक्रुस्तसराण्योतवे ॥२॥

पुमान् । एनं । तनुते । उत् । कृणत्ति । पुमान् । वि । तत्ने । अधि । नाके । अस्मिन् ।
इमे । मयूखाः । उप । सेदुः । ऊं इति । सदः । सामानि । चक्रुः । तसराणि । ओतवे ॥२॥

पुमान् पुरुष आदिपुरुषः प्रजापतिरेनं यज्ञं तनुते । विस्तारयति । सृष्टवानित्यर्थः । तथा च ब्राह्मणं । स प्रजापतिर्यज्ञमतनुत तमाहरत्तेनायजतेति । प्रजापतिर्यज्ञमसृजत यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येतामिति च । स एव पुमान् सृष्टं तं यज्ञमुत्कृणत्ति । उद्वेष्टयति । कृती वेष्टने । रौधादिकः । स एव पुमान् प्रजापतिरस्मिन्भूलोके नाके । अकं दुःखं नास्त्यस्मिन्निति नाकः स्वर्गलोकः । नभ्राण्नपादित्यादिना नञः प्रकृतिभावः । तत्र च वि तत्ने । इमं यज्ञं विस्तारयति । अधिः सप्तम्यर्थानुवादी । तनोतेर्लिटि तनिपत्योश्छंदसीत्युपधालोपः । तस्य स्थानिवद्भावाद्द्विर्वचनं । मयूखा रश्मिभूतास्तस्य प्रजापतेः प्राणात्मका इमे विश्वसृजो देवाः सदः सदनं देवयजनस्थानमुप सेदुः । विश्वसर्जनहेतुभूतं विश्वसृजामयनाख्यं यज्ञं कर्तुमुपसीदंति ।

उपसद्य च सामानि रथंतरादीन्योतवे वयनाय यज्ञाख्यं वस्त्रमोतुं तसराणि तिर्यक्सराणि तिरश्चीनसूत्राणि चक्रुः ॥

॥ अथ तृतीया ॥

कासीत्प्रमा प्रतिमा किं निदानमाज्यं किमासीत्परिधिः क आसीत्।
छंदः किमासीत्प्रउगं किमुक्थं यद्देवा देवमयजंत विश्वे ॥३॥

का। आसीत्। प्रऽमा। प्रतिऽमा। किं। निऽदानं। आज्यं। किं। आसीत्। परिऽधिः।
कः। आसीत्।
छंदः। किं। आसीत्। प्रउगं। किं। उक्थं। यत्। देवाः। देवं। अयजंत। विश्वे ॥३॥

विश्वसर्जनोपायत्वेन प्रजापतिना सृष्टे यज्ञे विश्वस्य स्रष्टारो विश्वसृजो देवा विश्वसर्जनाय तं यज्ञमन्वतिष्ठन्। तस्मिन्समये जगतोऽनुत्पत्तेर्जगदंतःपातिनो यागोपकरणभूताः पदार्थाः कथमासन्नित्यनया प्रश्नः क्रियते। यद्यदा विश्वे सर्वे साध्या देवा देवं प्रजापतिमयजंत तदानीं तस्य यज्ञस्य प्रमा प्रमाणमियत्ता का कथंभूतासीत्। तथा प्रतिमा हविःप्रतियोगित्वेन मीयते निर्मीयत इति प्रतिमा देवता। सा च तस्य यज्ञस्य कासीत्। तथा निदानमादिकारणं यागेऽप्रवृत्तस्य प्रवर्तकं फलं किमासीत्। तथाज्यं घृतमेतदुपलक्षितं हविर्वा तस्य यज्ञस्य किमासीत्। तथा परिधिः। परितो धीयंत इति त्रयः परिधयो बाहुमात्राः पलाशादिवृक्षजन्याः। परिपूर्वाद्दधातेरुपसर्गे घोः किरिति किप्रत्ययः। सामान्यापेक्षमेकवचनं। परिधयः क आसन्नित्यर्थः। तथा तस्य यज्ञस्य गायत्र्यादिकं छंदः किमासीत्। तथा प्रउगमुक्थं। उपलक्षणमेतत्। आज्यप्रउगादीन्युक्थानि शस्त्राणि वा कान्यासन्। एतेषु प्रश्नेषु त्रयाणामुत्तरं तृचेनाह ॥

॥ अथ चतुर्थी ॥

अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहया सविता सं बभूव।
अनुष्टुभा सोम उक्थैर्महस्वान्बृहस्पतेर्बृहती वाचमावत् ॥४॥

अग्नेः। गायत्री। अभवत्। सऽयुग्वा। उष्णिहया। सविता। सं। बभूव।
अनुऽस्तुभा। सोमः। उक्थैः। महस्वान्। बृहस्पतेः। बृहती। वाचं। आवत् ॥४॥

सयुग्वा सहयुक्ताग्नेः सहायभूता गायत्र्यभवत्। यष्टव्यात्प्रजापतेर्मुखादजायत।

देवतासु मध्येऽग्निश्छंदःसु गायत्री चोभावप्यजायेतामित्यर्थः। तथा च तैत्तिरीयकं। प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्री छंद इति। उष्णिहयोष्णिक्छंदसा सह सविता देवः सं बभूव। तस्मात्प्रजापतेर्जज्ञे। टापं चापि हलंतानामिति वचनादुष्णिहशब्दाट्टाप्। तथा महस्वान् तेजस्वी सोम उक्थैः स्तुतशस्त्रैरनुष्टुभानुष्टुप्छंदसा च सार्धं तस्मादेव प्रजापतेरजायत। तथा बृहस्पतेर्देवस्य वाचं वाक्यं बृहतीछंद आवत्। अरक्षत्। अगच्छद्वा। बृहत्या सार्धं बृहस्पतिरपि तस्मात्प्रजापतेर्जज्ञ इत्यर्थः ॥

॥ अथ पंचमी ॥

विराण्मित्रावरुणयोरभिश्रीरिंद्रस्य त्रिष्टुबिह भागो अह्नः।

विश्वान्देवाञ्जगत्या विवेश तेन चाकॢप्र ऋषयो मनुष्याः ॥५॥

विऽराट्। मित्रावरुणयोः। अभिऽश्रीः। इंद्रस्य। त्रिऽस्तुप्। इह। भागः। अह्नः।

विश्वान्। देवान्। जगती। आ। विवेश। तेन। चाकॢप्रे। ऋषयः। मनुष्याः ॥५॥

अपि च मित्रावरुणयोर्देवयोर्विराट्छंदोऽभिश्रीः। अभिश्रिता। आश्रितासीत्। विराजा सह मित्रावरुणावपि प्रजापतेः सकाशादजायेतामित्यर्थः। इहास्मिन्यज्ञेऽह्नः सवनत्रयरूपस्य भागो मध्यंदिनसवनाख्योंऽशस्त्रिष्टुप्छंदश्चेंद्रस्याभिश्रयणीयावास्तां। ताविंद्रश्च प्रजापतेः सकाशादजायंतेत्यर्थः। तथा च तैत्तिरीयकं। उरसो बाहुभ्यां पंचदशं निरमिमीत तमिंद्रो देवतान्वसृज्यत त्रिष्टुप्छंदो बृहत्सामेति। तथा विश्वान्सर्वान्देवाञ्जगतीछंद आ विवेश। प्रविष्टवती। विश्वे देवा जगती च प्रजापतेरजायंतेत्यर्थः। तथा च तैत्तिरीयकं। तं विश्वे देवा देवता अन्वसृज्यंत जगती छंदो वैरूपं सामेति। उक्तेन प्रकारेण प्रतिमा कासीत् छंदः किमासीत् प्रउगं किमुक्थमिति त्रयाणामुत्तरं जातं। आज्यं किमासीत् परिधिः क आसीदित्यनयोरुत्तरं पुरुषसूक्ते।१०.९०.। द्रष्टव्यं। तत्र ह्येवमाम्नायते देवा यज्ञमतन्वत वसंतो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः। सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृता इति। अयमर्थः। सर्वरसोत्पादको वसंतस्तस्य जगत्सर्जनसाधनस्य यज्ञस्याज्यमासीत् आज्यदध्यादिभी रसैः सार्धं तादृशो वसंतोऽजायतेत्यर्थः। सर्वरसानां शोषको ग्रीष्म ऋतुरिध्म आसीत् शुष्कैः काष्ठैः सार्धं ग्रीष्मोऽजायतेत्यर्थः। पच्यमानव्रीहियुक्तः शरदृतुस्तस्य यज्ञस्य हविरासीत्। सप्त छंदांसि त्रिः सप्तैकविंशतिधा भूत्वाष्टादश समिधस्त्रयः परिधयश्चासन्। कासीत्प्रमा प्रतिमा किं निदानमि-

त्यनयोरपि प्रश्नयोरप्येवमुत्तरं पूर्वे विश्वसृजोऽमृताः शतं वर्षसहस्राणि दीक्षिताः सत्रमासतेति एतेन वै विश्वसृज इदं विश्वमसृजंतेति च तैत्तिरीयके। तै॰ ब्रा॰ ३. १२.९.। समाम्नायते। अतस्तस्य यज्ञस्य सहस्रसंवत्सरपरिमितः कालः प्रमाणं। विश्वस्य जगतः सर्जनमादिकारणं प्रवर्तकं फलमित्यर्थः। एतदुक्तं भवति। यदा विश्वसृजो देवा देवं प्रजापतिं विश्वसृजामयनाख्येन यागेनायजन् तदोक्ताः सर्वे-यागोपकाराः प्रजापतेः सकाशादजायंतेति। यतोऽग्न्यादिदेवताभिः सह गायत्र्यादीनि सप्त छंदांसि जातान्यतो हेतोस्तेषां छंदसामग्न्यादयो देवता इति। छंदोविचितौ सूचितं च। अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविंद्रो विश्वे देवा देवता इति। एवं प्राजापत्यो यज्ञोऽनुष्ठितः। तेन यज्ञेनर्षयो मनुष्याश्च चाक्लृप्रे। चक्लृपिरे। क्लृप्ताः सृष्टा आसन्। कृपेः कर्मणि लिटीरयोरिति रेआदेशः। कृपो रो लः। पा॰ ८.२.१८.। इति लत्वं। तुजादित्वादभ्यासदीर्घः। तेनैव यज्ञेन सर्वं जगदसृजन्नित्यर्थः॥

॥ अथ षष्ठी ॥

चा॒क्लृ॒प्रे तेन॒ ऋष॑यो मनु॒ष्या॑ य॒ज्ञे जा॒ते पि॒तरो॑ नः पुरा॒णे।
पश्य॑न्मन्ये॒ मन॑सा॒ चक्ष॑सा॒ तान्य इ॒मं य॒ज्ञमय॑जंत॒ पूर्वे॑ ॥६॥
चा॒क्लृ॒प्रे। तेन॑। ऋष॑यः। म॒नु॒ष्या॑ः। य॒ज्ञे। जा॒ते। पि॒तरः॑। नः॒। पु॒रा॒णे।
पश्य॑न्। म॒न्ये॒। मन॑सा। चक्ष॑सा। तान्। ये। इ॒मं। य॒ज्ञं। अय॑जंत। पूर्वे॑ ॥६॥

पुराणे चिरंतनेऽस्मिन्यज्ञे जाते विश्वसृड्भिर्देवैः सम्यगनुष्ठिते सति तेन यज्ञेनर्षयो मनुष्या नोऽस्माकं पितरः पूर्वपुरुषाश्च चाक्लृप्रे। अकल्प्यंत। असृज्यंत। इममीदृशं यज्ञं ये पूर्वे साध्या देवाः प्रजापतेः प्राणभूता अयजंतान्वतिष्ठन् तान्देवान्प्राणात्मना सर्वत्र वर्तमानांश्चक्षसा दर्शनहेतुना मनसा पश्यन् जानन्मन्ये। तानेव विश्वस्रष्टृन्देवान् स्तौमि। मन्यतिरर्चतिकर्मा॥

॥ अथ सप्तमी ॥

स॒हस्तो॑माः स॒हछं॑दस आ॒वृतः॑ स॒हप्र॑मा॒ ऋष॑यः स॒प्त दैव्याः॑।
पूर्वे॑षां॒ पंथा॑मनु॒दृश्य॒ धीरा॑ अ॒न्वाले॑भिरे र॒थ्यो॑३॒न र॒श्मीन् ॥७॥
स॒हऽस्तो॑माः। स॒हऽछं॑दसः। आ॒ऽवृतः॑। स॒हऽप्र॑माः। ऋष॑यः। स॒प्त। दैव्याः॑।
पूर्वे॑षां। पंथा॑ं। अ॒नु॒ऽदृश्य॑। धीरा॑ः। अ॒नु॒ऽआ॒ले॑भिरे। र॒थ्य॑ः। न। र॒श्मीन् ॥७॥

स्तोमैः त्रिवृत्पंचदशादिभिः सह वर्तमानाः सहस्तोमाः । सहच्छंदसो गायत्र्यादिभिश्छंदोभिः सह वर्तमाना आवृत आवर्तमानाः सहप्रमाः । प्रमितिः प्रमा यज्ञस्येयत्तापरिज्ञानं । तेन सह वर्तमाना दैव्या देवस्य प्रजापतेः संबंधिनः । यद्वा देवानां यष्टव्यानां संबंधिन ऋषयो द्रष्टारः सप्तसंख्याकाः शीर्षण्याः । यद्वा मरीचिप्रमुखाः सप्तर्षयो होत्रादयः सप्त वषट्कर्तारो वा । एवंविधा एते पूर्वेषां पूर्वपुरुषाणामंगिरःप्रभृतीनां विश्वसृजां देवानां वा पंथां पंथानमनुष्ठानमार्गमनुदृश्य क्रमेण ज्ञात्वा धीरा धीमंतः संतोऽन्वालेभिरे । अनुक्रमेणारब्धवंतः । यागानुष्ठाने प्रवृत्ता इत्यर्थः । रथ्यो न । यथा रथिनो रथेन युक्ता रथस्य नेतारः सूता रश्मीनश्वनियोजनार्थान्प्रग्रहान् सम्यग्रथस्य नयनाय हस्तेनान्वारभंते । अन्वारभ्य च सम्यक् तं रथं प्रवर्तयंति एवमेतेऽप्यनुष्ठानमार्गं श्रुतितोऽवगम्य सम्यगन्वतिष्ठन्नित्यर्थः ॥

॥ इत्यष्टमस्य सप्तमेऽष्टादशो वर्गः ॥

अप प्राच इति सप्तर्चं तृतीयं सूक्तं कक्षीवतः पुत्रस्य सुकीर्तेरार्षं । चतुर्थ्यनुष्टुप् शिष्टाः षट् त्रिष्टुभः । चतुर्थीपंचम्यावश्विदेवत्ये शिष्टा ऐंद्र्यः । तथा चानुक्रांतं । अप प्राचः सुकीर्तिः काक्षीवतो मध्येऽनुष्टुप्सोत्तरा चाश्विन्याविति ॥ षष्ठेऽहनि ब्राह्मणाच्छंसिन उक्थशस्त्र एतत्सूक्तं । सूचितं च । सुकीर्तिं ब्राह्मणाच्छंसी वृषाकपिं च पंक्तिशंसं । आ॰ ८.४. । इति ॥ चातुर्विंशिकेऽहनि माध्यंदिने सवने मैत्रावरुणस्याप प्राच इत्येषारंभणीया कद्वत्प्रगाथानंतरं शंसनीया । सूचितं च । कद्वंतः प्रगाथा अप प्राच इंद्र विश्वाँ अमित्रान् । आ॰ ७.४. । इति ॥ अहर्गणेष्वपि द्वितीयादिष्वहःसु तस्यैव तस्मिन्नेव शस्त्र आरंभणीया । सूचितं च । आरंभणीयाः पर्यासान्कद्वतोऽहरहः शस्यानीति होत्रका द्वितीयादिष्वेव । आ॰ ७.१. । इति ॥

॥ सैषा प्रथमा ॥

अप प्राच इंद्र विश्वाँ अमित्रानपापाचो अभिभूते नुदस्व ।
अपोदीचो अप शूराधराच उरौ यथा तव शर्मन्मदेम ॥१॥

अप । प्राचः । इंद्र । विश्वान् । अमित्रान् । अप । अपाचः । अभिऽभूते । नुदस्व ।
अप । उदीचः । अप । शूर । अधराचः । उरौ । यथा । तव । शर्मन् । मदेम ॥१॥

हे इंद्र प्राचः प्रमुखमंचतः प्राग्देशे वर्तमानान् । अस्मत्तः पूर्वभागे वर्तमानानित्यर्थः । प्रपूर्वादंचतेर्ऋत्विगित्यादिना क्विन् । अनिदितामिति नलोपः । शस्यच

इत्यकारलोपे चाविति दीर्घत्वं। अनिगंतोऽंचतौ वप्रत्यय इति गतेः प्रकृतिस्वरत्वं। तादृशान्विश्वान्सर्वानमित्राञ्शत्रूनप नुदस्व। अस्मत्तोऽपगमय। तथा हे अभिभूते शत्रूणामभिभवितरिंद्रापाचोऽपमुखमंचतः पृष्ठभागे वर्तमानान्सर्वाञ्शत्रूनप नुदस्व। अपि चोदीच ऊर्ध्वमंचत उपरिवर्तमानान्। उत्पूर्वादंचतेः पूर्ववत्क्विन्युद ईदित्यंचतेरकारस्येकारः। पूर्ववत्स्वरः। तथाविधानपि शत्रूनप नुदस्व। तथा हे शूर शौर्यवन्निंद्राधराचोऽधरदेशमधोभागमंचतश्चाधस्तनानपि शत्रूनप नुदस्व। अधरशब्दोपपदादंचतेः शसि पूर्ववत्प्रक्रिया। चाविति पूर्वपदस्यांतोदात्तः। उरौ विस्तीर्णे तव संबंधिनि त्वया दत्ते शर्मन् शर्मणि गृहे सुखे वा यथा वयं मदेम निरुपद्रवाः संतो हृष्येम तथा त्वं सर्वत्र वर्तमानानस्मदीयाञ्शत्रून्विनाशयेत्यर्थः॥

॥ अथ द्वितीया ॥

कुविदंग यवमंतो यवं चिद्यथा दांत्यनुपूर्वं वियूय।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः॥२॥
कुवित्। अंग। यवऽमंतः। यवं। चित्। यथा। दांति। अनुऽपूर्वं। विऽयूय।
इहऽइह। एषां। कृणुहि। भोजनानि। ये। बर्हिषः। नमःऽवृक्तिं। न। जग्मुः॥२॥

अंग हे इंद्र यवमंतो यवादिधान्ययुक्ताः कर्षका यवं चित्। उपलक्षणमेतत्। यवगोधूमादीन् अनुपूर्वं यो यो धान्यविशेषः प्रथमं पच्यते तेनानुपूर्व्येण वियूय पृथक्कृत्य यथा कुविद्बहुलं दांति लुनंति। दाप् लवने। आदादिकः। विपूर्वाद्यौतेर्ल्यपि युप्लुवोर्दीर्घश्छंदसि। पा॰ ६.४.५८.। इति दीर्घः। एवमिहेहास्मिन्नस्मिन्देशे सर्वस्मिन्नेषां यजमानानां भोजनानि। धननामैतत्। भोगसाधनानि धनानि कृणुहि। कुरु। यस्मिन्यस्मिन्देशे यद्धनमपेक्षितं तदनुगुणं प्रयच्छेत्यर्थः। उतश्च प्रत्ययाच्छंदसि वावचनमिति हेर्लुगभावः। एषामित्युक्तं के पुनरिम इत्यत आह। ये यजमाना बर्हिषो यज्ञस्य नमोवृक्तिं नमसो हविर्लक्षणस्यान्नस्य नमस्कारात्मकस्य स्तोत्रस्य वा वर्जनमकरणं न जग्मुर्न प्राप्नुवंति किंतु सर्वदा हविर्भिर्यजंति। स्तुतिभिः स्तुवंति च। एषां कृणुहीत्यन्वयः॥

॥ अथ तृतीया ॥

नहि स्थूर्यृतुथा यातमस्ति नोत श्रवो विविदे संगमेषु।
गव्यंत इंद्रं सख्याय विप्रा अश्वायंतो वृषणं वाजयंतः॥३॥

नहि। स्थूरि। ऋतुऽथा। यातं। अस्ति। न। उत। श्रवः। विविदे। संऽगमेषु।
गव्यंतः। इंद्रं। सख्याय। विप्राः। अश्वऽयंतः। वृषणं। वाजयंतः ॥३॥

एकेन धुर्येण युक्तमनः स्थूरीत्युच्यते। ऋतुथर्तौ। यद्यस्मिन्काले प्राप्तव्यं तद्योग्यकाले स्थूर्यनो यातं तं देशं प्राप्तं नह्यस्ति। न हि भवति। एकेन धुर्येण युक्तः शकटः शीघ्रं गंतव्यं न प्राप्नोतीत्यर्थः। उतापि च संगमेषु संग्रामेषु श्रवोऽन्नं यशो वा न विविदे। न लभते। इंद्रस्तूक्तविलक्षणः। वृषणं वर्षितारं तमिंद्रं गव्यंतो गा इच्छंतो विप्रा मेधाविनो वयं सख्याय सखिकर्मण आह्वयाम इति शेषः। कथंभूताः। अश्वायंतोऽश्वानप्यात्मन इच्छंतः। वाजयंतोऽन्नकामा बलकामाश्च ॥

सौत्रामण्यां सुराग्रहाणां पुरोनुवाक्या युवमित्येषा। सूत्रितं च। युवं सुराममश्विनेति ग्रहाणां पुरोनुवाक्या। आ० ३.९.। इति ॥

॥ सैषा चतुर्थी ॥

युवं सुराममश्विना नमुचावासुरे सचा।
विपिपाना शुभस्पती इंद्रं कर्मस्वावतं ॥४॥

युवं। सुरामं। अश्विना। नमुचौ। आसुरे। सचा।
विऽपिपाना। शुभः। पती इति। इंद्रं। कर्मऽसु। आवतं ॥४॥

हे अश्विनाश्विनौ हे शुभस्पती उदकस्य शोभनालंकारस्य वा पती पालयितारौ सुरामं सुष्ठु रमणसाधनमिदं हविर्विपिपाना विशेषेण पीतवंतौ युवं युवां सचा संतौ संगतावासुरेऽसुरपुत्रे नमुचावेतत्संज्ञेऽसुरे हंतव्ये सति कर्मसु योधनकर्मस्विंद्रमावतं। अरक्षतं। विपिपाना। पा पान इत्यस्माल्लिटः कानच्। बहुलं छंदसीत्यभ्यासस्येत्वं। शुभस्पती इति सुबामंत्रित इति षष्ठ्यंतस्य परांगवद्भावात्षष्ठ्यामंत्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वं ॥

पूर्वोक्तानामेव ग्रहाणां पुत्रमिवेति याज्या। सूत्रितं च। पुत्रमिव पितरावश्विनोभेति याज्या। आ० ३.९.। इति ॥

॥ सैषा पंचमी ॥

पुत्रमिव पितरावश्विनोभेंद्रावथुः काव्यैर्दंसनाभिः।
यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥५॥

पुत्रंऽइव। पितरौ। अश्विना। उभा। इंद्र। आवथुः। काव्यैः। दंसनाभिः।
यत्। सुऽरामं। वि। अपिबः। शचीभिः। सरस्वती। त्वा। मघऽवन्। अभिष्णक्॥५॥

हे इंद्र त्वां पितरौ मातापितरौ पुत्रमिव। पिता मात्रेति पितुः शेषः। उभौ-भावश्विनौ काव्यैः प्रशस्यैर्दंसनाभिरात्मीयैः कर्मभिरावथुः। मध्यमो व्यत्ययेन। आवतुः। ररक्षतुः। त्वं च सुरामं सुखेन रमणसाधनं हविर्यद्यदा शचीभिः शक्तिभिः सार्धं व्यपिबो विशेषेण पीतवानसि तदा हे मघवन्धनवन्निंद्र सरस्वती देवी त्वा त्वामभिष्णक्। उपासेवत। भिष्णक् उपसेवायां। कंड्वादिः। छांदसो यगभावः। लङि बहुलं छंदसीति शपो लुक्। हल्ङ्याब्भ्य इति लोपः॥

॥ अथ षष्ठीसप्तम्यौ ॥

इंद्रः सुत्रामा स्ववाँ अवोभिः सुमृळीको भवतु विश्ववेदाः।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम॥६॥

इंद्रः। सुऽत्रामा। स्वऽवान्। अवःऽभिः। सुऽमृळीकः। भवतु। विश्वऽवेदाः।
बाधतां। द्वेषः। अभयं। कृणोतु। सुऽवीर्यस्य। पतयः। स्याम॥६॥

तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम।
स सुत्रामा स्ववाँ इंद्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु॥७॥
तस्य। वयं। सुऽमतौ। यज्ञियस्य। अपि। भद्रे। सौमनसे। स्याम।
सः। सुऽत्रामा। स्वऽवान्। इंद्रः। अस्मे इति। आरात्। चित्। द्वेषः। सनुतः। युयोतु॥७॥

त्रातारमिंद्रमित्यस्मिन्वर्गे।४.७.३२.। व्याख्याते। अक्षरार्थस्तु सुत्राता धनवान् सर्वस्य वेदितेंद्रो रक्षणैः सुष्ठु सुखयिता भवतु शत्रूंश्च हिनस्तु भयराहित्यं च करोत्वस्माकं। अतो वयं शोभनवीर्योपेतस्य धनस्य स्वामिनो भवेमेति॥ सप्तम्यास्तु तस्य यज्ञार्हस्येंद्रस्यानुग्रहबुद्धौ भजनीये सौमनस्ये च वयं विषयभूता भवेम। सुष्ठु त्राता धनवान् स इंद्रोऽस्मत्तो दूरदेशे द्वेष्टॄनंतर्धानं योजयत्विति॥

॥ इत्यष्टमस्य सप्तम एकोनविंशो वर्गः ॥

ईजानमिति सप्तर्चं चतुर्थं सूक्तं नृमेधपुत्रस्य शकपूतस्यार्षं मित्रावरुणदेवताकं। आद्या तु लिंगोक्तद्युभूम्यश्विदेवताका न्यंकुसारिणी द्वितीयद्वादशकत्र्यष्टकवती। द्वितीयाषष्ठ्यौ प्रस्तारपंक्ती द्विद्वादशकद्व्यष्टकवती। सप्तमी महासतोबृहती त्र्यष्टक-

द्विद्वादशकवती । शिष्टास्तिस्रो विराड्रूपा एकादशिनस्त्रयोऽष्टकश्चेति लक्षणलक्षिताः । तथा चानुक्रांतं । ईजानं शकपूतो नार्मेधो मैत्रावरुणं न्यंकुसारिण्याद्या लिंगोक्तदेवतांत्या महासतोबृहत्युपाद्योपांत्ये प्रस्तारपंक्ती शेषा विराड्रूपा इति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

ईजानमिद्द्यौर्गूर्तावसुरीजानं भूमिरभि प्रभूषणि ।

ईजानं देवावश्विनावभि सुम्नैरवर्धतां ॥१॥

ईजानं । इत् । द्यौः । गूर्तऽवसुः । ईजानं । भूमिः । अभि । प्रऽभूषणि ।

ईजानं । देवौ । अश्विनौ । अभि । सुम्नैः । अवर्धतां ॥१॥

गूर्तवसुः । गूर्तमुद्यतं स्तोतृभ्यो दानाय हस्ते धृतं वसु धनं यस्याः सा तथोक्ता । गुरी उद्यमने । निष्ठा । श्वीदितो निष्ठायामितीट्प्रतिषेधः । नसत्तनिषत्तेत्यादिना निपातनान्निष्ठानत्वाभावः । अन्येषामपीति सांहितिको दीर्घः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । ईदृशी द्यौर्द्युलोकाभिमानिनी देवतेजानमिद्यज्ञैरिष्टवंतमेव पुरुषमभिवर्धयति । यजेर्लिटः कानच् । वचिस्वपीति संप्रसारणे द्विर्वचनं । तथा भूमिश्च प्रभूषणि प्रभवने । यद्वा प्रकृष्टभूषणेऽलंकारे निमित्तभूते सतीजानमभिवर्धयति । अपि च । देवौ दानादिगुणयुक्तावश्विनावीजानमिष्टवंतं पुरुषं सुम्नैर्धनैरभ्यवर्धतां । अभिवर्धयतः । वृधेरंतर्भावितण्यर्थाच्छांदसो लङ् ॥

॥ अथ द्वितीया ॥

ता वां मित्रावरुणा धारयत्क्षिती सुषुम्नेषितत्वता यजामसि ।

युवोः क्राणाय सख्यैरभि ष्याम रक्षसः ॥२॥

ता । वां । मित्रावरुणा । धारयत्क्षिती इति धारयत्ऽक्षिती । सुऽसुम्ना । इषितत्वता । यजामसि ।

युवोः । क्राणाय । सख्यैः । अभि । स्याम । रक्षसः ॥२॥

हे मित्रावरुणौ धारयत्क्षिती ध्रियमाणभूमिकौ । यद्वा क्षितिरिति मनुष्यनाम । हवींषि धारयंतः क्षितयो मनुष्या ययोः स्वभूतास्तथाविधौ सुषुम्ना सुषुम्नौ सुधनौ सुसुखौ वा ता तौ वां युवामिषितत्वतेषितत्वेन । तृतीयैकवचने छांदसस्तकारोप-

जनः। यद्वा भावप्रत्ययांतात्पुनरपि भावप्रत्ययो विकरणद्वयवत्। इषितव्यत्वेन प्राप्तव्यत्वेन। हेतौ तृतीया। यतो युवां देवेषु मध्ये प्राप्तव्यौ ततो हेतोर्यजामसि। हविर्भिर्यजामः। इदंतो मसीति मस इकारागमः। एवं च युवोर्युवयोः सख्यैः सखित्वैः। सख्युर्यः। त्राणाय कुर्वते यजमानाय। करोतेः शानचि छांदसो विकरणस्य लुक्। तादर्थ्ये चतुर्थी। यजमानार्थं रक्षसो यज्ञस्य बाधकान्राक्षसानभि ष्याम। अभिभवेम। उपसर्गप्रादुर्भ्यामित्यस्तेः सकारस्य षत्वं ॥

॥ अथ तृतीया ॥

अधा चिन्नु यद्दिधिषामहे वामभि प्रियं रेक्णः पत्यमानाः।
दद्वाँ वा यत्पुष्यति रेक्णः सम्वारन्नकिरस्य मघानि ॥३॥

अध। चित्। नु। यत्। दिधिषामहे। वां। अभि। प्रियं। रेक्णः। पत्यमानाः।
दद्वान्। वा। यत्। पुष्यति। रेक्णः। सं। ऊं इति। आरन्। नकिः। अस्य। मघानि॥३॥

हे मित्रावरुणौ वां युवाभ्यां युवयोरर्थं यद्यदा दिधिषामहे हवींषि धारयामः। यद्वा धिष शब्दे। वां युवां स्तुमहे अधा चिदनंतरमेव नु क्षिप्रं प्रियमभीष्टं रेक्णः। धननामैतत्। धनमभि पत्यमाना अभिपतंतोऽभिप्राप्नुवंतो भवामः। दद्वान् ददिवान्। ददातेर्लिटः क्वसुः। छंदस्युभयथेति वसोः सार्वधातुकत्वाच्छ्नाभ्यस्तयोरात इत्यकारलोपः। अत एवेडभावश्च। संहितायां नकारस्य दीर्घादटि समानपाद इति रुत्वं। आतोऽटि नित्यमिति सानुनासिक आकारः। वाशब्दश्चार्थे। हवींषि दत्तवांश्च यद्यो यजमानो रेक्णो धनं पुष्यति वर्धयत्यस्य दत्तवतो यजमानस्य मघानि धनानि नकिः समारन्। नैवापगच्छंति। किंतु तमेव सर्वदा भजंते। समित्येतदपेत्येतस्यार्थे। उ इति पूरणः। अर्तेश्छांदसे लुङि सर्तिशास्त्यर्तिभ्यश्चेति च्लेरङादेशः। ऋदृशोरङि गुणः ॥

॥ अथ चतुर्थी ॥

असावन्यो असुर सूयत द्यौस्त्वं विश्वेषां वरुणासि राजा।
मूर्धा रथस्य चाकन्नैतावतैनसांतकध्रुक् ॥४॥

असौ। अन्यः। असुर। सूयत। द्यौः। त्वं। विश्वेषां। वरुण। असि। राजा।
मूर्धा। रथस्य। चाकन्। न। एतावता। एनसा। अंतकऽध्रुक् ॥४॥

हे असुर तमसः क्षेपक। यद्वासवः प्राणाः। तान्ददाति मनुष्येभ्यः स्वोदयेन

वनसदमित्यत्र छांदसः सांहितिको रेफोपजनः। हे मित्रावरुणौ युवाभ्यां नृमेधो मम पितांहसः पापात्तत्रे। ररक्षे। रक्षितो बभूव। त्रैङ् पालन इत्यस्मात्कर्मणि लिट्। यद्वा। उपचाराज्जन्ये जनकशब्दः। नृमेधस्य पुत्रः शकपूतोऽहं पापाद्युवाभ्यां तत्रे। रक्षितोऽस्मि। सुमेधोऽन्योऽपि सुयज्ञो यजमानोऽंहसः पापात्तत्रे। युवाभ्यामेवारक्ष्यत। भीत्रार्थानामित्यंहसोऽपादानसंज्ञा ॥

॥ इत्यष्टमस्य सप्तमे विंशो वर्गः ॥

प्रो ष्विति सप्तर्चं पंचमं सूक्तं पिजवनपुत्रस्य सुदास आर्षमैंद्रं। आद्यस्तृचः शाक्वरः। षट्पंचाशदक्षरी शक्वरी। द्वितीयस्तृचो महापांक्तः। षळष्टका महापंक्तिः। सप्तमी त्रिष्टुप्। तथा चानुक्रांतं। प्रो षु सुदाः पैजवनः शाक्वरमहापांक्तावाद्यौ तृचावंत्या त्रिष्टुबिति ॥ षोळशिशस्त्र आद्यस्तृचः शंसनीयः। सूत्रितं च। त्रिकद्रुकेषु महिषो यवाशिरं प्रो ष्वस्मै पुरोरथमिति तृचावातिच्छंदसौ। आ० ६.२.। इति ॥ महाव्रते माध्यंदिनसवने ब्रह्मशस्त्रेऽनुरूपतृचस्य प्रो ष्वस्मा इत्येका। तथैव पंचमारण्यके सूत्रितं च। प्रो ष्वस्मै पुरोरथमित्यनुरूपः। ऐ० आ० ५.१.। इति ॥

॥ सैषा प्रथमा ॥

प्रो ष्व॑स्मै पु॒रोर॒थमिंद्रा॑य शू॒षम॑र्चत।

अ॒भीके॑ चिदु लोक॒कृत्सं॒गे स॒मत्सु॑ वृत्र॒हास्माकं॑ बोधि चोदि॒ता नभं॑तामन्य॒केषां॑ ज्या॒का अधि॒ धन्व॑सु ॥१॥

प्रो इति॑। सु। अ॒स्मै॒। पु॒रः॒ऽर॒थं। इंद्रा॑य। शू॒षं। अ॒र्च॒त।

अ॒भीके॑। चित्। ऊं इति॑। लो॒क॒ऽकृत्। सं॒ऽगे। स॒मत्ऽसु॑। वृ॒त्र॒ऽहा। अ॒स्माकं॑। बो॒धि॒। चो॒दि॒ता। नभं॑तां। अ॒न्य॒केषां॑। ज्या॒काः। अधि॑। धन्व॑ऽसु ॥१॥

अस्मा इंद्राय। षष्ठ्यर्थे चतुर्थी। अस्येंद्रस्य पुरोरथं रथस्य पुरः पुरतः। पुरोऽव्ययमिति गतित्वाद्गतिसमासः। रथस्याग्रतो वर्तमानं शूषं बलं सु प्रो अर्चत। हे स्तोतारः सुष्ठु प्रपूजयत। प्र उ इति निपातसमुदायः प्रो इति। ओदिति प्रगृह्यसंज्ञं। इंद्रो विशेष्यते। समत्सु समानं माद्यंत्यत्रेति समदः संग्रामाः। औणादिकोऽधिकरणे क्विप्। समानस्य छंदसीति सभावः। समत्सु संग्रामेषु संगे संगमनीये शत्रुबले। डोऽन्यत्रापि दृश्यत इति गमेर्डः। अभीके चिदभ्यर्णेऽपि निकटं प्राप्तेऽपि केशाकेश्यवस्थायामपि लोककृत्स्थितिकृन्न पलायिता स्थित्वा

वृत्रहा वृत्राणामावरकाणां हंतैवंविधः स इंद्रोऽस्माकं स्तोतॄणां चोदिता धनानां प्रेरिता सन्बोधि । अस्माभिः कृतानि परिचरणानि बुध्यतां । बुधेश्छांदसे लुङि दीपजनबुधेत्यादिना कर्तरि च्लेश्चिणादेशः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । अपि च। अन्यकेषां कुत्सितानामन्येषां शत्रूणामधि धन्वसु धनुःष्वधिरोपिता ज्याकाः कुत्सिता ज्या नभंतां । हिंस्यंतां । नश्यंतु । ज्याशब्दात्कुत्सायां प्रागिवात्कः । पा॰ ५. ३.७०. । नभ तुभ हिंसायां । क्रैयादिकः । व्यत्ययेन शप् ॥

॥ अथ द्वितीया ॥

त्वं सिंधूँरवासृजोऽधराचो अहन्नहिं ।
अशत्रुरिंद्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि ष्वजामहे नभंतामन्यकेषां ज्याका अधि धन्वसु ॥२॥

त्वं । सिंधून् । अव । असृजः । अधराचः । अहन् । अहिं ।
अशत्रुः । इंद्र । जज्ञिषे । विश्वं । पुष्यसि । वार्यं । तं । त्वा । परि । स्वजामहे । नभंतां । अन्यकेषां । ज्याकाः । अधि । धन्वऽसु ॥२॥

हे इंद्र सिंधून् स्यंदनशीलाञ्जलपूरानधराचोऽधरमधोमुखमंचतो गंतॄनवासृजः । मेघान्निरगमयः । यतस्त्वमहिमंतरिक्षे गतं मेघमहन् हतवानसि । यद्वाहिमागत्य हंतारं सर्वस्य जगत आवरकं वृत्रमसुरमहन् हतवानसि। अतो हे इंद्र त्वमशत्रुः शत्रुरहितो जज्ञिषे । जायसे । न संति शत्रवोऽस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। जनेर्लिटि गमहनेत्यादिनोपधालोपः। द्विर्वचनेऽचीति स्थानिवद्भावाद्द्विर्वचनं। तथा विश्वं सर्वं वार्यं वरणीयं संभजनीयं धनं पुष्यसि । वर्धयसि । वृङ् संभक्तौ । ऋहलोर्ण्यत् । ईडवंदवृशंसदुहां ण्यत इत्याद्युदात्तत्वं । तादृशं त्वां परि ष्वजामहे। हविर्भिः स्तुतिभिश्चालिंगनं कुर्मः । वशीकुर्म इत्यर्थः। ष्वंज परिष्वंगे । दंशसंजष्वंजां शपीत्यनुनासिकलोपः ॥

॥ अथ तृतीया ॥

वि षु विश्वा अरातयोऽर्यो नशंत नो धियः ।
अस्तासि शत्रवे वधं यो न इंद्र जिघांसति या ते रातिर्ददिर्वसु नभंतामन्यकेषां ज्याका अधि धन्वसु ॥३॥

वि । सु । विश्वाः । अरातयः । अर्यः । नशंत । नः । धियः ।

अस्ता । असि । शत्रवे । वधं । यः । नः । इंद्र । जिघांसति । या । ते । रातिः । ददिः । वसु । नभंतां । अन्यकेषां । ज्याकाः । अधि । धन्वऽसु ॥३॥

विश्वाः सर्वा अरातयोऽदात्र्योऽर्योऽभिगंत्र्यो नोऽस्माकं शत्रुभूताः प्रजाः सु सुष्ठु वि नशंत । विनश्यंतु । हे इंद्र त्वदर्थं धियः कर्माणि स्तुतयो वा प्रवर्तंतां । हे इंद्र यो नोऽस्माञ्जिघांसति हंतुमिच्छति । हंतेः सन्यज्झनगमां सनीति दीर्घः । अभ्यासाच्चेति कुत्वं । तस्मै शत्रवे वधं हननसाधनमायुधमस्तासि । क्षेप्ता भवसि । असु क्षेपणे । ताच्छीलिकस्तृन् । ते तव या रातिर्धनप्रदानहेतुः हस्तः । रा दाने । करणे क्तिन् । मंत्रे वृषेषपचमनविदभूवीरा उदात्त इति क्तिन उदात्तत्वं । सा रातिर्वसु धनं ददिः । अस्मभ्यं दाता भवतु । आदृगमहन इति ददातेः किप्रत्ययः । न लोकाव्ययेति वसुशब्दात्षष्ठ्यभावः । सिद्धमन्यत् ॥

॥ अथ चतुर्थी ॥

यो न इंद्राभितो जनो वृकायुरादिदेशति ।

अधस्पदं तमीं कृधि विबाधो असि सासहिर्नभंतामन्यकेषां ज्याका अधि धन्वसु॥४॥

यः । नः । इंद्र । अभितः । जनः । वृकऽयुः । आऽदिदेशति ।

अधःऽपदं । तं । ईं । कृधि । विऽबाधः । असि । ससहिः । नभंतां । अन्यकेषां । ज्याकाः । अधि । धन्वऽसु ॥४॥

हे इंद्र यो जनो वृकायुः । वृको हिंसकोऽरण्यश्वा स्तेनो वा । स इवाचरन्यो ऽस्मानभितः सर्वत आदिदेशत्यभिलक्ष्यायुधान्यतिसृजति । दिशतेर्लेट्यडागमः । छांदसः शपः श्लुः । नाभ्यस्तस्याचि पितीत्यच बहुलं छंदसीति वक्तव्यमिति वचनात्प्रतिषेधाभावे लघूपधगुणः । अभ्यस्तानामादिरित्याद्युदात्तत्वं । तमीं तमिमं जनमधस्पदं पादस्याधस्ताद्वर्तमानं कृधि । कुरु । करोतेश्छांदसो विकरणस्य लुक् । श्रुशृणुपॄकृवृभ्य इति हेर्धिः । यतस्त्वं विबाधो विशेषेण बाधिता शत्रूणां सासहिरभिभविता चासि । सिद्धः शेषः ॥

॥ अथ पंचमी ॥

यो न इंद्राभिदासति सनाभिर्यश्च निष्ट्यः ।

अव तस्य बलं तिर महीव द्यौरध त्मना नभंतामन्यकेषां ज्याका अधि धन्वसु ॥५॥

यः । नः । इंद्र । अभिऽदासति । सऽनाभिः । यः । च । निष्ट्यः ।
अव । तस्य । बलं । तिर । महीऽइव । द्यौः । अध । त्मना । नभंतां । अन्यकेषां ।
ज्याकाः । अधि । धन्वऽसु ॥ ५ ॥

हे इंद्र यः सनाभिः समानजन्मा शत्रुर्नोऽस्मानभिदासत्युपक्षयति यश्च निष्ट्यो निकृष्टजन्मास्मानुपक्षयति । जातार्थे निकृष्टवाचिनो निःशब्दाद्व्ययात्त्यप् । पा॰ ४.२.१०४. । ह्रस्वात्तादौ तद्धित इति षत्वं । अथानंतरमेव महीव द्यौर्महती द्यौरिव विस्तृतं तस्य शत्रोर्बलं त्मनात्मना । मंत्रेष्वाङ्यादेरात्मन इत्याकारलोपः । स्वयमेवाव तिर । जहि । अवतिरतिर्वधकर्मा । गतमन्यत् ॥

॥ अथ षष्ठी ॥

वयमिंद्र त्वायवः सखित्वमा रभामहे ।
ऋतस्य नः पथा नयाति विश्वानि दुरिता नभंतामन्यकेषां ज्याका अधि धन्वसु ॥ ६ ॥
वयं । इंद्र । त्वायवः । सखिऽत्वं । आ । रभामहे ।
ऋतस्य । नः । पथा । नय । अति । विश्वानि । दुःऽइता । नभंतां । अन्यकेषां ।
ज्याकाः । अधि । धन्वऽसु ॥ ६ ॥

हे इंद्र त्वायवस्त्वामात्मन इच्छंतो वयं सखित्वं सखिकर्म यज्ञात्मकमा रभामहे । उपक्रमामहे । ऋतस्य सत्यस्य यज्ञस्य पथा मार्गेण । भस्य टेर्लोपः । उदात्तनिवृत्तिस्वरेण तृतीयाया उदात्तत्वं । विश्वानि सर्वाणि दुरिता दुरितानि दुर्गमनानि पापानि तत्फलानि च नोऽस्मानति नय । अतिपारय । गतमन्यत् ॥

॥ अथ सप्तमी ॥

अस्मभ्यं सु त्वमिंद्र तां शिक्ष या दोहते प्रति वरं जरित्रे ।
अच्छिद्रोध्नी पीपयद्यथा नः सहस्रधारा पयसा मही गौः ॥ ७ ॥
अस्मभ्यं । सु । त्वं । इंद्र । तां । शिक्ष । या । दोहते । प्रति । वरं । जरित्रे ।
अच्छिद्रऽऊध्नी । पीपयत् । यथा । नः । सहस्रऽधारा । पयसा । मही । गौः ॥ ७ ॥

हे इंद्र त्वं तां गामस्मभ्यं स्तोतृभ्यः सु शिक्ष । प्रदेहि । शिक्षतिर्दानकर्मा । या गौर्जरित्रे स्तोत्रे वरं वरणीयं पयः प्रति दोहते प्रतिदिनं नैरंतर्येण दुग्धे । दुहेर्बहुलं

छंदसीति शपो लुगभावः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वं। धातुस्वरः शिष्यते । वरं । वृञ् वरण इत्यस्माद्ग्रहवृदृनिश्चिगमश्चेति कर्मण्यप् । सा प्रत्ता गौरच्छिद्रोध्नी निविडोधस्का। अत एव सहस्रधारा बहुभिः क्षीरधाराभिरुपेता मही महती सती यथा नोऽस्मान्पयसा क्षीरेण पीपयत्प्रवर्धयेत्तथा तां कुर्विति शेषः । ओप्यायी वृद्धौ । ण्यंताच्छांदसो लुङ् । व्यत्ययेन धातोः पीभावः । अडभावश्छांदसः ॥

॥ इत्यष्टमस्य सप्तम एकविंशो वर्गः ॥

उभे यदिति सप्तर्चं षष्ठं सूक्तं। युवनाश्वपुत्रस्य मांधातुरार्षं। पूर्वेणेत्यर्धर्चसहितायाः सप्तम्यास्तु गोधा नाम ब्रह्मवादिन्यृषिः। सप्तमी पंक्तिः। शिष्टाः षळष्टका महापंक्तयः। इंद्रो देवता। तथा चानुक्रांतं। उभे यन्मांधाता यौवनाश्वो महापांक्तं पंक्तिरंत्या तामध्यर्धां गोधापश्यदिति । गतः सूक्तविनियोगः ॥ चातुर्विंशिकेऽहनि माध्यंदिनेऽच्छावाकस्याद्यस्तृचो वैकल्पिकः स्तोत्रियः । सूचितं च । उभे यदिंद्र रोदसी अव यत्त्वं शतक्रतो । आ॰ ७.४.। इति ॥

॥ तत्र प्रथमा ॥

उभे यदिंद्र रोदसी आपप्राथोषा इव ।

महांतं त्वा महीनां सम्राजं चर्षणीनां देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥१॥

उभे इति । यत् । इंद्र । रोदसी इति । आऽपप्राथ । उषाःऽइव ।

महांतं । त्वा । महीनां । संऽराजं । चर्षणीनां । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥१॥

हे इंद्र उभे रोदसी द्यावापृथिव्यौ यद्यस्त्वमापप्राथ तेजसाप्रथयसि । आपूरयसि। प्रा पूरणे । आदादिकः । छांदसो लिट् । उषा इव । यथोषाः स्वभासा सर्वं जगदापूरयति तद्वत्। तं महीनां महतां देवानामपि महांतमधिकं चर्षणीनां मनुष्याणामपि सम्राजमीश्वरमिंद्रं त्वा त्वां देवी देवनशीला जनित्र्यदितिरजीजनत्। अजनयत् । जनेर्ण्यंताल्लुङि चङि रूपमेतत् । यस्मादेषा जनित्रीदृशं पुत्रमजीजनदतः कारणात्सा भद्रा कल्याणी प्रशस्ता जाता । जनेर्ण्यंतात्साधुकारिणि तृन् । जनिता मंत्र इतीडादौ णिलोपो निपात्यते । ऋन्नेभ्य इति ङीप् ॥

॥ अथ द्वितीया ॥

अवं स्म दुर्हणायतो मर्तस्य तनुहि स्थिरं ।

अधस्पदं तमीं कृधि यो अस्माँ आदिदेशति देवी जनित्र्यजीजनद्भद्रा जनित्र्य-
जीजनत् ॥२॥

अवं । स्म । दुःऽहनायतः । मर्तस्य । तनुहि । स्थिरं ।

अधःऽपदं । तं । ईं । कृधि । यः । अस्मान् । आऽदिदेशति । देवी । जनित्री । अजीजनत् ।
भद्रा । जनित्री । अजीजनत् ॥२॥

दुर्हणायतो दुःखप्रदं हननमाचरतो मर्तस्य मनुष्यस्य शत्रोः स्थिरं दृढं बलमव तनुहि । अवततं नीचीनं कुरु । स्मेति पूरकः । तं शत्रुमीमेनमधस्पदं पादयोरधस्ताद्वर्तमानं कृधि । कुरु । यः शत्रुरस्मानादिदेशति जिघांसति । समानमन्यत् ॥

॥ अथ तृतीया ॥

अव त्या बृहतीरिषो विश्वश्चंद्रा अमित्रहन् ।

शचीभिः शक्र धूनुहींद्र विश्वाभिरूतिभिर्देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीज-
नत् ॥३॥

अवं । त्याः । बृहतीः । इषः । विश्वऽचंद्राः । अमित्रऽहन् ।

शचीभिः । शक्र । धूनुहि । इंद्र । विश्वाभिः । ऊतिऽभिः । देवी । जनित्री । अजीजनत् ।
भद्रा । जनित्री । अजीजनत् ॥३॥

हे अमित्रहन् अमित्राणां शत्रूणां हंतर्हे शक्रेंद्र शचीभिरात्मीयाभिः शक्तिभिरात्मीयैः कर्मभिर्वा त्यास्ताः प्रसिद्धा बृहतीर्महतीः । बृहन्महतोरुपसंख्यानमिति ङीप उदात्तत्वं । विश्वश्चंद्राः । विश्वानि सर्वाणि चंद्राणि हिरण्यानि यासां तादृशीः । ह्रस्वाच्चंद्रोत्तरपदे मंत्र इति सुडागमः । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं । एवंभूता इषोऽन्नानि विश्वाभिः सर्वाभिरूतिभी रक्षाभिः सार्धमव धूनुहि । अस्मास्ववाङ्मुखं कंपय । अस्मदभिमुखं गमयेत्यर्थः । गतमन्यत् ॥

चातुर्विंशिकेऽहनि माध्यंदिनेऽच्छावाकस्याव यत्त्वमिति तृचो वैकल्पिकोऽनुरूपः । सूक्तं तु सूक्तादावुदाहृतं ॥

॥ तृचे प्रथमा सूक्ते चतुर्थी ॥

अव यत्त्वं शतक्रतविंद्र विश्वानि धूनुषे ।

रयिं न सुन्वते सचा सहस्रिणीभिरूतिभिर्देवी जनिंत्र्यजीजनद्भद्रा जनिंत्र्यजीजनत् ॥४॥

अवं । यत् । त्वं । शतक्रतो इति शतऽक्रतो । इंद्र । विश्वानि । धूनुषे ।

रयिं । न । सुन्वते । सचा । सहस्रिणीभिः । ऊतिऽभिः । देवी । जनिंत्री । अजीजनत् ।

भद्रा । जनिंत्री । अजीजनत् ॥४॥

हे शतक्रतो बहुकर्मन् बहुप्रज्ञ वेंद्र सुन्वते सोमाभिषवं कुर्वते । सुनोतेर्लटः शतृ । हुश्नुवोः सार्वधातुक इति यण् । शतुरनुम इति विभक्तेरुदात्तत्वं । ईदृशाय यजमानाय यद्यदा त्वं विश्वानि व्याप्तान्यन्नानि वाव धूनुषेऽभिगमयसि । ददासीत्यर्थः । तदा रयिं न रयिं च पुत्ररूपं धनं च सहस्रिणीभिः सहस्रसंख्यायुक्ताभिरूतिभी रक्षाभिः सचा सह प्रदेहि । गतमन्यत् ॥

॥ अथ पंचमी ॥

अव स्वेदा इवाभितो विष्वक्पतंतु दिद्यवः ।

दूर्वाया इव तंतवो व्य१स्मदेतु दुर्मतिर्देवी जनिंत्र्यजीजनद्भद्रा जनिंत्र्यजीजनत् ॥५॥

अवं । स्वेदाःऽइव । अभितः । विष्वक् । पतंतु । दिद्यवः ।

दूर्वायाःऽइव । तंतवः । वि । अस्मत् । एतु । दुःऽमतिः । देवी । जनिंत्री । अजीजनत् ।

भद्रा । जनिंत्री । अजीजनत् ॥५॥

स्वेदा इव गात्रात्स्वेदबिंदव इवाभितः सर्वतो दिद्यवो द्योतमानान्यायुधानींद्रस्य दीप्तयो वा विष्वग्नानामुखा अव पतंतु । निपतंतु । दूर्वाया इव तंतवः । यथा दूर्वाकांडा बहुशः प्ररोहंत्येवं बहुशो विस्तृता दृश्यंते । दुर्मतिर्दुष्टाभिसंधिः शत्रुरस्मदस्मत्तो व्येतु । वियता गच्छतु । गतमन्यत् ॥

॥ अथ षष्ठी ॥

दीर्घं ह्यंकुशं यथा शक्तिं बिभर्षि मंतुमः ।

पूर्वेण मघवन्पदाजो वयां यथा यमो देवी जनिंत्र्यजीजनद्भद्रा जनिंत्र्यजीजनत् ॥६॥

दीर्घं। हि। अंकुशं। यथा। शक्तिं। बिभर्षि। मंतुऽमः।
पूर्वेण। मघऽवन्। पदा। अजः। वयां। यथा। यमः। देवी। जनित्री। अजीजनत्।
भद्रा। जनित्री। अजीजनत्॥६॥

दीर्घमायतमंकुशं सृणिं यथा विभर्ष्येवमायतां शक्तिं हे मंतुमः। मंतुर्ज्ञानं। तद्वन्। मतुवसो रुरिति संबुद्धौ नकारस्य रुत्वं। ईदृशेंद्र बिभर्षि। धारयसि। डुभृञ् धारणपोषणयोः। जौहोत्यादिकः। भ्रृञामिदित्यभ्यासस्येत्वं। हे मघवन् धनवन् इंद्र यथा पूर्वेण देहस्य पूर्वभागे वर्तमानेन पदा पादेनाजश्छागो वयां शाखामाकर्षति तथा पूर्वोक्तया शक्त्याकृष्य यमः। शत्रून्नियच्छसि। यमेर्लेट्यडागमः। बहुलं छंदसीति शपो लुक्। गतमन्यत्॥

॥ अथ सप्तमी ॥

नकिर्देवा मिनीमसि नकिरा योपयामसि मंत्रश्रुत्यं चरामसि।
पक्षेभिरपिकक्षेभिरत्राभि सं रभामहे॥७॥

नकिः। देवाः। मिनीमसि। नकिः। आ। योपयामसि। मंत्रऽश्रुत्यं। चरामसि।
पक्षेभिः। अपिऽकक्षेभिः। अत्र। अभि। सं। रभामहे॥७॥

हे देवा इंद्रादयो युष्मद्विषये नकिर्मिनीमसि। न किमपि हिंस्मः। मीङ् हिंसायां। क्र्यादिकः। मीनातेर्निगम इति ह्रस्वः। इदंतो मसिः। आकारः समुच्चये। नकिर्न किंच योपयामसि। योपयामः। अननुष्ठानेन विमोहयामः। युप विमोहने। किंतर्हि मंत्रश्रुत्यं मंत्रेण स्मार्ये श्रुतौ विधिवाक्ये प्रतिपाद्यं युष्मद्विषयं कर्म तच्चरामसि। आचरामः। अनुतिष्ठामः। अपि च। पक्षेभिः पक्षैः पक्षस्थानीयैः स्तुतशस्त्रैरपिकक्षेभिः। अपिकक्षो नाम बाह्वोर्मध्यभागः। यज्ञस्यापिकक्षभूतैर्हविर्भिरत्रास्मिन्यज्ञेऽभितः सर्वतो युष्मान्सं रभामहे। सम्यगवलंबामाहे॥

॥ इत्यष्टमस्य सप्तमे द्वाविंशो वर्गः ॥

यस्मिन्निति सप्तर्चं सप्तमं सूक्तं यमगोत्रस्य कुमारस्यार्षं। आनुष्टुभं यमदेवत्यं। तथा चानुक्रांतं। यस्मिन्कुमारो यामायनो याममानुष्टुभं त्विति॥

॥ तत्र प्रथमा ॥

यस्मिन्वृक्षे सुपलाशे देवैः संपिबते यमः।
अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति॥१॥

यस्मिन्। वृक्षे। सुऽपलाशे। देवैः। संऽपिबते। यमः।

अत्र। नः। विश्पतिः। पिता। पुराणान्। अनु। वेनति ॥१॥

वृक्षे। लुप्तोपममेतत्। वृक्षवत्सुपलाशे शोभनपलाशोपेते शोभनोद्यानसहिते। यद्वा शोभनपर्णोपेते वृक्षे। तादृशस्य वृक्षस्य मूलं यथौष्ण्यजनितश्रमापनोदनेन सुखकरं भवति तद्वत्सुखकरे यस्मिन्स्थाने देवैः परिजनभूतैर्यमो नियंता वैवस्वतः संपिबते सह भुंक्ते। पिबतीत्यर्थः। विश्पतिर्विशां प्रजानामधिपतिः पिता नः। व्यत्ययेन बहुवचनं। मम नचिकेतसो जनको वाजश्रवसोऽत्रास्मिन्यमस्य स्थाने पुराणान्पुरातनानत्र चिरकालं निवसतः पितॄननु तेषां पश्चात्तत्समीपे निवसत्वयमिति वेनति। मां कामयते। नचिकेता नाम कुमारो वाजश्रवसेन पित्रा यमलोकं प्रस्थापितः सन् यमं दृष्ट्वा प्रसाद्य पुनरपीमं लोकमाजगाम। अयमर्थ इदमादिकैर्मंत्रैः प्रतिपाद्यते। यद्वा कुमारो नाम नचिकेतसोऽन्यः कश्चिदृषिः। यच्छतीति यम आदित्यः। तमनेन सूक्तेन तुष्टाव। सुपलाशे वृक्ष इव यस्मिञ्शोभने स्थाने यम आदित्यो देवैः। दीव्यंतीति देवा रश्मयः। तैः संपिबते संगच्छते। उपसर्गवशात्पिबतिरत्र गत्यर्थः। व्यत्ययेनात्मनेपदं। अत्रास्मिन्स्थाने स्थितो विश्पतिर्विशां प्रजानां प्रकाशनप्रवर्षणादिना पालयिता प्राणात्मना सर्वेषां जनकः स आदित्यः पुराणांश्चिरंतनान्स्तोतॄन्नोऽस्मानपि वेनति। अनुग्राह्यत्वेन कामयते। यद्वा। अत्र स्थाने स्थितान्नोऽस्माकं पुराणान्पूर्वपुरुषाननु वेनति। अनुक्रमेण कामयते ॥

॥ अथ द्वितीया ॥

पुराणाँ अनुवेनंतं चरंतं पापयामुया।

असूयन्नभ्यचाकशं तस्मा अस्पृहयं पुनः ॥२॥

पुराणान्। अनुऽवेनंतं। चरंतं। पापया। अमुया।

असूयन्। अभि। अचाकशं। तस्मै। अस्पृहयं। पुनरिति ॥२॥

पुराणान्पुरातनान्पितॄननुवेनंतं मामनुगतं कामयमानममुयानया पापया निकृष्टया बुद्ध्या सह चरंतं वर्तमानं पितरं वाजश्रवसमसूयन् सुखेन जीवंतं मां मृत्युसमीपं प्रेहीत्युक्तवानिति मानसेनोपतापेन युक्तः सन् प्रथममभ्यचाकशं। अयं पश्यतिकर्मा। अभ्यपश्यं। असुञ् मानस उपतापे। कंड्वादिः। पुनः पश्चात्तस्मा अस्पृहयं। पितुराज्ञया तं मृत्युं प्राप्तुमैच्छं। स्पृह ईप्सायां। चुरादिरदंतः। स्पृहेरीप्सित

इति संप्रदानसंज्ञायां तच्छब्दाच्चतुर्थी । यद्वा पुराणांश्चिरंतनान्स्तोतॄन्पूर्वपुरुषान्पितॄन्वानुवेनंतमनुक्रमेण कामयमानं चरंतमुदयास्तमयाभ्यां दिवि परिवर्तमानमनया पापया निकृष्टया स्तोतुमसमर्थया बुद्ध्यासूयन् । गुणेषु दोषाविष्करणमसूया । परकीयगुणेषु दूषणान्याविष्कुर्वन्नभ्यचाकशं । अयमपि कश्चिदिति सामान्यरूपेणाभ्यपश्यं । इदानीं तु पुनस्तस्यादित्यस्य माहात्म्यं जानंस्तस्मा अस्पृहयं । तमेवादित्यं स्तुतिभिः परिचरणात्मकैः कर्मभिश्च प्राप्तुमैच्छं ॥

॥ अथ तृतीया ॥

यं कुमार नवं रथमचक्रं मनसाकृणोः ।
एकेषं विश्वतः प्रांचमपश्यन्नधि तिष्ठसि ॥ ३ ॥

यं । कुमार । नवं । रथं । अचक्रं । मनसा । अकृणोः ।
एकऽईषं । विश्वतः । प्रांचं । अपश्यन् । अधि । तिष्ठसि ॥ ३ ॥

नचिकेतःसंज्ञं कुमारं यमोऽनयोत्तरया च प्रलोभयति । हे कुमार नवमभिनवमितः पूर्वमदृष्टं । अभिनवत्वमेव व्यनक्ति । अचक्रं चक्ररहितं । तमेकेषमेकेषा यस्य तादृशं । तथापि विश्वतः सर्वतः प्रांचं प्रकर्षेणांचंतं गच्छंतं यं रथं मनसाकृणोर्मत्समीपं प्रतिगमनायाध्यवसायात्मकमीदृशं यं रथमकरोः कृत्वा चापश्यन् कर्तव्याकर्तव्यविभागमजानन्नधि तिष्ठसि । रथमारोहसि ॥ यद्वा स्तोतारं कुमाराख्यमृषिमादित्यः प्रत्यक्षः सन् देहात्मनोर्विवेकं बोधयति । हे कुमारर्षे चक्ररहितमेकेषं । एकः प्राण ईषास्थानीयो यस्य । ईदृशमभिनवं सर्वतो गच्छंतं शरीरात्मकं यं रथं मनसांतःकरणेनाकृणोरकरोः । संकल्पात्मकेन मनसा हि कामो जायते । सत्यां हि कामनायां पुण्यापुण्यात्मकं कर्म क्रियते । तेन च भोगप्रदानायेदं शरीरमारभ्यत इति परंपरया मनसः शरीरनिष्पादकत्वं । तं शरीरात्मकं रथमपश्यन्नजानन् । लक्षणहेत्वोरिति हेतौ शतृप्रत्ययः । मत्स्वरूपापरिज्ञानाद्धेतोरधितिष्ठसि । भोगायतनत्वेन स्वीकरोषि ॥

॥ अथ चतुर्थी ॥

यं कुमार प्रावर्तयो रथं विप्रेभ्यस्परि ।
तं सामानु प्रावर्तत समितो नाव्याहितं ॥ ४ ॥

यं । कुमार । प्र । अवर्तयः । रथं । विप्रेभ्यः । परि ।

तं । साम । अनु । प्र । अवर्तत । सं । इतः । नावि । आऽहितं ॥४॥

हे कुमार नचिकेतो यं पूर्वोक्तमधिष्ठितं रथं प्रावर्तयो मत्समीपं प्रत्यगमयो विप्रेभ्यो मेधाविभ्यः पर्युपरि । भूलोके वर्तमानानां मेधाविनां बांधवानामुपरिष्टात् । अंतरिक्ष इत्यर्थः । पंचम्याः परावध्यर्थ इति विसर्जनीयस्य सत्वं । तं रथं साम पित्रा कृतं सांत्वनं यमसमीपं गत्वैवमेव त्वया वक्तव्यमिति प्रत्यागमनकारणमुपायोपदेशनमनु प्रावर्तत । इतोऽस्माल्लोकादन्वगच्छत् । कथंभूतं । नावि नौवत्तरणसाधनायां बुद्धौ समाहितं सम्यग्धृतं ॥ यद्वा हे कुमारर्षे यं शरीरात्मकं रथमधिष्ठितं प्रावर्तयः संसारे प्रवर्तितवानसि मेधाविनां मध्ये तं रथमनु साम । उपलक्षणमेतत् । ऋक्सामादिसाध्यं स्तोत्रं नावि नौवत्तारयित्र्यां वाचि वेदात्मिकायां समाहितं सम्यक् प्रतिपाद्यत्वेन हितं कर्म चेतोऽस्माल्लोकात्प्रावर्तत । प्रवृत्तमभूत् । इत्थमात्मस्वरूपापरिज्ञानेन शरीरबंधनं तेन कर्तव्यं व्यवहारजातं चोक्तं । अथ तु सत्यज्ञानादिस्वरूपमकर्तारं परमात्मानं यदि स्वात्मतया साक्षात्करोति तदोक्तं न संभवतीत्यभिप्रायः ॥

॥ अथ पंचमी ॥

कः कुमारमजनयद्रथं को निरवर्तयत् ।

कः स्वित्तदद्य नो ब्रूयादनुदेयी यथाभवत् ॥५॥

कः । कुमारं । अजनयत् । रथं । कः । निः । अवर्तयत् ।

कः । स्वित् । तत् । अद्य । नः । ब्रूयात् । अनुऽदेयी । यथा । अभवत् ॥५॥

कः पुरुष इमं कुमारमजनयत् । अधिक्षेपे किंशब्दः । ईदृशं बालं यमसमीपं प्रहिण्वन् कथं पिता समीचीनः स्यात् । तत्तावदास्तां । को वा पुरुषोऽस्य बालस्य यमसमीपं प्रतिगमनाय तं रथं निरवर्तयत् । निर्वर्तितवान् । सोऽपि मूर्ख इत्यर्थः । यथा येन प्रकारेणायं कुमारोऽनुदेय्यनुदातव्योऽभवद्भवति तत्तदनुगुणं वचनमुपायकथनमद्यास्मिन्काले नोऽस्माकं कः स्वित् को नाम ब्रूयात् । अभिदध्यात् । प्रथमं यमसमीपं गत्वा पश्चात्ततो निर्गमनोपायं ब्रुवन्नपि न प्राज्ञ इत्यर्थः ॥ अथवा कुमाराख्य ऋषिरात्मनः सर्वात्म्यमवगच्छन् स्वव्यतिरिक्तस्यान्यस्यासंभवं किंशब्देनाक्षेपवाचिना दर्शयति । कुमारं मां कः पिताजनयत् । न कोऽपि । अजो

नित्यः शाश्वत इति श्रुत्युक्तरूपोऽहं भवामि। कश्च शरीरात्मकं रथं निरवर्तयत्। निर्वर्तयति। मद्व्यतिरिक्तस्य निवर्तयितुरभावात् तथा निर्वर्त्यस्यान्यस्यासंभवाच्च। अद्यास्मिन्काले सर्वात्म्यानुभवदशायां तं तं प्रकारं कः स्वित्को नाम नोऽस्माकं ब्रूयाद्यथा येन प्रकारेणानुदेय्यनुदातव्या मद्व्यतिरिक्तान्यपदार्थसत्ताभवद्भवति। स प्रकारोऽपि दुर्वचन इत्यर्थः ॥

॥ अथ षष्ठी ॥

यथाभवदनुदेयी ततो अग्रमजायत।

पुरस्ताद्बुध्न आततः पश्चान्निरयणं कृतं ॥६॥

यथा। अभवत्। अनुऽदेयी। ततः। अग्रं। अजायत।

पुरस्तात्। बुध्नः। आऽततः। पश्चात्। निःऽअयनं। कृतं ॥६॥

अनुदेय्यनुदातव्यो यथा येन प्रकारेण पितरमनुलक्ष्यायं कुमारो यमेन दत्तोऽभवद्भवति तथा ततस्तस्माद्वाजश्रवसात्पितुरग्रं यमसमीपं गच्छेति वचनस्याग्रतो वर्तमानं नचिकेतसा यमेन सह वदितव्यं तं वै प्रवसंतं गंतासीति होवाचेत्यादिकं। तै० ब्रा० ३.११.८.। ब्राह्मणांतरोक्तमजायत। प्रादुरभवत्। पितोपदिष्टवानित्यर्थः। पुरस्तात्ततः पूर्वं बुध्न उक्तस्याग्रस्य मूलभूतं यमस्य गृहं प्रतिगच्छेति वचनमाततः। अतिविस्तृतमासीत्। अतस्तदशक्यपरिहारमिति पश्चात्क्रोधं परित्यज्य निरयणं तस्माद्यमान्निर्गमनोपायं कृतं। पित्राचरितं ॥ यद्वा। अनुदेय्यात्मानमनु दातव्यात्मस्वरूपव्यतिरिक्तान्यपदार्थसत्ता यथाभवद्भवति तदनुगुणं ततस्तस्मान्मायाविशिष्टादात्मनोऽग्रं स्रष्टव्यस्य विकारजातस्याद्यं मनस्तत्त्वं सिसृक्षाकारणमजायत। उदपद्यत। पुरस्तात्सृष्टेः प्रागवस्थायां बुध्नो मूलमव्याकृतं मायात्मकं कारणमेवाततः। आ समंतात्ततं विस्तृतमासीत्। पश्चात्तमस उत्पत्त्यनंतरं निरयणं तद्गतानां कार्याणां तस्मात्कारणान्निर्गमनं घटपटादिभेदेन स्वरूपालंभनं कृतं। ब्रह्मणा निर्मितं। तथा मृद्विकारो घटादिर्मृदोऽन्यो न भवति। आदित्यानुग्रहाद्ब्रह्मभावं प्राप्तस्य मम विकारः प्रपंचो मदन्यो न भवतीति व्यतिरिक्तस्य पित्रादेराक्षेपः पूर्वोक्तः समर्थितः ॥

॥ अथ सप्तमी ॥

इदं यमस्य सादनं देवमानं यदुच्यते।

इयमस्य धम्यते नाळीरयं गीर्भिः परिष्कृतः ॥७॥

इदं। यमस्य। सदनं। देवऽमानं। यत्। उच्यते।

इयं। अस्य। धम्यते। नाळीः। अयं। गीःऽभिः। परिऽकृतः ॥७॥

इदं यमस्य नियंतुरादित्यस्य वैवस्वतस्य वा सदनं स्थानं। छांदसः सांहितिको दीर्घः। यत्सदनं देवमानं देवैर्निर्मितमित्युच्यते। सर्वत्राभिधीयते। यद्वा देवानां रश्मीनां निर्माणसाधनमिति गीयते। अस्य यमस्य प्रीणनायेयं नाळीर्वाद्यविशेषो वेणुर्धम्यते। वाद्यते। यद्वा नाळीति वाङ्नाम। इयं स्तुतिरूपा वागस्य प्रीणनाय धम्यते। उच्चार्यते। एवं सत्ययं यमो गीर्भिः स्तुतिभिः परिष्कृतः। अलंकृतोऽभूत्। संपर्युपेभ्य इति सुडागमः। परिनिविभ्य इति षत्वं। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं ॥

॥ इत्यष्टमस्य सप्तमे त्रयोविंशो वर्गः ॥

केशीति सप्तर्चमष्टमं सूक्तमग्निसूर्यवायुदेवताकं। वातरशनपुत्रा जूतिवातजूतिप्रभृतयः प्रत्यृचं क्रमेणर्षयः। तथा चानुक्रांतं। केशी मुनयो वातरशना जूतिर्वातजूतिर्विप्रजूतिर्वृषाणकः करिक्रत एतश ऋष्यशृंगश्चैकर्चाः कैशिनमिति। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

केश्य१ग्निं केशी विषं केशी बिभर्ति रोदसी।

केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥१॥

केशी। अग्निं। केशी। विषं। केशी। बिभर्ति। रोदसी इति।

केशी। विश्वं। स्वः। दृशे। केशी। इदं। ज्योतिः। उच्यते ॥१॥

केशाः केशस्थानीया रश्मयः। तद्वंतः केशिनोऽग्निर्वायुः सूर्यश्च। एते त्रयः स्तूयंते। केशी रश्मिभिर्युक्तः प्रकाशमानो वा सूर्योऽग्निं बिभर्ति। हविर्भिः पोषयति। धारयति वा। कालविशेषे ह्यग्नेः पोषणाय होमः। स च कालविशेषः सूर्यगत्यधीन इति सूर्य एव बिभर्तीत्युच्यते। तथा विषं। उदकनामैतत्। उदकं रश्मिभिर्घर्मसमय आहृतमयमेव केशी बिभर्ति विसृष्टं। तथा रोदसी द्यावापृथिव्यावप्ययमेव बिभर्ति। अपि च। विश्वं व्याप्तं स्वः सर्वं जगद्दृशे दर्शनायायमेव केशी करोति। प्रकाशयतीत्यर्थः। इत्थं महानुभावः केशी को नामेत्यत आह। इदं दृश्यमानं मंडलस्थं यज्ज्योतिरिदमेव केशीत्युच्यते। नान्य इत्यर्थः ॥

॥ अथ द्वितीया ॥

मुनयो वातरशनाः पिशंगा वसते मला ।
वातस्यानु ध्राजिं यंति यद्देवासो अविक्षत ॥२॥
मुनयः । वातऽरशनाः । पिशंगा । वसते । मला ।
वातस्य । अनु । ध्राजिं । यंति । यत् । देवासः । अविक्षत ॥२॥

वातरशना वातरशनस्य पुत्रा मुनयोऽतींद्रियार्थदर्शिनो जूतिवातजूतिप्रभृतयः पिशंगा पिशंगानि कपिलवर्णानि मला मलिनानि वल्कलरूपाणि वासांसि वसते । आच्छादयंति । वस आच्छादने । आदादिकः । ईदृशास्ते यद्यदा देवासो देवास्तपसो महिम्ना दीप्यमानाः संतोऽविक्षत देवतास्वरूपं प्राविशन् । विशेर्लुङि शल इगुपधादनिटः क्सः । व्यत्ययेनात्मनेपदं । तदा ते वातस्य वायोर्ध्राजिं गतिमनु यंति । अनुगच्छंति । प्राणोपासनया प्राणरूपिणो वायुभावं प्रपन्ना इत्यर्थः ॥

॥ अथ तृतीया ॥

उन्मदिता मौनेयेन वाताँ आ तस्थिमा वयं ।
शरीरेदस्माकं यूयं मर्तासो अभि पश्यथ ॥३॥
उत्ऽमदिताः । मौनेयेन । वातान् । आ । तस्थिम । वयं ।
शरीरा । इत् । अस्माकं । यूयं । मर्तासः । अभि । पश्यथ ॥३॥

मौनेयेन मुनिभावेन लौकिकसर्वव्यवहारविसर्जनेनोन्मदिता उन्मत्ता उन्मत्तवदाचरंतः । यद्वा । उत्कृष्टं मदं हर्षं प्राप्ता वयं वातान्वायूनस्माभिरुपास्यमानाना तस्थिम । आस्थितवंतः । हे मर्तासो मनुष्या अस्माकं शरीरेच्छरीराण्येव यूयं केवलमभि पश्यथ । नास्मान् । यतो वयं नीरूपेण वायुना सायुज्यं प्राप्ताः ॥

॥ अथ चतुर्थी ॥

अंतरिक्षेण पतति विश्वा रूपावचाकशत् ।
मुनिर्देवस्यदेवस्य सौकृत्याय सखा हितः ॥४॥
अंतरिक्षेण । पतति । विश्वा । रूपा । अवऽचाकशत् ।
मुनिः । देवस्यऽदेवस्य । सौकृत्याय । सखा । हितः ॥४॥

मुनिरस्यर्चो द्रष्टा वृषाणक ऋषिर्वातरूपतां सूर्यात्मतां वा तत्तदुपासनया प्राप्तः सन्नंतरिक्षेणाकाशेन पतति। गच्छति। किं कुर्वन्। विश्वा विश्वानि सर्वाणि रूपाणि रूप्यमाणानि पदार्थजातान्यवचाकशत्। अभिपश्यन्। स्वतेजसा दर्शयन्। तथा देवस्यदेवस्य। नित्यवीप्सयोरिति द्विर्वचनं। अनुदात्तं चेति परस्याम्रेडितस्यानुदात्तत्वं। सर्वस्यापि देवस्य सखा सखिभूतोऽत एव सौकृत्याय। सुष्टु देवानुद्दिश्य क्रियमाणं यागात्मकं कर्म सुकृतं। तस्य भावाय सम्यगनुष्ठापनाय हितः। निहितः स्थापितो भवति ॥

॥ अथ पंचमी ॥

वातस्याश्वो वायोः सखाथो देवेषितो मुनिः।
उभौ समुद्रावा क्षेति यश्च पूर्व उतापरः ॥५॥

वातस्य। अश्वः। वायोः। सखा। अथो इति। देवऽइषितः। मुनिः।
उभौ। समुद्रौ। आ। क्षेति। यः। च। पूर्वः। उत। अपरः ॥५॥

वातस्य वायोर्गतिरिवाश्वो व्याप्तः। यद्वा वायोरशिता भोक्ता। वायुरेव तस्याहार इत्यर्थः। अत एव वायोः सखा मित्रभूतः। अथो अपि च देवेषितो देवेन द्योतमानेन वायुना सूर्येण वेषितः प्राप्तः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। ईदृशो मुनिः करिक्रताख्य ऋषिरुक्तप्रकारेण वायुरूपः सूर्यरूपो वा सन् उभौ समुद्रावुदधी आ क्षेति। अभिगच्छति। क्षि निवासगत्योः। छांदसो विकरणस्य लुक्। कौ तौ समुद्रौ। यश्च पूर्वः समुद्रः। उतशब्दश्चार्थे। यश्चापरः समुद्रः ॥

॥ अथ षष्ठी ॥

अप्सरसां गंधर्वाणां मृगाणां चरणे चरन्।
केशी केतस्य विद्वान्सखा स्वादुर्मदिंतमः ॥६॥

अप्सरसां। गंधर्वाणां। मृगाणां। चरणे। चरन्।
केशी। केतस्य। विद्वान्। सखा। स्वादुः। मदिन्ऽतमः ॥६॥

अप्सरसां देवस्त्रीणां गंधर्वाणां चरणे संचारभूते दिव्यंतरिक्षे च। तथा मृगाणां सिंहादीनां संचारस्थले पृथिव्यां चरन् व्याप्य संचरन्केश्यग्निर्वायुः सूर्यो वा केतस्य ज्ञातव्यस्य सर्वस्यार्थजातस्य विद्वान्। यद्वा ज्ञातव्यस्यास्यर्षेरेतशस्य सखा विद्वान्

अविशेषात्सर्वं जानन् स्वादुः स्वादयिता रसयिता सर्वस्य रसस्योत्पादकोऽत एव मदिंतमो मादयितृतमो भवति। नाड्वस्येति नुडागमः ॥

॥ अथ सप्तमी ॥

वायुरस्मा उपामंथत्पिनष्टि स्मा कुनंनमा।
केशी विषस्य पात्रेण यद्रुद्रेणापिबत्सह ॥७॥
वायुः। अस्मै। उप। अमंथत्। पिनष्टि। स्म। कुनंनमा।
केशी। विषस्य। पात्रेण। यत्। रुद्रेण। अपिबत्। सह ॥७॥

केशी रश्मिभिर्युक्तः सूर्यो रुद्रेण रुद्रपुत्रेण मरुद्गणेन। यद्वा रुद्रो वा एष यदग्निरिति श्रवणाद्रुद्रो वैद्युताग्निः। तेन सह वर्तमानो विषस्य। उदकनामैतत्। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। विषमुदकं पात्रेण पानसाधनेन रश्मिजालेन यद्यदापिबत् पिबति तदास्मै केशिने वायुरुपामंथत्। भूगतं सर्वं रसमुपमथ्नाति। यद्वा यदापिबत् पीतवान्भवति तदा सूर्यमंडले घनीभूतमस्य तदुदकं वायुरुपमथ्नाति। मंथनेन वैद्युताग्निनालोडयति। तथा कुनंनमा कुत्सितमपि भृशं नमयित्री स्वयं नमयितुमशक्या स्वतंत्रा माध्यमिका वाक् पिनष्टि स्म। यथाधस्तात्स्रवति तथा चूर्णीकरोति। स्मेति प्रसिद्धौ। कुपूर्वान्नमयतेः पचाद्यचि यङोऽचि चेति यङो लुक्। थाथादिनोत्तरपदांतोदात्तत्वं ॥

॥ इत्यष्टमस्य सप्तमे चतुर्विंशो वर्गः ॥

उत देवा इति सप्तर्चं नवमं सूक्तमानुष्टुभं वैश्वदेवं भरद्वाजकश्यपगोतमात्रिविश्वामित्रजमदग्निवसिष्ठा इति क्रमेण प्रत्यृचमृषयः। तथा चानुक्रांतं। उत देवाः सप्तर्षय एकर्चा वैश्वदेवमिति। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

उत देवा अवहितं देवा उन्नयथा पुनः।
उतागश्चक्रुषं देवा देवा जीवयथा पुनः ॥१॥
उत। देवाः। अवऽहितं। देवाः। उत्। नयथ। पुनरिति।
उत। आगः। चक्रुषं। देवाः। देवाः। जीवयथ। पुनरिति ॥१॥

उतापि च हे देवा अवहितमुन्नयथ। उतापि च हे देवा आगोऽपराधं चक्रुषं

कृतवंतं मां तस्मादागसो रक्षत। हे देवा रक्षित्वा च पुनः पश्चाज्जीवयथ। चिरजीविनं कुरुत ॥

॥ अथ द्वितीया ॥

द्वाविमौ वातौ वात आ सिंधोरा परावतः।
दक्षं ते अन्य आ वातु परान्यो वातु यद्रपः ॥२॥
द्वौ। इमौ। वातौ। वातः। आ। सिंधोः। आ। पराऽवतः।
दक्षं। ते। अन्यः। आ। वातु। परा। अन्यः। वातु। यत्। रपः ॥२॥

इमौ दृश्यमानौ द्वौ वातौ पुरो वातः पश्चाद्वातश्चा सिंधोः। आ समुद्रात्। मर्यादायामाकारः। यद्वा। आ परावतः समुद्रादपि यो दूरदेशस्तं देशमवधीकृत्य वातः। गच्छतः। वा गतिगंधनयोः। आदादिकः। तयोर्वातयोरन्य एको हे स्तोतस्ते तव दक्षं बलमा वातु। आगमयतु। अन्यश्च त्वदीयं यद्रपः पापं तत्परा वातु। परागमयतु ॥

॥ अथ तृतीया ॥

आ वात वाहि भेषजं वि वात वाहि यद्रपः।
त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥३॥
आ। वात। वाहि। भेषजं। वि। वात। वाहि। यत्। रपः।
त्वं। हि। विश्वऽभेषजः। देवानां। दूतः। ईयसे ॥३॥

हे वात भेषजं सुखं व्याध्युपशमनमौषधं वा वाहि। आगमय। हे वात यद्रपोऽस्मदीयं पापं तद्वि वाहि। विगमय। अस्मत्तो विश्लेषय। त्वं हि खलु देवानां दूतो विश्वभेषजः। विश्वानि भेषजानि यस्मिन्। बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं। ईदृशश्च सन् ईयसे। सततं गच्छसि। ईङ् गतौ। दैवादिकः। श्यनो नित्त्वाञ् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं। हि चेति निघातप्रतिषेधः ॥

॥ अथ चतुर्थी ॥

आ त्वागमं शंतातिभिरथो अरिष्टतातिभिः।
दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते ॥४॥

आ। त्वा। अगमं। शंताति॑ऽभिः। अथो॒ इति॑। अरि॒ष्टताति॑ऽभिः।
दक्षं॑। ते॒। भद्रं। आ। अभा॒र्षं॑। परा॑। यक्ष्मं॑। सुवामि॒। ते॒ ॥४॥

हे स्तोतः त्वा त्वां शंतातिभिः सुखकरैरथो अपि चारिष्टतातिभिरहिंसाकरैश्च रक्षणैरागमं। आगतवानस्मि। शिवशमरिष्टस्य कर इत्युभयत्र तातिल्प्रत्ययः। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। अपि च भद्रं कल्याणं ते तव दक्षं बलमाभार्षं। आहार्षं। वायुसकाशादानैषं। तथा ते तव यक्ष्मं रोगं च परा सुवामि। विनाशयामि ॥

॥ अथ पंचमी ॥

त्रायंतामिह देवास्त्रायंतां मरुतां गणः।
त्रायंतां विश्वा भूतानि यथायमरपा असत् ॥५॥
त्रायंतां। इह। देवाः। त्रायंतां। मरुतां। गणः।
त्रायंतां। विश्वा। भूतानि। यथा। अयं। अरपाः। असत् ॥५॥

इहास्मिन्देशे सर्वे देवास्त्रायंतां। अस्मान्पालयंतां। तथा मरुतां गणः संघः स त्रायतां। विश्वानि सर्वाण्यन्यानि च भूतानि भूतजातानि त्रायंतां। अस्मान्रक्षंतु। यथायमस्मदीयः शरीरादिररपा असत् पापरहितो भवति तथेत्यर्थः। रप इति पापनाम। नञा बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। अस्तेर्लेट्यडागमः। यावद्यथाभ्यामिति निघाताभावः ॥

॥ अथ षष्ठी ॥

आप इद्वा उ भेषजीरापो अमीवचातनीः।
आपः सर्वस्य भेषजीस्तास्ते कृण्वंतु भेषजं ॥६॥
आपः। इत्। वै। ऊं इति। भेषजीः। आपः। अमीवऽचातनीः।
आपः। सर्वस्य। भेषजीः। ताः। ते। कृण्वंतु। भेषजं ॥६॥

आप इद्वा आप एव खलु भेषजीर्भेषजभूताः। स्नानपानादिना सुखहेतवः। यद्वौषधिरूपेण परिणता रोगोपशमनहेतवो भवंति। केवलमामकेत्यादिना भेषजशब्दाद्ङीप्। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं। जसि वा छंदसीति पूर्वसवर्णदीर्घत्वं। यत एवमतः कारणादापोऽमीवचातनीरमीवचातन्यो रोगाणां नाश-

यित्र्यो भवंति। चातयतिर्वधकर्मा। किंच। आपः सर्वस्य प्राणिजातस्य भेषजीर्भेषजभूता भवंति न कतिपयस्य। तास्तथाविधा आपस्ते तव भेषजं कृखंतु। कुर्वंतु॥

॥ अथ सप्तमी ॥

हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी।
अनामयित्नुभ्यां त्वा ताभ्यां त्वोप स्पृशामसि ॥७॥

हस्ताभ्यां। दशऽशाखाभ्यां। जिह्वा। वाचः। पुरःऽगवी।
अनामयित्नुऽभ्यां। त्वा। ताभ्यां। त्वा। उप। स्पृशामसि ॥७॥

दशशाखाभ्यां। दशांगुलयः शाखाभूता ययोस्ताहशाभ्यां प्रजापतेर्हस्ताभ्यां सृज्यमाना जिह्वा रसना वाचः शब्दस्य पुरोगवी पुरतो गंत्री जाता। यत्र यत्र शब्दस्तत्र सर्वत्र तस्य शब्दस्योच्चारणाय पुरतो व्याप्रियत इत्यर्थः। अनामयित्नुभ्यां सम्यगारोग्यहेतुभ्यां ताभ्यां हस्ताभ्यां हे स्तोतस्त्वा त्वामुप स्पृशामसि। उपस्पृशामः। इदंतो मसिः। त्वेति पुनरुक्तिः पादपूरणार्था॥

॥ इत्यष्टमस्य सप्तमे पंचविंशो वर्गः ॥

तव त्य इति षड्टचं दशमं सूक्तमुरुनाम्नः पुत्रस्यांगाख्यस्यार्षं जागतमैंद्रं। तथा चानुक्रांतं। तव त्ये षळंग औरवो जागतमिति। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

तव त्य इंद्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलं।
यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यंश्च दंसयः ॥१॥

तव। त्ये। इंद्र। सख्येषु। वह्नयः। ऋतं। मन्वानाः। वि। अदर्दिरुः। वलं।
यत्र। दशस्यन्। उषसः। रिणन्। अपः। कुत्साय। मन्मन्। अह्यः। च। दंसयः॥१॥

हे इंद्र तव सख्येषु सखित्वेषु सत्सु त्ये ते प्रसिद्धा वह्नयो वोढारो हविषां स्तुतीनां वात एवर्तं यज्ञं मन्वाना अवबुध्यमाना अंगिरसो वलं गवामपहर्तारमेतत्संज्ञकमसुरं व्यदर्दिरुः। अत्यर्थं व्यदारयन्। दॄ विदारणे। अस्माद्यङ्लुगंताल्लुङ्। सिजभ्यस्तेति झेर्जुः। जुसि चेति गुणः। व्यत्ययेनेत्वं। अपि च यत्र यस्मिन्काले मन्मन् मन्मनि स्तोत्रे सति कुत्साय महर्षय उषस उषःकालान्वृत्रेणावृतत्वात्पूर्व-

मसत्मायांस्तदपनोदनेन दृशस्यन्प्रयच्छन् तथापो वृत्रेणावृतान्युदकानि च रिणन् तस्मान्निर्गमयन्वर्तसे। री गतिरेषणयोः। क्रैयादिकः। प्वादीनां ह्रस्वत्वं। तदानीमह्नोऽहेर्वृत्रस्य च दंसयः कर्माणि वितथान्यासन्नित्यर्थः ॥

॥ अथ द्वितीया ॥

अवासृजः प्रस्वः श्वंचयो गिरीनुदाज उस्रा अपिबो मधु प्रियं।
अवर्धयो वनिनो अस्य दंससा शुशोच सूर्य ऋतजातया गिरा ॥२॥

अव। असृजः। प्रऽस्वः। श्वंचयः। गिरीन्। उत्। आजः। उस्राः। अपिबः। मधु। प्रियं।
अवर्धयः। वनिनः। अस्य। दंससा। शुशोच। सूर्यः। ऋतऽजातया। गिरा ॥२॥

हे इंद्र प्रस्वः। प्रसूतिर्जन्म। तद्धेतुभूता अपोऽवासृजः। आवरकान्मेघादधः पातितवानसि। तथा गिरीन्पर्वतान्बलेन गोमतो विलस्य पिधानाय निहिताञ्श्वंचयः। अभैत्सीरित्यर्थः। श्वचि गतौ। अस्माण्यंताल्लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या इति वचनात्पूर्वपदस्यासमानवाक्यगतत्वेनास्य तिङ्ङतिङ इति निघाताभावः। तथा वलासुरेण विले निहिता उस्रा गाः पर्वतभेदनानंतरमुदाजः। उदगमयः। ततः पयोदध्याज्यादिकं प्रियमनुकूलं मधु मधुरं हविरपिबः। पीतवानसि। यद्वाश्रपणसाधनासु तासु गोष्वागतासु यजमानैः प्रियमभीष्टं मधु सोमात्मकमपिबः। पिबसि। तथा वनिनो वनसंबद्धान्वृक्षान्। यद्वा वनमित्युदकनाम। तद्युक्तान्समुद्रानवर्धयः। वृष्टिप्रदानेन वर्धयसि। ऋतजातया। ऋतं यज्ञं। तदर्थं जातं जन्म यस्यास्तया गिरा वेदात्मिकया वाचा स्तूयमानस्यास्येंद्रस्य दंससा कर्मणावृण्वतो वृत्रादेरपि नोदनात्मकेन सूर्यः शुशोच। नभसि प्रदिदीपे। यद्वा। ऋतजातया गिरेति सूर्यस्यैव विशेषणं। त्रयीरूपया वाचा प्रदीप्यत इत्यर्थः। ऋग्भिः पूर्वाह्णे दिवि देव ईयत इत्यादिकं तैत्तिरीयकमत्रानुसंधेयं।३.१२.९.। शुशोचेत्यस्य पदात्परत्वेऽपि पादादित्वादपादादाविति पर्युदासस्यानुवृत्तेर्निघाताभावः ॥

॥ अथ तृतीया ॥

वि सूर्यो मध्ये अमुचद्रथं दिवो विदद्दासाय प्रतिमानमार्यः।
दृळ्हानि पिप्रोरसुरस्य मायिन इंद्रो व्यास्यच्चकृवाँ ऋजिश्वना ॥३॥

वि। सूर्यः। मध्ये। अमुचत्। रथं। दिवः। विदत्। दासाय। प्रतिऽमानं। आर्यः।
दृळ्हानि। पिप्रोः। असुरस्य। मायिनः। इंद्रः। वि। आस्यत्। चकृऽवान्। ऋजिश्वना॥३॥

दिवो द्युलोकस्य मध्ये सूर्य आदित्यो रथं प्रस्थानाय व्यमुचत्। विमुक्तवान्। मुचेर्लुङि लृदित्वाच्च्लेरङादेशः। कदेति चेदुच्यते। यदार्योऽभिज्ञ इंद्रो दासायोपक्षयित्रे वृत्रादये प्रतिमानं प्रतिकृतिं प्रतीकारं विदत्। वेत्ति जानाति। अलभत वा। अपि च मायिनो मायाविनः। मायाशब्दस्य व्रीह्यादिषु पाठाद्व्रीह्यादिभ्यश्चेतीनिप्रत्ययः। पिप्रोरेतन्नाम्नोऽसुरस्य दृळ्हानि दृढानि स्थिराणि पुराणि बलानि वर्जिश्वना राजर्षिणा चकृवान् सख्यं कुर्वन्निंद्रो व्यास्यत्। व्यक्षिपत्। विविधमाक्षिप्तवान्। व्यनीनशदित्यर्थः। असु क्षेपणे॥

॥ अथ चतुर्थी ॥

अनाधृष्टानि धृषितो व्यास्यन्निधीरदेवाँ अमृणदयास्यः।
मासेव सूर्यो वसु पुर्यमा ददे गृणानः शत्रूँरशृणाद्विरुक्मता॥४॥

अनाधृष्टानि। धृषितः। वि। आस्यत्। निऽधीन्। अदेवान्। अमृणत्। अयास्यः।
मासाऽइव। सूर्यः। वसु। पुर्यं। आ। ददे। गृणानः। शत्रून्। अशृणात्। विरुक्मता॥४॥

धृषितः शत्रूणां धर्षयिता प्रगल्भ इंद्रोऽनाधृष्टानीतः पूर्वं शत्रुभिरप्रधृष्टान्यबाधितान्यसुरबलानि व्यास्यत्। व्याक्षिप्तवान्। तथायास्योऽयासनीयश्चालयितुमशक्यः। यद्वायास्योऽंगिराः। स्तोतृवाचिना शब्देन स्तुत्यो लक्ष्यते। अयास्येनर्षिणा स्तुत्य इंद्रो निधीनसुरैर्निहितान्धनसमूहान् यद्वा निधातॄन्नितरां बलानां धारयितॄनदेवान्देवविरोधिनोऽसुरानमृणत्। अहिंसीत्। मृण हिंसायां। तौदादिकः। अपि च सूर्यो मासेव मासेनेव। पद्दन्नित्यादिना मासशब्दस्य मास्भावः। स यथा मासविशेषेण भौमान्रसानादत्ते तथा पुर्यमसुराणां पुरि भवं। भवे छंदसीति यत्। हलि चेति दीर्घस्य न भकुर्छुरां। पा० ८.२.७९.। इति प्रतिषेधः। यतोऽनाव इत्याद्युदात्तत्वं। ईदृशं वसु धनमाददे। आदत्ते स्म। आङो दोऽनास्यविहरण इत्यात्मनेपदं। तथा गृणानः स्तोतृभिः स्तूयमानः सन्। व्यत्ययेन कर्मणि कर्तृप्रत्ययः। शत्रूञ्शातयितॄनसुरान्विरुक्मता विरोचमानेन वज्रेणाशृणात्। अहिंसीत्॥

॥ अथ पंचमी ॥

अयुंद्धसेनो विभ्वा विभिंदता दाशंद्वृत्रहा तुज्यानि तेजते ।
इंद्रस्य वज्रादबिभेदभिश्नथः प्राक्रामच्छुंध्यूरजहादुषा अनः ॥५॥

अयुंद्धऽसेनः । विऽभ्वा । विऽभिंदता । दाशत् । वृत्रऽहा । तुज्यानि । तेजते ।
इंद्रस्य । वज्रात् । अबिभेत् । अभिऽश्नथः । प्र । अक्रामत् । शुंध्यूः । अजहात् । उषाः ।
अनः ॥५॥

विभ्वा विभुना व्याप्तेन विभिंदता विदारयतैवंविधेनापि परकीयबलेनायुद्ध-सेनोऽप्रहतसेनः । यद्वा विभ्वा । विभुर्व्याप्तः । विभिंदता शत्रुबलानि विदारयता वज्रेण वृत्रहा वृत्रं हतवान् एवंविध इंद्रो दाशत् । दाशति । स्तोतृभ्यो धनं प्रयच्छति । दाशृ दाने । लेट्यडागमः । तथा तुज्यानि प्रेर्याणि शत्रुबलानि तेजते । तनूकरोति । अल्पीकरोति । तिज निशाने । यद्वा शत्रून्प्रति प्रेर्याण्यायुधानि तेजते । निश्यति । तीक्ष्णीकरोति । ईदृशस्येंद्रस्याभिश्नथोऽभितो हिंसकाद्वज्रात्सर्वं शत्रुजातमबिभेत् । भीतिं प्राप्नोत् । एवमसुरेष्विंद्रेण निरस्तेषु शुंध्यूः शोधयितादित्यः प्राक्रामत् । जगत्प्रकाशनाय गंतुं प्रक्रांतवान् । उषा उषोदेवता चानः स्वकीयं शकटं रथमजहात् । गंतुं पर्यत्यजत् । ओहाक् त्यागे ॥

॥ अथ षष्ठी ॥

एता त्या ते श्रुत्यानि केवला यदेक एकमकृणोरयज्ञं ।
मासां विधानमदधा अधि द्यवि त्वया विभिन्नं भरति प्रधिं पिता ॥६॥

एता । त्या । ते । श्रुत्यानि । केवला । यत् । एकः । एकं । अकृणोः । अयज्ञं ।
मासां । विऽधानं । अदधाः । अधि । द्यवि । त्वया । विऽभिन्नं । भरति । प्रऽधिं । पिता ॥६॥

हे इंद्र त्या तानि ते तव त्वदीयानि वीर्यकर्माण्येतैतान्येव केवला केवलानि श्रुत्यानि श्रोतव्यानि स्तुत्यर्हाणि । नान्यदीयानि । कानि पुनस्तानि । एकोऽसहायस्त्वमेकं प्रधानभूतमयज्ञं यज्ञरहितमसुरमकृणोरहिंसीरिति यदेतदेकं कर्म । कृवि हिंसाकरणयोः । अत्र हिंसार्थः । इदित्त्वान्नुम् । धिन्विकृण्व्योरच्चेत्युप्रत्ययोऽकारांतादेशश्च । तस्य लोपे सति स्थानिवद्भावाल्लघूपधगुणाभावः । तथा मासां मासानां । पद्दन्नित्यादिना मासशब्दस्य मास्भावः । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं ।

मासानां विधानं विधातारं कर्तारं सूर्यमधि द्यवि द्युलोक उपर्यदधाः। अधारयः। विपूर्वाद्दधातेः कृत्यल्युटो बहुलमिति कर्तरि ल्युट्। इदमपरं कर्म। तथा पिता पालको द्युलोको विभिन्नं विदारितं वृत्ताद्विभक्तं प्रधिं रथचक्रस्य पार्श्वं। पार्श्वफलके प्रधी इत्युच्येते। ईदृशं सूर्यरथसंबंधिनं प्रधिमन्यैर्धारयितुमशक्यं त्वयैव भरति। धारयति। इदमपरं कर्म। एतत्प्रभृतीनि त्वया कृतानि कर्माणि परेषामसाधारणानि सर्वदाम्नातव्यानीत्यर्थः॥

॥ इत्यष्टमस्य सप्तमे षड्विंशो वर्गः॥

सूर्यरश्मिरिति षडृचमेकादशं सूक्तं त्रैष्टुभं। विश्वावसुर्नाम गंधर्व ऋषिः। स च पूर्वेण तृचेन सवितारं स्तुतवान् उत्तरेण स्वात्मानं। अतः प्रथमतृचस्य सविता देवता द्वितीयस्य गंधर्वः। तथा चानुक्रांतं। सूर्यरश्मिर्देवगंधर्वो विश्वावसुरात्मानमस्तौत्पूर्वार्धे सवितारमिति। गतो विनियोगः॥

॥ तत्र प्रथमा॥

सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ अजस्रं।

तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन्विश्वा भुवनानि गोपाः॥१॥

सूर्यऽरश्मिः। हरिऽकेशः। पुरस्तात्। सविता। ज्योतिः। उत्। अयान्। अजस्रं।

तस्य। पूषा। प्रऽसवे। याति। विद्वान्। संऽपश्यन्। विश्वा। भुवनानि। गोपाः॥१॥

सूर्यरश्मिः। उषसः प्रादुर्भावानंतरं सूर्यस्योदयात्पूर्वं यः कालस्तस्य कालस्याभिमानी देवः सवितेत्युच्यते। सूर्यरश्मिः सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य रश्मिरेव रश्मिर्यस्य स तथोक्तः। हरिकेशः। हरयो हरणशीला हरितवर्णा वा केशाः केशस्थानीयाः प्रकाशमाना वा दीप्तयो यस्येदृशः सविता सर्वस्य प्रेरको देवः पुरस्तात्पूर्वस्यां दिश्यजस्रमनवरतं ज्योतिस्तेज उदयान्। उद्याति। उद्गमयति। यातेरंतर्भावितण्यर्थाच्छांदसो लङ्। व्यत्ययेन बहुवचनं। संहितायां दीर्घादटि समानपाद इति नकारस्य रुत्वं। आतोऽटि नित्यमिति सानुनासिक आकारः। तस्य सवितुः प्रसवे प्रेरणेऽनुज्ञायां सत्यां विद्वाञ्जानन्गोपा गोपायिता रक्षिता पूषा पोषको देव आदित्यो याति। नभसि गच्छति। किं कुर्वन्। विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि संपश्यन्। सम्यक् प्रकाशयन्॥

॥ अथ द्वितीया ॥

नृचक्षा एष दिवो मध्य आस्त आपप्रिवान्रोदसी अंतरिक्षं ।
स विश्वाचीरभि चष्टे घृताचीरंतरा पूर्वमपरं च केतुं ॥२॥

नृऽचक्षाः । एषः । दिवः । मध्ये । आस्ते । आपप्रिऽवान् । रोदसी इति । अंतरिक्षं ।
सः । विश्वाचीः । अभि । चष्टे । घृताचीः । अंतरा । पूर्वं । अपरं । च । केतुं ॥२॥

नृचक्षा नॄन्मनुष्यान्पश्यन् यद्वा नृभिर्नेतृभी रश्मिभिः प्रकाशमान एष सविता दिवो द्युलोकस्य मध्य आस्ते । निषीदति । किं कुर्वन् । रोदसी द्यावापृथिव्यावंतरिक्षं चापप्रिवान् स्वतेजसापूरयन् । प्रा पूरणे । अस्माच्छांदसो लिट् । क्वसुश्चेति तस्य क्वसुरादेशः । वस्वेकाजाद्धसामितीडागमः । स देवो विश्वाचीर्विश्वमंचंतीः सर्वव्यापिनीः प्राच्यादिमहादिशोऽभि चष्टे । प्रकाशयति । तथा घृताचीर्घृतं दीप्तं रूपमंचंतीराग्नेय्यादिविदिशश्च प्रकाशयति । अंचतेः क्विनंतादंचतेश्चोपसंख्यानमिति ङीप् । ततो भसंज्ञायामच इत्याकारलोपे चाविति दीर्घत्वं । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे प्राप्ते चाविति पूर्वस्याच उदात्तत्वं । तथा पूर्वं पूर्वभागं केतुं प्रज्ञापनीयमपरं पृष्ठभागं चांतरांतरालं चाभि चष्टे । प्रकाशयति ॥

॥ अथ तृतीया ॥

रायो बुध्नः संगमनो वसूनां विश्वा रूपाभि चष्टे शचीभिः ।
देव इव सविता सत्यधर्मेंद्रो न तस्थौ समरे धनानां ॥३॥

रायः । बुध्नः । संऽगमनः । वसूनां । विश्वा । रूपा । अभि । चष्टे । शचीभिः ।
देवःऽइव । सविता । सत्यऽधर्मा । इंद्रः । न । तस्थौ । संऽअरे । धनानां ॥३॥

रायो धनस्य बुध्नो बंधको मूलभूतो वा । ऊडिदमित्यादिना रैशब्दाद्विभक्तेरुदात्तत्वं । तथा वसूनां धनानां संगमनः संगमयिता प्रापयितेदृशः सविता शचीभिर्दीप्तिभिर्विश्वा रूपा सर्वाणि रूपाणि निरूपणीयानि पदार्थजातान्यभि चष्टे । अभिपश्यति । प्रकाशयति । अपि च देव इवायं सविता सावको देवः सत्यधर्मा सत्यमवितथं धर्म धारणं धारणहेतुभूतं कर्म वा यस्य तादृशो भवति । तथेंद्रो न इंद्र इव धनानां समरे संग्रामे सम्यक्प्रापणे तस्थौ । अयं सवितोद्युक्तः सन् तिष्ठति ॥

॥ अथ चतुर्थी ॥

विश्वावसुं सोम गंधर्वमापो दहशुषीस्तदृतेना व्यायन् ।
तदन्ववैदिंद्रो रारहाण आसां परि सूर्यस्य परिधींरपश्यत् ॥४॥
विश्वऽवसुं । सोम । गंधर्वं । आपः । दहशुषीः । तत् । ऋतेन । वि । आयन् ।
तत् । अनुऽअवैत् । इंद्रः । ररहाणः । आसां । परि । सूर्यस्य । परिऽधीन् । अपश्यत् ॥४॥

हे सोम त्वया सहितं गंधर्वं गीतरूपां गां शब्दं धारयंतं विश्वावसुमेतत्संज्ञं मां । उत्तरत्र तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यदापो वसतीवर्याख्या दहशुषीर्दृष्टवत्यः । दृशेर्लिटः क्वसुः । उगितश्चेति ङीप् । वसोः संप्रसारणमिति संप्रसारणं । जसि वा छंदसीति पूर्वसवर्णदीर्घः । तत्तदानीमृतेन यज्ञेन हेतुना व्यायन् । विविधमगच्छन्यदृजनाः । तद्गमनमासामपां ररहाणो गमयितेंद्रोऽन्ववैत् । अन्वबुध्यत । बुद्ध्वा च कुत्र यज्ञः प्रवृत्त इति सूर्यस्य परिधीन्परितो धीयमानान्प्राच्यादिदिग्विभागान्पर्यपश्यत् । परितो दृष्टवान् ॥

॥ अथ पंचमी ॥

विश्वावसुरभि तन्नो गृणातु दिव्यो गंधर्वो रजसो विमानः ।
यद्वा घा सत्यमुत यन्न विद्म धियो हिन्वानो धिय इन्नो अव्याः ॥५॥
विश्वऽवसुः । अभि । तत् । नः । गृणातु । दिव्यः । गंधर्वः । रजसः । विऽमानः ।
यत् । वा । घ । सत्यं । उत । यत् । न । विद्म । धियः । हिन्वानः । धियः । इत् । नः । अव्याः ॥५॥

विश्वावसुर्गंधर्वो नोऽस्माकं तदभि गृणातु । अभिमुखं ब्रवीतु । गॄ शब्दे । क्रैयादिकः । प्वादित्वाद्ध्रस्वः । कीदृशः । दिव्यः । दिवि भवः । तथा रजस उदकस्य विमानो निर्माता । किं पुनस्तत् । यद्वा घ यच्च खलु सत्यमवितथं यथार्थफलं कर्मजातं । उतशब्दश्चार्थे । यच्च न विद्म न जानीमस्तदुभयं ब्रवीत्वित्यर्थः । ऋचि तुनुघेत्यादिना घशब्दस्य सांहितिको दीर्घः । शिष्टः पादः प्रत्यक्षकृतः । हे विश्वावसो धियः कर्माणि हिन्वानः सोमेन प्रवर्धयन् । हि गतौ वृद्धौ च । यद्वा धियः स्तुतीर्हिन्वानः प्राप्नुवन् नोऽस्माकं धिय इत्कर्माण्येव बुद्धीरेव वाव्याः । रक्ष ॥

॥ अथ षष्ठी ॥

सस्निमविंदच्चरणे नदीनामपावृणोद्दुरो अश्मव्रजानां ।
प्रासां गंधर्वो अमृतानि वोचदिंद्रो दक्षं परि जानादहीनां ॥६॥

सस्निं । अविंदत् । चरणे । नदीनां । अप । अवृणोत् । दुरः । अश्मऽव्रजानां ।
प्र । आसां । गंधर्वः । अमृतानि । वोचत् । इंद्रः । दक्षं । परि । जानात् । अहीनां ॥६॥

सस्निं । अद्भिः संस्नातं प्रकर्षेण सर्वस्य जगतः स्नापयितारं मेघं । स्ना शौचे । आदृगमहन इति किन्प्रत्ययः । लिड्वद्भावाद्द्विर्वचनं । नदीनां शब्दकारिणीनामपां चरणे संचरणस्थानेऽतरिक्षेऽविंदत् । इंद्रोऽलभत । लब्ध्वा चाश्मव्रजानां । अश्मा व्याप्तो मेघः । तत्र व्रजंतीनां । यद्वा मेघो व्रजो गोष्ठं निवासस्थानं यासां तादृशीनामपां दुरो द्वाराणि मेघान्निर्गमनप्रदेशानपावृणोत् । अपावृतवान् । यद्वा । अश्मसु शिलासु व्रजंतीनां गच्छंतीनां व्याप्तगमनानां वा नदीनां गंगायमुनादीनां चरणे संचरणे प्रवहणनिमित्तभूते सति तदर्थमिंद्रः सस्निं मेघमविंदत् । अलभत । लब्ध्वा चांतर्गतानामपां निर्गमसाधनानि मेघस्य दुरो द्वाराण्यपावृणोत् । अपावृतवान् । तथासां नदीनाममृतान्यमरणसाधकान्युदकानि गंधर्वो गोर्वज्रस्य धर्ता विश्वावसुरूपेण वर्तमान इंद्रः प्रावोचत् । प्रब्रवीति । प्रवोढुमनुजानाति । तथा दक्षं । दक्षत्युदकं प्रयच्छतीति दक्षो वर्षणसमर्थो मेघः । तादृशं मेघमहीनां मेघानां मध्ये परि जानात् । परितः सर्वतो जानाति । ज्ञा अवबोधने । लेट्यडागमः । ज्ञाजनोर्जेति जादेशः ॥

॥ इत्यष्टमस्य सप्तमे सप्तविंशो वर्गः ॥

अग्ने तवेति षड़्चं द्वादशं सूक्तं । पावकगुणविशिष्टोऽग्निर्ऋषिः । शुद्धाग्निर्देवता । आद्या विष्टारपंक्तिरष्टकद्विद्वादशाष्टकवती । अथ तिस्रः सतोबृहत्योऽयुजौ जागताविति लक्षणोपेताः । पंचम्युपरिष्टाज्ज्योतिः । षष्ठी त्रिष्टुप् । तथा चानुक्रांतं । अग्ने तवाग्निः पावक आग्नेयं विष्टारपंक्तिस्तिस्रः सतोबृहत्य उपरिष्टाज्ज्योतिरिति ॥ महाव्रत आग्निमारुतशस्त्र इदं सूक्तं स्तोत्रियानुरूपार्थं । तथैव पंचमारण्यके सूचितं ॥

॥ तत्र प्रथमा ॥

अग्ने तव श्रवो वयो महि भ्राजंते अर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥१॥

अग्ने । तव । श्रवः । वयः । महि । भ्राजंते । अर्चयः । विभावसो इति विभाऽवसो ।
बृहद्भानो इति बृहत्ऽभानो । शवसा । वाजं । उक्थ्यं । दधासि । दाशुषे । कवे ॥१॥

हे अग्ने तव वयोऽन्नं श्रवः श्रवणीयं प्रशस्यं । हविरात्मकस्य तस्य मंत्रसंस्कृतत्वेन प्रशस्तत्वात् । अन्नेषु मध्ये तवैवान्नं श्रेष्ठमित्यर्थः । हे विभावसो विशिष्टा दीप्तिर्विभा । सैव वसुर्धनं यस्य तादृशाग्नेऽर्चयो दीप्तयो महि महद्बहुलं भ्राजंते । दीप्यंते । भ्राजृ दीप्तौ । अनुदात्तेत् । भौवादिकः । हे बृहद्भानो प्रौढदीप्ते कवे क्रांतदर्शिन्नग्ने । एवं महानुभावस्त्वं शवसा बलेनोपेतमुक्थ्यं प्रशस्यं । यद्वोक्थो यज्ञः । तद्योग्यं वाजमन्नं दाशुषे हवींषि दत्तवते यजमानाय दधासि । ददासि । प्रयच्छसि ॥

॥ अथ द्वितीया ॥

पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥२॥

पावकऽवर्चाः । शुक्रऽवर्चाः । अनूनऽवर्चाः । उत् । इयर्षि । भानुना ।
पुत्रः । मातरा । विऽचरन् । उप । अवसि । पृणक्षि । रोदसी इति । उभे इति ॥२॥

पावकवर्चाः शोधकदीप्तिः शुक्रवर्चा निर्मलतेजस्कोऽनूनवर्चाः संपूर्णतेजस्कः । हे अग्ने ईदृशस्त्वं भानुना तेजसोदियर्षि । उद्गच्छसि । ऋ सृ गतौ । जौहोत्यादिकः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं । स त्वं पुत्रः सन् मातरा मातृभूते अरण्यौ विचरन् यागावसाने विशेषेण प्राप्नुवन् उपावसि । उपगतान्यजमानान्नक्षसि । तथोभे रोदसी द्यावापृथिव्यौ पृणक्षि । संयोजयसि । हविषा द्युलोकं वृष्ट्येमं लोकं च पूरयसीत्यर्थः । पृची संपर्के । रौधादिकः ॥

॥ अथ तृतीया ॥

ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मंदस्व धीतिभिर्हितः ।
त्वे इषः सं दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥३॥

ऊर्जः । नपात् । जातऽवेदः । सुशस्तिऽभिः । मंदस्व । धीतिऽभिः । हितः ।
त्वे इति । इषः । सं । दधुः । भूरिऽवर्पसः । चित्रऽऊतयः । वामऽजाताः ॥३॥

हे ऊर्जो नपादूर्जोऽन्नस्य पार्थिवस्यारण्यादेः पुत्र हे जातवेदो जातानां वेदितरग्ने सुशस्तिभिरस्माभिः क्रियमाणैर्मंदस्व । मोदस्व । तथा धीतिभिः कर्मभि-

रस्माभिः क्रियमाणैरग्निहोत्रादिभिः कर्मभिर्हितः सुहितस्तृप्तो भव। अपि च भूरिवर्पसः। वर्प इति रूपनाम। बहुविधरूपाश्चित्रोतयः। चित्रा विचित्रोतिस्तृप्तिर्यासां तास्तथोक्ताः। वामजाताः। वामं वननीयं जातं जन्म यासां तादृशीरिषोऽन्नानि हविर्लक्षणानि त्वे त्वय्येव सं दधुः। संदधति। सम्यग्जुह्वति यजमानाः। यद्वा भूरिवर्पस इत्यादिकं कर्तृविशेषणं। तदानीं चित्रोतय इत्यस्य विचित्ररक्षा इति योज्यं॥

॥ अथ चतुर्थी ॥

इ॒र॒ज्यन्न॑ग्ने प्रथयस्व ज॒न्तुभि॑र॒स्मे रायो॑ अमर्त्य ।
स द॑र्श॒तस्य॒ वपु॑षो॒ वि रा॑जसि पृ॒णक्षि॑ सान॒सिं क्रतुं॑ ॥४॥
इ॒र॒ज्यन्। अ॒ग्ने॒। प्र॒थ॒य॒स्व॒। ज॒न्तुऽभिः॑। अ॒स्मे इति॑। रायः॑। अ॒म॒र्त्य॒।
सः। द॒र्श॒तस्य॑। वपु॑षः। वि। रा॒ज॒सि॒। पृ॒णक्षि॑। सा॒न॒सिं। क्रतुं॑ ॥४॥

हे अग्ने जंतुभिर्जातैः शत्रुभिः सहेरज्यन् ईर्ष्यन्। स्पर्धां कुर्वन्। इरज् ईर्ष्यायां। कंड्वादिः। यद्वा। इरज्यतिरैश्वर्यकर्मा। जंतुभिर्जायमानैरात्मीयैस्तेजोभिरिरज्यन् ईश्वरो भवन् हे अमर्त्य मरणरहिताग्नेऽस्मे अस्माकं। सुपां सुलुगिति षष्ठ्याः शेआदेशः। रायो धनानि प्रथयस्व। विस्तारय। रयिशब्दाच्छसः स्थाने व्यत्ययेन जस्। शसो वा व्यत्ययेनोडिदमिति विभक्त्युदात्तत्वं न क्रियते। स त्वं दर्शतस्य दर्शनीयस्य वपुषस्तेजोमयस्य शरीरस्य वि राजसि। तृतीयार्थे षष्ठी वा। ईदृशेन शरीरेण विशेषेण दीप्यसे। यद्वा राजतिरैश्वर्यकर्मा वपुरिति च रूपनाम। दर्शनीयेन रूपेण वि राजसि। विशेषेणेशिषे। अत एव सानसिं संभजनीयं क्रतुं कर्म पृणक्षि। अस्माभिः संपर्चयसि। फलेन वा संयोजयसि॥

॥ अथ पंचमी ॥

इ॒ष्क॒र्तार॑मध्व॒रस्य॒ प्रचे॑तसं॒ क्षय॑न्तं॒ राध॑सो म॒हः ।
रा॒तिं वा॒मस्य॑ सु॒भगां॑ म॒हीमिषं॒ दधा॑सि सान॒सिं र॒यिं ॥५॥
इ॒ष्क॒र्तारं॑। अ॒ध्व॒रस्य॑। प्रऽचे॑तसं। क्षय॑न्तं। राध॑सः। म॒हः।
रा॒तिं। वा॒मस्य॑। सु॒ऽभगां॑। म॒हीं। इषं॑। दधा॑सि। सा॒न॒सिं। र॒यिं ॥५॥

इष्कर्तारं निष्कर्तारं। छांदसो वर्णलोपः। अध्वरस्य यज्ञस्य निष्कर्तारं संस्कर्तारं प्रचेतसं प्रकृष्टज्ञानं महो महतो राधसो धनस्य क्षयंतमीश्वरं। क्षयतिरैश्वर्यकर्मा।

वामस्य वननीयस्य धनस्य रातिं दातारं। रातेः कर्तरि क्तिच्। ईदृशं त्वां स्तुम इति शेषः। स त्वं सुभगां सौभाग्योपेतां महीं महतीमिषमन्नं सानसिं संभक्तव्यं रयिं धनं च दधासि। स्तोतृभ्यो ददासि॥

॥ अथ षष्ठी ॥

ऋतावानं महिषं विश्वदर्शतमग्निं सुम्नाय दधिरे पुरो जनाः।
श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥६॥

ऋतऽवानं। महिषं। विश्वऽदर्शतं। अग्निं। सुम्नाय। दधिरे। पुरः। जनाः।
श्रुत्ऽकर्णं। सप्रथःऽतमं। त्वा। गिरा। दैव्यं। मानुषा। युगा ॥६॥

ऋतावानं सत्यवंतं यज्ञवंतं वा। छंदसीवनिपाविति मत्वर्थीयो वनिप्। महिषं महांतं पूज्यं वा विश्वदर्शतं विश्वैः सर्वैर्दर्शनीयं। यद्वा विश्वं दर्शनं यस्य। बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं। ईदृशमग्निं सुम्नाय सुखार्थं जना ऋत्विग्यजमानरूपाः पुरो दधिरे। पुरो दधते। सर्वकर्मभ्यः पुरस्ताद्धारयंति। यद्वा पुरः पुरस्तात्पूर्वस्यां दिश्याहवनीयरूपेण धारयंति। परोऽर्धर्चः प्रत्यक्षकृतः। अपि च हे अग्ने श्रुत्कर्णं श्रुत् स्तुतीः सम्यक् शृण्वन्कर्णः श्रोत्रेंद्रियं यस्य तादृशं सप्रथस्तममतिशयेन प्रख्यातं। यद्वा सर्वतो विस्तर्यमाणं दैव्यं देवानां हविर्वोढृत्वेन संबंधिनमीदृशं त्वा त्वां मानुषा मानुषाणि मनोरपत्यानि युगा युगानि युगलानि पत्नीयजमानरूपाणि गिरा स्तुत्या स्तुवंतीति शेषः॥

॥ इत्यष्टमस्य सप्तमेऽष्टाविंशो वर्गः ॥

अग्न इति षडृचं त्रयोदशं सूक्तं। तापसगुणविशिष्टस्याग्नेरार्षं वैश्वदेवमानुष्टुभं। तथा चानुक्रांतं। अग्नेऽग्निस्तापसो वैश्वदेवमानुष्टुभं हीति। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

अग्ने अच्छा वदेह नः प्रत्यङ्नः सुमना भव।
प्र नो यच्छ विशस्पते धनदा असि नस्त्वं ॥१॥

अग्ने। अच्छ। वद। इह। नः। प्रत्यङ्। नः। सुऽमनाः। भव।
प्र। नः। यच्छ। विशः। पते। धनऽदाः। असि। नः। त्वं ॥१॥

हे अग्ने इहास्मिन्देशे नोऽस्मानच्छ वद। आभिमुख्येन प्रियं ब्रूहि। तथा प्रत्यङ्

अस्मान्प्रत्यंचन् सुमनाः शोभनमनस्को भव। हे विशस्पते यजमानलक्षणायाः प्रजायाः पालयितर्नोऽस्मभ्यं प्र यच्छ धनानि प्रदेहि यतस्त्वं नोऽस्माकं धनदा असि धनानां दाता भवसि ॥

॥ अथ द्वितीया ॥

प्र नो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः।
प्र देवाः प्रोत सूनृता रायो देवी ददातु नः ॥२॥
प्र। नः। यच्छतु। अर्यमा। प्र। भगः। प्र। बृहस्पतिः।
प्र। देवाः। प्र। उत। सूनृता। रायः। देवी। ददातु। नः ॥२॥

अर्यमारीणां नियंतार्याणां निर्माता वैतत्संज्ञो देवो नोऽस्मभ्यं प्र यच्छतु धनं। तथा भग एतत्संज्ञको देवश्च प्रयच्छतु। बृहस्पतिश्च प्रयच्छतु। सर्वे देवाश्च प्रयच्छंतु। उतापि च सूनृता प्रियसत्यवाग्रूपा देवी देवनशीला सरस्वती रायो धनानि नो ऽस्मभ्यं प्र ददातु। ऊडिदमित्यादिना रायो विभक्तिरुदात्ता ॥

॥ अथ तृतीया ॥

सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे।
आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिं ॥३॥
सोमं। राजानं। अवसे। अग्निं। गीःऽभिः। हवामहे।
आदित्यान्। विष्णुं। सूर्यं। ब्रह्माणं। च। बृहस्पतिं ॥३॥

राजानं राजमानमीश्वरं वा सोममग्निं च गीर्भिः स्तुतिभिरवसे रक्षणार्थं हवामहे। आह्वयामहे। तथादित्यानदितेः पुत्रान् मित्रादीन् विष्णुं सूर्यं ब्रह्माणं प्रजापतिं बृहस्पतिं च रक्षणार्थमाह्वयामहे ॥

॥ अथ चतुर्थी ॥

इंद्रवायू बृहस्पतिं सुहवेह हवामहे।
यथा नः सर्व इज्जनः संगत्यां सुमना असत् ॥४॥
इंद्रवायू इति। बृहस्पतिं। सुऽहवा। इह। हवामहे।
यथा। नः। सर्वः। इत्। जनः। संऽगत्यां। सुऽमनाः। असत् ॥४॥

इंद्रश्च वायुश्चेंद्रवायू। उभयत्र वायोः प्रतिषेधो वक्तव्य इत्यानङः प्रतिषेधः। नोत्तरपदेऽनुदात्तादाविति देवताद्वंद्वे चेति प्राप्तस्योभयपदप्रकृतिस्वरस्य निषेधः। समासस्येत्यंतोदात्तत्वं। बृहस्पतिं बृहतां देवानां पालकं। तद्बृहतोः करपत्योरिति सुट्तलोपौ। वनस्पत्यादित्वादुभयपदप्रकृतिस्वरत्वं। सुहवा सुहवौ सुह्वानाविंद्रवायू बृहस्पतिं चेहास्मिन्कर्मणि हवामहे। आह्वयामहे। यथा नोऽस्माकं सर्वं इत् सर्व एव जनः संगत्यां संगमने धनस्य प्राप्तौ सुमना असत्। शोभनमनस्को भवेत् तथाह्वयामह इत्यर्थः। अस्तेर्लेट्यडागमः॥

॥ अथ पंचमी ॥

अर्यमणं बृहस्पतिमिंद्रं दानाय चोदय।
वातं विष्णुं सरस्वतीं सवितारं च वाजिनं ॥५॥
अर्यमणं। बृहस्पतिं। इंद्रं। दानाय। चोदय।
वातं। विष्णुं। सरस्वतीं। सवितारं। च। वाजिनं ॥५॥

हे स्तोतः अर्यमादीन्देवान्दानाय धनप्रदानाय चोदय। स्तुत्या प्रेरय। तथा वातं वायुं विष्णुं सरस्वतीं वाजिनमन्नवंतं बलवंतं वा सवितारं च दानाय प्रेरय॥

॥ अथ षष्ठी ॥

त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय।
त्वं नो देवतातये रायो दानाय चोदय ॥६॥
त्वं। नः। अग्ने। अग्निऽभिः। ब्रह्म। यज्ञं। च। वर्धय।
त्वं। नः। देवऽतातये। रायः। दानाय। चोदय ॥६॥

हे अग्ने त्वमग्निभिस्त्वद्विभूतिभूतैरन्यैरग्निभिः सार्धं नोऽस्माकं ब्रह्म स्तोत्रं यज्ञं च वर्धय। तथा त्वं नोऽस्माकं देवतातये। यज्ञनामैतत्। यागार्थं रायो धनस्य दानाय प्रदानाय चोदय। दातॄन्प्रेरय॥

॥ इत्यष्टमस्य सप्तम एकोनत्रिंशो वर्गः॥

अयमग्न इत्यष्टर्चं चतुर्दशं सूक्तमाग्नेयं। शार्ङ्ग इति पक्षिविशेषस्याख्या। शार्ङ्गजातयो जरितृप्रभृतयश्चत्वारश्चतुर्णां द्वृचानां क्रमेण द्रष्टारः। आदितो द्वे जगत्यौ।

अथ चतस्रस्त्रिष्टुभः। ततो द्वे अनुष्टुभौ। तथा चानुक्रांतं। अयमष्टौ द्वृचाः शार्ङ्गा जरिता द्रोणः सारिसृक्कः स्तंबमित्रश्चाग्नेयमाद्ये जगत्यौ चतस्रस्त्रिष्टुभः ॥

॥ तत्र प्रथमा ॥

अयमग्ने जरिता त्वे अभूदपि सहसः सूनो नह्य१न्यदस्त्याप्यं।

भद्रं हि शर्म त्रिवरूथमस्ति त आरे हिंसानामप दिद्युमा कृधि ॥१॥

अयं। अग्ने। जरिता। त्वे इति। अभूत्। अपि। सहसः। सूनो इति। नहि। अन्यत्। अस्ति। आप्यं।

भद्रं। हि। शर्म। त्रिऽवरूथं। अस्ति। ते। आरे। हिंसानां। अप। दिद्युं। आ। कृधि ॥१॥

हे अग्ने त्वे त्वयि। सुपां सुलुगिति सप्तम्याः शेआदेशः। अयमृषिर्जरिता स्तोताभूदपि। अपिशब्दः संभावनायां। इदानीं स्तोतृत्वेन संभाव्यते। तत्र कारणमाह। हे सहसः सूनो बलस्य पुत्र त्वत्तोऽन्यदाप्यमाप्तव्यं न ह्यस्ति। न खलु विद्यते। अतः प्राप्तव्यं त्वामेव स्तुत्या प्राप्नोमि। भद्रं कल्याणं त्रिवरूथं दुःखत्रयस्य निवारकं शर्म सुखं हि यस्मात्ते तवास्ति विद्यते। अथवा शोभनं त्रिवरूथं त्रिभूमिकं गृहं तवास्ति हि। अतो हिंसानां हिंस्यमानानामस्माकमारे दूरे दिद्युं दीप्यमानामात्मीयां ज्वालामपा कृधि। अपाकुरु। निवारय। करोतेश्छांदसो विकरणस्य लुक्। श्रुशृणुपृकृवृभ्य इति हेर्धिभावः ॥

॥ अथ द्वितीया ॥

प्रवत्ते अग्ने जनिमा पितूयतः साचीव विश्वा भुवना न्यृंजसे।

प्र सप्तयः प्र सनिषंत नो धियः पुरश्चरंति पशुपा इव त्मना ॥२॥

प्रऽवत्। ते। अग्ने। जनिम। पितुऽयतः। साचीऽइव। विश्वा। भुवना। नि। ऋंजसे।

प्र। सप्तयः। प्र। सनिषंत। नः। धियः। पुरः। चरंति। पशुपाःऽइव। त्मना ॥२॥

हे अग्ने पितूयतः पितुमन्नं भक्ष्यमिच्छतस्ते तव जनिम जन्म प्रादुर्भावं प्रवत्प्रकृष्टमुत्कृष्टं भवति। उपसर्गाच्छंदसि धात्वर्थे इति वतिः। स त्वं साचीव सचिव इव विश्वा विश्वानि व्याप्तानि भुवनानि भूतजातानि न्यृंजसे। प्रसाधयसि। वशीकरोषीत्यर्थः। सप्तयः सर्पणशीला नोऽस्माकं धियः स्तुतयस्तादृशं त्वां प्र सनिषंत। प्रकर्षेण संभजंते। एकः प्रशब्दः पूरकः। यद्वा सप्तयः। लुप्तोपममेतत्। सर्पणशीला

अश्वा यथाजिं प्रकर्षेण संभजंते तथास्मदीया धिय इत्यर्थः। अनंतरं पुरस्तव पुरस्तात् त्मनात्मना स्वयमेव चरंति। व्याप्य वर्तंते। पशुपा इव। यथा पशूनां पालका गोपालाः पालयितव्यानां पुरस्तात्संचरंति तद्वत्॥

॥ अथ तृतीया ॥

उत वा उ परि वृणक्षि बप्सद्बहोरग्न उलपस्य स्वधावः।
उत खिल्या उर्वराणां भवंति मा ते हेतिं तविषीं चुक्रुधाम ॥३॥

उत। वै। ऊं इति। परि। वृणक्षि। बप्सत्। बहोः। अग्ने। उलपस्य। स्वधाऽवः।
उत। खिल्याः। उर्वराणां। भवंति। मा। ते। हेतिं। तविषीं। चुक्रुधाम ॥३॥

हे स्वधावो दीप्तिमन्नग्ने बप्सद्दहन्। भस भर्त्सनदीप्त्योः। जौहोत्यादिकः। शतरि घसिभसोर्हलि चेत्युपधालोपः। नाभ्यस्ताच्छतुरिति नुमः प्रतिषेधः। बहोर्बहुलस्योलुपस्य तृणजातस्य। कर्मणि षष्ठी। सर्वं वनमुत वा अपि खलु परि वृणक्षि। परिवर्जयसि। विनाशयसि। उ इति पूरकः। उतापि चोर्वराणां। सस्याढ्या भूमय उर्वराः। तासां संबंधिनः प्रदेशाः खिल्याः खिलाः प्राणिभिर्गंतुं योग्या भवंति। त्वया दग्धा इति शेषः। तविषीं महतीं ते तव हेतिं हननहेतुभूतां ज्वालां मा चुक्रुधाम। मा क्रोधयाम। अपि तु स्तुतिभिः प्रसाधयाम। ऊतियूतीत्यादिना हंतेः क्तिनि हेतिरित्यंतोदात्तो निपात्यते। चुक्रुधामेति क्रुधेर्ण्यंताल्लुङि चङि रूपं॥

॥ अथ चतुर्थी ॥

यदुद्वतो निवतो यासि बप्सत्पृथगेषि प्रगर्धिनीव सेना।
यदा ते वातो अनुवाति शोचिर्वप्तेव श्मश्रु वपसि प्र भूम ॥४॥

यत्। उत्ऽवतः। निऽवतः। यासि। बप्सत्। पृथक्। एषि। प्रगर्धिनीऽइव। सेना।
यदा। ते। वातः। अनुऽवाति। शोचिः। वप्ताऽइव। श्मश्रु। वपसि। प्र। भूम ॥४॥

यद्यदोद्वत उन्नतानुच्छ्रितान् निवतो नीचीनांस्तरुगुल्मादीन् हे अग्ने बप्सद्दहन्यासि प्राप्नोषि तदानीं वह्नीभिर्ज्वालाभिः पृथक् विभिन्नः सन् एषि। गच्छसि। तत्र दृष्टांतः। प्रगर्धिनीव सेना। गृधू अभिकांक्षायां। परराष्ट्रं गच्छतो राज्ञः सेना तत्रत्यं धनजातमभिकांक्षमाणेतस्ततः संघशो गच्छति तद्वत्। वातो वायुश्च ते तव शोचिः दीप्तिं यदा यस्मिन्काले ऽनुवात्यनुगुणं प्रवर्तते तदा श्मश्रु। श्म शरीरं। तत्र

श्रितं स्थितं केशरोमादिकं वप्नेव यथा वप्ता नापितो वपति मुंडयति तथा भूम भूमिं प्र वपसि। प्रकर्षेण मुंडयसि। सर्वं वनं निःशेषेण दहसीत्यर्थः॥

॥ अथ पंचमी ॥

प्रत्यस्य श्रेणयो ददृश्र एकं नियानं बहवो रथासः।
बाहू यदग्ने अनुमर्मृजानो न्यङ्ङुत्तानामन्वेषि भूमिं ॥५॥
प्रति। अस्य। श्रेणयः। ददृश्रे। एकं। निऽयानं। बहवः। रथासः।
बाहू इति। यत्। अग्ने। अनुऽमर्मृजानः। न्यङ्। उत्तानां। अनुऽएषि। भूमिं ॥५॥

अस्याग्नेर्दहतः श्रेणयो ज्वालापंक्तयः प्रति ददृश्रे। प्रतिदृश्यंते। ---। तद्वत्। अत्र सामर्थ्यादुपमानप्रतीतिः। हे अग्ने बाहू। तृतीयार्थे प्रथमा। बाहुभ्यां बाहुस्थानीयैर्ज्वालासमूहैरनुमर्मृजानः सर्वं वनं मृजञ्शोधयन्। दहन्नित्यर्थः। न्यङ् न्यंचन् प्रह्वीभवन् उत्तानामूर्ध्वाभिमुखां भूमिं यद्यदान्वेष्यनुगच्छसि तदानीमस्य श्रेणयो ददृश्र इत्यन्वयः॥

॥ अथ षष्ठी ॥

उत्ते शुष्मा जिहतामुत्ते अर्चिरुत्ते अग्ने शशमानस्य वाजाः।
उच्छ्वंचस्व नि नम वर्धमान आ त्वाद्य विश्वे वसवः सदंतु ॥६॥
उत्। ते। शुष्माः। जिहतां। उत्। ते। अर्चिः। उत्। ते। अग्ने। शशमानस्य। वाजाः।
उत्। श्वंचस्व। नि। नम। वर्धमानः। आ। त्वा। अद्य। विश्वे। वसवः। सदंतु ॥६॥

हे अग्ने ते तव शुष्माः शोषका ज्वाला उज्जिहतां। उद्गच्छंतु। तथा ते तवार्चिर्दीप्तिश्चोद्गच्छतु। शशमानस्य स्तूयमानस्य। यद्वा शश प्लुतगतौ। अस्मात्ताच्छीलिकश्चानश्। तस्य सार्वधातुकत्वे सति लसार्वधातुकत्वाभावाच्चित इत्यंतोदात्तत्वमेव शिष्यते। शशमानस्य सर्वं वनमभिक्रम्य शीघ्रं गच्छतस्तव वाजा वेगा हे अग्ने उज्जिहतां। स त्वं वर्धमानः सन्नुच्छ्वंचस्व। वन उद्गच्छस्व। श्वचि गतौ। भौवादिकः। इदित्त्वान्नुम्। तथा नि नम। प्रह्वीभव। उन्नतं वृक्षादिकं प्राप्योच्छ्रितो भव। अवनतं गुल्मादिकं प्राप्यावनतो भवेत्यर्थः। ईदृशं त्वा त्वामद्यास्मिन्काले विश्वे सर्वे वसवो वासयितारो रश्मयो देवा वा सदंतु। आसीदंतु। प्राप्नुवंतु। सदेर्व्यत्ययेन सीदादेशाभावः। शपि प्राप्ते व्यत्ययेनाब्वा कर्तव्यः॥

॥ अथ सप्तमी ॥

अपामिदं न्ययनं समुद्रस्य निवेशनं ।
अन्यं कृणुष्वेतः पंथां तेन याहि वशाँ अनु ॥७॥
अपां । इदं । निऽअयनं । समुद्रस्य । निऽवेशनं ।
अन्यं । कृणुष्व । इतः । पंथां । तेन । याहि । वशान् । अनु ॥७॥

इत्थं खांडववनस्य दाहे प्रवृत्तमग्निं जरितृप्रभृतयः स्वात्मनो रक्षणकामास्तुष्टुवुः। इदानीं च स्तंबमित्रः स्वनिवासभूमेर्दहनाभावायाग्नेरन्यत्र गमनं प्रार्थयते। इद-मस्मदीयं निवासस्थानमपामुदकानां न्ययनं। नियंति नितरां गच्छंत्यस्मिन्निति न्ययनं ह्रदः। तथा समुद्रस्योदधेश्च निवेशनं गृहं। यथा ह्रदः समुद्रस्य स्थानं च यथा दग्धुं न शक्यते तथा दाहयोग्यं न भवत्वित्यर्थः। इतोऽस्मादस्मदीयात्स्था-नादन्यं पंथां पंथानं मार्गं हे अग्ने कृणुष्व। कुरुष्व। तेन पथा वशाननु यथाकामं याहि। गच्छ ॥

॥ अथाष्टमी ॥

आयने ते परायणे दूर्वा रोहंतु पुष्पिणीः ।
ह्रदाश्च पुंडरीकाणि समुद्रस्य गृहा इमे ॥८॥
आऽअयने । ते । पराऽअयने । दूर्वाः । रोहंतु । पुष्पिणीः ।
ह्रदाः । च । पुंडरीकाणि । समुद्रस्य । गृहाः । इमे ॥८॥

अनयापि स्वनिवासस्य दाहानर्हता प्रतिपद्यते। हे अग्ने ते तवायन आगमने परायणे परागमने वा सत्यस्यां निवासभूमौ पुष्पिणीः पुष्पवत्यो दूर्वा रोहंतु। प्ररोहंतु। तथा ह्रदा अशोष्योदका जलाशयाश्च भवंतु पुंडरीकाणि पद्मानि च तेषु ह्रदेषु जायंतां। किं बहुना। समुद्रस्य जलधेरिमेऽस्मिन्निवासप्रदेशे गृहा आश्रय-भूता भवंतु। यथा समुद्रावासभूमिः कदाचिदपि न दह्यत एवं कदाचिदप्यस्मत्स्थानं न दह्यतामित्यर्थः। एतदुक्तं भवति। दूर्वाकांडप्ररोहणप्रार्थनेन स्वाश्रयस्य शीतलत्वं ह्रदप्रार्थनेन तृष्णोपशमनकारणस्य जलस्य सत्त्वं पुंडरीकसद्भावप्रार्थनेनोपभोग्यस्य फलादेः सत्ता समुद्रगृहत्वप्रार्थनेन दाहानर्हता चेत्येतत्सर्वं प्रतिपाद्यत इति ॥

॥ इत्यष्टमस्य सप्तमे त्रिंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टके सप्तमोऽध्यायः ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

दशमे मंडल एकादशेऽनुवाके चतुर्दश सूक्तानि व्याकृतानि। त्यं चिदिति षडृचं पंचदशं सूक्तं संख्यपुत्रस्यात्रेरार्षमानुष्टुभमश्विदेवताकं। तथा चानुक्रांतं। त्यं षट् सांख्योऽत्रिराश्विनमिति ॥ प्रातरनुवाकाश्विनशस्त्रयोरानुष्टुभे छंदसीदं सूक्तं। सूत्र्यते हि। आ नो विश्वाभिस्त्यं चिदत्रिमित्यानुष्टुभं। आ॰ ४.१५.। इति ॥

॥ तत्र प्रथमा ॥

त्यं चिदत्रिमृतजुरमर्थमश्वं न यातवे।
कक्षीवंतं यदी पुना रथं न कृणुथो नवं ॥१॥

त्यं। चित्। अत्रिं। ऋतऽजुरं। अर्थं। अश्वं। न। यातवे।
कक्षीवंतं। यदि। पुनरिति। रथं। न। कृणुथः। नवं ॥१॥

हे अश्विनौ शतद्वारे पीडायंत्रगृहेऽसुरैः प्रक्षिप्तो बद्धांगो योऽत्रिरस्ति त्यं चित्तमप्यत्रिमृतजुरं। ऋतं स्तोत्रं यज्ञो वा। तेन जीर्यंतं। सर्वदा युवयोः परिचरणशीलमित्यर्थः। जीर्यतेः क्विपि बहुलं छंदसीत्युत्वं। यद्वा। ऋतेन प्राप्तेनासुरकृतोपद्रवेण ज्वरितं रुग्णं। ज्वर रोगे। ज्वरत्वरेत्यादिना वकारस्योपधायाश्च स्थान ऊठ्। जूरी हिंसागत्योरित्यस्माद्वा क्विप्। अनयोः पक्षयोश्छांदसो ह्रस्वः। ईदृशं तमत्रिमर्थमर्थनीयं प्राप्तव्यं यातवे गंतुं युवां कृतवंतौ। तत्र दृष्टांतः। अश्वं न। यथाश्वो बंधनाद्विमुक्तः सन् शीघ्रं गच्छत्येवमयमपि युवयोः प्रसादादसुरकृतादुपद्रवजाताद्विमुच्यमानो यथास्थानमगच्छदित्यर्थः। या प्रापण इत्यस्मात्तुमर्थे सेसेनिति

तवेन्प्रत्ययः । यदि । अपि चेत्यर्थः । कक्षीवंतं । कक्ष्या रज्जुरश्वस्य । तद्वंतं । आसंदीवदष्ठीवदित्यादौ निपातनात्संप्रसारणं । दीर्घतमसः पुत्रमुशिक्प्रसूतमृषिं मंदबुद्धिं संतं युवां पुनर्नवं पुनरभिनवप्रज्ञं कृणुथः । अकृणुतं । अकुरुतं । रथं न । यथा कश्चिच्छिल्पी जीर्णं रथं पुनरभिनवं करोति तद्वत् । कृवि हिंसाकरणयोश्च । इदित्वान्नुम् । लङर्थे व्यत्ययेन लट् । धिन्विकृण्व्योरच्चेत्युप्रत्ययः । तत्संनियोगेनाकारांतादेशश्च । तस्यातो लोपे सति स्थानिवद्भावाल्लघूपधगुणाभावः । सति शिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधत इति वचनात्तिङ एव स्वरः शिष्यते । निपातैर्यद्यदिहंतेति निघातप्रतिषेधः ॥

॥ अथ द्वितीया ॥

त्वं चिदश्वं न वाजिनमरेणवो यमत्नत ।

दृळ्हं ग्रंथिं न वि ष्यतमत्रिं यविष्ठमा रजः ॥२॥

त्वं । चित् । अश्वं । न । वाजिनं । अरेणवः । यं । अत्नत ।

दृळ्हं । ग्रंथिं । न । वि । स्यतं । अत्रिं । यविष्ठं । आ । रजः ॥२॥

अरेणवोऽहिंस्यमानाः प्रबला असुरा वाजिनं वेगवंतमश्वं नाश्वमिव यमत्रिमत्नतातन्वत बद्धमकृषत । तनोतेर्लुङि तनिपत्योश्छंदसीत्युपधालोपः । त्वं चित्तं चात्रिं यविष्ठं युवतमं स्तुतेर्मिश्रयितृतमं वा रजः । रजांत्यस्मिञ्जना इति रजो भूलोकः । रज इमं लोकमाभि हे अश्विनौ वि ष्यतं । व्यमुंचतं । दृढं स्थिरतरं ग्रंथिं न ग्रंथिमिव । यथा कश्चित्तादृशं ग्रंथिमयत्नेन विमुंचति तथा युवां तमृषिमसुरकृताद्बंधनान्मोचितवंतावित्यर्थः । स्यतमिति षोऽंतकर्मणीत्यस्माल्लङि श्यन्योतः श्यनीत्योकारलोपे रूपं । छांदसोऽडभावः । यद्वा । अत्रिं मां बंधाद्वि ष्यतं विमुंचतमित्यृषिरसुरैर्बद्धः सन्नश्विनौ प्रार्थयते ॥

॥ अथ तृतीया ॥

नरा दंसिष्ठावत्रये शुभ्रा सिषासतं धियः ।

अथा हि वां दिवो नरा पुनः स्तोमो न विशसे ॥३॥

नरा । दंसिष्ठौ । अत्रये । शुभ्रा । सिसासतं । धियः ।

अथ । हि । वां । दिवः । नरा । पुनरिति । स्तोमः । न । विऽशसे ॥३॥

हे नरा नरौ नेतारौ हे दंसिष्ठौ दर्शनीयतमौ शुभ्रा शोभमानौ । ईदृशौ हे अश्विनौ अत्रय ऋषये मह्यं धियः कर्माणि बुद्धीर्वा सिषासतं । दातुमिच्छतं । षणु दाने । यद्वा । अत्रय इति षष्ठ्यर्थे चतुर्थी । अत्रेर्मम धियः स्तुतीः कर्माणि वा सिषासतं । संभक्तुमिच्छतं । सेवेयामित्यर्थः । वन षण संभक्तौ । अस्मात्सनतेः सनोतेर्वा सनि सनीवंतर्धेति विकल्पनादिडभावे जनसनखनामित्यात्वं । शुभ्रेत्यस्यामंत्रितस्यामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वेन पदादपरत्वेन पादादित्वात्तिङ्ङतिङ इति निघाताभावः । अदुपदेशाल्लसार्वधातुकानुदत्तत्वे सनो नित्त्वादाद्युदात्तत्वं । अथा ह्यनंतरमेव दिवः । दीव्यतीति स्तौतीति द्यौः स्तोता । तस्य मम स्तोमो न । नशब्दश्चार्थे । स्तोत्रं च हे नरा नेतारावश्विनौ वां युवां पुनर्विशसे । पुनरेवाद्यापि विशेषेण शंसितुं प्रभवतीति शेषः ॥

॥ अथ चतुर्थी ॥

चिते तद्वां सुराधसा रातिः सुमतिरश्विना ।
आ यन्नः सदने पृथौ समने पर्षथो नरा ॥४॥
चिते । तत् । वां । सुऽराधसा । रातिः । सुऽमतिः । अश्विना ।
आ । यत् । नः । सदने । पृथौ । समने । पर्षथः । नरा ॥४॥

हे सुराधसा शोभनदानावश्विना हे अश्विनौ सुमतिः शोभना स्तुतिरस्मदीया रातिर्हविर्दानं च तत्तस्मात्कारणाद्वां युवयोश्चिते । ज्ञानाय भवति । चिती संज्ञाने । अस्मात्संपदादिलक्षणो भावे क्विप् । सावेकाच इति विभक्तेरुदात्तत्वं । यद्यस्मात्कारणात्सदने यज्ञगृहे पृथौ विस्तीर्णे समने यज्ञे नोऽस्मान् हे नरा नेतारावा पर्षथ आपूरयथोऽभितो रक्षथो वा तस्माद्युवामस्मदीयं परिचरणं ज्ञातवंताविन्यनुमीमहे । पृ पालनपूरणयोरित्यस्माल्लेटि सिब्बहुलमिति सिप् । ततः शप् ॥

॥ अथ पंचमी ॥

युवं भुज्युं समुद्र आ रजसः पार ईंखितं ।
यातमच्छा पतत्रिभिर्नासत्या सातये कृतं ॥५॥
युवं । भुज्युं । समुद्रे । आ । रजसः । पारे । ईंखितं ।
यातं । अच्छ । पतत्रिऽभिः । नासत्या । सातये । कृतं ॥५॥

हे अश्विनौ युवं युवां समुद्र उदधौ निमग्नं रजस उदकस्य पारे प्रांते तरंगसमूह ईखितं डोलायितमेवंभूतं भुज्युं तुग्रपुत्रमच्छाभि पतत्रिभिः पक्षोपेतैर्नौविशेषैः सहा यातं। आगतवंतौ स्थः। आगत्य च हे नासत्या सत्यस्य नेतारौ सत्यस्वभावौ वा हे अश्विनौ सातये युवयोः संभजनाय समर्थं कृतं। पुनर्युवानं कुरुतं। करोतेर्लेङि छांदसो विकरणस्य लुक्। अडभावश्च ॥

॥ अथ षष्ठी ॥

आ वां सुम्नैः शंयू इव मंहिष्ठा विश्ववेदसा।
समस्मे भूषतं नरोत्सं न पिप्युषीरिषः ॥ ६॥
आ। वां। सुम्नैः। शंयू इवेति शंयूऽइव। मंहिष्ठा। विश्वऽवेदसा।
सं। अस्मे इति। भूषतं। नरा। उत्सं। न। पिप्युषीः। इषः ॥ ६॥

हे विश्ववेदसा सर्वज्ञौ सर्वधनौ वा हे नरा नेतारौ वां युवां शंयू इव सुखयुक्तौ राजानाविव मंहिष्ठा दातृतमावतिशयेन पूज्यौ वा संतौ सुम्नैरस्मभ्यं दातव्यैः सुखैः सार्धमा। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। आ गच्छतं। यद्वोपसर्गस्य भूषतमित्यनेन संबंधः। मंहिष्ठेत्यपि संबोधनं। हे मंहिष्ठा दातृतमावुक्तगुणावश्विनौ वां युवां सुम्नैः सार्धं शंयू इवास्मे अस्मान् सम्यगा भूषतं। अभिप्राप्नुतं। भू प्राप्तौ। अस्माल्लोटि व्यत्ययेन सिप्शपौ। भूष अलंकारे। आ समंतात्सम्यग्भूषतं। अलंकुरुतं। पिप्युषीः प्रवृद्धानीष इष्यमाणानि पयांस्युत्सं न। गोरूध इव। यथा बहुभिः पयोभिरूधोऽलंकृतं सदृश्यतेऽस्मानप्येवं बहुभिर्धनैरलंकुरुतमित्यर्थः। पिप्युषीरिति प्यायतेर्लिटः क्वसुः। लिड्यङोश्चेति पीभावः। जसि वा छंदसीति पूर्वसवर्णदीर्घः। यद्वा। उत्सः प्रवाहो यथा पिप्युषीर्वृद्धानीषोऽन्नान्यलंकरोति तद्वत् ॥

॥ इत्यष्टमस्याष्टमे प्रथमो वर्गः ॥

अयं हीति षडृचं षोडशं सूक्तं तार्क्ष्यपुत्रस्य सुपर्णस्यार्षं यमगोत्रस्योर्ध्वकृशनस्य वा। आद्या गायत्री द्वितीया बृहती तृतीयाचतुर्थ्यौ गायत्र्यौ पंचमी सतोबृहती षष्ठी विष्टारपंक्तिरष्टकद्विर्द्वादशाष्टकवती। अनादेशपरिभाषयेंद्रो देवता। तथा चानुक्रांतं। अयं हि तार्क्ष्यपुत्रः सुपर्णो यामायनो वोर्ध्वकृशनो गायत्री बृहती गायत्र्यौ सतोबृहती विष्टारपंक्तिरिति। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

अयं हि ते अमर्त्य इंदुरत्यो न पत्यते ।
दक्षो विश्वायुर्वेधसे ॥१॥

अयं । हि । ते । अमर्त्यः । इंदुः । अत्यः । न । पत्यते ।
दक्षः । विश्वऽआयुः । वेधसे ॥१॥

हे इंद्र वेधसे विधात्रे ते तुभ्यं त्वदर्थममर्त्यो मरणरहितोऽमृतत्वप्रापकोऽयं ह्ययं खल्विंदुः सोमोऽत्यो न सततगाम्यश्व इव पत्यते । गच्छति । यद्वा पत्यतिरैश्वर्यकर्मा । तव स्वभूतोऽयं सोमो वेधसे विधानाय मदस्य करणायेष्टे । कीदृश इंदुः । दक्षः प्रवृद्धो बलहेतुर्वा विश्वायुर्विश्वैः सर्वैरेतव्यः प्राप्तव्यः । यद्वा विश्वेषामायुर्जीवनहेतुः । अथवायुरित्यन्ननाम । सर्वैश्चरुपुरोडाशादिभिरन्नैर्हविर्भिरुपेतः ॥

॥ अथ द्वितीया ॥

अयमस्मासु काव्य ऋभुर्वज्रो दास्वते ।
अयं बिभर्त्यूर्ध्वकृशनं मदमृभुर्न कृत्व्यं मदं ॥२॥

अयं । अस्मासु । काव्यः । ऋभुः । वज्रः । दास्वते ।
अयं । बिभर्ति । ऊर्ध्वऽकृशनं । मदं । ऋभुः । न । कृत्व्यं । मदं ॥२॥

अस्मासु स्तोतृषु काव्यः स्तुत्योऽयमिंद्र ऋभुर्दीप्तः सन्दास्वते दानयुक्ताय यजमानाय वज्रः शत्रूणां वर्जको भवति । यद्वा दास्वत इति षष्ठ्यर्थे चतुर्थी । अस्मासु दास्वते दानवत इंद्रस्य वज्रः कुलिश ऋभुरुरु भासमानो भवति । अपि चायमूर्ध्वकृशनमुन्नततैक्ष्ण्यमेतत्संज्ञं वा यामायनमृषिं मदं स्तोतारं बिभर्ति । पोषयति । तथर्भुर्न सौधन्वनः । पुत्राणामाद्य ऋभुः । स इव कृत्व्यं कर्मणां कर्तारमत एव मदं मोदयितारं यजमानं बिभर्ति ॥

॥ अथ तृतीया ॥

घृषुः श्येनाय कृत्वन आसु स्वासु वंसगः ।
अव दीधेदहीशुवः ॥३॥

घृषुः । श्येनाय । कृत्वने । आसु । स्वासु । वंसगः ।
अव । दीधेत् । अहीशुवः ॥३॥

घृषुर्धर्षयिता दीप्तो वा स्वासु स्वकीयासु यजमानलक्षणासु प्रजासु वंसगो वननीयगतिरेवंभूत इंद्रः कृत्वने कर्मणां कर्त्रे। करोतेरन्येभ्योऽपि दृश्यत इति क्वनिप्। श्येनाय सुपर्णाय तार्क्ष्यपुत्राय मह्यमृषयेऽहीशुवोऽहीनव्यापनानहीनवृद्धीन्वास्मदीयान्पुत्रादीनव दीधेत्। दीपयतु। दीधीङ् दीप्तिदेवनयोः। अस्माच्छांदसे लिङि व्यत्ययेन परस्मैपदं। यद्वा हे इंद्र त्वदीयः सोमो घृष्ण्यादिगुणयुक्तः सन् दीप्यत इति योज्यं ॥

॥ अथ चतुर्थी ॥

यं सुपर्णः परावतः श्येनस्य पुत्र आभरत्।
शतचक्रं योऽ३ह्यो वर्तनिः ॥४॥
यं। सुऽपर्णः। पराऽवतः। श्येनस्य। पुत्रः। आ। अभरत्।
शतऽचक्रं। यः। अह्यः। वर्तनिः ॥४॥

श्येनस्य तार्क्ष्यस्य पुत्रस्तनयः सुपर्णो यं सोमं परावतः परागताद्दूराद्द्युलोकादाभरदाहरत् कीदृशं। शतचक्रं। शतमिति बहुनाम। बहुधनस्य कर्तारं। मूलविभुजादित्वात्कप्रत्ययः। यद्वा शतकरणसाधनं बहुयागनिष्पादनमित्यर्थः। घञर्थे कविधानमिति कप्रत्ययः। कृञादीनां क इति द्विर्वचनं। यः सोमोऽह्योऽहेर्वृत्रस्य वर्तनिर्वर्तयिता प्रेरयिता। यद्वा। अह गतौ। अह्यो गंतव्यो वर्तनिर्मार्गभूतः। एना वय इति वक्ष्यमाणेनैकवाक्यता ॥

॥ अथ पंचमी ॥

यं ते श्येनश्चारुमवृकं पदाभरदरुणं मानमंधसः।
एना वयो वि तार्यायुर्जीवस एना जागार बंधुता ॥५॥
यं। ते। श्येनः। चारुं। अवृकं। पदा। आ। अभरत्। अरुणं। मानं। अंधसः।
एना। वयः। वि। तारि। आयुः। जीवसे। एना। जागार। बंधुता ॥५॥

हे इंद्र ते तुभ्यं त्वदर्थं श्येनः सुपर्णः पक्षिराड्यं सोमं पदा। वचनव्यत्ययः। पद्भ्यामाभरद्द्युलोकादाहरत्। दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत्। ८. १००. ८.। इति निगमांतरं। कीदृशं। चारुं शोभनं। अवृकं बाधकरहितं। अरुणमारोचमानमरुणवर्णं वा। अंधसोऽन्नस्य मानं यागद्वारा निर्मातारं। एनैतेनानेन

सोमेन तुभ्यं दीयमानेन वयोऽन्नं जीवसे जीवनायायुर्जीवितं च वि तारि। प्रादायि। तथैनैतेनैव सोमेन बंधुता बंधुसमूहो जागार। जाग्रत्प्रबुद्धः सन्वर्तते। जागर्तेर्लिटि छंदसि वेति वक्तव्यं। पा॰ ६.१.८.५.। इति द्विर्वचनाभावः॥

॥ अथ षष्ठी ॥

एवा तदिंद्र इंदुना देवेषु चिद्धारयाते महि त्यजः।

क्रत्वा वयो वि तार्यायुः सुक्रतो क्रत्वायमस्मदा सुतः॥६॥

एव। तत्। इंद्रः। इंदुना। देवेषु। चित्। धारयाते। महि। त्यजः।

क्रत्वा। वयः। वि। तारि। आयुः। सुक्रतो इति सुऽक्रतो। क्रत्वा। अयं। अस्मत्।
आ। सुतः॥६॥

एवैवमुक्तेन प्रकारेण तत्तेनेंदुना सोमेन तृप्यन्निंद्रो देवेषु चिद्देवेष्वस्मासु च महि महत्त्यजस्तेजो दुःखस्य वर्जयितृ रक्षणं वा धारयाते। धारयति। शिष्टः प्रत्यक्षकृतः। हे सुक्रतो शोभनकर्मन्निंद्र क्रत्वा क्रतुनास्माभिरनुष्ठितेन कर्मणा प्रीतेन त्वया वयोऽन्नमायुर्जीवनं च वि तारि। अस्मभ्यं प्रादायि। योऽयमिंदुः क्रत्वा कर्मणा प्रज्ञानेन वास्मदस्माभिरा सुतोऽभिषुतः। यद्वास्मदस्मत्तस्त्वदाभिमुख्येन सुतः प्रेरितस्तेनेंदुनेत्यन्वयः॥

॥ इत्यष्टमस्याष्टमे द्वितीयो वर्गः॥

इमामिति षडृचं सप्तदशं सूक्तमिंद्राण्या आर्षं। षष्ठी पंक्तिः शिष्टा अनुष्टुभः। अनेन सूक्तेन सपत्न्या बाधनं प्रतिपाद्यते। अत एव सूक्तजपादिना सपत्न्या विनाशो भवति। अतस्तद्देवताकमिदं। तथा चानुक्रांतं। इमामिंद्राण्युपनिषत्सपत्नीबाधनमानुष्टुभं तु पंक्त्यंतमिति॥ अस्य सूक्तस्य विनियोगो भगवतापस्तंबेन कस्मिंश्चित्सपत्नीघ्नप्रयोगविशेषे दर्शितः। त्रिः सप्तैर्यवैः पाठां परिकिरति यदि वारुण्यसि वरुणात्त्वा निष्क्रीणामि यदि सौम्यसि सोमात्त्वा निष्क्रीणामीति। श्वोभूत उत्तरयोत्थाप्योत्तराभिस्तिसृभिरभिमंत्र्योत्तरया प्रतिच्छन्नां हस्तयोराबध्य शयनकाले बाहुभ्यां भर्तारं परिगृह्णीयात् उपधानलिंगया वश्यो भवति सपत्नीबाधनं चेति। अयमर्थः। आद्यया पाठा नामौषधिः खातव्या। ततस्तिसृभिरोषधेरभिमंत्रणं षष्ठ्याबद्धा सौषधिः। यथा भर्तारं स्पृशति तथा तस्य भर्तुरालिंगनमिति॥

॥ तत्र प्रथमा ॥

इमां खनाम्योषधिं वीरुधं बलवत्तमां ।
यया सपत्नीं बाधते यया संविंदते पतिं ॥१॥
इमां । खनामि । ओषधिं । वीरुधं । बलवत्ऽतमां ।
यया । सऽपत्नीं । बाधते । यया । संऽविंदते । पतिं ॥१॥

इमामोषधिं पाठाख्यां वीरुधं लतारूपां बलवत्तमां स्वकार्यकरणेऽतिशयेन बलवतीं खनामि । उन्मूलयामि । ययौषध्या सपत्नीं । समान एकः पतिर्यस्याः सा सपत्नी । तामेषा वधूर्बाधते हिनस्ति । यया च पतिं भर्तारं संविंदते सम्यगसाधारण्येन लभते ॥

॥ अथ द्वितीया ॥

उत्तानपर्णे सुभगे देवजूते सहस्वति ।
सपत्नीं मे परा धम पतिं मे केवलं कुरु ॥२॥
उत्तानऽपर्णे । सुऽभगे । देवऽजूते । सहस्वति ।
सऽपत्नीं । मे । परा । धम । पतिं । मे । केवलं । कुरु ॥२॥

हे उत्तानपर्णे । उत्तानान्यूर्ध्वमुखानि पर्णानि पत्राणि यस्यास्तादृशि हे सुभगे सौभाग्यहेतुभूते हे देवजूते देवेन स्रष्ट्रा प्रेरिते हे सहस्वत्यभिभवनवति । ईदृशे हे पाठे मे मम सपत्नीं स्त्रियं परा धम । परागमय । धमतिर्गतिकर्मा । पतिं च मे ममैव केवलमसाधारणं कुरु ॥

॥ अथ तृतीया ॥

उत्तराहमुत्तर उत्तरेदुत्तराभ्यः ।
अथा सपत्नी या ममाधरा साधराभ्यः ॥३॥
उत्ऽतरा । अहं । उत्ऽतरे । उत्ऽतरा । इत् । उत्ऽतराभ्यः ।
अथ । सऽपत्नीं । या । मम । अधरा । सा । अधराभ्यः ॥३॥

हे उत्तर उत्कृष्टतरे पाठेऽहमुत्तरोत्कृष्टतरा भूयासं । उत्तराभ्यो लोके या उत्कृष्टतराः संति ताभ्योऽप्यहमुत्तरोत्कृष्टतरैव त्वत्प्रसादाद्भवेयं । अथानंतरं मम या सपत्नी साधराभ्यो निकृष्टाभ्योऽप्यधरा निकृष्टतरा भवतु ॥

॥ अथ चतुर्थी ॥

नह्यस्या नाम गृभ्णामि नो अस्मिन्रमते जने ।
परामेव परावतं सपत्नीं गमयामसि ॥४॥
नहि । अस्याः । नाम । गृभ्णामि । नो इति । अस्मिन् । रमते । जने ।
परां । एव । पराऽवतं । सऽपत्नीं । गमयामसि ॥४॥

अस्याः सपत्न्या नाम संज्ञामपि न हि गृभ्णामि । नैव गृह्णामि । उच्चारयामि । नो खलु काचिदस्मिञ्जने सपत्न्याख्ये रमते । क्रीडति । अपि च तां सपत्नीं परां परावतमेवातिशयेन दूरदेशमेव गमयामसि । प्रापयामः । अतिशयेन भर्त्रा वियोजयाम इत्यर्थः ॥

॥ अथ पंचमी ॥

अहमस्मि सहमानाथ त्वमसि सासहिः ।
उभे सहस्वती भूत्वी सपत्नीं मे सहावहै ॥५॥
अहं । अस्मि । सहमाना । अथ । त्वं । असि । ससहिः ।
उभे इति । सहस्वती इति । भूत्वी । सऽपत्नीं । मे । सहावहै ॥५॥

हे ओषधि अहं त्वत्प्रसादात्सहमानास्मि । सपत्न्या अभिभवित्री भवामि । अथापि च त्वमपि सासहिरसि । तस्या अभिभवित्री भवसि । आवामुभे अपि सहस्वती अभिभवित्र्यौ भूत्वी भूत्वा मे मम सपत्नीं सहावहै । अभिभवाम ॥

॥ अथ षष्ठी ॥

उप तेऽधां सहमानामभि त्वाधां सहीयसा ।
मामनु प्र ते मनो वत्सं गौरिव धावतु पथा वारिव धावतु ॥६॥
उप । ते । अधां । सहमानां । अभि । त्वा । अधां । सहीयसा ।
मां । अनु । प्र । ते । मनः । वत्सं । गौःऽइव । धावतु । पथा । वाःऽइव । धावतु ॥६॥

हे पते ते तव सहमानां सपत्न्या अभिभवित्रीमिमामोषधिमुपाधां । शिरस उपाधानं करोमि । सहीयसाभिभवितृतरेण तेनोपधानेन त्वामभ्यधां । अभितो धारयामि । ते तव भर्तुर्मनो मामनुलक्ष्य प्र धावतु । प्रकर्षेण शीघ्रं गच्छतु । तत्र

निदर्शनद्वयमुच्यते । गौरिव । यथा गौर्वत्सं शीघ्रं गच्छति यथा निम्नेन मार्गेण वारिव वारुदकं यथा स्वभावतो गच्छति तद्वत् । अनेन निदर्शनद्वयेनौत्सुक्यातिशयः स्वाभाविकत्वं च प्रतिपाद्यते ॥

॥ इत्यष्टमस्याष्टमे तृतीयो वर्गः ॥

अरण्यानीति षडृचमष्टादशं सूक्तमिरंमदपुत्रस्य देवमुनेरार्षं । महदरण्यमरण्यानी । तद्देवताकं । आनुष्टुभं । तथा चानुक्रांतं । अरण्यान्यैरंमदो देवमुनिररण्यानीं तुष्टावेति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि ।
कथा ग्रामं न पृच्छसि न त्वा भीरिव विंदतीँ३ ॥१॥
अरण्यानि । अरण्यानि । असौ । या । प्रऽइव । नश्यसि ।
कथा । ग्रामं । न । पृच्छसि । न । त्वा । भीःऽइव । विंदतीँ३ ॥१॥

हे अरण्यानि । अरण्यस्य पालयित्री काचिदधिदेवतारण्यानीति नैरुक्ताः । वैयाकरणास्तु हिमारण्ययोर्महत्त्व इत्यरण्यस्य महत्त्वे ङीषं स्मरंति । अरण्याधिदेवतेऽरण्यानि कांताराणि प्रति यासौ त्वं प्रेव नश्यसि । इवः संप्रत्यर्थे । नशतिः प्राप्तिकर्मा । अत्र व्यत्ययेन श्यन् । संप्रति रक्षणाय प्राप्नोषि । यद्वा निर्जने देशे वर्तमानत्वान्नष्टेव प्रतीयसे । सा त्वं कथा कथं ग्रामं न पृच्छसि । निर्जनेऽरण्ये कथं रमसे । नूनं त्वा त्वां भीर्भयं न विंदति । न लभते किं । वितर्के प्लुतः । इवः संप्रत्यर्थे परिभयार्थे वा । अत्र निरुक्तं । अरण्यान्यरण्यस्य पत्न्यरण्यमपार्णं भवति ग्रामादरमणं भवतीति वा । अरण्यानीत्येनामामंत्रयते । यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि न त्वा भीर्विंदतीवेतीवः परिभयार्थे वा । नि॰ ९. ३०. । इति ॥

॥ अथ द्वितीया ॥

वृषारवाय वदते यदुपावति चिच्चिकः ।
आघाटिभिरिव धावयन्नरण्यानिर्महीयते ॥२॥
वृषऽरवाय । वदते । यत् । उपऽअवति । चिच्चिकः ।
आघाटिभिःऽइव । धावयन् । अरण्यानिः । महीयते ॥२॥

वृषारवाय। वृषा सेचनसमर्थो रवः शब्दो यस्य सूक्ष्मजंतुविशेषस्य झिल्याख्यस्य स तथोक्तः। कटुकशब्दवानित्यर्थः। तस्मै वृषारवाख्याय वदते चीचीशब्दं कुर्वते चिच्चिकश्चीचीशब्दं कुर्वन्नन्यो जंतुर्यद्यदोपावति वृषारवाय स्वशब्दस्य प्रत्युत्तररूपेण चीचीशब्दकरणेन उपगच्छति। उपेत्य पालयति वा। तत्र दृष्टांतः। आघाटिभिरिव। आघाटयो घाटलिकाः कांडवीणाः। ताभिर्धावयन् निषादादिसप्तस्वराणि शोधयन्गायक इव। तदारण्यानिः सारण्यानी महीयते। पूज्यते। इंद्रवरुणेत्यादिना ङीष्। तत्संनियोगेनानुगागमः। छांदसो ह्रस्वः। अत एव हल्ङ्यादिसुलोपाभावः॥

॥ अथ तृतीया ॥

उत गावं इवादंत्युत वेश्मेव दृश्यते।
उतो अरण्यानिः सायं शकटीरिव सर्जति॥३॥

उत। गावःऽइव। अदंति। उत। वेश्मऽइव। दृश्यते।
उतो इति। अरण्यानिः। सायं। शकटीःऽइव। सर्जति॥३॥

उतापि च गाव इव गवयाद्या मृगा अस्यामरण्यान्यामदंति। तृणादिकं भक्षयंति। उतापि च लतागुल्मादिकं वेश्मेव गृहमिव दृश्यते। उतो अपि चारण्यानिरियमरण्यानी सायं सायंकाले। इवः संप्रत्यर्थे। संप्रति शकटीः शकटान् दार्वाद्याहरणायागतान्सर्जति। विसर्जयति। यद्वा शकटीः सर्जतीव दृश्यते। अहनि महदरण्यं शकटीभिः प्राप्य सर्वे जना अरण्ये क्षत्तं काष्ठादिकं शकटीष्वध्यारोप्य सायंकाले तस्मान्निर्गच्छंति। तदभिप्रायेणेदं वचनं॥

॥ अथ चतुर्थी ॥

गामंगैष आ ह्वयति दार्वंगैषो अपावधीत्।
वसन्नरण्यान्यां सायमक्रुक्षदिति मन्यते॥४॥

गां। अंग। एषः। आ। ह्वयति। दारु। अंग। एषः। अप। अवधीत्।
वसन्। अरण्यान्यां। सायं। अक्रुक्षत्। इति। मन्यते॥४॥

अंग हे अरण्यानि एष त्वदधिष्ठिते महारण्ये संप्रति वर्तमानो गामाह्वयति। एष चान्यो दारु काष्ठमपावधीत्। अपहंति। तथा सायं सायंकाले रात्रावरण्यान्यां

महारण्ये निवसन्मनुष्यो नानाविधं पक्षिमृगादिकं शब्दं शृण्वन् अत्रकश्चित्तस्करादिराक्रोशतीति भीतः सन्मन्यते । बुध्यते ॥

॥ अथ पंचमी ॥

न वा अरण्यानिर्हंत्यन्यश्चेन्नाभिगच्छति ।
स्वादोः फलस्य जग्ध्वाय यथाकामं नि पद्यते ॥५॥

न । वै । अरण्यानिः । हंति । अन्यः । च । इत् । न । अभिऽगच्छति ।
स्वादोः । फलस्य । जग्ध्वाय । यथाऽकामं । नि । पद्यते ॥५॥

न वै न खल्वरण्यानिररण्यानी हंति । तत्र निवसंतं हिनस्ति । यद्यन्यो व्याघ्रचौरादिर्नाभिगच्छति । तर्हि स्वादो रसवत आम्रादेः फलस्य । द्वितीयार्थे षष्ठी । फलं जग्ध्वाय भक्षयित्वा तत्र निवसन्पुरुषो यथाकामं यथेच्छं नि पद्यते । निगच्छति । वर्तते । क्त्वाप्रत्ययेऽदो जग्धिर्ल्यप्ति किति । पा॰ २.४.३६. । इति जग्ध्यादेशः । क्त्वो यगिति यक् ॥

॥ अथ षष्ठी ॥

आंजनगंधिं सुरभिं बह्वन्नामकृषीवलां ।
प्राहं मृगाणां मातरमरण्यानिमशंसिषं ॥६॥

आंजनऽगंधिं । सुरभिं । बहुऽअन्नां । अकृषिऽवलां ।
प्र । अहं । मृगाणां । मातरं । अरण्यानिं । अशंसिषं ॥६॥

आंजनगंधिं । अंजनस्येदमांजनं कस्तूर्यादि । तस्य गंध इव गंधो यस्यास्तादृशी । उपमानाच्चेति गंधस्येदंतादेशः । अत एव सुरभिं सौरभ्योपेतां बह्वन्नां बहुभिरन्नैरदनीयैः फलमूलादिभिरुपेतां । अकृषीवलां । कृषिरेषामस्तीति कृषीवलाः कर्षकाः । रजःकृषीत्यादिना वलच् । वल इति दीर्घः । पा॰ ५.२.११२. । तैर्वियुक्तां तादृशीं मृगाणां मातरं जनयित्रीमरण्यानिमरण्यानीमहं प्राशंसिषं । उक्तेन प्रकारेण स्तुतवानस्मि ॥

॥ इत्यष्टमस्याष्टमे चतुर्थो वर्गः ॥

अत्त इति पंचर्चमेकोनविंशं सूक्तं शिरीषपुत्रस्य सुवेदस आर्षं पंचमी त्रिष्टुप् शिष्टा जगत्यः । इंद्रो देवता । अनुक्रम्यते हि । अत्ते पंच सुवेदाः शैरीषिस्त्रिष्टुबं-

तमिति ॥ तृतीये रात्रिपर्याये प्रशास्तुः शस्त्र इदं सूक्तं । सूचितं च । अत्ते दधामीदं त्यत्पात्रमिंद्रपानमिति याज्या । आ॰ ६.४. । इति ॥

॥ तत्र प्रथमा ॥

अत्ते॑ दधामि प्रथ॒मायं॑ म॒न्यवे॒ऽह॒न्यद्वृ॒त्रं नर्यं॑ वि॒वेर॒पः ।
उ॒भे यत्त्वा॒ भव॑तो॒ रोद॑सी॒ अनु॒ रेज॑ते॒ शुष्मा॑त्पृथि॒वी चि॑दद्रिवः ॥१॥

अत् । ते॒ । द॒धा॒मि॒ । प्र॒थ॒मायं॑ । म॒न्यवे॑ । अह॑न् । यत् । वृ॒त्रं । नर्यं॑ । वि॒वेः । अ॒पः ।
उ॒भे इति॑ । यत् । त्वा॒ । भव॑तः । रोद॑सी॒ इति॑ । अनु॑ । रेज॑ते । शुष्मा॑त् । पृ॒थि॒वी । चि॒त् ।
अ॒द्रि॒ऽव॒ः ॥१॥

हे इंद्र ते तव मन्यवे कोपाय तेजसे वा प्रथमाय मुख्याय श्रद्धामि । श्रद्धा नामादरातिशयः । तद्विषयं करोमि । यद्येन मन्युना त्वं वृत्रमावरकमसुरं मेघं वा नर्यं नेतव्यमहन्नवधीः । हत्वा च तेनावृता अप उदकानि च विवेः । इमं लोकं प्रत्यागमयः । तस्मै मन्यव इत्यन्वयः । यद्यदोभे रोदसी द्यावापृथिव्यौ त्वा त्वामनुसृत्य भवतो वर्तेते । त्वदधीने अभूतामित्यर्थः । तदानीं पृथिवी चित् । पृथिवीत्यंतरिक्षनाम । प्रथितं विस्तीर्णमंतरिक्षमपि हे अद्रिवो वज्रवन्निंद्र शुष्मात्त्वदीयाद्बलाद्रेजते । कंपते ॥

॥ अथ द्वितीया ॥

त्वं मा॒याभि॑रनवद्य मा॒यिनं॑ श्रवस्य॒ता मन॑सा वृ॒त्रम॑र्दयः ।
त्वामिन्नरो॑ वृणते॒ गवि॑ष्टिषु त्वां विश्वा॑सु ह॒व्या॒स्विष्टि॑षु ॥२॥

त्वं । मा॒याभिः॑ । अ॒न॒व॒द्य॒ । मा॒यिनं॑ । श्र॒व॒स्य॒ता । मन॑सा । वृ॒त्रं । अ॒र्द॒यः॒ ।
त्वां । इत् । नरः॑ । वृ॒ण॒ते॒ । गोऽइ॑ष्टिषु । त्वां । विश्वा॑सु । ह॒व्या॑सु । इष्टि॑षु ॥२॥

हे अनवद्यावद्यरहित प्रशस्येंद्र त्वं मायिनं मायाविनं वृत्रं मायाभिर्वंचनाभिर्बुद्धिविशेषैर्वा श्रवस्यता श्रवः श्रवणीयं यशोऽन्नं वेच्छता मनसार्दयः । अहिंसीः । अपि च नरो नेतारोऽंगिरसस्त्वामित्त्वामेव गविष्टिषु गवां पणिभिरपहृतानामेषणेषु प्रापणेषु विषयभूतेषु वृणते । संभजंते । तथा विश्वासु सर्वासु हव्यास्वाह्वातव्यासु प्रार्थनीयास्विष्टिषु यागक्रियासु त्वामेव वृणते ॥

॥ अथ तृतीया ॥

ऐषु चाकंधि पुरुहूत सूरिषु वृधासो ये मघवन्नानशुर्मघं ।
अर्चंति तोके तनये परिष्टिषु मेधसाता वाजिनमह्रये धने ॥३॥

आ। एषु। चाकंधि। पुरुऽहूत। सूरिषु। वृधासः। ये। मघऽवन्। आनशुः। मघं।
अर्चंति। तोके। तनये। परिष्टिषु। मेधऽसाता। वाजिनं। अह्रये। धने ॥३॥

हे पुरुहूतेंद्र एषु सूरिष्वा चाकंधि। अत्यर्थमभिदीप्यस्व। अभिकामयस्व। कनी दीप्तिकांतिगतिषु। अस्माच्चर्करीतमेतत्। हे मघवन्धनवन्निंद्र ये सूरयो वृधासस्त्वत्प्रसादाद्वर्धमानाः संतो मघं धनमानशुः प्राप्नुवंति। अपि च मेधसाता मेधसातौ यज्ञे वाजिनं बलवंतमन्नवंतं वेजनवंतं वा त्वां येऽर्चंति पूजयंति तोके पुत्रे तनये तत्पुत्रे परिष्टिषु परित इष्यमाणेष्वन्येष्वपि फलेष्वह्रयेऽलज्जाकरे धने च। एतेषु निमित्तेषु सत्सु त्वामेव स्तुत्यादिभिः पूजयंतीत्यर्थः ॥

॥ अथ चतुर्थी ॥

स इन्नु रायः सुभृतस्य चाकनन्मदं यो अस्य रंह्यं चिकेतति ।
त्वावृधो मघवन्दाश्वध्वरो मक्षू स वाजं भरते धना नृभिः ॥४॥

सः। इत्। नु। रायः। सुऽभृतस्य। चाकनत्। मदं। यः। अस्य। रंह्यं। चिकेतति।
त्वाऽवृधः। मघऽवन्। दाशुऽअध्वरः। मक्षु। सः। वाजं। भरते। धना। नृऽभिः ॥४॥

स इत् स एव स्तोता सुभृतस्य सुष्ठु संपादितस्य रायो धनस्य। द्वितीयार्थे षष्ठी। ईदृशं धनं नु क्षिप्रं चाकनत्। कामयते। लभत इत्यर्थः। रंह्यं। रंहो वेगः। तदर्हमस्येंद्रस्य मदं सोमपानजन्यं हर्षं यः स्तोता चिकेतति स्तुतिपदैर्जानाति। हे मघवन् त्वावृधस्त्वया वर्धितो दाश्वध्वरो दत्तयज्ञो यजमानो नृभिर्नेतृभिर्ऋत्विग्भिर्भृत्यैर्वा धना धनानि वाजमन्नं च मक्षु शीघ्रं भरते। संपादयति ॥

॥ अथ पंचमी ॥

त्वं शर्धाय महिना गृणान उरु कृधि मघवञ्छग्धि रायः ।
त्वं नो मित्रो वरुणो न मायी पित्वो न दस्म दयसे विभक्ता ॥५॥

त्वं। शर्धाय। महिना। गृणानः। उरु। कृधि। मघऽवन्। शग्धि। रायः।
त्वं। नः। मित्रः। वरुणः। न। मायी। पित्वः। न। दस्म। दयसे। विऽभक्ता ॥५॥

हे इंद्र त्वं महिना महता स्तोत्रेण गृणानः स्तूयमानः सन् शर्धाय शर्धं बलमुरु कृधि। विस्तीर्णं कुरु। हे मघवन् रायो धनानि च शग्धि। अस्मभ्यं प्रयच्छ। हे दस्म दर्शनीयेंद्र विभक्ता विशेषेण धनानां भाजयिता त्वं मित्रो वरुणो न मित्रवद्वरुणवच्च मायी प्रज्ञायुक्तः सन् नोऽस्मभ्यं। नः संप्रत्यर्थे। संप्रति पित्वोऽन्नानि दयसे। प्रयच्छसि ॥

॥ इत्यष्टमस्याष्टमे पंचमो वर्गः ॥

सुष्वाणास इति पंचर्चं विंशं सूक्तं वेनपुत्रस्य पृथोरार्षं त्रैष्टुभमैंद्रं। अनुक्रांतं च। सुष्वाणासः पृथुर्वैन्य इति। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

सुष्वाणासं इंद्र स्तुमसिं त्वा ससवांसंश्च तुविनृम्ण वाजं।
आ नों भर सुवितं यस्यं चाकन्त्मना तनां सनुयाम त्वोताः ॥१॥
सुस्वानासंः। इंद्र। स्तुमसिं। त्वा। ससऽवांसः। च। तुविऽनृम्ण। वाजं।
आ। नः। भर। सुवितं। यस्यं। चाकन्। त्मनां। तनां। सनुयाम। त्वाऽऊंताः ॥१॥

हे इंद्र सुष्वाणासः सोममभिषुतवंतो वयं त्वां स्तुमसि। स्तुमः। हे तुविनृम्ण बहुलधन वाजं चरुपुरोडाशादिलक्षणमन्नं ससवांसः संभक्तवंतश्च वयं त्वां स्तुमः। यत एवमतो हेतोर्नोऽस्मभ्यं सुवितं सुष्ठु प्राप्तव्यं शोभनं धनमा भर। आहर। प्रयच्छ। यद्वा यस्य यद्धनमतिप्रियत्वेन चाकन् त्वं कामयसे तद्धनमा भरेत्यर्थः। वयं च त्वोतास्त्वया रक्षिताः संतस्तना। धननामैतत्। विस्तृतानि धनानि त्मनात्मना स्वयमेवान्यनैरपेक्ष्येणैव सनुयाम। तव प्रसादाल्लभेमहि ॥

॥ अथ द्वितीया ॥

ऋष्वस्त्वमिंद्र शूर जातो दासीर्विशः सूर्येण सह्याः।
गुहां हितं गुह्यं गूळ्हमप्सु बिभृमसिं प्रस्रवंणे न सोमं ॥२॥
ऋष्वः। त्वं। इंद्र। शूर। जातः। दासीः। विशः। सूर्येण। सह्याः।
गुहां। हितं। गुह्यं। गूळ्हं। अप्ऽसु। बिभृमसिं। प्रऽस्रवंणे। न। सोमं ॥२॥

हे शूर शौर्यवन्निंद्र ऋष्वो महान्दर्शनीयो वा त्वं जातो जातमात्र एव दासीः। उपक्षयकारिणो दासा असुराः। तत्संबंधिनीर्विशो जातः सूर्येण सूर्यात्मना सह्याः।

अभ्यभवेः। तथा गुहा गुहायां हितं निहितमत एव गुह्यमदृश्यं वलाख्यमसुरमप्सूदकेषु गूढं निगूढं कुयवाख्यं च त्वमभिभूतवानसि। वयमपि प्रस्रवणे प्रवर्षणे सति। नः संप्रत्यर्थे। संप्रति सोमं बिभृमसि। त्वदर्थं बिभृमः। धारयामः॥

॥ अथ तृतीया ॥

अर्यो वा गिरो अभ्यर्च विद्वानृषीणां विप्रः सुमतिं चकानः।
ते स्याम ये रणयंत सोमैरेनोत तुभ्यं रथोळ्ह भक्षैः ॥३॥
अर्यः। वा। गिरः। अभि। अर्च। विद्वान्। ऋषीणां। विप्रः। सुऽमतिं। चकानः।
ते। स्याम। ये। रणयंत। सोमैः। एना। उत। तुभ्यं। रथऽओळ्ह। भक्षैः ॥३॥

विप्रो मेधाव्यृषीणां मंत्रदर्शिनां सुमतिं सुष्टुतिं चकानः कामयमानो विद्वाञ्जानन् अर्यो वा स्वामी च भवन् हे इंद्र ईदृशस्त्वं गिरः स्तोतॄन् स्तुतीर्वाभ्यर्च। सम्यक् स्तुतमित्यभिपूजय। अपि च ते वयं स्याम भवेम ये सोमैस्त्वां रणयंत रमयंति। उतापि च हे रथोळ्ह रथैरभ्युह्यमान। आ ऊढ ओढः। रथेन ओढो रथोढः। ओमाङोश्चेति पररूपं। ईदृशेंद्र भक्षैर्भक्षणीयैश्चरुपुरोडाशादिभिः सार्धमेनेमानि स्तोत्राणि तुभ्यं त्वदर्थं क्रियंते॥

॥ अथ चतुर्थी ॥

इमा ब्रह्मेंद्र तुभ्यं शंसि दा नृभ्यो नृणां शूर शवः।
तेभिर्भव सक्रतुर्येषु चाकन्नुत त्रायस्व गृणत उत स्तीन् ॥४॥
इमा। ब्रह्म। इंद्र। तुभ्यं। शंसि। दाः। नृऽभ्यः। नृणां। शूर। शवः।
तेभिः। भव। सऽक्रतुः। येषु। चाकन्। उत। त्रायस्व। गृणतः। उत। स्तीन् ॥४॥

हे इंद्र त्वदर्थमिमेमानि पुरोवर्तीनि ब्रह्म ब्रह्माणि परिवृढानि स्तोत्राणि शंसि। अशंसिषत। शस्यंते। शंसेश्छांदसे कर्मणि लुङि व्यत्ययेनैकवचनं। हे शूर शौर्यवन्निंद्र त्वं नृणां मनुष्याणां मध्ये नृभ्यः स्तुत्यादेर्नेतृभ्यः शवो बलं दाः। देहि। अपि च तेभिस्तैः सक्रतुः समानकर्मा समानप्रज्ञो वा भव येषु स्तोतृषु चाकन् हविरादि कामयसे। कन दीप्तिकांतिगतिषु। अस्माद्यङ्लुगंताच्छांदसे लङि सिपि रूपमेतत्। कर्मेर्वा पूर्ववत्। सिपि मो नो धातोरिति नत्वं। उतापि च गृणतः

स्तोतॄन् त्रायस्व। पालय। उतापि च स्तीन्। स्त्यायतेरेतद्रूपं। संघीभूय स्थितान्यजमानानपि त्रायस्व ॥

॥ अथ पंचमी ॥

श्रुधी हवमिंद्र शूर पृथ्या उत स्तवसे वेन्यस्याकैः।

आ यस्ते योनिं घृतवंतमस्वारूर्मिर्न निम्नैर्द्रवयंत वक्वाः ॥५॥

श्रुधि। हवं। इंद्र। शूर। पृथ्याः। उत। स्तवसे। वेन्यस्य। अर्कैः।

आ। यः। ते। योनिं। घृतऽवंतं। अस्वाः। ऊर्मिः। न। निम्नैः। द्रवयंत। वक्वाः ॥५॥

हे शूरेंद्र पृथ्याः पृथोर्ऋषेर्मम हवमाह्वानं श्रुधि। शृणु। उतापि च वेन्यस्य वेनपुत्रस्य ममार्कैर्मंत्रैः स्तवसे। स्तूयसे। यकि प्राप्ते व्यत्ययेन शप्। यः स्तोता घृतवंतमुदकवंतं ते तव योनिं निवासभूमिमास्वारभ्यस्वार्षीदभ्यष्टौत्। स्वृ शब्दोपतापयोः। अस्माल्लुङि तिपि बहुलं छंदसीतीडभावे हल्ङ्यादिलोपे च रात्सस्येति सलोपः। यद्वा घृतवंतमाज्यादिना हविषोपेतं योनिं। गृहनामैतत्। यज्ञगृहं प्राप्य ते त्वां योऽभिष्टौति तस्य वेन्यस्यार्कैरित्यन्वयः। अपि च वक्वा वक्वानः। वचेरन्येभ्योऽपि दृश्यंत इति वनिप्। अंत्यविकारश्छांदसः। जसि पृषोदरादित्वाद्वर्णलोपः। अन्येऽपि सर्वे स्तोतारो निम्नैः प्रवणैर्मार्गैरूर्मिर्नोदकसंघ इव द्रवयंत। स्तुतिभिस्त्वामेवाभिद्रवंति। अभिगच्छंति ॥

॥ इत्यष्टमस्याष्टमे षष्ठो वर्गः ॥

सविता यंत्रैरिति पंचर्चमेकविंशं सूक्तं हिरण्यस्तूपपुत्रस्यार्चत आर्षं त्रैष्टुभं सवितृदेवत्यं। अनुक्रांतं च। सवितार्चन्हैरण्यस्तूपः सावित्रमिति। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

सविता यंत्रैः पृथिवीमरम्णादस्कंभने सविता द्यामदृंहत्।

अश्वमिवाधुक्षद्धुनिमंतरिक्षमतूर्ते बद्धं सविता समुद्रं ॥१॥

सविता। यंत्रैः। पृथिवीं। अरम्णात्। अस्कंभने। सविता। द्यां। अदृंहत्।

अश्वंऽइव। अधुक्षत्। धुनिं। अंतरिक्षं। अतूर्ते। बद्धं। सविता। समुद्रं ॥१॥

सविता सर्वस्य प्रसविता प्रेरको मध्यमस्थानो देवः सोऽयं यंत्रैर्यमनसाधनैर्वृष्टिप्रदानादिभिरुपायैर्वायवीयैः पाशैर्वा पृथिवीं प्रथितां भूमिमरम्णात्। अरमयत्।

सुखेनावस्थापयति। तथा स एव सविताऽस्कंभने। पतनप्रतिबंधकमालंबनं स्कंभनं। तद्रहिते स्थले द्यां द्युलोकमप्यदृंहत्। दृढीकृतवान्। यथाधो न पतति तथात्मीयैरेवोपायैरवस्थापितवानित्यर्थः। अश्वमिव धुनिं कंपयितव्यं कंपयितारं वांतरिक्षमंतरा क्षांतं मध्यमस्थानगतमतूर्ते केनाप्यहिंसितेऽत्वरमाणे वा नभसि वायवीयैः पाशैर्बद्धं समुद्रं मेघमयमेव सविताधुक्षत्। उदकानि दोग्धि। यद्वांतरिक्षमिति सप्तम्यर्थे प्रथमा। अतूर्तेऽतरिक्षे बद्धं समुदितारं धुनिं कंपनीयं मेघमश्वमिवाधुक्षत्। सविता क्लेशयति। धुक्ष संदीपनक्लेशनजीवनेषु। यथा शिक्षकोऽश्वं क्लेशयत्येवं वर्षणाय मेघं क्लेशयतीत्यर्थः। अथ निरुक्तं। सविता यंत्रैः पृथिवीमरमयदनारंभणेऽतरिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमंतरिक्षे मेघं बद्धमतूर्ते बद्धमतूर्ण इति वात्वरमाण इति वा सविता समुदितारं। नि० १०.३२.। इति ॥

॥ अथ द्वितीया ॥

यत्रा॑ समु॒द्रः स्क॑भि॒तो व्यौन॒दपां॑ नपात्सवि॒ता तस्य॑ वेद।

अतो॑ भूरत॑ आ॒ उत्थि॑तं॒ रजोऽतो॑ द्यावा॑पृथि॒वी अ॑प्रथेतां ॥२॥

यत्र॑। स॒मु॒द्रः। स्क॒भि॒तः। वि। औन॑त्। अ॒पां॑। न॒पा॒त्। स॒वि॒ता। तस्य॑। वे॒द॒।

अत॑ः। भूः। अत॑ः। आ॒ः। उत्थि॑तं। रज॑ः। अत॑ः। द्यावा॑पृथि॒वी इति॑। अ॒प्र॒थे॒तां॒ ॥२॥

यत्र यस्मिन्नंतरिक्षे समुद्रः समुंदनशीलो मेघः स्कभितः स्तंभितो वायुपाशैर्बद्धः सन् व्यौनद्विशेषेण भूमिमुनत्त्युदकैः क्लेदयति। उंदी क्लेदने। अस्माच्छांदसे लङि रूपमेतत्। हे अपां नपान्मध्यमस्थान वैद्युताग्ने तव संबंधी सविता प्रेरको देवस्तस्य तत्स्थानं वेद। वेत्ति। जानाति। अतोऽस्मादेव सवितुर्भूर्भूमिरासीत्। अत एवोत्थितमूर्ध्वमेव स्थितं रजोऽतरिक्षमाः। आसीत्। अजायत। अस्तेर्लुङि बहुलं छंदसीतीडभावः। हल्ङ्याब्भ्य इति लोपः। अतोऽस्मादेव सवितुर्द्यावापृथिवी द्यावापृथिव्यावप्रथेतां। विस्तीर्णे अभूतां ॥

॥ अथ तृतीया ॥

प॒श्चेदम॒न्यद॑भव॒द्यज॑त्रमम॑र्त्यस्य॒ भुव॑नस्य भू॒ना।

सु॒प॒र्णो अ॒ंग स॑वि॒तुर्ग॒रुत्मा॒न्पूर्वो॑ जा॒तः स उ॑ अ॒स्यानु॒ धर्म॑ ॥३॥

प॒श्चा। इ॒दं। अ॒न्यत्। अ॒भ॒व॒त्। यज॑त्रं। अम॑र्त्यस्य। भुव॑नस्य। भू॒ना।

सु॒ऽप॒र्णः। अ॒ंग। स॒वि॒तुः। ग॒रुत्मा॑न्। पूर्व॑ः। जा॒तः। सः। ऊं॒ इति॑। अ॒स्य॒। अनु॑। धर्म॑ ॥३॥

अन्यत्सवितृव्यतिरिक्तमिदं देवतांतरं पश्चा पश्चात्। पश्च पश्चा च छंदसीति निपात्यते। सवितृप्रेरणानंतरमेव यजत्रं यष्टव्यमभवत्। केन साधनेन। अमर्त्यस्य मरणरहितस्य भुवनस्य लोकस्य स्वर्गाख्यस्य संबंधिना भूना भूतेन स्वर्ग उत्पन्नेन सोमेनेत्यर्थः। यद्वामर्त्यस्य भुवनस्य संबंधीदं देवतांतरं भूना भूम्ना बहुत्वेन युक्तं यष्टव्यमभवत्। कुत इत्यत आह। हे अंग स्तोतः सुपर्णः शोभनपतनो गरुत्मान्सोमस्यापहर्ता तार्क्ष्यः सवितुः प्रेरकादस्माद्देवात्पूर्वः प्रथमभावी सञ्जातः। अतो हेतुभूतः सुपर्णो गरुत्मानस्य सवितुर्धर्मं धारणमनुसृत्य वर्तते। सवितृप्रेरणाधीनत्वात्सर्वगतीनां सोमाहरणमपि तदधीनमिति सवितृप्रेरणानंतरमेव सर्वे सोमयागाः प्रवर्तंत इत्यर्थः। उ इति पूरकः॥

॥ अथ चतुर्थी ॥

गाव॑ इव॒ ग्रामं॒ यूयु॑धिरि॒वाश्वा॑न्वा॒श्रेव॑ व॒त्सं सु॒मना॒ दुहा॑ना।
पति॑रिव जा॒याम॒भि नो॒ न्ये॑तु ध॒र्ता दि॒वः स॑वि॒ता वि॒श्ववा॑रः ॥४॥

गावः॑ऽइव। ग्राम॑ं। युयु॑धिःऽइव। अश्वा॑न्। वा॒श्राऽइ॑व। व॒त्सं। सु॒ऽमनाः॑। दुहा॑ना।
पतिः॑ऽइव। जा॒यां। अ॒भि। नः॒। नि। ए॒तु। ध॒र्ता। दि॒वः। स॒वि॒ता। वि॒श्वऽवा॑रः॥४॥

गाव इव यथारण्ये संचरंतो गावो ग्रामं शीघ्रमभिगच्छंति। युयुधिरिव यथा च युद्धार्थमश्वानभिगच्छति। युध संप्रहारे। आदृगमहनजनेत्यचोत्सर्गश्छंदसीति वचनात्किन्प्रत्ययः। छांदसं सांहितिकमभ्यासदीर्घत्वं। सुमनाः शोभनमनस्का दुहाना दोग्ध्री बहुपयस्का वाश्रेव हंभारवात्मकं शब्दं कुर्वती गौर्यथात्मीयं वत्समभिगच्छति। पतिरिव यथा भर्ता जायां स्वभार्यां शीघ्रमभिगच्छति एवमेव सविता नोऽस्मान्न्यभ्येतु। नितरामभिगच्छतु। कीदृशः। दिवो द्युलोकस्य धर्ता धारयितावस्थापयिता वा। अत एव विश्ववारः सर्वैर्वरणीयः॥

॥ अथ पंचमी ॥

हिर॑ण्यस्तूपः सवित॒र्यथा॑ त्वांगिर॒सो जु॒ह्वे वाजे॑ अ॒स्मिन्।
ए॒वा त्वार्च॒न्नव॑से॒ वंद॑मानः सोम॑स्येवां॒शुं प्रति॑ जागराहं ॥५॥

हिर॑ण्यऽस्तूपः। स॒वि॒तः॒। यथा॑। त्वा॒। आं॒गि॒र॒सः। जु॒ह्वे। वाजे॑। अ॒स्मिन्।
ए॒व। त्वा॒। अर्च॑न्। अव॑से। वंद॑मानः। सोम॑स्यऽइव। अं॒शुं। प्रति॑। जा॒ग॒र॒। अ॒हं॥५॥

हे सवितः प्रेरक त्वा त्वामांगिरसोऽंगिरसः पुत्रो हिरण्यस्तूपो मम पिता-स्मिन्वाजेऽन्ने निमित्तभूते सति यथा जुह्व आहूतवान् एवैवमर्चन्नेतत्संज्ञोऽहं त्वा त्वामवसेऽवनाय रक्षणार्थं वंदमानः स्तुवन् आह्वयामीति शेषः। आहूय च सोमस्येवांशुं यथा सोमलतां प्रति यजमाना जाग्रति यागपर्यंतं तद्रक्षणे प्रबुद्धा वर्तंते तथाहं त्वत्परिचर्यां प्रति जागर। जागर्मि। जागर्तेर्णल्युत्तमैकवचने रूपं॥ अत्र निरुक्तं। हिरण्यस्तूपो हिरण्यमयस्तूपो हिरण्यमयः स्तूपोऽस्येति वा। स्तूपः स्त्यायतेः संघातः। सवितर्यथा त्वांगिरसो जुह्वे वाजेऽन्नेऽस्मिन्नेवं त्वार्चन्नवनाय वंदमानः सोमस्येवांशुं प्रतिजागर्म्यहं। नि० १०. ३३.। इति॥

॥ इत्यष्टमस्याष्टमे सप्तमो वर्गः॥

समिद्ध इति पंचर्चं द्वाविंशं सूक्तं वसिष्ठपुत्रस्य मृळीकस्यार्षमाग्नेयं। चतुर्थी-पंचम्यावुपरिष्टाज्ज्योतिषी त्रिष्टाद्वशाष्टकवत्यौ। अक्षरव्यूहेन चतुर्थी जगती वा। शिष्टा बृहत्यः। तथा चानुक्रांतं। समिद्धो मृळीको वासिष्ठ आग्नेयं बार्हतमंत्ये उपरिष्टाज्ज्योतिषी जगत्युपांत्या वेति। गतो विनियोगः॥

॥ तत्र प्रथमा॥

समिद्धश्चित्समिध्यसे देवेभ्यो हव्यवाहन।

आदित्यै रुद्रैर्वसुभिर्न आ गहि मृळीकाय न आ गहि॥१॥

संऽइद्धः। चित्। सं। इध्यसे। देवेभ्यः। हव्यऽवाहन।

आदित्यैः। रुद्रैः। वसुऽभिः। नः। आ। गहि। मृळीकाय। नः। आ। गहि॥१॥

हे हव्यवाहन हव्यानां हविषां वोढरग्ने समिद्धश्चित् संदीप्तोऽपि देवेभ्यो यागार्थं समिध्यसे। पुनरप्यृत्विग्भिः समिद्भिः संदीप्यसे। स त्वमादित्यैरादित्यादिभिस्त्रि-भिर्गणैः सार्धं नोऽस्माना गहि। आगच्छ। तथा नोऽस्माकं मृळीकाय सुखाय तदर्थमप्या गहि। यद्वा मृळीकायैतत्संज्ञाय नो मह्यमृषये श्रेयांसि कर्तुमागच्छ॥

॥ अथ द्वितीया॥

इमं यज्ञमिदं वचो जुजुषाण उपागहि।

मर्तासस्त्वा समिधान हवामहे मृळीकाय हवामहे॥२॥

इमं। यज्ञं। इदं। वचः। जुजुषाणः। उपऽआगहि।

मर्तासः। त्वा। संऽइधान। हवामहे। मृळीकाय। हवामहे॥२॥

हे अग्ने इममस्माभिः क्रियमाणं पुरोवर्तिनं यज्ञमिदं वचः स्तोत्रं च जुजुषाणः सेवमान उपागहि । उपागच्छ । हे समिधान समिध्यमान मर्तासो मर्ता मनुष्यास्त्वा त्वां हवामहे । आह्वयामहे । मृळीकाय सुखायैतत्संज्ञाय वर्षये त्वामेवाह्वयामहे ॥

॥ अथ तृतीया ॥

त्वामु जातवेदसं विश्ववारं गृणे धिया ।
अग्ने देवाँ आ वह नः प्रियव्रतान्मृळीकाय प्रियव्रतान् ॥३॥
त्वां । ऊं इति । जातऽवेदसं । विश्वऽवारं । गृणे । धिया ।
अग्ने । देवान् । आ । वह । नः । प्रियऽव्रतान् । मृळीकाय । प्रियऽव्रतान् ॥३॥

हे अग्ने विश्ववारं विश्वैः सर्वैर्वरणीयं जातवेदसं जातानां वेदितारं जातप्रज्ञं जातधनं वा त्वामु त्वामेव धिया स्तुत्या गृणे । स्तौमि । गॄ शब्दे । क्रैयादिकः । प्वादित्वाद्ध्रस्वः । प्रियव्रतान् प्रियाणि व्रतानि कर्माणि येषां तादृशान्देवान्नोऽस्मदर्थमा वह । आनय । अस्मद्यज्ञं प्रापय । मृळीकाय सुखार्थमेतत्संज्ञाय वा मह्यं प्रियव्रतांस्तानेवावह ॥

॥ अथ चतुर्थी ॥

अग्निर्देवो देवानामभवत्पुरोहितोऽग्निं मनुष्या३ऋषयः समीधिरे ।
अग्निं महो धनसातावहं हुवे मृळीकं धनसातये ॥४॥
अग्निः । देवः । देवानां । अभवत् । पुरःऽहितः । अग्निं । मनुष्याः । ऋषयः । सं । ईधिरे ।
अग्निं । महः । धनऽसातौ । अहं । हुवे । मृळीकं । धनऽसातये ॥४॥

देवो दानादिगुणयुक्तोऽग्निर्देवानामन्येषां पुरोहितः पुरस्ताद्धृतोऽभवत् । यद्वा पुरोहितवद्धितकार्यभवत् । यत एवमतः कारणात्तमेवाग्निमृषयोऽतींद्रियार्थदर्शिनो मनुष्या मानवा यजमानाः समीधिरे । संदीपयंति । अपि च तमग्निं महो महतो धनसातौ धनस्य संभजने निमित्तभूतेऽहं हुवे । आह्वये । विशेषणसापेक्षस्यापि धनशब्दस्य छांदसः समासः । यद्वा महतो यागस्य कर्तारमग्निमित्यर्थः । धनस्य सातये धनलाभार्थं मृळीकं सुखमेतत्संज्ञं वा मां सोऽग्निः करोत्वित्यर्थः ॥

॥ अथ पंचमी ॥

अग्निरत्रिं भरद्वाजं गविष्ठिरं प्रावन्नः कण्वं त्रसदस्युमाहवे ।
अग्निं वसिष्ठो हवते पुरोहितो मृळीकाय पुरोहितः ॥५॥
अग्निः । अत्रिं । भरत्ऽवाजं । गविष्ठिरं । प्र । आवत् । नः । कण्वं । त्रसदस्युं । आऽहवे ।
अग्निं । वसिष्ठः । हवते । पुरःऽहितः । मृळीकाय । पुरःऽहितः ॥५॥

अत्रिं भरद्वाजं गविष्ठिरं कण्वं त्रसदस्युं च नोऽस्मानाहवे संग्रामेऽयमग्निः प्रावत् । प्ररक्षतु । पुरोहितः पुरोहितवद्धितकारी मम पिता वसिष्ठ ऋषिरग्निं हवते । स्तुतिभिराह्वयति । स चाहूतो मृळीकाय सुखार्थमेतत्संज्ञाय वा मह्यं पुरोहितः पुरोधा देवानां पुरःस्थापयिता भवतु ॥

॥ इत्यष्टमस्याष्टमेऽष्टमो वर्गः ॥

श्रद्धयेति पंचर्चं त्रयोविंशं सूक्तमानुष्टुभं श्रद्धादेवत्यं । कामगोत्रजा श्रद्धा नामर्षिका । तथा चानुक्रम्यते । श्रद्धया श्रद्धा कामायनी श्राद्धमानुष्टुभं त्विति । लैंगिको विनियोगः ॥

॥ तत्र प्रथमा ॥

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥१॥
श्रद्धया । अग्निः । सं । इध्यते । श्रद्धया । हूयते । हविः ।
श्रद्धां । भगस्य । मूर्धनि । वचसा । आ । वेदयामसि ॥१॥

पुरुषगतोऽभिलाषविशेषः श्रद्धा । तया श्रद्धयाग्निर्गार्हपत्यादिः समिध्यते । संदीप्यते । यदा हि पुरुषे श्रद्धाग्निगोचर आदरातिशयो जायते तदैष पुरुषोऽग्नीन्प्रज्वालयति नान्यदा । श्रद्धयैव हविः पुरोडाशादिहविश्च हूयते । आहवनीये प्रक्षिप्यते । यद्वास्य सूक्तस्य द्रष्ट्र्या श्रद्धाख्ययाग्निः समिध्यते । श्रद्धामुक्तलक्षणायाः श्रद्धाया अभिमानिदेवतां भगस्य भजनीयस्य धनस्य मूर्धनि प्रधानभूते स्थानेऽवस्थितां वचसा वचनेन स्तोत्रेण वेदयामसि । अभितः प्रख्यापयामः । इदंतो मसिः ॥

॥ अथ द्वितीया ॥

प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः ।
प्रियं भोजेषु यज्वस्विदं म उदितं कृधि ॥२॥

प्रियं । श्रद्धे । ददतः । प्रियं । श्रद्धे । दिदासतः ।
प्रियं । भोजेषु । यज्वऽसु । इदं । मे । उदितं । कृधि ॥२॥

हे श्रद्धे ददतश्चरुपुरोडाशादीनि प्रयच्छतो यजमानस्य प्रियमभीष्टफलं कुरु । दिदासतो दातुमिच्छतश्च हे श्रद्धे प्रियं कुरु । मे मम संबंधिषु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु कृतयज्ञेषु जनेषु चेदमुदितमुक्तं प्रियं कृधि । कुरु ॥

॥ अथ तृतीया ॥

यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ।
एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ॥३॥

यथा । देवाः । असुरेषु । श्रद्धां । उग्रेषु । चक्रिरे ।
एवं । भोजेषु । यज्वऽसु । अस्माकं । उदितं । कृधि ॥३॥

देवा इंद्रादयोऽसुरेषूद्गूर्णबलेषु यथा श्रद्धां चक्रिरेऽवश्यमिमे हंतव्या इत्यादरातिशयं कृतवंत एवं श्रद्धावत्सु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु यष्टृष्वस्माकमस्मत्संबंधिषु तेषूदितं तैरुक्तं प्रार्थितं फलजातं कृधि । कुरु ॥

॥ अथ चतुर्थी ॥

श्रद्धां देवा यजमाना वायुगोपा उपासते ।
श्रद्धां हृदय्य१याकूत्या श्रद्धया विंदते वसु ॥४॥

श्रद्धां । देवाः । यजमानाः । वायुऽगोपाः । उप । आसते ।
श्रद्धां । हृदय्यया । आऽकूत्या । श्रद्धया । विंदते । वसु ॥४॥

देवा यजमाना मनुष्याश्च वायुगोपा वायुर्गोपा रक्षिता येषां ते तादृशाः संतः श्रद्धां देवीमुपासते । प्रार्थयंते । हृदय्यया । हृदये भवा हृदय्या । तथाविधयाकूत्या संकल्परूपया क्रियया श्रद्धामेव परिचरंति सर्वे जनाः । कुत इत्यत आह । यतः कारणाच्छ्रद्धया हेतुभूतया वसु धनं विंदते लभते श्रद्धावाञ्जनः । तत इत्यर्थः ॥

॥ अथ पंचमी ॥

श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि।
श्रद्धां सूर्यस्य निमुचि श्रद्धे श्रद्धापयेह नः ॥५॥
श्रद्धां। प्रातः। हवामहे। श्रद्धां। मध्यंदिनं। परि।
श्रद्धां। सूर्यस्य। निऽमुचि। श्रद्धे। श्रत्। धापय। इह। नः ॥५॥

श्रद्धां देवीं प्रातः पूर्वाह्णे हवामहे। तथा मध्यंदिनं परि। लक्षणे परेः कर्मप्रवचनीयत्वं। मध्यंदिनं परिलक्ष्य। मध्यंदिन इत्यर्थः। मध्याह्नेऽपि तां श्रद्धामाह्वयामहे। सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य निमुच्यस्तमयवेलायां सायंसमयेऽपि तामेव श्रद्धामाह्वयामहे। ईदृग्रूपे हे श्रद्धे नोऽस्मानिह लोके कर्मणि वा श्रद्धापय। श्रद्धावतः कुरु ॥

॥ इत्यष्टमस्याष्टमे नवमो वर्गः ॥

॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे दाशतय्यां दशमे मंडल एकादशोऽनुवाकः ॥

द्वादशेऽनुवाके चत्वारिंशत्सूक्तानि। तत्र शास इत्थेति पंचर्चं प्रथमं सूक्तं शासनाम्न आर्षमानुष्टुभमैंद्रं। अनुक्रांतं च। शासः शासो भारद्वाज इति ॥ युद्धाय संनद्धं राजानमनेनेक्षेत। तथा च सूचितं। अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैः। आ॰ गृ॰ ३.१२.। इति ॥

॥ तत्र प्रथमा ॥

शास इत्था महाँ अस्यमित्रखादो अद्भुतः।
न यस्य हन्यते सखा न जीयते कदा चन ॥१॥
शासः। इत्था। महान्। असि। अमित्रऽखादः। अद्भुतः।
न। यस्य। हन्यते। सखा। न। जीयते। कदा। चन ॥१॥

शासस्तत्संज्ञोऽहमित्थमनेन वक्ष्यमाणप्रकारेणेंद्रं स्तौमीति शेषः। हे इंद्र त्वं महाँ असि। सर्वेभ्योऽधिको भवसि। अमित्रखादोऽमित्राणां शत्रूणां खादिता विनाशयितात एवाद्भुत आश्चर्यभूतश्च भवसीति। यस्येंद्रस्य सखा मित्रभूतः पुरुषः कदा चन कदाचिदपि न हन्यते न हिंस्यते। न जीयते न च शत्रुभिः पराजितो भवति स त्वं महाँ असीत्यन्वयः ॥

॥ अथ द्वितीया ॥

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेंद्रः पुर एतु नः सोमपा अभयंकरः ॥२॥

स्वस्तिऽदाः । विशः । पतिः । वृत्रऽहा । विऽमृधः । वशी ।
वृषा । इंद्रः । पुरः । एतु । नः । सोमऽपाः । अभयंऽकरः ॥२॥

स्वस्तिदाः स्वस्तेरविनाशस्य दाता विशस्पतिः सर्वस्याः प्रजायाः पालयिता वृत्रहा वृत्राणां शत्रूणां हंता विमृधः संग्रामकारी वशी वशीकर्ता वृषा वर्षिता कामानां सोमपाः सोमस्य पातैवंविध इंद्रोऽभयंकरोऽभयस्य भयराहित्यस्य कर्ता सन् नोऽस्माकं पुर एतु । पुरतो गच्छतु ॥

॥ अथ तृतीया ॥

वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिंद्र वृत्रहन्नमित्रस्याभिदासतः ॥३॥

वि । रक्षः । वि । मृधः । जहि । वि । वृत्रस्य । हनू इति । रुज ।
वि । मन्युं । इंद्र । वृत्रऽहन् । अमित्रस्य । अभिऽदासतः ॥३॥

हे इंद्र रक्षो राक्षसजातं वि जहि । विनाशय । मृधः संग्रामकारिणः शत्रूँश्च वि जहि । वृत्रस्यावरकस्यासुरस्य हनू कपोलप्रांतौ वि रुज । विशेषेण भग्नौ कुरु । हे वृत्रहन्निंद्र अभिदासतोऽस्मानुपक्षयतो मित्रस्य शत्रोर्मन्युं क्रोधमपि विनाशय ॥

वि न इंद्रेति वैमृधस्य हविषोऽनुवाक्या । सूचितं च । वि न इंद्र मृधो जहि मृगो न भीमः कुचरो गिरिष्ठाः । आ॰ २.१०. । इति ॥

॥ सैषा चतुर्थी ॥

वि न इंद्र मृधो जहि नीचा यच्छ पृतन्यतः ।
यो अस्माँ अभिदासत्यधरं गमया तमः ॥४॥

वि । नः । इंद्र । मृधः । जहि । नीचा । यच्छ । पृतन्यतः ।
यः । अस्मान् । अभिऽदासति । अधरं । गमय । तमः ॥४॥

हे इंद्र नोऽस्माकं मृधः संग्रामकारिणः शत्रून्वि जहि । विनाशय । तथा पृतन्यतः

पृतनाः सेना आत्मन इच्छतो युयुत्समानानपि नीचा यच्छ। नीचीनमवाङ्मुखं यच्छ। गमय। यः शत्रुरस्मानभिदासत्यभित उपक्षपयति तमधरं निकृष्टं तमोऽंधकारं मरणलक्षणं गमय। प्रापय ॥

॥ अथ पंचमी ॥

अपेंद्र द्विषतो मनोऽप जिज्यासतो वधं।

वि मन्योः शर्म यच्छ वरीयो यवया वधं ॥५॥

अप। इंद्र। द्विषतः। मनः। अप। जिज्यासतः। वधं।

वि। मन्योः। शर्म। यच्छ। वरीयः। यवय। वधं ॥५॥

हे इंद्र द्विषतो द्वेष्टुः शत्रोर्मनोऽप जहि। जिज्यासतोऽस्माकं वयोहानिमिच्छतश्च वधं हननसाधनमायुधं चाप जहि। मन्योः शत्रुसंबंधिनः क्रोधाच्चास्मान्रक्ष। वरीय उरुतरं शर्म सुखं विशेषेण यच्छ। देहि। वधं शत्रुकृतं हननं च यवय। अस्मत्तः पृथक्कुरु ॥

॥ इत्यष्टमस्याष्टमे दशमो वर्गः ॥

ईंखयंतीरिति पंचर्चं गायत्रमैंद्रं द्वितीयं सूक्तं। देवानां स्वसृभूता इंद्रमातरो नामर्षिकाः। तथा चानुक्रांतं। ईंखयंतीर्देवजामय इंद्रमातरो गायत्रमिति॥ द्वितीये पर्याये प्रशास्तुः शस्त्र इदं सूक्तं। सूचितं च। ईंखयंतीरहं दां पाता सुतं। आ॰ ६.४.। इति ॥ महाव्रतेऽपि प्रातःसवनिके ब्रह्मशस्त्र एतत्सूक्तं ॥

॥ तत्र प्रथमा ॥

ईंखयंतीरपस्युव इंद्रं जातमुपासते।

भेजानासः सुवीर्यं ॥१॥

ईंखयंतीः। अपस्युवः। इंद्रं। जातं। उप। आसते।

भेजानासः। सुऽवीर्यं ॥१॥

ईंखयंतीर्गच्छंत्यः स्तुत्यादिभिरिंद्रं प्राप्नुवत्योऽपस्युवोऽपः कर्मात्मन इच्छंत्य इंद्रमातरोऽस्य सूक्तस्य द्रष्ट्र्यो जातं प्रादुर्भूतमिंद्रमुपासते। परिचरंति। सुवीर्यं शोभनवीर्योपेतं धनं च भेजानासः। तस्मादिंद्रात्संभक्तवत्यो भवंति ॥

॥ अथ द्वितीया ॥

त्वमिंद्र बलादधि सहसो जात ओजसः ।
त्वं वृषन्वृषेदसि ॥२॥

त्वं । इंद्र । बलात् । अधि । सहसः । जातः । ओजसः ।
त्वं । वृषन् । वृषा । इत् । असि ॥२॥

हे इंद्र त्वं सहसः परेषामभिभावुकाद्बलादधि जातोऽसि । अधिः पंचम्यर्थानुवादकः । वृत्रादिवधहेतुभूताद्बलाद्धेतोस्त्वं प्रख्यातो भवसीत्यर्थः । अपि च । ओजसः । ओजो नाम बलहेतु हृदयगतं धैर्यं । तस्मादपि त्वं जातोऽसि । हे वृषन्वर्षितस्त्वं वृषेदसि । कामानां वर्षितैव भवसि ॥

॥ अथ तृतीया ॥

त्वमिंद्रासि वृत्रहा व्य१ंतरिक्षमतिरः ।
उद्द्यामस्तभ्ना ओजसा ॥३॥

त्वं । इंद्र । असि । वृत्रऽहा । वि । अंतरिक्षं । अतिरः ।
उत् । द्यां । अस्तभ्नाः । ओजसा ॥३॥

हे इंद्र त्वं वृत्रहासि । शत्रूणां हंता भवसि । अंतरिक्षं मध्यमस्थानं च व्यतिरः । आवारकापनोदनेन प्रावर्धयः । द्यां द्युलोकं चौजसा बलेनोदस्तभ्नाः । ऊर्ध्वमस्तंभीः । यथाधो न पतति तथोपर्यवस्थापितवानित्यर्थः ॥

॥ अथ चतुर्थी ॥

त्वमिंद्र सजोषसमर्कं बिभर्षि बाह्वोः ।
वज्रं शिशान ओजसा ॥४॥

त्वं । इंद्र । सऽजोषसं । अर्कं । बिभर्षि । बाह्वोः ।
वज्रं । शिशानः । ओजसा ॥४॥

हे इंद्र त्वं सजोषसं सह प्रीयमाणमर्कं स्तुत्यं वज्रमात्मीयमायुधमोजसा बलेन शिशानो निश्यन् तीक्ष्णीकुर्वन्बाह्वोर्हस्तयोर्बिभर्षि धारयसि शत्रूणां वधार्थं ॥

॥ अथ पंचमी ॥

त्वमिंद्राभिभूरसि विश्वा जातान्योजसा ।

स विश्वा भुव आभवः ॥५॥

त्वं । इंद्र । अभिऽभूः । असि । विश्वा । जातानि । ओजसा ।

सः । विश्वाः । भुवः । आ । अभवः ॥५॥

हे इंद्र त्वं विश्वा सर्वाणि जातानि जनिमंति भूतान्योजसा बलेनाभिभूरभिभविता भवसि। तथा स तादृशस्त्वं विश्वा भुवः सर्वा भूमीः प्राप्तव्यानि सर्वाण्यपि स्थानान्याभवः। अभितः प्राप्नोः। भू प्राप्तौ ॥

॥ इत्यष्टमस्याष्टम एकादशो वर्गः ॥

सोम इति पंचर्चं तृतीयं सूक्तमानुष्टुभं। विवस्वतो दुहिता यम्यृषिः॥ म्रियमाणानां यजमानादीनां वर्तनमत्र प्रतिपाद्यते। अतस्तद्देवताकमिदं। तथा चानुक्रांतं। सोमो यमी भाववृत्तमानुष्टुभं त्विति ॥ प्रेतोपस्थान एतत्सूक्तं। सूचितं च। सोम एकेभ्य उरूणसावसुतृपा उदुंबलौ। आ० ६.१०.। इति ॥

॥ तत्र प्रथमा ॥

सोम एकेभ्यः पवते घृतमेक उपासते ।

येभ्यो मधु प्रधावति तांश्चिदेवापि गच्छतात् ॥१॥

सोमः। एकेभ्यः। पवते। घृतं। एके। उप। आसते।

येभ्यः। मधु। प्रऽधावति। तान्। चित्। एव। अपि। गच्छतात् ॥१॥

एकेभ्यः केभ्यश्चित्पितृभ्यः सोमः पवते । उपभोगाय कुल्यारूपेण प्रवहति । एषां गोत्रजाः सामानि ब्रह्मयज्ञसमयेऽधीयते। श्रूयते हि। यत्सामानि सोम एभ्यः पवत इति। एकेऽन्ये पितरो घृतमाज्यमुपासते। उपगच्छंति। उपभुंजत इत्यर्थः। एषां पुत्रादयो यजूंषि ब्रह्मयज्ञकालेऽधीयते। श्रुतिश्च भवति। यद्यजूंषि घृतस्य कुल्या इति। येभ्यः पितृभ्यः। तादर्थ्ये चतुर्थी। उपभोगार्थं मधु क्षौद्रं प्रधावति प्रवाहरूपेण शीघ्रं गच्छति। य आथर्वणान्मंत्रान्ब्रह्मयज्ञार्थमधीयते तेषां पितॄन्मधुकुल्या प्रवहति। तथा चाम्नायते। यदाथर्वणांगिरसो मधोः कुल्या इति। तांश्चिदेव तान्पूर्वोक्तान्सर्वानेव हे प्रेत त्वं प्रत्यपि गच्छतात्। अपि गच्छ। प्राप्नुहि ॥

॥ अथ द्वितीया ॥

तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः ।
तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात् ॥२॥
तपसा । ये । अनाधृष्याः । तपसा । ये । स्वः । ययुः ।
तपः । ये । चक्रिरे । महः । तान् । चित् । एव । अपि । गच्छतात् ॥२॥

ये जनास्तपसा कृच्छ्रचांद्रायणादिना युक्ताः संतोऽनाधृष्याः पापैरप्रधृष्या भवंति । ये च तपसा यागादिरूपेण साधनेन स्वर्ययुः स्वर्गं यांति प्राप्नुवंति । ये च महो महत्तपोऽन्यैर्दुष्करं राजसूयाश्वमेधादिकं हिरण्यगर्भाद्युपासनं वा चक्रिरे कुर्वंत्येतेषु प्रवर्तंते तेषु लोकेषु तांश्चित्तानेव तपस्विनो हे प्रेतापि गच्छ ॥

॥ अथ तृतीया ॥

ये युध्यंते प्रधनेषु शूरासो ये तनूत्यजः ।
ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात् ॥३॥
ये । युध्यंते । प्रऽधनेषु । शूरासः । ये । तनूऽत्यजः ।
ये । वा । सहस्रऽदक्षिणाः । तान् । चित् । एव । अपि । गच्छतात् ॥३॥

प्रधनेषु । प्रकीर्णान्यस्मिन्धनानि भवंतीति प्रधनाः संग्रामाः । तेषु शूरासः शौर्यवंतो ये युध्यंते शत्रून्संप्रहरंति । ये च तनूत्यजः शरीराणां तत्र त्यक्तारो भवंति । ये वा ये च सहस्रदक्षिणाः सहस्रदक्षिणान्क्रतूननुष्ठितवंतस्तान्सर्वानेव त्वमपि गच्छ । येषूत्तमेषु लोकेषु ते निवसंति तं लोकं प्राप्नुहीत्यर्थः ॥

॥ अथ चतुर्थी ॥

ये चित्पूर्व ऋतसाप ऋतावान ऋतावृधः ।
पितॄन्तपस्वतो यम तांश्चिदेवापि गच्छतात् ॥४॥
ये । चित् । पूर्वे । ऋतऽसापः । ऋतऽवानः । ऋतऽवृधः ।
पितॄन् । तपस्वतः । यम । तान् । चित् । एव । अपि । गच्छतात् ॥४॥

ये चिद्ये च पूर्वे पूर्वपुरुषा ऋतसाप ऋतं सत्यं यज्ञं वा स्पृशंतः । अत एवर्त-

वान ऋतेन युक्ता ऋतवृध ऋतस्य वर्धकाश्च भवंति तपस्वतस्तपसा युक्तांस्तानेव पितॄन् हे यम नियत त्वमपि गच्छ ॥

॥ अथ पंचमी ॥

सहस्रणीथाः कवयो ये गोपायंति सूर्यं ।

ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात् ॥५॥

सहस्रऽनीथाः । कवयः । ये । गोपायंति । सूर्यं ।

ऋषीन् । तपस्वतः । यम । तपःऽजान् । अपि । गच्छतात् ॥५॥

सहस्रनीथाः सहस्रनयनाः कवयः क्रांतदर्शिनो ये सूर्यममुमादित्यं गोपायंति रक्षंति तपस्वतस्तपसा युक्तांस्तपोजांस्तपसः सकाशादेवोत्पन्नांस्तानृषीन् हे यम नियत त्वमपि गच्छ ॥

॥ इत्यष्टमस्याष्टमे द्वादशो वर्गः ॥

अरायीति पंचर्चं चतुर्थं सूक्तं भरद्वाजपुत्रस्य शिरिंबिठस्यार्षमानुष्टुभं । जपहोमादिभिरिदं सूक्तमश्रीनाशकरं । तत्राद्योपांत्ययोस्तादृशोऽर्थ एव देवता । द्वितीयातृतीये ब्राह्मणस्पत्ये । पंचमी वैश्वदेवी । अनुक्रम्यते हि । अरायि शिरिंबिठो भारद्वाजोऽलक्ष्मीघ्नं द्वितीयातृतीये ब्राह्मणस्पत्ये अंत्या वैश्वदेवीति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

अरायि काणे विकटे गिरिं गच्छ सदान्वे ।

शिरिंबिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥१॥

अरायि । काणे । विऽकटे । गिरिं । गच्छ । सदान्वे ।

शिरिंबिठस्य । सत्वऽभिः । तेभिः । त्वा । चातयामसि ॥१॥

हे अराय्यदायिनि दानविरोधिनि हे काणे कुत्सितशब्दकारिणि कुत्सितदर्शने वा हे विकटे विकृतगमने विकृतांगे वा हे सदान्वे सदानोनुवे सर्वदाक्रोशकारिणि दुर्भिक्षादिदेवते गिरिं पर्वतं निर्जनदेशं गच्छ । अस्मान्मा बाधिष्ठाः । शिरिंबिठस्य । बिठमंतरिक्षं । शीर्यंते बिठेऽंतरिक्ष इति शिरिंबिठो मेघः । तस्य सत्वभिरंतर्वर्तमानैरुदकैस्तेभिस्तैस्त्वा त्वां चातयामसि । चातयामः । विनाशयामः । यद्वा शिरिंबि-

ठस्यैतत्संज्ञकस्य भरद्वाजपुत्रस्य तेभिस्तैरनुष्ठितैः सत्वभिः कर्मभिर्हे अलक्ष्मि त्वां विनाशयामः । इतस्त्वमेव शीघ्रं गिरिं गच्छ ॥

॥ अथ द्वितीया ॥

चत्तो इतश्चत्तामुतः सर्वा भ्रूणान्यारुषी ।
अराय्यं ब्रह्मणस्पते तीक्ष्णशृंगोदृषन्निहि ॥२॥
चत्तो इति । इतः । चत्ता । अमुतः । सर्वा । भ्रूणानि । आरुषी ।
अराय्यं । ब्रह्मणः । पते । तीक्ष्णऽशृंग । उत्ऽऋषन् । इहि ॥२॥

सालक्ष्मीरितोऽस्माल्लोकाच्चत्तो चत्तैवास्माभिर्नाशितैवामुतोऽमुष्मादपि लोकाच्चत्ता हिंसिता भवतु । यालक्ष्मीः सर्वा सर्वाणि भ्रूणानि गर्भजातानि सर्वासामोषधीनामंकुराणि या दुर्भिक्षाधिदेवतारुष्याहंत्री भवत्यराय्यं दानविरोधिनीं तां हे ब्रह्मणस्पते मंत्रपालयितर्देव हे तीक्ष्णशृंग तीक्ष्णतेजस्कोदृषन् अस्मात्स्थानादुद्गमयन्निहि । गच्छ ॥

॥ अथ तृतीया ॥

अदो यद्दारु प्लवते सिंधोः पारे अपूरुषं ।
तदा रभस्व दुर्हणो तेन गच्छ परस्तरं ॥३॥
अदः । यत् । दारु । प्लवते । सिंधोः । पारे । अपुरुषं ।
तत् । आ । रभस्व । दुर्हनो इति दुःऽहनो । तेन । गच्छ । परःऽतरं ॥३॥

अदो विप्रकृष्टदेशे वर्तमानमपूरुषं निर्मात्रा पुरुषेण रहितं यद्दारु दारुमयं पुरुषोत्तमाख्यं देवताशरीरं सिंधोः पारे समुद्रतीरे प्लवते जलस्योपरि वर्तते तद्दारु हे दुर्हणो दुःखेन हननीय केनापि हंतुमशक्य हे स्तोतरा रभस्व । आलंबस्व । उपास्स्वेत्यर्थः । तेन दारुमयेन देवेनोपास्यमानेन परस्तरमतिशयेन तरणीयमुत्कृष्टं वैष्णवं लोकं गच्छ ॥ अपर आह । हे दुर्हणो दुःखेन हननीये दुष्टहनुयुक्ते वा हे अलक्ष्मि सिंधोः पारे समुद्रतीरप्रांतेऽपूरुषं पुरुषैर्जनैर्वियुक्तमदोऽस्मत्तो दूरे देशे वर्तमानं यद्दारु दारुमयी नौः प्लवते तद्दार्वा रभस्व । परिगृहाण । गृहीत्वा च तेन दारुणा परस्तरमतिशयेन तरणीयं ब्रह्मणस्पतिना प्रेरिता सती द्वीपांतरं गच्छ ॥

षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे यद्ध प्राचीरित्येषा । सूचितं च । कपृन्नरो यद्ध प्राचीरजगंतेति चैते । आ॰ ६. ३. । इति ॥

॥ सैषा चतुर्थी ॥

यद्ध प्राचीरजगंतोरो मंडूरधाणिकीः ।
हता इंद्रस्य शत्रवः सर्वे बुद्बुदयाशवः ॥४॥
यत् । ह । प्राचीः । अजगंत । उरः । मंडूरऽधाणिकीः ।
हताः । इंद्रस्य । शत्रवः । सर्वे । बुद्बुदऽयाशवः ॥४॥

हे मंडूरधाणिकीर्मंडूरवत्कुत्सितशब्दकारिण्यो मंदनस्य धनस्य धारयित्र्यो वा-लक्ष्म्य उरः । उर्वी हिंसार्थः । अस्मात्क्विपि राल्लोप इति वलोपः । ततो जसि रूपमेतत् । हिंसित्र्यो यूयं प्राचीः प्रकर्षेणांचंत्यः प्रकृष्टगमनाः सत्यो यद्ध यदा खल्वजगंतागच्छत । गमेर्लेङि मध्यमबहुवचने छांदसः शपः श्लुः । तप्तनप्तनथनाश्चेति तस्य तनबादेशः । अत एव ङित्त्वाभावादनुनासिकलोपो न भवति । तदानीमेव सर्व इंद्रस्य शत्रवो बुद्बुदयाशवः । यांति गच्छंतीति याः । अश्नुवत इत्याशवः । याश्च त आशवश्च याशवः । बुद्बुदवद्यातारो व्यापनशीलाश्च संतो हता नष्टा आसन् ॥

॥ अथ पंचमी ॥

परीमे गामनेषत पर्यग्निमहृषत ।
देवेष्वक्रत श्रवः क इमाँ आ दधर्षति ॥५॥
परि । इमे । गां । अनेषत । परि । अग्निं । अहृषत ।
देवेषु । अक्रत । श्रवः । कः । इमान् । आ । दधर्षति ॥५॥

इमे विश्वे देवा गां । जात्यभिप्रायमेकवचनं । पणिभिरपहृताः सर्वा देवगवीः पर्यनेषत । पर्यनयत । यष्टॄनंगिरसः परिप्रापयन् । ततोऽग्निं च पर्यहृषत । परितो व्यहरन् । यागार्थं तत्र तत्र गार्हपत्यादिरूपेण स्थापितवंत इत्यर्थः । एवं कृत्वा देवेषु यष्टव्येष्विंद्रादिषु श्रवोऽन्नमक्रत । अकृषत । कः शत्रुरसुरादिरिमान्विश्वान्देवाना दधर्षति । अभिभवितुं शक्नोति । न कश्चिदित्यर्थः ॥

॥ इत्यष्टमस्याष्टमे त्रयोदशो वर्गः ॥

अग्निं हिन्वंतु न इति पंचर्चं पंचमं सूक्तमग्निपुत्रस्य केतुनाम्न आर्षं गायत्रमाग्नेयं। तथा चानुक्रांतं। अग्निं केतुराग्नेय आग्नेयं गायत्रमिति ॥ प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छंदसीदं शस्यं। सूचितं च। अग्निं हिन्वंतु नः प्राग्नये वाचमिति सूक्ते। आ०४.१३.। इति ॥

॥ तत्र प्रथमा ॥

अग्निं हिन्वंतु नो धियः सप्तिमाशुमिवाजिषु।

तेन जेष्म धनंधनं ॥१॥

अग्निं। हिन्वंतु। नः। धियः। सप्तिं। आशुंऽइव। आजिषु।

तेन। जेष्म। धनंऽधनं ॥१॥

नोऽस्माकं धियः कर्माणि स्तुतयो वाग्निं हिन्वंतु। प्रेरयंतु। यागार्थमुद्योजयंतु वर्धयंतु वा। हि गतौ वृद्धौ च। तत्र दृष्टांतः। आजिषु संग्रामेष्वाशुमिव यथाशुं शीघ्रगामिनं सप्तिं सर्पणशीलमश्वं योद्धारः प्रेरयंति तद्वत्। तेनाग्निना धनंधनं सर्वं धनं जेष्म। वयं जयेम ॥

॥ अथ द्वितीया ॥

यया गा आकरामहे सेनयाग्ने तवोत्या।

तां नो हिन्व मघत्तये ॥२॥

यया। गाः। आऽकरामहे। सेनया। अग्ने। तव। ऊत्या।

तां। नः। हिन्व। मघत्तये ॥२॥

हे अग्ने सेनयेनेन सह वर्तमानया सेनारूपया वा यया तवोत्या रक्षया गा आकारामह आभिमुख्येन कुर्महे। लभामह इत्यर्थः। तामूतिं नोऽस्मान्हिन्व। गमय। किमर्थं। मघत्तये। धनस्य दानार्थं। अस्माकं धनलाभायेत्यर्थः ॥

आभिप्लविकेषूक्थ्येषु प्रशास्तुः शस्त्र आग्ने स्थूरमिति तृचो वैकल्पिकोऽनुरूपः। सूचितं च। आ ते वत्सो मनो यमदाग्ने स्थूरं रयिं भर। आ०७.८.। इति ॥

॥ तत्राद्या सूक्ते तृतीया ॥

आग्ने स्थूरं रयिं भर पृथुं गोमंतमश्विनं।

अंग्धि खं वर्तया पणिं ॥३॥

आ । अग्ने । स्थूरं । रयिं । भर । पृथुं । गोऽमंतं । अश्विनं ।
अंग्धि । खं । वर्तय । पणिं ॥३॥

हे अग्ने स्थूरं स्थूलं वृद्धं पृथुं विस्तीर्णं गोमंतं गोभिर्युक्तमश्विनमश्वोपेतं रयिं धनमा भर। अस्मभ्यमाहर। प्रयच्छ। खमंतरिक्षमंग्धि। वृष्ट्युदकैः सिंच। यद्वात्मीयैस्तेजोभिर्व्यंजय। प्रकाशय। पणिं वणिजमदातारमसुरं वा वर्तय। इतो निर्गमय यद्वा दाने प्रवर्तय ॥

॥ अथ चतुर्थी ॥

अग्ने नक्षत्रमजरमा सूर्यं रोहयो दिवि ।
दधज्ज्योतिर्जनेभ्यः ॥४॥
अग्ने । नक्षत्रं । अजरं । आ । सूर्यं । रोहयः । दिवि ।
दधत् । ज्योतिः । जनेभ्यः ॥४॥

हे अग्ने नक्षत्रं। नक्षति सततं गच्छतीति नक्षत्रः। नक्षि गतौ। अमिनक्षीत्यादिनात्रन्प्रत्ययः। सततं गंतारमजरं जरारहितं सूर्यं सर्वस्य प्रेरकमादित्यं दिव्यंतरिक्ष आ रोहयः। उपर्यवस्थितवानसि। यद्वा नक्षत्रं कृत्तिकादिकं सूर्यं च दिव्यारोहयः । किं कुर्वन् । जनेभ्यः सर्वेभ्यः प्राणिभ्यो व्यवहारार्थं ज्योतिः प्रकाशं दधद्विदधत् कुर्वन्। यथा सर्वेषां प्रकाशो भवति तथोन्नते देशे सूर्यमगमय इत्यर्थः॥

॥ अथ पंचमी ॥

अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् ।
बोधा स्तोत्रे वयो दधत् ॥५॥
अग्ने । केतुः । विशां । असि । प्रेष्ठः । श्रेष्ठः । उपस्थऽसत् ।
बोध । स्तोत्रे । वयः । दधत् ॥५॥

हे अग्ने विशां प्रजानां यजमानानां केतुः केतयितासि । ज्ञापयिता भवसि । अत एव प्रेष्ठः प्रियतमः श्रेष्ठः प्रशस्यतमश्च भवसि। स त्वमुपस्थसदुपस्थाने यज्ञगृहे निषीदन्बोध। अस्मदीयं स्तोत्रमवगच्छ। किं कुर्वन्। स्तोत्रे स्तुवते जनाय वयोऽन्नं दधद्विदधत् कुर्वन् प्रयच्छन् ॥

॥ इत्यष्टमस्याष्टमे चतुर्दशो वर्गः ॥

इमा नु कमिति पंचर्चं षष्ठं सूक्तमाप्त्यपुत्रस्य भुवनस्यार्षं भुवनपुत्रस्य साधनसंज्ञस्य वा वैश्वदेवं। सर्वा द्विपदास्त्रिष्टुभः। तथा चानुक्रांतं। इमा नु भुवन आप्त्यः साधनो वा भौवनो वैश्वदेवं द्वैपदं त्रैष्टुभमिति ॥ दशरात्रस्य द्वितीये छंदोमे वैश्वदेवशस्त्रे वैश्वदेवान्निविद्धानात्पूर्वमिदं शंसनीयं। सूचितं च। आ याहि वनसेमा नु कं बभ्रुरेक इति द्विपदासूक्तानि। आ० ८.७.। इति ॥ षष्ठेऽहनि तृतीये सवने ब्राह्मणाच्छंसिन उक्थ्यशस्त्र आद्यस्तृचः स्तोत्रियः। ततो द्वे अनुरूपार्थे। सूचितं च। ब्राह्मणाच्छंसिन इमा नु कं भुवना सीषधामेति पंच। आ० ८.३.। इति ॥

॥ तत्र प्रथमा ॥

इमा नु कं भुवना सीषधामेंद्रश्च विश्वे च देवाः ॥१॥

इमा। नु। कं। भुवना। सीसधाम। इंद्रः। च। विश्वे। च। देवाः ॥१॥

इमेमानि प्रदृश्यमानानि भुवना भुवनानि नु क्षिप्रं सीषधाम। साधयामः। वशीकुर्मः। कमिति पूरकः। यद्वेमानि सर्वाणि भूतजातान्यस्मभ्यं कं सुखं सीषधाम। साधयंतु। पुरुषव्यत्ययः। इंद्रश्च विश्वे सर्वेऽन्ये देवाश्च स्तुत्या प्रीता इममर्थं साधयंतु ॥

॥ अथ द्वितीया ॥

यज्ञं च नस्तन्वं च प्रजां चादित्यैरिंद्रः सह चीक्लृपाति ॥२॥

यज्ञं। च। नः। तन्वं। च। प्रऽजां। च। आदित्यैः। इंद्रः। सह। चीक्लृपाति ॥२॥

नोऽस्माकं यज्ञं ज्योतिष्टोमादिकं यागं तन्वं शरीरं च प्रजां पुत्रादिकां चादित्यैरदितिपुत्रैरन्यैर्देवैः सह वर्तमान इंद्रश्चीक्लृपाति। कल्पयतु। यज्ञादिकं स्वव्यापारसमर्थं करोतु ॥

॥ अथ तृतीया ॥

आदित्यैरिंद्रः सगणो मरुद्भिरस्माकं भूत्वविता तनूनां ॥३॥

आदित्यैः। इंद्रः। सऽगणः। मरुत्ऽभिः। अस्माकं। भूतु। अविता। तनूनां ॥३॥

आदित्यैरदितिपुत्रैर्मित्रादिभिर्मरुद्भिश्च सगणः सहित इंद्रोऽस्माकं तनूनां शरीराणां तनयानां वाविता भूतु। रक्षिता भवतु ॥

॥ अथ चतुर्थी ॥

हत्वाय देवा असुरान्यदायन्देवा देवत्वमभिरक्षमाणाः ॥४॥

हत्वाय। देवाः। असुरान्। यत्। आयन्। देवाः। देवऽत्वं। अभिऽरक्षमाणाः ॥४॥

देवा इंद्रादयोऽसुरान्क्षेप्तॄन्वृत्रादीन्हत्वाय हत्वा विनाश्य यद्यदायन् आगच्छन् स्वकीयं स्थानं प्राप्नुवन् तदानीं ते देवा देवत्वमात्मीयममृतत्वमभिरक्षमाणा अभितः सर्वतो रक्षंतोऽभूवन्। बाधकाभावात्सर्वत्र प्रख्यापितवंत इत्यर्थः ॥

॥ अथ पंचमी ॥

प्रत्यंचमर्कमनयञ्छचीभिरादित्स्वधामिषिरां पर्यपश्यन् ॥५॥

प्रत्यंचं। अर्कं। अनयन्। शचीभिः। आत्। इत्। स्वधां। इषिरां। परि। अपश्यन् ॥५॥

शचीभिः कर्मभिः परिचरणात्मकैः सार्धमर्कमर्चनसाधनं स्तोत्रं प्रत्यंचमिंद्रादीन्प्रत्यंचदनयन्। स्तोतारः प्रापयन्। यदैवमादिदनंतरमेवेषिरां गमनशीलं स्वधां वृष्ट्युदकं पर्यपश्यन्। सर्वे जनाः परितः पश्यंति। यद्वा। इषिरामेषणीयां स्वधां। अन्ननामैतत्। हविर्लक्षणमन्नं सर्वे देवाः परिपश्यंति ॥

॥ इत्यष्टमस्याष्टमे पंचदशो वर्गः ॥

सूर्यमिति पंचर्चं सप्तमं सूक्तं सूर्यपुत्रस्य चक्षुःसंज्ञस्यार्षं सूर्यदेवत्यं गायत्रं। तथा चानुक्रांतं। सूर्यो नश्चक्षुः सौर्यः सौर्यं गायत्रमिति ॥ अश्विनशस्त्रे सूर्योदयादुत्तरकाले सौर्यकांड इदं सूक्तं। सूचितं च। सूर्यो नो दिव उदु त्यं जातवेदसमिति नव। आ० ६.५.। इति ॥ दर्शपूर्णमासयोः सुगादापनात्पूर्वभाविनि जपे सूर्यो न इत्येषा। सूचितं च। सूर्यो नो दिवस्पातु नमो महद्भ्यो नमो अर्भकेभ्य इति ॥

॥ सैषाद्या सूक्ते प्रथमा ॥

सूर्यो नो दिवस्पातु वातो अंतरिक्षात्।
अग्निर्नः पार्थिवेभ्यः ॥१॥

सूर्यः। नः। दिवः। पातु। वातः। अंतरिक्षात्।
अग्निः। नः। पार्थिवेभ्यः ॥१॥

सूर्यः सर्वस्य प्रेरकः शोभनीयो वा देवो दिवो द्युलोकाद्द्युलोकवर्तिनो जना-

नोऽस्मान्पातु । रक्षतु । वातो वायुश्चांतरिक्षान्मध्यमस्थानगताद्बाधकाद्स्मान्र- क्षतु । तथा पृथिवीस्थानोऽग्निश्च पार्थिवेभ्यः पृथिव्यां वर्तमानेभ्यः शत्रुभ्यो नो ऽस्मान्रक्षतु ॥

॥ अथ द्वितीया ॥

जोषा सवितर्यस्य ते हरः शतं सवाँ अर्हति ।

पाहि नो दिद्युतः पतंत्याः ॥२॥

जोष । सवितः । यस्य । ते । हरः । शतं । सवान् । अर्हति ।

पाहि । नः । दिद्युतः । पतंत्याः ॥२॥

हे सवितः सर्वस्य प्रेरक सूर्य जोष । अस्मत्स्तुत्यादिकं सेवस्व । यस्य ते तव हरो रसहरणशीलं तेजः शतं सवान्बहून्यज्ञान्प्रत्यर्हति योग्यं भवति । यद्वा प्रकाश- नादिद्वारा पूजयति । स त्वं नोऽस्मान्पतंत्या निपतंत्याः शत्रुभिरस्मासु क्षिप्यमा- नाया दिद्युतः । वज्रनामैतत् । द्योतमानायाः शक्तेरायुधात्पाहि । रक्ष ॥

॥ अथ तृतीया ॥

चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः ।

चक्षुर्धाता दधातु नः ॥३॥

चक्षुः । नः । देवः । सविता । चक्षुः । नः । उत । पर्वतः ।

चक्षुः । धाता । दधातु । नः ॥३॥

सविता प्रेरको देवो नोऽस्माकं चक्षुः प्रकाशकमिंद्रियमिंद्रियानुग्राहकं तेजो वा दधातु । उतापि च पर्वत इंद्रसहचरः पर्वताख्योऽपि देवो नोऽस्माकं चक्षुर्द- धातु । धाता सर्वस्य विधातादित्यानामन्यतमश्च नोऽस्माकं चक्षुर्विदधातु ॥

॥ अथ चतुर्थी ॥

चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः ।

सं चेदं वि च पश्येम ॥४॥

चक्षुः । नः । धेहि । चक्षुषे । चक्षुः । विऽख्यै । तनूभ्यः ।

सं । च । इदं । वि । च । पश्येम ॥४॥

नोऽस्माकं चक्षुषे रूपोपलब्धिकारणायेंद्रियाय चक्षुः प्रकाशकं तदानुग्राहकं तेजो हे सूर्य धेहि। विधेहि। कुरु। यद्वा न इति व्यत्ययेन बहुवचनं। चक्षुषे चक्षुःसंज्ञाय नो मह्यं चक्षुरिंद्रियं वा तेजो वा हे सूर्य धेहि। प्रयच्छ। तनूभ्यो ऽस्माकं शरीरेभ्यस्तनयेभ्यो वा विख्यै विख्यानाय प्रकाशनाय चक्षुस्त्वदीयं प्रकाशं विधेहि। यत एवं तस्मात्कारणात्त्वदीयेन तेजसा वयं चेदं सर्वं जगत्सं पश्येम। सम्यग्द्रष्टारो भवेम वि पश्येम च। विविधं च सविशेषं द्रष्टारो भवेम॥

॥ अथ पंचमी ॥

सुसंदृशं त्वा वयं प्रति पश्येम सूर्य।

वि पश्येम नृचक्षसः॥५॥

सुऽसंदृशं। त्वा। वयं। प्रति। पश्येम। सूर्य।

वि। पश्येम। नृऽचक्षसः॥५॥

हे सूर्य सुसंदृशं सुष्ठु संद्रष्टारं त्वा त्वां वयं प्रति पश्येम। प्रत्येकं द्रष्टारो भूयास्म। तथा नृचक्षसो नृभिर्मनुष्यैरस्माभिर्द्रष्टव्यान्पदार्थान्वि पश्येम। विद्रष्टारो भवेम। यद्वा नृचक्षसो नृणां शत्रुमनुष्याणां हिंसकाः संतो वयं विशिष्टज्ञाना भवेम॥

॥ इत्यष्टमस्याष्टमे षोडशो वर्गः॥

उदसाविति षडृचमष्टमं सूक्तमानुष्टुभं। पुलोमतनया शची स्वात्मानमनेनास्तौत्। अतः सैवर्षिः सैव देवता। तथा चानुक्रांतं। उदसौ षट् पौलोमी शच्यात्मानं तुष्टावानुष्टुभमिति। विनियोगो लिंगादवगंतव्यः। आपस्तंबस्तु सपत्नीनाशने सूर्योपस्थान इदं सूक्तं विनियुक्तवान्। सूत्र्यते हि। एतेनैव कामेनोत्तरेणानुवाकेन सदादित्यमुपतिष्ठत इति। अत्रैतेनेति प्रकृतं सपत्नीबाधनं परामृश्यते॥

॥ तत्र प्रथमा॥

उदसौ सूर्यो अगादुदयं मामको भगः।

अहं तद्विद्वला पतिमभ्यसाक्षि विषासहिः॥१॥

उत्। असौ। सूर्यः। अगात्। उत्। अयं। मामकः। भगः।

अहं। तत्। विद्वला। पतिं। अभि। असाक्षि। विऽससहिः॥१॥

असौ द्युलोकस्थः सूर्य उदगात्। उदयं प्राप्तवान्। मामको मदीयो भगो भज-

नीयोऽयमिंद्रश्च सूर्यात्मनोदगात्। यद्वा मामको भगो मदीयमिदं सौभाग्यमुदगात्। तदुद्यतं सूर्यस्य तेजो विद्वला ज्ञातवती। यद्वा पतिं भर्तारं विद्वला लब्धवत्यहं विषासहिर्विशेषेणाभिभवित्री सत्यभ्यसाक्षि। अभ्यभूवं। सपत्नीरिति शेषः। सहतेरभिभवार्थस्य लुङ्येतद्रूपं। यद्वा विषासहिः सपत्नीनामभिभवित्री सती पतिमभ्यसाक्षि। भर्तारमयभ्यभूवं। यथा मय्येव वशीकृतश्चिरं वर्तते तथाकार्षमित्यर्थः॥

॥ अथ द्वितीया ॥

अहं केतुरहं मूर्धाहमुग्रा विवाचनी।
ममेदनु क्रतुं पतिः सेहानाया उपाचरेत्॥२॥
अहं। केतुः। अहं। मूर्धा। अहं। उग्रा। विऽवाचनी।
मम। इत्। अनु। क्रतुं। पतिः। सेहानायाः। उपऽआचरेत्॥२॥

अहं केतुः केतयित्री सर्वस्य ज्ञात्री भवामि। अहं मूर्धा सर्वेष्ववयवेषु शिर इव प्रधानभूता च भवामि। अहमुग्रोद्गूर्णा सती विवाचनी विशेषेण पतिं वाचयित्री भवामि। क्रोधाविष्टमपि पतिं मयि सर्वदा प्रियवचनयुक्तं करोमीत्यर्थः। सेहानायाः सपत्नीनामभिभवित्र्या ममेन्ममैव क्रतुं कर्म बुद्धिं वानुलक्ष्य पतिः पालयिता भर्तोपाचरेत्। उपागच्छेत्। नान्यासां पत्नीनां॥

॥ अथ तृतीया ॥

मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट्।
उताहमस्मि संजया पत्यौ मे श्लोक उत्तमः॥३॥
मम। पुत्राः। शत्रुऽहनः। अथो इति। मे। दुहिता। विऽराट्।
उत। अहं। अस्मि। संऽजया। पत्यौ। मे। श्लोकः। उत्ऽतमः॥३॥

ममैव पुत्रास्तनयाः शत्रुहणः शत्रूणां सपत्नानां हंतारो भवंति। अथो अपि च मे मदीया दुहिता पुत्री विराड्विशेषेण राजमाना भवति। उतापि चाहं संजया सम्यग्जेत्री सपत्नीनामस्मि। ता अभिभवामि। अतो हेतोः पत्यौ भर्तरींद्रे मे मम श्लोक उपश्लोकनीयं यश उत्तम उन्नततममतिशयेनोत्कृष्टं विद्यते॥

॥ अथ चतुर्थी ॥

येनेंद्रो हविषा कृत्व्यभवद्द्युम्न्युत्तमः ।
इदं तदक्रि देवा असपत्ना किलाभुवं ॥४॥

येन । इंद्रः । हविषा । कृत्वी । अभवत् । द्युम्नी । उत्ऽतमः ।
इदं । तत् । अक्रि । देवाः । असपत्ना । किल । अभुवं ॥४॥

येन हविषेंद्रो मम भर्ता कृत्वी कर्मणां कर्ताभवद्भवति । तथा द्युम्नी । द्युम्नं द्योतमानं यशोऽन्नं वा । तद्वानुत्तम उत्कृष्टतमश्च येन हविषा भवति । हे देवाः स्तोतार ऋत्विजः तदिदं हविरक्रि । अकारि । जयार्थिभिर्भवद्भिः क्रियतां । यद्वा हे यष्टव्या देवाः तदिदं हविरक्रमहमपि । करोतेर्लुङीटि मंत्रे घसेति च्लेर्लुक् । अत एव कारणादहमसपत्ना किल शत्रुरहिता खल्वभुवं । अभूवं । छांदसो ह्रस्वः ॥

॥ अथ पंचमी ॥

असपत्ना सपत्नघ्नी जयंत्यभिभूवरी ।
आवृक्षमन्यासां वर्चो राधो अस्थेयसामिव ॥५॥

असपत्ना । सपत्नऽघ्नी । जयंती । अभिऽभूवरी ।
आ । अवृक्षं । अन्यासां । वर्चः । राधः । अस्थेयसांऽइव ॥५॥

असपत्नाशत्रुका भवामि । कुत इत्यत आह । सपत्नघ्नी शत्रूणां हंत्री । अत एव जयंती जयं प्राप्नुवत्यभिभूवर्यभिभवित्री । भवतेरन्येभ्योऽपि दृश्यंत इति क्वनिप् । वनो र चेति ङीब्रेफौ । ईदृश्यहमन्यासां सपत्नीनां वर्चस्तेजो राधो धनं चावृक्षं । आ समंतादवृक्षं । अवृश्चिषं । अच्छिदं । व्रश्चेर्लुङ्यूदित्वादिडभावे संयोगादिलोपे छांदसं संप्रसारणं । तत्र दृष्टांतः । अस्थेयसामिवास्थिरतराणां शत्रूणां यथा धनमप्रयत्नेन वृश्च्यते तथेत्यर्थः । स्थिरशब्दादीयसुनि प्रियस्थिरेत्यादिना स्थादेशः ॥

॥ अथ षष्ठी ॥

समजैषमिमा अहं सपत्नीरभिभूवरी ।
यथाहमस्य वीरस्य विराजानि जनस्य च ॥६॥

सं । अजैषं । इमाः । अहं । सऽपत्नीः । अभिऽभूवरी ।
यथा । अहं । अस्य । वीरस्य । विऽराजानि । जनस्य । च ॥६॥

अभिभूवर्येभिभवित्र्यहमिमाः सपत्नीः समजैषं । सम्यगभ्यभूवं । यथा येन प्रकारेणाहमस्य वीरस्येंद्रस्य तदीयपरिजनस्य च विराजानि । विशेषेण राजमाना भवानि । तथा समजैषमित्यर्थः ॥

॥ इत्यष्टमस्याष्टमे सप्तदशो वर्गः ॥

तीव्रस्येति पंचर्चं नवमं सूक्तं वैश्वामित्रस्य पूरणस्यार्षं त्रैष्टुभमैंद्रं । तथा चानुक्रांतं । तीव्रस्य पंच पूरणो वैश्वामित्र इति ॥ तीव्रसोमाख्य एकाह इदं निष्केवल्यनिविद्धानं । सूचितं च । क्वस्य वीरस्तीव्रस्याभिवयस इति मध्यंदिनः । आ॰ ९.७. । इति ॥ महाव्रतेऽपि माध्यंदिने सवने ब्रह्मशस्त्रेऽप्येतत्सूक्तं । तथैव पंचमारण्यके सूचितं । तीव्रस्याभिवयसो अस्य पाहीति माध्यंदिन इति ॥

॥ तत्र प्रथमा ॥

तीव्रस्याभिवयसो अस्य पाहि सर्वरथा वि हरी इह मुंच ।

इंद्र मा त्वा यजमानासो अन्ये नि रीरमन्तुभ्यमिमे सुतासः ॥१॥

तीव्रस्य । अभिऽवयसः । अस्य । पाहि । सर्वऽरथा । वि । हरी इति । इह । मुंच ।

इंद्र । मा । त्वा । यजमानासः । अन्ये । नि । रीरमन् । तुभ्यं । इमे । सुतासः ॥१॥

तीव्रस्य तीक्ष्णस्य क्षिप्रं मदकरस्याभिवयसः । वय इत्यन्ननाम । अभिगतं चरुपुरोडाशाद्यन्नं यस्य तादृशस्यास्य सोमस्य । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । ईदृशं सोमं हे इंद्र पाहि । पिब । पिबतेश्छांदसः शपो लुक् । तदर्थं सर्वरथा सरणशीलरथौ हरी अश्वाविहास्मिन्यज्ञगृहे वि मुंच । रथाद्विसृज । हे इंद्र अस्मत्तोऽन्ये यजमानासो यजमानास्त्वा त्वां मा नि रीरमन् । नितरां मा रमयंतु । वयमेव रमयाम इत्यर्थः । ततस्तुभ्यं त्वदर्थमेव सुतासः सुता अभिषुता इमे प्रत्यक्षेणोपलभ्यमानाः सोमा वर्तंते ॥

॥ अथ द्वितीया ॥

तुभ्यं सुतास्तुभ्यमु सोत्वासस्त्वां गिरः श्वात्र्या आ ह्वयंति ।

इंद्रेदमद्य सवनं जुषाणो विश्वस्य विद्वाँ इह पाहि सोमं ॥२॥

तुभ्यं । सुताः । तुभ्यं । ऊं इति । सोत्वासः । त्वां । गिरः । श्वात्र्याः । आ । ह्वयंति ।

इंद्रं । इदं । अद्य । सवनं । जुषाणः । विश्वस्य । विद्वान् । इह । पाहि । सोमं ॥२॥

हे इंद्र तुभ्यं त्वदर्थमेव सुता अभिषुताः सर्वे सोमाः सोत्वास इतः परमभिषोतव्याश्च तुभ्यमु त्वदर्थमेव। सुनोतेः कृत्यार्थे तवैकेनिति त्वन्प्रत्ययः। श्वाच्याः श्वाशु शीघ्रमतंत्यः प्रवर्तमाना गिरः स्तुतिरूपा वाचश्च त्वामेवाह्वयंति। आक्रोशयंति। हे इंद्र अद्यास्मिन्काल इदं सवनं प्रातःसवनादिकं जुषाणः सेवमानो विश्वस्य सर्वस्य विद्वाञ्ज्ञाता त्वमिहास्मिन्यज्ञे सोमं पाहि। पिब ॥

॥ अथ तृतीया ॥

य उशता मनसा सोममस्मै सर्वहृदा देवकामः सुनोति।

न गा इंद्रस्तस्य परा ददाति प्रशस्तमिच्चारुमस्मै कृणोति ॥३॥

यः। उशता। मनसा। सोमं। अस्मै। सर्वऽहृदा। देवऽकामः। सुनोति।

न। गाः। इंद्रः। तस्य। परा। ददाति। प्रऽशस्तं। इत्। चारुं। अस्मै। कृणोति ॥३॥

य उशता कामयमानेन सर्वहृदा। सर्वमविकलं हृदयं यस्य। यद्वा सर्वेषामृत्विजां हृदयेन। सामर्थ्यान्मत्वर्थो लक्ष्यते। हृदयवता मनसास्मा इंद्राय देवकामो देवमिंद्रं कामयमानो यजमानः सोमं सुनोत्यभिषुणोति। इंद्रस्तस्य यजमानस्य गा न परा ददाति। परादानं विनाशः। न विनाशयति। अस्मै यजमानाय चारु शोभनमत एव प्रशस्तं। इदित्यवधारणे। प्रशंसनीयमेव धनं कृणोति। करोति ॥

॥ अथ चतुर्थी ॥

अनुस्पष्टो भवत्येषो अस्य यो अस्मै रेवान्न सुनोति सोमं।

निररत्नौ मघवा तं दधाति ब्रह्मद्विषो हंत्यनानुदिष्टः ॥४॥

अनुऽस्पष्टः। भवति। एषः। अस्य। यः। अस्मै। रेवान्। न। सुनोति। सोमं।

निः। अरत्नौ। मघऽवा। तं। दधाति। ब्रह्मऽद्विषः। हंति। अननुऽदिष्टः ॥४॥

अस्य यजमानस्यैष इंद्रोऽनुस्पष्टो दृष्टिगोचरो भवति यो रेवान्धनवानस्मा इंद्राय सोमं सुनोत्यभिषुणोति। मघवा धनोपेत इंद्रस्तं यजमानमरत्नौ हस्ते निर्दधाति भयान्निकृष्य धारयति रक्षिता सन् धृत्वा चाननुदिष्टस्तेनानुक्तोऽप्रार्थित एव सन्ब्रह्मद्विषो ब्राह्मणद्वेष्टृञ्शत्रून्हंति। हिनस्ति ॥

शुनासीरीये पर्वणींद्राय शुनासीराय पुरोडाशं द्वाशकपालमित्यस्याश्वायंत इत्ये-

षा याज्या। इंद्रो देवाशु न इति वैकल्पिकस्यापि हविष इयमेव याज्या। सूचितं च। अश्वायंतो गव्यंतो वाजयंतः शुनं हुवेम मघवानमिंद्रं। आ° २.२०.। इति॥

॥ सैषा पंचमी ॥

अश्वायंतो गव्यंतो वाजयंतो हवामहे त्वोपगंतवा उं।
आभूषंतस्ते सुमतौ नवायां वयमिंद्र त्वा शुनं हुवेम ॥५॥

अश्वऽयंतः। गव्यंतः। वाजयंतः। हवामहे। त्वा। उपऽगंतवे। ऊं इति।
आऽभूषंतः। ते। सुऽमतौ। नवायां। वयं। इंद्र। त्वा। शुनं। हुवेम ॥५॥

अश्वायंतोऽश्वानिच्छंतः। क्यच्यश्वाघस्यादित्यात्वं। गव्यंतो गा आत्मन इच्छंतः। वांतो यि प्रत्यय इत्यवादेशः। वाजयंतः। अग्नीन्वाजनेन शूर्पादिना प्रज्वलयंतः। वा गतिगंधनयोः। णिचि वो विधूनने। पा° ७.३.३८.। इति जुगागमः। अस्माच्छतर्यदुपदेशाल्लसार्वधातुकस्वारेणानुदात्तत्वे शपश्च पित्त्वादनुदात्तत्वे ततो णिच एव स्वरः शिष्यते। अपर आह। वाजमन्नमात्मन इच्छंत इति। तदानीमवग्रहाभावस्वरौ छांदसौ द्रष्टव्यौ। एवंभूता वयं हे इंद्र त्वामुपगंतवा उपगंतुं प्राप्तुं हवामहे। आह्वयामहे। गमेस्तुमर्थे सेसेनिति तवैप्रत्ययः। गतिसमासे तवै चांतश्च युगपदिति गतेः प्रकृतिस्वरत्वमुत्तरपदस्यांतोदात्तत्वं। उ इति पूरकः। हे इंद्र ते तव नवायामभिनवायां प्रशस्तायां सुमतौ शोभनबुद्धावाभूषंत आ समंताद्भवंतो वर्तमानाः। यद्वा। आ समंताद्भूषयंतोऽलंकुर्वंतस्त्वानुग्रहबुद्धौ वर्तमाना वयं शुनं सुखकरं त्वां हुवेम। आह्वयेम ॥

॥ इत्यष्टमस्याष्टमेऽष्टादशो वर्गः ॥

मुंचामीति पंचर्चं दशमं सूक्तं प्रजापतिपुत्रस्य यक्ष्मनाशनाख्यस्यार्षं। अंत्यानुष्टुप् शिष्टास्त्रिष्टुभः। अनादेशे त्विंद्रो देवता। तथा चानुक्रांतं। मुंचामि प्राजापत्यो यक्ष्मनाशनो राजयक्ष्मघ्नमंत्यानुष्टुबिति। हृदयरोगप्रमुखस्य व्याधिजातस्योपशमनार्थमनेन सूक्तेन होतव्यं। सूत्र्यते हि। व्याधितस्यातुरस्य यक्ष्मगृहीतस्य वा षळाहुतिश्चरुर्मुंचामि त्वा हविषा जीवनाय कमित्येतेन। आ° गृ° ३.६.। इति ॥

॥ तत्र प्रथमा ॥

मुंचामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्।
ग्राहिर्जग्राह यदि वैतदेनं तस्या इंद्राग्नी प्र मुमुक्तमेनं ॥१॥

मुंचामि । त्वा । हविषा । जीवनाय । कं । अज्ञातऽयक्ष्मात् । उत । राजऽयक्ष्मात् ।
ग्राहिः । जग्राह । यदि । वा । एतत् । एनं । तस्याः । इंद्राग्नी इति । प्र । मुमुक्तं । एनं ॥ १ ॥

हे यक्ष्माभिभूत हविषानेन चरुणा साधनेन होमेन त्वा त्वामज्ञातयक्ष्मात् । अयमेतत्संज्ञ इत्यप्रज्ञातः शरीरगतो रोगोऽज्ञातयक्ष्मः । तादृशाद्रोगान्मुंचामि । विश्लेषयामि । किमर्थं । जीवनाय कं । जीवनार्थं । इह लोके चिरकालावस्थानार्थमित्यर्थः । कमिति पूरकः । उतापि च राजयक्ष्मात् । यक्ष्माणां राजा यक्ष्मरोगो राजयक्ष्मः । राजदंतादित्वादुपसर्जनस्य परनिपातः । तस्मादपि त्वां मुंचामि । यदि वा यदि चैतदेतस्मिन्समय एनं व्याधितं पुरुषं ग्राहिर्ग्रहणशीला ग्रहरूपा देवता जग्राह गृहीतवती तस्या देवतायाः सकाशाद्वे इंद्राग्नी एनं प्र मुमुक्तं । प्रमोचयतं ॥

॥ अथ द्वितीया ॥

यदि क्षितायुर्यदि वा परेतो यदि मृत्योरंतिकं नीत एव ।
तमा हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय ॥ २ ॥

यदि । क्षितऽआयुः । यदि । वा । पराऽइतः । यदि । मृत्योः । अंतिकं । निऽईतः । एव ।
तं । आ । हरामि । निःऽऋतेः । उपऽस्थात् । अस्पार्षं । एनं । शतऽशारदाय ॥ २ ॥

यदि स रोगग्रस्तः क्षितायुः क्षीणायुर्भवति यदि वा परेतोऽस्माल्लोकात्परागतो भवति । यदि च मृत्योर्वैवस्वतस्यांतिकं निकटं नीतो नितरां प्राप्त एव भवति एवंभूतमपि तं पुरुषं निर्ऋतेः पापदेवताया आयुषः क्षयकारिण्या उपस्थादुपस्थानादा हरामि । आनाययामि । आवर्तयामि । आहृत्य चैनं शतशारदाय शतसंवत्सरजीवनार्थमस्पार्षं । प्रबलं करोमि । स्पृ प्रीतिबलनयोः ॥

॥ अथ तृतीया ॥

सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनं ।
शतं यथेमं शरदो नयातींद्रो विश्वस्य दुरितस्य पारं ॥ ३ ॥

सहस्रऽअक्षेण । शतऽशारदेन । शतऽआयुषा । हविषा । आ । अहार्षं । एनं ।
शतं । यथा । इमं । शरदः । नयाति । इंद्रः । विश्वस्य । दुःऽइतस्य । पारं ॥ ३ ॥

सहस्रमिति बहुनाम । सहस्रमक्षीणि चक्षूंषि यस्य हविषः फलत्वेन विद्यंते

तत्सहस्राक्षं । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् समासांतः । शरदः संबंधी शारदः संवत्सरः । शतं शारदा यस्य तत्तथोक्तं । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अत एव शतायुषा शतसंवत्सरपरिमितमायुर्जीवनं फलभूतं यस्य तादृशेन हविषा । यद्वा सहस्राक्ष इंद्रः । तेन शतशारदेन शरदां संवत्सराणां शतस्य दातृत्वेन संबंधिना कर्त्रा शतायुषा हविषा करणभूतेनैनं यक्ष्मगृहीतमाहार्षं । रोगादनैषं । यथा येन प्रकारेणेमं पुरुषं शतं शरदः संवत्सरान् । अत्यंतसंयोगे द्वितीया । एतावंतं कालमिंद्रो विश्वस्य सर्वस्य दुरितस्य दुःखस्य पारमवसानं दुःखराहित्यं नयाति नयेत् तथाहार्षमित्यर्थः ॥

॥ अथ चतुर्थी ॥

शतं जीव शरदो वर्धमानः शतं हेमंताञ्छतमु वसंतान् ।
शतमिंद्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥४॥
शतं । जीव । शरदः । वर्धमानः । शतं । हेमंतान् । शतं । ऊं इति । वसंतान् ।
शतं । इंद्राग्नी इति । सविता । बृहस्पतिः । शतऽआयुषा । हविषा । इमं । पुनः । दुः ॥४॥

हे यक्ष्माद्विमुक्त वर्धमानोऽहरहरभिवृद्धिं प्राप्नुवंस्त्वं शतं शरदः शतसंख्याकाञ्शरदृतूञ्जीव । प्राणान्धारय । पूर्ववदत्यंतसंयोगे द्वितीया । शतं हेमंतान् हेमंतर्तूंश्च जीव शतं वसंतांश्च । उशब्दः समुच्चये । अपि चेंद्राग्नी इंद्रश्चाग्निश्च सविता प्रेरको देवश्च बृहस्पतिर्बृहतां देवानां पालयिता देवश्च शतायुषा शतसंवत्सरपरिमितस्यायुषो हेतुभूतेन हविषा तर्प्यमाणाः संत इमं जनं पुनर्दुः । पुनरस्मभ्यं प्रादुः ॥

॥ अथ पंचमी ॥

आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव ।
सर्वांग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदं ॥५॥
आ । अहार्षं । त्वा । अविदं । त्वा । पुनः । आ । अगाः । पुनःऽनव ।
सर्वऽअंग । सर्वं । ते । चक्षुः । सर्वं । आयुः । च । ते । अविदं ॥५॥

हे व्याधिगृहीत त्वा त्वामाहार्षं । मृत्योः सकाशादाहृतवानस्मि । अत एव त्वा त्वामविदं । अलप्सि । हे पुनर्नव पुनरभिनव पुनरागाः । पुनरस्मत्समीपमागच्छ ।

हे सर्वांग सर्वैरविकलैरंगैरुपेत ते तव सर्वं चक्षुः। उपलक्षणमेतत्। इंद्रियवर्गं सकलमविदं। लब्धवानस्मि। ते तवायुर्जीवनं च सर्वं संपूर्णमविदं ॥

॥ इत्यष्टमस्याष्टम एकोनविंशो वर्गः ॥

ब्रह्मणाग्निरिति षडृचमेकादशं सूक्तमानुष्टुभं। ब्रह्मपुत्रो रक्षोहा नामर्षिः। अपप्रसवसमाधानरूपस्य गर्भरक्षणस्य प्रतिपाद्यत्वात्तद्देवताकमिदं। अनुक्रांतं च। ब्रह्मणा षड् ब्राह्मो रक्षोहा गर्भसंस्रावे प्रायश्चित्तमानुष्टुभं हीति ॥ विनियोगो लिंगादवगंतव्यः ॥

॥ तत्र प्रथमा ॥

ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः।
अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥१॥

ब्रह्मणा। अग्निः। संऽविदानः। रक्षःऽहा। बाधतां। इतः।
अमीवा। यः। ते। गर्भं। दुःऽनामा। योनिं। आऽशये ॥१॥

ब्रह्मणा मंत्रेण सह संविदान ऐकमत्यं प्राप्तो रक्षोहा रक्षसां हंताग्निरितोऽस्मात्स्थानाद्राक्षसादिकं बाधतां। हिनस्तु। यो राक्षसोऽमीवा रोगरूपः सन् ते तव गर्भमाशय आशेते। लोपस्त आत्मनेपदेष्विति तलोपः। हंतुं प्राप्नोति। दुर्नामार्शआख्यो रोगः। तद्रूपः सन् यश्च ते तव योनिं रेतस आधानं गर्भस्थानमाशेते तं बाधतामित्यन्वयः ॥

॥ अथ द्वितीया ॥

यस्ते गर्भममीवा दुर्णामा योनिमाशये।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥२॥

यः। ते। गर्भं। अमीवा। दुःऽनामा। योनिं। आऽशये।
अग्निः। तं। ब्रह्मणा। सह। निः। क्रव्यऽअदं। अनीनशत् ॥२॥

गतः पूर्वोऽर्धर्चः। तं क्रव्यादं मांसाशिनं राक्षसादिकं ब्रह्मणा सहितोऽग्निर्निःशेषेणानीनशत्। नाशयतु ॥

॥ अथ तृतीया ॥

यस्ते हंति पतयंतं निषत्स्नुं यः सरीसृपं।
जातं यस्ते जिघांसति तमितो नाशयामसि ॥३॥

यः । ते । हंति । पतयंतं । निऽसत्त्वं । यः । सरीसृपं ।
जातं । यः । ते । जिघांसति । तं । इतः । नाशयामसि ॥३॥

हे योषित् ते तव गर्भाशये पतयंतं पतंतं रेतोरूपेण गच्छंतं तदनंतरं तत्र निषत्त्वं निषीदंतं च गर्भं यो राक्षसादिर्हंति हिनस्ति ततो मासत्रयादूर्ध्वं प्राप्तसर्वावयवं सरीसृपं सर्पणशीलं च गर्भं यो हंति जातं दशसु मासेषूत्पन्नं ते तव शिशुं यो राक्षसादिर्जिघांसति हंतुमिच्छति तमितः स्थानान्नाशयामसि । नाशयामः ॥

॥ अथ चतुर्थी ॥

यस्त ऊरू विहरत्यंतरा दंपती शये ।
योनिं यो अंतरारेळ्हि तमितो नाशयामसि ॥४॥
यः । ते । ऊरू इति । विऽहरति । अंतरा । दंपती इति दंऽपती । शये ।
योनिं । यः । अंतः । आऽरेळ्हि । तं । इतः । नाशयामसि ॥४॥

हे योषित् ते तवोरू पादमूलौ यो राक्षसादिर्विहरति गर्भघाताय विश्लिष्टौ करोति दंपती अंतरा जायापत्योर्मध्ये गर्भहननार्थं यश्च शये शेते यश्च योनिमंतः प्रविश्यारेळ्हि निषिक्तं रेतो जिह्वयास्वादयति । भक्षयतीत्यर्थः । लिह आस्वादने । आदादिकः । कपिलकादित्वाल्लत्वविकल्पः । तं सर्वमितो नाशयामः ॥

॥ अथ पंचमी ॥

यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥५॥
यः । त्वा । भ्राता । पतिः । भूत्वा । जारः । भूत्वा । निऽपद्यते ।
प्रऽजां । यः । ते । जिघांसति । तं । इतः । नाशयामसि ॥५॥

हे योषिद्यो राक्षसो भ्राता भ्रातृरूपो भूत्वा पतिर्भर्तृरूपो वा भूत्वा त्वां निपद्यतेऽभिगच्छति । अथवा जार उपपतिरूपो वा भूत्वाभिगच्छति । एवंभूतो यो राक्षसादिस्ते तव प्रजां जिघांसति हंतुमिच्छति । स्पष्टमन्यत् ॥

॥ अथ षष्ठी ॥

यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥६॥
यः । त्वा । स्वप्नेन । तमसा । मोहयित्वा । निऽपद्यते ।
प्रजां । यः । ते । जिघांसति । तं । इतः । नाशयामसि ॥६॥

हे योषिद्यो राक्षसादिः स्वप्नेन स्वप्नावस्थया तमसा निद्रया त्वा त्वां मोहयित्वा मूढतां प्रापय्य निपद्यते गर्भघाताय गच्छति । अन्यद्गतं ॥

॥ इत्यष्टमस्याष्टमे विंशो वर्गः ॥

अक्षीभ्यामिति षडृचं द्वादशं सूक्तमानुष्टुभं। कश्यपगोत्रोत्पन्नो विवृहा नामर्षिः। यक्ष्मनाशनप्रतिपाद्यत्वात्तद्देवताकं कृत्स्नं सूक्तं । अनुक्रांतं च । अक्षीभ्यां विवृहा काश्यपो यक्ष्मघ्नमिति ॥ लैंगिको विनियोगः ॥

॥ तत्र प्रथमा ॥

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि ।
यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥१॥
अक्षीभ्यां । ते । नासिकाभ्यां । कर्णाभ्यां । छुबुकात् । अधि ।
यक्ष्मं । शीर्षण्यं । मस्तिष्कात् । जिह्वायाः । वि । वृहामि । ते ॥१॥

हे यक्ष्मगृहीत ते तवाक्षीभ्यां चक्षुर्भ्यां यक्ष्मरोगं वि वृहामि । उद्धरयामि । विश्लेषयामीत्यर्थः । ई च द्विवचन इत्यक्षिशब्दस्येकारांतादेशः । स चोदात्तः । तथा नासिकाभ्यां घ्राणेंद्रियाच्च कर्णाभ्यां श्रोत्राभ्यां च छुबुकाच्चुबुकादोष्ठस्याधःप्रदेशाच्च। अधिरनर्थकः। अपि च शीर्षण्यं। शिरसि भवो रोगः शीर्षण्यः । भवे छंदसीति यत् । ये च तद्धित इति शिरसः शीर्षन्नादेशः । ये चाभावकर्मणोरिति प्रकृतिभावः । ईदृशं यक्ष्मं रोगं ते तव मस्तिष्कात् । शिरसोऽतरवस्थितो मांसविशेषो मस्तिष्कः । तस्मात् । जिह्वाया रसानायाश्च सकाशाद्वि वृहामि । उद्धरयामि । पृथक्करोमीत्यर्थः । वृहू उद्यमन इति धातुः ॥

॥ अथ द्वितीया ॥

ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात्।
यक्ष्मं दोषण्य१मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥२॥
ग्रीवाभ्यः। ते। उष्णिहाभ्यः। कीकसाभ्यः। अनूक्यात्।
यक्ष्मं। दोषण्यं। अंसाभ्यां। बाहुऽभ्यां। वि। वृहामि। ते ॥२॥

हे व्याधिगृहीत उष्णिहाभ्य ऊर्ध्वाभिमुखं स्निग्धाभ्य उत्स्नाताभ्यो वा स्नायुभ्यो ग्रीवाभ्यो गलगताभ्यो धमनीभ्यस्ते तव यक्ष्मं वि वृहामि। तथा कीकसाभ्योऽस्थिभ्योऽनूक्यादस्थिसंधेश्च यक्ष्मं वि वृहामि। उच समवाये। अनूच्यते समवेयत इत्यस्थ्नः संधिरनूक्यः। ऋहलोर्ण्यत्। चजोः कु घिण्यतोरिति कुत्वं। तित्स्वरितः। अपि च दोष्णोर्भवं दोषण्यं। पूर्ववद्यति पद्दन्नित्यादिना दोःशब्दस्य दोषन्नादेशः। पूर्ववत्प्रकृतिभावः। तमपि यक्ष्मं रोगं ते तवांसाभ्यां बाहुभ्यां च वि वृहामि। हस्तयोरूर्ध्वभागावंसावधोभागौ बाहू ॥

॥ अथ तृतीया ॥

आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि।
यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो वि वृहामि ते ॥३॥
आन्त्रेभ्यः। ते। गुदाभ्यः। वनिष्ठोः। हृदयात्। अधि।
यक्ष्मं। मतस्नाभ्यां। यक्नः। प्लाशिऽभ्यः। वि। वृहामि। ते ॥३॥

हे यक्ष्माभिभूत ते तवान्त्रेभ्यः। आन्त्रं पुरीतदन्नपानयोराधानभूतं। तत्संबंधिभ्यः स्नायुभ्यो गुदाभ्यः। याभिर्नाडीभिरन्नरसः समानवायुना धातुषु नीयते ताभ्यो नाडीभ्यश्च सकाशाद्यक्ष्मं वि वृहामि। तथा वनिष्ठोः स्थविरांत्राद्धृदयादधि हृत्पुंडरीकाच्च यक्ष्मं वि वृहामि। अपि च ते तव मतस्नाभ्यां। मतस्नौ पार्श्वयोर्वर्तमानावाम्रफलाकृती वृक्कौ। ताभ्यां। यक्नः। हृदयसमीपे वर्तमानः कालमांसविशेषो यकृत्। तस्माच्च। पद्दन्नित्यादिना यकृच्छब्दस्य यकन्नादेशः। प्लाशिभ्योऽन्येभ्योऽपि क्लोमप्लीहादिसंज्ञेभ्यश्च मांसेभ्यश्च यक्ष्मं रोगं वि वृहामि। उत्क्षिपामि ॥

॥ अथ चतुर्थी ॥

ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्यां ।
यक्ष्मं श्रोणिभ्यां भासदाद्भंससो वि वृहामि ते ॥४॥
ऊरुऽभ्यां । ते । अष्ठीवत्ऽभ्यां । पार्ष्णिऽभ्यां । प्रऽपदाभ्यां ।
यक्ष्मं । श्रोणिऽभ्यां । भासदात् । भंससः । वि । वृहामि । ते ॥४॥

हे रुग्ण ते तवोरुभ्यामष्ठीवद्भ्यां जानुभ्यां च यक्ष्मं वि वृहामि । तथा पार्ष्णिभ्यां पादस्यापरभागाभ्यां प्रपदाभ्यां पादाग्राभ्यां च यक्ष्मं वि वृहामि । अपि च श्रोणिभ्यां जंघनाभ्यां च यक्ष्मं वि वृहामि । तथा भासदात् । भसत्कटिप्रदेशः । तत्संबंधाद्भंससो भासमानात्पायोस्ते तव यक्ष्मं वि वृहामि ॥

॥ अथ पंचमी ॥

मेहनाद्वनंकरणाल्लोमभ्यस्ते नखेभ्यः ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥५॥
मेहनात् । वनंऽकरणात् । लोमऽभ्यः । ते । नखेभ्यः ।
यक्ष्मं । सर्वस्मात् । आत्मनः । तं । इदं । वि । वृहामि । ते ॥५॥

वनंकरणात् । वनमुदकं शारीरं । तत्क्रियते विसृज्यते येन तद्वनंकरणं । तस्मान्मेहनान्मेढ्रात्ते तव लोमभ्यो नखेभ्यश्च यक्ष्मं वि वृहामि । किं बहुना । इदमिदानीं तं यक्ष्मं सर्वस्मादात्मनः कृत्स्नादेव ते तव शरीराद्वि वृहामि ॥

॥ अथ षष्ठी ॥

अंगादंगाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥६॥
अंगात्ऽअंगात् । लोम्नःऽलोम्नः । जातं । पर्वणिऽपर्वणि ।
यक्ष्मं । सर्वस्मात् । आत्मनः । तं । इदं । वि । वृहामि । ते ॥६॥

अंगादंगात् सर्वेभ्योऽंगेभ्यो लोम्नो लोम्नः सर्वेभ्यो लोमभ्यश्च पर्वणि पर्वण्यवयवानां संधौ जातमुत्पन्नं यक्ष्मं वि वृहामि । अन्यद्गतं ॥

॥ इत्यष्टमस्याष्टम एकविंशो वर्गः ॥

अपेहीति पंचर्चं त्रयोदशं सूक्तं। आंगिरसस्य प्रचेतस आर्षं। तृतीया त्रिष्टुप् पंचमी पंक्तिः। दुःस्वप्ननाशनं देवता। तथा चानुक्रांतं। अपेहि पंच प्रचेता दुःस्वप्नघ्नं पंक्त्यंतं त्रिष्टुम्मध्यमिति ॥ लैंगिको विनियोगः ॥

॥ तत्र प्रथमा ॥

अपेहि मनसस्पतेऽप क्राम परश्चर।
परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः ॥१॥
अप। इहि। मनसः। पते। अप। क्राम। परः। चर।
परः। निःऽऋत्यै। आ। चक्ष्व। बहुधा। जीवतः। मनः ॥१॥

हे मनसस्पते स्वप्नावस्थस्य मनसः स्वामिन् दुःस्वप्नाधिदेव अपेहि। अपगच्छ। स्वप्नावस्थावतो मत्तो निर्गच्छ। निर्गत्य चाप क्राम। देशांतरं गंतुं पादौ विक्षिप। दूरदेशं गच्छेत्यर्थः। अपक्रम्य च परः परस्ताद्विप्रकृष्टे देशे चर। यथेच्छं वर्तस्व। अपि च निर्ऋत्यै पापदेवतायै परः परस्ताद्वर्तमानाया आ चक्ष्व। वयं न बाधनीया इति प्रब्रूहि। जीवतो मम मनो बहुधा बहुप्रकारं भवति। भोक्तव्येषु बहुषु विषयेषूत्सुकं सद्वर्तते। अतस्तद्विनाशकं दुःस्वप्नदर्शनं नश्यत्वित्यर्थः ॥

॥ अथ द्वितीया ॥

भद्रं वै वरं वृणते भद्रं युंजंति दक्षिणं।
भद्रं वैवस्वते चक्षुर्बहुत्रा जीवतो मनः ॥२॥
भद्रं। वै। वरं। वृणते। भद्रं। युंजंति। दक्षिणं।
भद्रं। वैवस्वते। चक्षुः। बहुऽत्रा। जीवतः। मनः ॥२॥

भद्रं वै शोभनमेव वरं वरणीयं दुःस्वप्नविनाशरूपं फलं वृणते। सर्वे जनाः प्रार्थयंते। दक्षिणं प्रवृद्धं भद्रं शोभनं तत्फलं युंजंति। प्राप्नुवंति च। वैवस्वते विवस्वतः पुत्रे यमे विषये भद्रं शोभनमेव चक्षुर्दर्शनमहं प्रार्थये। दुःस्वप्नाधिदेवो वैवस्वतोऽस्मान्मा बाधतां। भद्रमेव दर्शनमिह लोकेऽवस्थानलक्षणं करोत्वित्यर्थः। बहुत्रा बहुषु हि विषयेषु जीवतो मम मनो वर्तते ॥

॥ अथ तृतीया ॥

यदाशसा निःशसाभिशसोपारिम जाग्रतो यत्स्वपंतः ।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद्दधातु ॥३॥
यत् । आऽशसा । निःऽशसा । अभिऽशसा । उपऽआरिम । जाग्रतः । यत् । स्वपंतः ।
अग्निः । विश्वानि । अप । दुःऽकृतानि । अजुष्टानि । आरे । अस्मत् । दधातु ॥३॥

यद्दुःकृतमाशसाशंसनेनाभिलाषेण जाग्रतो जागरणावस्थायां वर्तमाना वयमुपारिमोपगतवंतः स्म यच्च स्वपंतः स्वप्नावस्थां प्राप्ता उपगतवंतः स्म । तथा निःशसा निःशंसनेन निर्गताभिलाषेणाभिशसाभिगताभिलाषेण च कारणेनावस्थाद्वये यद्दुःकृतमुपागच्छेम तानि विश्वानि सर्वाण्यजुष्टान्यसेव्यान्यप्रियाणि वा दुःकृतानि दुःकर्माण्यग्निरस्मदारेऽस्मत्तो दूरदेशेऽप दधातु । अपकृष्य स्थापयतु ॥

॥ अथ चतुर्थी ॥

यदिंद्र ब्रह्मणस्पतेऽभिद्रोहं चरामसि ।
प्रचेता न आंगिरसो द्विषतां पात्वंहसः ॥४॥
यत् । इंद्र । ब्रह्मणः । पते । अभिऽद्रोहं । चरामसि ।
प्रऽचेताः । नः । आंगिरसः । द्विषतां । पातु । अंहसः ॥४॥

हे इंद्र हे ब्रह्मणस्पते युवयोर्विषये यदभिद्रोहमभितो द्रोहं पापं दुःस्वप्नकारणं चरामस्याचरामः कुर्मस्तस्मादभिद्रोहादस्मान्नक्षतमिति शेषः । अपि च । आंगिरसोऽंगिरोभिः स्तोतृभिः सबांधवः प्रचेताः प्रकृष्टज्ञानो वरुणश्च द्विषतां द्वेष्टॄणामंहसस्तत्कर्तृकादस्मद्विषयात्पापान्नोऽस्मान्पातु । रक्षतु । यद्वा विभक्तिव्यत्ययः । आंगिरसमंगिरोगोत्रं प्रचेतसमृषिं नः । वचनव्यत्ययः । मां द्विषतामंहसः पातु । प्रकृतत्वादिंद्र इति गम्यते ॥

॥ अथ पंचमी ॥

अजैष्माद्यासनाम चाभूमानागसो वयं ।
जाग्रत्स्वप्नः संकल्पः पापो यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ॥५॥

अजैष्म । अद्य । असनाम । च । अभूम । अनागसः । वयं ।
जायत्ऽस्वप्नः । संऽकल्पः । पापः । यं । द्विष्मः । तं । सः । ऋच्छतु । यः । नः । द्वेष्टि ।
तं । ऋच्छतु ॥५॥

अद्यास्मिन्कालेऽजैष्म । जेतव्यानि सर्वाणि जितवंतोऽभूम दुःस्वप्नस्य नष्टत्वात् । तदनंतरमसनाम च संभक्तव्यानि च समभजाम । तथा वयमनागसोऽनपराधाश्चाभूम । जायत्स्वप्नावस्थयोः संबंधी पापः पापफलरूपः स संकल्पो दुःस्वप्नाध्यवसायो यं शत्रुं वयं द्विष्मस्तमृच्छतु । प्राप्नोतु । यश्च नोऽस्मान्द्वेष्टि तमृच्छतु । प्राप्नोतु ॥

॥ इत्यष्टमस्याष्टमे द्वाविंशो वर्गः ॥

देवा इति पंचर्चं चतुर्दशं सूक्तं निर्ऋतिपुत्रस्य कपोताख्यस्यार्षं त्रैष्टुभं वैश्वदेवं । तथा चानुक्रांतं । देवा नैर्ऋतः कपोतः कपोतोपहतौ प्रायश्चित्तमिदं वैश्वदेवमिति ॥ कपोतो यदि गृहं प्रविशेत्तदानेन सूक्तेन होतव्यं । सूत्र्यते हि । कपोतश्चेदगारमुपहन्यादनुपतेद्वा देवाः कपोत इति प्रत्यृचं जुहुयाज्जपेद्वा । आ॰ गृ॰ ३. ७. । इति ॥

॥ तत्र प्रथमा ॥

देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥१॥

देवाः । कपोतः । इषितः । यत् । इच्छन् । दूतः । निःऽऋत्याः । इदं । आऽजगाम ।
तस्मै । अर्चाम । कृणवाम । निःऽकृतिं । शं । नः । अस्तु । द्विऽपदे । शं । चतुःऽपदे ॥१॥

हे देवा इषितः प्राप्तो निर्ऋत्याः पापदेवताया दूतोऽनुचरः कपोतो यद्बाधनमिच्छन् अभिलषन्निदमस्मदीयं गृहमाजगाम प्राप्नोत् तस्मै बाधनाय तद्बाधननिवृत्त्यर्थमर्चाम । युष्मान्हविषा पूजयाम । ततो निष्कृतिं कपोतप्रवेशजन्यस्य दोषस्य परिहृतिं कृणवाम । अनेन हविर्दानेन करवाम । अतो नोऽस्माकं द्विपदे पुत्राय शं सुखमस्तु चतुष्पदे गवाश्वप्रभृतये च शं सुखमस्तु ॥

॥ अथ द्वितीया ॥

शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहेषु ।
अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु ॥२॥

शिवः । कपोतः । इषितः । नः । अस्तु । अनागाः । देवाः । शकुनः । गृहेषु ।
अग्निः । हि । विप्रः । जुषतां । हविः । नः । परि । हेतिः । पक्षिणी । नः । वृणक्तु ॥२॥

हे देवा नोऽस्माकं गृहेष्विषितः कपोताख्यः शकुनः पक्षी शिवः सुखकरोऽनागा अपापहेतुश्चास्तु । हि यस्माद्विप्रो मेधाव्यग्निर्नोऽस्माकं हविर्युष्मभ्यं परिकल्पितं जुषतां जुषतेऽतो युष्मत्प्रसादात्पक्षिणी पक्षोपेता हेतिर्हननहेतुः कपोतो नोऽस्मान्परि वृणक्तु । अस्मान्परित्यजतु । मा बाधतामित्यर्थः ॥

॥ अथ तृतीया ॥

हेतिः पक्षिणी न दभात्यस्मानाष्ट्र्यां पदं कृणुते अग्निधाने ।
शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु मा नो हिंसीदिह देवाः कपोतः ॥३॥
हेतिः । पक्षिणी । न । दभाति । अस्मान् । आष्ट्र्यां । पदं । कृणुते । अग्निऽधाने ।
शं । नः । गोभ्यः । च । पुरुषेभ्यः । च । अस्तु । मा । नः । हिंसीत् । इह । देवाः । कपोतः ॥३॥

पक्षिणी पक्षोपेता हेतिर्हननहेतुः कपोतोऽस्मान्न दभाति । न हिनस्तु । आष्ट्र्यां व्याप्तायामरण्यान्यामग्निधाने । अग्निर्निधीयतेऽस्मिन्नित्यग्निसहिते प्रदेशे पदं स्थानं कृणुते । करोति । तत्रैव प्रदेशे निवसत्वित्यर्थः । यद्वाश्नंत्यस्मिन्नित्याष्ट्री पचनशाला । तस्यां । अग्निधाने यत्र पचनाग्निर्निधीयते तस्मिन्प्रदेशे पदं पादनिधानं कृणुते । करोति । तद्धेतुको बाधो नोऽस्माकं न भवत्वित्यर्थः । अपि च नोऽस्माकं गोभ्यश्च पुरुषेभ्यश्च शं सुखं शंसनीयानां दोषाणां शांतिर्वास्तु । भवतु । हे देवा इहास्मिन्गृहे कपोतो नोऽस्मान्मा हिंसीत् । युष्मदनुग्रहान्मा बाधतां ॥

॥ अथ चतुर्थी ॥

यदुलूको वदति मोघमेतद्यत्कपोतः पदमग्नौ कृणोति ।
यस्य दूतः प्रहित एष एतत्तस्मै यमाय नमो अस्तु मृत्यवे ॥४॥
यत् । उलूकः । वदति । मोघं । एतत् । यत् । कपोतः । पदं । अग्नौ । कृणोति ।
यस्य । दूतः । प्रऽहितः । एषः । एतत् । तस्मै । यमाय । नमः । अस्तु । मृत्यवे ॥४॥

उलूको घूकसंज्ञः पक्षी यदशोभनं वदति ब्रवीत्यात्मीयेन शब्देन सूचयत्येतन्मोघं निःफलमस्तु । कपोतश्चाग्नावग्निमति गृहमध्ये यत्पदं कृणोति करोत्येतदपि मोघं

निर्वीर्यमस्तु। प्रहितः प्रेषित एष कपोतो यस्य स्वामिनो दूतोऽनुचरो भवति तस्मै नाम मृत्यवे मारयित्रे यमायैतन्नमः प्रणामोऽस्तु। भवतु ॥

॥ अथ पंचमी ॥

ऋचा कपोतं नुदत प्रणोदमिषं मदंतः परि गां नयध्वं।
संयोपयंतो दुरितानि विश्वा हित्वा न ऊर्जं प्र पतात्पतिष्ठः ॥५॥
ऋचा। कपोतं। नुदत। प्रऽनोदं। इषं। मदंतः। परि। गां। नयध्वं।
संऽयोपयंतः। दुःऽइतानि। विश्वा। हित्वा। नः। ऊर्जं। प्र। पतात्। पतिष्ठः ॥५॥

हे देवा ऋचा मंत्रेण स्तूयमानाः संतो यूयं प्रणोदं प्रकर्षेण नोदनीयं बहिःकर्तव्यं कपोतं पक्षिणं नुदत। अस्माद्गृहात्प्रेरयत। निर्गमयत। तथा मदंतोऽस्माभिर्दत्तैर्हविर्भिर्माद्यंत इषमन्नं गां च परिणयध्वं। परितोऽस्मभ्यं प्रापयत। किं कुर्वंतः। विश्वा सर्वाणि दुरितानि कपोतोपहतिजन्यानि दोषजातानि संयोपयंतोऽदृश्यानि कुर्वंतः। अपि च पतिष्ठोऽतिशयेन पतिता शीघ्रोत्पातकः कपोतो नोऽस्माकमूर्जमन्नं हित्वा परित्यज्य प्र पतात्। प्रकर्षेण पततु। पक्षाभ्यामुत्पततु ॥

॥ इत्यष्टमस्याष्टमे त्रयोविंशो वर्गः ॥

ऋषभमिति पंचर्चं पंचदशं सूक्तं वैराजस्य शाक्करस्य वर्षभाख्यस्यार्षं पंचमी षडष्टका महापंक्तिः। सपत्ननाशनरूपोऽर्थो देवता। तथा चानुक्रांतं। ऋषभमृषभो वैराजः शाक्करो वा सपत्नघ्नमानुष्टुभं महापंक्त्यंतमिति ॥

॥ तत्र प्रथमा ॥

ऋषभं मा समानानां सपत्नानां विषासहिं।
हंतारं शत्रूणां कृधि विराजं गोपतिं गवां ॥१॥
ऋषभं। मा। समानानां। सऽपत्नानां। विऽससहिं।
हंतारं। शत्रूणां। कृधि। विऽराजं। गोऽपतिं। गवां ॥१॥

हे सपत्ननाशनाभिमानिन्निंद्र मा मां समानानां सदृशानामस्मत्कुलीनानां मध्य ऋषभमृषभवत्प्रशस्तं कृधि। कुरु। तथा सपत्नानां शत्रूणां विषासहिं विशेषेणाभिभवितारं कुरु। येऽस्मत्कुल एव जाता अस्माकमेवानिष्टमाचरंति ते सपत्नाः। अपि च शत्रूणामन्येषामपि शातयितॄणां वैरिणां हंतारं हिंसितारं

कृधि। कुरु। तथा विराजं विशेषेण राजमानं गोपतिं गोस्वामिनं च मां कुरु। न केवलमेकस्या एव गोः पतिं अपि तु सर्वासामित्याह गवामिति ॥

॥ अथ द्वितीया ॥

अहमस्मि सपत्नहेंद्र इवारिष्टो अक्षतः।
अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः ॥२॥

अहं। अस्मि। सपत्नऽहा। इंद्रःऽइव। अरिष्टः। अक्षतः।
अधः। सऽपत्नाः। मे। पदोः। इमे। सर्वे। अभिऽस्थिताः ॥२॥

अहं सपत्नहा सपत्नानां शत्रूणां हंतास्मि। भवामि। इंद्र इवेंद्रो यथा केनाप्यहिंसितो भवति तथाहमप्यरिष्टोऽहिंसितोऽक्षतोऽव्रणश्च भवामि। इमे दृश्यमानाः सर्वे सपत्ना मे मम पदोः पादयोरधोऽधस्तादभिष्ठिता आक्रांता भवंतु ॥

॥ अथ तृतीया ॥

अत्रैव वोऽपि नह्याम्युभे आर्त्नी इव ज्यया।
वाचस्पते नि षेधेमान्यथा मदधरं वदान् ॥३॥

अत्र। एव। वः। अपि। नह्यामि। उभे इति। आर्त्नी इवेत्यार्त्नीऽइव। ज्यया।
वाचः। पते। नि। सेध। इमान्। यथा। मत्। अधरं। वदान् ॥३॥

हे सपत्ना यत्र देशे यूयं निवसथात्रैवास्मिन्नेव देशे वो युष्मानपि नह्यामि। अपिनद्धान्पाशैर्बद्धान्करोमि ज्यया मौर्व्यार्त्नी इव। यथा द्वे धनुषः कोटी दृढं बध्येते तथेत्यर्थः। हे वाचस्पते वाचः शब्दस्य पालयितर्देव इमान्सपत्नान्नि षेध। प्रतिषेध। यथा येन प्रकारेण मन्मत्तोऽधरं निकृष्टतरं वदान् वदंति तथा निरुद्धवाचः कुर्वित्यर्थः ॥

॥ अथ चतुर्थी ॥

अभिभूरहमागमं विश्वकर्मेण धाम्ना।
आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ॥४॥

अभिऽभूः। अहं। आ। अगमं। विश्वऽकर्मेण। धाम्ना।
आ। वः। चित्तं। आ। वः। व्रतं। आ। वः। अहं। संऽइतिं। ददे ॥४॥

हे सपत्ना अभिभूरभिभविताहं विश्वकर्मेण सर्वकर्मक्षमेण धाम्ना धारकेण तेजसा बलेन वा सार्धमागमं। आगतवानस्मि। अतो वो युष्माकं चित्तं मन आ ददे। गृह्णामि। मनोगतं धैर्यं हरामीत्यर्थः। वो युष्माकं व्रतं कर्म चाहमा ददे। वो युष्मदीयो यः समितिः संग्रामस्तं चाहमा ददे। अपहरामि ॥

॥ अथ पंचमी ॥

योगक्षेमं वं आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीं।

अधस्पदान्म उद्वदत मंडूका इवोदकान्मंडूका उदकादिव ॥५॥

योगऽक्षेमं। वः। आऽदाय। अहं। भूयासं। उत्ऽतमः। आ। वः। मूर्धानं। अक्रमीं।

अधःऽपदात्। मे। उत्। वदत। मंडूकाःऽइव। उदकात्। मंडूकाः। उदकात्ऽइव ॥५॥

हे सपत्ना वो युष्माकं योगक्षेमं। अप्राप्तस्य धनस्य प्राप्तिर्योगः। प्राप्तस्य रक्षणं क्षेमः। तदुभयमादाय युष्मत्तो गृहीत्वाहमुत्तमः श्रेष्ठो भूयासं। ततो वो युष्माकं मूर्धानं शिर आक्रमीं। आक्रमिषं। पादेनाधितिष्ठामि। क्रमेर्लुङ्युत्तमो मिप्। पा॰ ७.१.४०.। इट ईटीति सिचो लोपः। अनंतरं मे ममाधस्पदात्पादस्याधस्ताद्वर्तमाना यूयमुद्वदत। उच्चैराक्रोशत। उदकाद्वृष्टिजलादधः प्रदेशे वर्तमाना मंडूका इव। यथा ते भृशमाक्रोशंति तथोद्वदतेत्यर्थः। मंडूका उदकादिवेति पुनरुक्तिरादरार्था ॥

॥ इत्यष्टमस्याष्टमे चतुर्विंशो वर्गः ॥

तुभ्येदमिति चतुर्ऋचं षोडशं सूक्तं विश्वामित्रजमदग्न्योरार्षं जागतमैंद्रं। सोमस्य राज्ञ इत्येषा तृतीया वरुणविधातृनुमतिधातृसोमबृहस्पतीतिलिंगोक्तदेवताका। तथा चानुक्रांतं। तुभ्येदं चतुष्कं विश्वामित्रजमदग्नी जागतं तृतीया लिंगोक्तदेवता वेति। पक्ष इंद्र एव देवतान्ये तु निपातभाज इति वाशब्दस्यार्थः। गतो विनियोगः॥

॥ तत्र प्रथमा ॥

तुभ्येदमिंद्र परि षिच्यते मधु त्वं सुतस्य कलशस्य राजसि।

त्वं रयिं पुरुवीरामु नस्कृधि त्वं तपः परितप्याजयः स्वः ॥१॥

तुभ्यं। इदं। इंद्र। परि। सिच्यते। मधु। त्वं। सुतस्य। कलशस्य। राजसि।

त्वं। रयिं। पुरुऽवीरां। ऊं इति। नः। कृधि। त्वं। तपः। परिऽतप्य। अजयः।
स्वरिति स्वः ॥१॥

हे इंद्र इदं मधु सोमलक्षणं तुभ्यं त्वदर्थं परि षिच्यते। आहवनीये प्रक्षिप्यते। त्वमेव सुतस्याभिषुतस्य कलशस्य द्रोणकलशावस्थितस्य सोमस्य राजसि। ईशिषे। राजतिरैश्वर्यकर्मा। स त्वं नोऽस्माकं पुरुवीरां बहुपुत्रं रयिं धनं कृधि। कुरु। उशब्दः पूरकः। यद्वावधारणे। बहुपुत्रोपेतमेव धनं कुरु नः केवलमित्यर्थः। तथा त्वं तपः शतसंख्याश्वमेधलक्षणं परितप्यानुष्ठाय स्वः स्वर्गमजयः। जितवानसि॥

॥ अथ द्वितीया ॥

स्वर्जितं महि मंदानमंधसो हवामहे परि शक्रं सुताँ उप।
इमं नो यज्ञमिह बोध्या गहि स्पृधो जयंतं मघवानमीमहे॥२॥

स्वःऽजितं। महि। मंदानं। अंधसः। हवामहे। परि। शक्रं। सुतान्। उप।
इमं। नः। यज्ञं। इह। बोधि। आ। गहि। स्पृधः। जयंतं। मघऽवानं। ईमहे॥२॥

उक्तप्रकारेण स्वर्गस्य जेतारं महि महांतमंधसोऽन्नस्य सोमस्य पानेन मंदानं मोदमानं हृष्यंतं शक्रं सर्वकार्येषु शक्तमिंद्रं सुतानुपाभिषुतान्सोमान्प्रति परि हवामहे। परित आह्वयामहे। हे इंद्र इत्यमाहूयमानस्त्वं नोऽस्माकमिमं यज्ञमिहास्मिन्यज्ञे बोधि। बुध्यस्व। बुद्ध्वा चा गहि। आगच्छ। स्पृधः स्पर्धमानाः शत्रुसेना जयंतमभिभवंतं मघवानं धनवंतं त्वामीमहे। अपेक्षितानि धनानि याचामहे॥

॥ अथ तृतीया ॥

सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि।
तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयं॥३॥

सोमस्य। राज्ञः। वरुणस्य। धर्मणि। बृहस्पतेः। अनुऽमत्याः। ऊं इति। शर्मणि।
तव। अहं। अद्य। मघऽवन्। उपऽस्तुतौ। धातः। विधातरिति विऽधातः।
कलशान्। अभक्षयं॥३॥

राज्ञो राजमानस्य सोमस्य वरुणस्य च संबंधिनि धर्मणि धारके यज्ञे वर्तमानस्तथा बृहस्पतेरनुमत्याः संबंधिनि शर्मणि शरणे यज्ञगृहे वर्तमानोऽहं हे मघवन्निंद्र तवोपस्तुतौ स्तोत्रेऽद्येदानीं प्रवृत्तोऽस्मि। हे धातर्हे एतत्संज्ञक देव हे विधातरेतत्संज्ञक देव युवाभ्यामनुज्ञातः कलशान्कलशस्थान्हुतशिष्टान्सोमानभक्षयं। भक्षितवानस्मि॥

॥ अथ चतुर्थी ॥

प्रसूतो भक्षमकरं चरावपि स्तोमं चेमं प्रथमः सूरिरुन्मृजे ।
सुते सातेन यद्यागमं वां प्रति विश्वामित्रजमदग्नी दमे ॥४॥
प्रऽसूतः । भक्षं । अकरं । चरौ । अपि । स्तोमं । च । इमं । प्रथमः । सूरिः । उत् । मृजे ।
सुते । सातेन । यदि । आ । अगमं । वां । प्रति । विश्वामित्रजमदग्नी इति । दमे ॥४॥

हे इंद्र प्रसूतस्त्वया प्रेरितोऽहं चरौ चरणीये चरुणा वा युक्ते यज्ञे भक्षमपि भक्षणीयं चर्वादि हविश्चाकरं । त्वदर्थमकार्षं । प्रथमो मुख्यः सूरिः स्तोताहमिमं स्तोमं स्तोत्रं च त्वदर्थमुन्मृजे । उन्मार्ज्मि । संस्करोमि । उच्चारयामीत्यर्थः । इदानीमिंद्रोऽंतरात्मरूपः सन् सूक्तस्य द्रष्टारावृषी संबोध्य ब्रूते । हे विश्वामित्रजमदग्नी वां युवां प्रति दमे यज्ञगृहे सुतेऽभिषुते सोमे सति सातेन संभक्तव्येन धनेन सार्धं यदि यदा यस्मिन्कालेऽहमागममागच्छामि तदा युवां स्तोत्रं कुरुतमित्यर्थः ॥

॥ इत्यष्टमस्याष्टमे पंचविंशो वर्गः ॥

वातस्येति चतुर्ऋचं सप्तदशं सूक्तं वातगोत्रस्यानिलाख्यस्यार्षं त्रैष्टुभं वायुदेवताकं । तथा चानुक्रांतं । वातस्यानिलो वातायनो वायव्यमिति । गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

वातस्य नु महिमानं रथस्य रुजन्नेति स्तनयन्नस्य घोषः ।
दिविस्पृग्यात्यरुणानि कृण्वन्नुतो एति पृथिव्या रेणुमस्यन् ॥१॥
वातस्य । नु । महिमानं । रथस्य । रुजन् । एति । स्तनयन् । अस्य । घोषः ।
दिविऽस्पृक् । याति । अरुणानि । कृण्वन् । उतो इति । एति । पृथिव्या । रेणुं । अस्यन् ॥१॥

वातस्य वायो रथस्य रंहणशीलस्य महिमानं माहात्म्यं नु क्षिप्रं प्रब्रवीमि । अस्य वायोर्घोषः शब्दः स्तनयन् गिरिगह्वरादिषु विविधं शब्दमुत्पादयन् रुजन् सर्वं स्थावरजंगमजातं भंजन् एति । गच्छति । स च वायुर्दिविस्पृग्दिवमाकाशं स्पृशन् व्याप्नुवन् अरुणान्यरुणवर्णानि विकृतरूपाणि दिगंतराणि कृण्वन्कुर्वन्याति । प्राप्नोति । उतो अपि च पृथिव्या भूमे रेणुं पांसुमस्यन् गृहीत्वा सर्वत्र विक्षिपन्नेति । गच्छति । अत एवारुणानि कृण्वन्नित्युक्तं ॥

॥ अथ द्वितीया ॥

सं प्रेरते अनु वातस्य विष्ठा ऐनं गच्छंति समनं न योषाः ।
ताभिः सयुक्सरथं देव ईयतेऽस्य विश्वस्य भुवनस्य राजा ॥२॥

सं । प्र । ईरते । अनु । वातस्य । विऽस्थाः । आ । एनं । गच्छंति । समनं । न । योषाः ।
ताभिः । सऽयुक् । सऽरथं । देवः । ईयते । अस्य । विश्वस्य । भुवनस्य । राजा ॥२॥

विष्ठा विशेषेणावस्थिताः पर्वताद्या वातस्य वायोरनुगुणं सं प्रेरते । संप्रगच्छंति । यदभिमुखो वायुर्वर्तते तदभिमुखाः प्रकंपंत इत्यर्थः । समनं न संग्राममिवैनं वायुं योषा अश्वयोषितो वडवा आ गच्छंति । ताभिर्वडवाभिः सयुक् स्वयमेव युज्यमानं सरथं समानमेकं रथमारुह्य देवो दीप्यमानो वायुरीयते । गच्छति । ईङ् गतौ । अस्य विश्वस्य सर्वस्य भुवनस्य द्वितीयविकारभाजो भूतजातस्य राजा स्वामी भवति । यद्वा समनं धृष्टं पुरुषं योषाः कामिन्य इव । एवं वायुं तरुगुल्मादिरूपाः स्त्रियोऽभिगच्छंति । ताभिः सरथं सहरथं देव ईयत इति ॥

॥ अथ तृतीया ॥

अंतरिक्षे पथिभिरीयमानो न नि विशते कतमच्चनाहः ।
अपां सखा प्रथमजा ऋतावा क्व स्विज्जातः कुत आ बभूव ॥३॥

अंतरिक्षे । पथिऽभिः । ईयमानः । न । नि । विशते । कतमत् । चन । अहरिति ।
अपां । सखा । प्रथमऽजाः । ऋतऽवा । क्व । स्वित् । जातः । कुतः । आ । बभूव ॥३॥

अंतरिक्षे नभसि विद्यमानैः पथिभिर्मार्गैरीयमानो गच्छन्वायुः कतमच्चनाहरेकमपि दिनं न नि विशते । नोपविशति । किंतु सर्वदैव गच्छति । नेर्विश इत्यात्मनेपदं । अपि च । अपामुदकानां सखा । वायुर्वै वृष्ट्या ईशत इति श्रुतेः । प्रथमजाः सर्वेभ्यः प्राणिभ्यः पूर्वोत्पन्न एवर्तावा सत्यवान् एवंभूतो वायुः क्व स्वित् कुत्र खलु देशे जात उत्पन्नः कुतः कस्माच्च देशान्निष्क्रम्या बभूव । इदं सर्वं जगद्व्याप्नोत् । सर्वदा सर्वत्र वर्तमानत्वादस्योत्पत्तिर्व्याप्तिप्रकारश्च न केनापि ज्ञातुं शक्यत इत्यर्थः ॥

॥ अथ चतुर्थी ॥

आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः ।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥४॥

आत्मा । देवानां । भुवनस्य । गर्भः । यथाऽवशं । चरति । देवः । एषः ।
घोषाः । इत् । अस्य । शृण्विरे । न । रूपं । तस्मै । वाताय । हविषा । विधेम ॥४॥

अयं वायुर्देवानामिंद्रादीनामप्यात्मा जीवरूपेण तेष्ववस्थानाद्भुवनस्यापि भूतजातस्य गर्भो गर्भवत्प्राणरूपेणांतर्वर्तमान एष ईदृशो देवो यथावशं यथाकामं यथेच्छं चरति । वर्तते । अनिवारितगतिः सन् क्वचिच्छीघ्रं गच्छति क्वचिच्छनैर्गतिः कुतश्चिच्छरीरान्निष्क्रामत्यन्यच्च शरीरं प्रविशतीत्येवं यथेच्छं वर्तत इत्यर्थः । अस्य वायोरागच्छतो घोषा इच्छब्दा एव शृण्विरे । श्रूयंते । रूपं स्वरूपं तु न दृश्यते नीरूपत्वात् । अदृग्विषयत्वेन शब्देनैवानुमीयत इत्यर्थः । तस्मै वाताय वायवे हविषा चरुपुरोडाशादिलक्षणेन विधेम । परिचरेम ॥

॥ इत्यष्टमस्याष्टमे षड्विंशो वर्गः ॥

मयोभूरिति चतुर्ऋचमष्टादशं सूक्तं कक्षीवन्नोत्रस्य शबरस्यार्षं त्रैष्टुभं गोदेवत्यं । अनुक्रांतं च । मयोभूः शबरः काक्षीवतो गव्यमिति ॥ घासाय वनं प्रतिष्ठमाना गा आदितो द्वाभ्यामभिमंत्रणीयाः । सूत्रितं च । गाः प्रतिष्ठमाना अनुमंत्रयेत मयोभूर्वातो अभि वातूस्रा इति द्वाभ्यां । आ॰ गृ॰ २. १०. । इति ॥

॥ तत्राद्या ॥

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशंतां ।
पीवस्वतीर्जीवधन्याः पिबंत्ववसाय पद्वते रुद्र मृळ ॥१॥

मयःऽभूः । वातः । अभि । वातु । उस्राः । ऊर्जस्वतीः । ओषधीः । आ । रिशंतां ।
पीवस्वतीः । जीवऽधन्याः । पिबंतु । अवसाय । पत्ऽवते । रुद्र । मृळ ॥१॥

वातो वायुर्मयोभूः सुखस्य भावयिता सन् उस्रा गा अभि वातु । अभिगच्छतु । ताश्च गाव ऊर्जस्वती रसवतीरोषधीर्बलवंति तृणान्या रिशंतां । अभितः स्वादयंतु । तथा पीवस्वतीः प्रवृद्धा जीवधन्या जीवानां प्राणयित्रीरपश्च पिबंतु । हे रुद्र ज्वरादिरोगस्य प्रेक्षणेन संहर्तर्देव पद्वते पादयुक्तायावसायान्नाय गोरूपाय मृळ । उपदयां कुरु । मा बाधस्वेत्यर्थः ॥

॥ अथ द्वितीया ॥

याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद ।
या अंगिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥२॥
याः । सऽरूपाः । विऽरूपाः । एकऽरूपाः । यासां । अग्निः । इष्ट्या । नामानि । वेद ।
याः । अंगिरसः । तपसा । इह । चक्रुः । ताभ्यः । पर्जन्य । महि । शर्म । यच्छ ॥२॥

या गावः सरूपाः समानरूपा याश्च विरूपा विभिन्नरूपा याश्चैकरूपा एकेनैव वर्णेनोपेता यासां च गवां नामानीडे रंतेऽदित इत्यादीनीष्ट्या यागेन हेतुनाग्निर्वेद जानाति याश्च गा अंगिरस ऋषयस्तपसा पशुप्राप्तिसाधनेन चित्रायागादिलक्षणेनेहास्मिँल्लोके चक्रुः कृतवंतस्ताभ्यः सर्वाभ्यो गोभ्यो हे पर्जन्य महि महच्छर्म सुखं यच्छ । प्रदेहि ॥

द्वाभ्यां सायं गृहमागच्छंतीर्गा अनुमंत्रयेत । सूत्र्यते हि । या देवेषु तन्वमैरयंतेति च सूक्तशेषं । आगावीयमेके । आ० गृ० २.१०.। इति ॥

॥ तयोराद्या तृतीया ॥

या देवेषु तन्व१मैरयंत यासां सोमो विश्वा रूपाणि वेद ।
ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिंद्र गोष्ठे रिरीहि ॥३॥
याः । देवेषु । तन्वं । ऐरयंत । यासां । सोमः । विश्वा । रूपाणि । वेद ।
ताः । अस्मभ्यं । पयसा । पिन्वमानाः । प्रजाऽवतीः । इंद्र । गोऽस्थे । रिरीहि ॥३॥

या गावो देवेषु यष्टव्येषु तन्वमात्मीयं शरीरमैरयंत हवीरूपेण प्रेरयंति यासां च गवां विश्वा सर्वाणि रूपाणि रूप्यमाणानि क्षीरादीनि श्रयणद्रव्याणि सोमो वेद जानात्यस्मभ्यमस्मदर्थं पयसा क्षीरेण पिन्वमाना वर्धमाना अत एव प्रजावतीः प्रजाभिर्वत्सैरुपेतास्ता गा हे इंद्र गोष्ठेऽस्मदीये रिरीहि । गमय । री गतिरेषणयोः । छांदसो विकरणस्य श्लुः ॥

॥ अथ चतुर्थी ॥

प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संविदानः ।
शिवाः सतीरुप नो गोष्ठमाकस्तासां वयं प्रजया सं सदेम ॥४॥

प्रजाऽपतिः। मह्यं। एताः। रराणः। विश्वैः। देवैः। पितृऽभिः। संऽविदानः।
शिवाः। सतीः। उप। नः। गोऽस्थं। आ। अकरित्यकः। तासां। वयं। प्रऽजया।
सं। सदेम ॥४॥

प्रजापतिर्विधाता मह्यं स्तोत्र एता गा रराणः प्रयच्छन्। रातेर्व्यत्ययेन शानच्। छांदसः शपः श्लुः। अभ्यस्तानामादिरित्याद्युदात्तत्वं। विश्वैः सर्वैर्देवैः पितृभिश्च संविदान ऐकमत्यं गतः सन् शिवाः सतीः कल्याणीर्भवंतीर्गा नोऽस्माकं गोष्ठं व्रजमुप गोष्ठसमीपेऽकः। करोतु। तासां गवां प्रजया संतानेन वयं सं सदेम। संगच्छेमहि। सदेराशिषि लिङि लिङ्याशिष्यङ् ॥

॥ इत्यष्टमस्याष्टमे सप्तविंशो वर्गः ॥

विभ्राडिति चतुर्ऋचमेकोनविंशं सूक्तं सूर्यपुत्रस्य विभ्राट्संज्ञकस्यार्षं सूर्यदेवत्यं। आदौ तिस्रो जगत्यः। अष्टकद्विद्वादशकवत्यास्तारपंक्तिश्चतुर्थी। तथा चानुक्रांतं। विभ्राड्विभ्राट् सौर्यः सौर्यं जागतमास्तारपंक्त्यंतमिति ॥ विषुवति निष्केवल्य आद्य-स्तृचः स्तोत्रियः। सूत्रितं च। विभ्राड्बृहत्पिबतु सोम्यं मधु नमो मित्रस्य वरुणस्य चक्षस इति स्तोत्रियानुरूपौ। आ॰ ८.६.। इति ॥ वाजपेयेऽतिरिक्तोक्थस्य विभ्रा-डित्येषा शस्त्रे याज्या। सूत्यते हि। विभ्राड्बृहत्पिबतु सोम्यं मध्विति याज्या तस्य गवां शतानां। आ॰ ९.९.। इति ॥

॥ सैषाद्या ॥

विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहुतं।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति ॥१॥

विऽभ्राट्। बृहत्। पिबतु। सोम्यं। मधु। आयुः। दधत्। यज्ञऽपतौ। अविऽहुतं।
वातऽजूतः। यः। अभिऽरक्षति। त्मना। प्रऽजाः। पुपोष। पुरुधा। वि। राजति ॥१॥

विभ्राड्विभ्राजमानो विशेषेण दीप्यमानः सूर्यो बृहन्महत्परिवृढं सोम्यं सोम-मयं मधु पिबतु। किं कुर्वन्। यज्ञपतौ यजमानेऽविहुतमकुटिलमायुर्दधत् कुर्वन्। यः सूर्यो वातजूतो वातेन महावायुना प्रेर्यमाणः सन् त्मनात्मना स्वयमेवाभि-रक्षति। सर्वं जगदभिपश्यन्पालयति। राशिचक्रस्य वायुप्रेर्यत्वात्सूर्यस्यापि तत्प्रेर्यत्वं। स सूर्यः प्रजाः पुपोष वृष्ट्यादिप्रदानेन पोषयति पुरुधा बहुधा विराजति विशेषेण दीप्यते च ॥

॥ अथ द्वितीया ॥

विभ्राड्बृहत्सुभृतं वाजसातमं धर्मन्दिवो धरुणे सत्यमर्पितं ।
अमित्रहा वृत्रहा दस्युहंतमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥२॥
विऽभ्राट् । बृहत् । सुऽभृतं । वाजऽसातमं । धर्मन् । दिवः । धरुणे । सत्यं । अर्पितं ।
अमित्रऽहा । वृत्रऽहा । दस्युहन्ऽतमं । ज्योतिः । जज्ञे । असुरऽहा । सपत्नऽहा ॥२॥

विभ्राड्विभ्राजमानं बृहत्प्रौढं सुभृतं सुपुष्टं वाजसातमं वाजस्यान्नस्य बलस्य वा दातृतमं धर्मन्धर्मणि वायुना धारयितव्ये दिवो द्युलोकस्य धरुणे धारके सूर्यमंडले ऽर्पितं निक्षिप्तं सत्यमविनश्वरममित्रहामित्राणामप्रियाणां हंतृ वृत्रहा वृत्राणामावृण्वतां हंतृ दस्युहंतमं दस्यूनामुपक्षयितॄणां हंतृतममसुरहासुराणां क्षेप्तॄणां घातकं सपत्नहा सपत्नानां सहजशत्रूणामपि घातकमीदृग्भूतं ज्योतिः सौरं तेजो जज्ञे । प्रादुर्भवति ॥

॥ अथ तृतीया ॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।
विश्वभ्राड्भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतं ॥३॥
इदं । श्रेष्ठं । ज्योतिषां । ज्योतिः । उत्ऽतमं । विश्वऽजित् । धनऽजित् । उच्यते । बृहत् ।
विश्वऽभ्राट् । भ्राजः । महि । सूर्यः । दृशे । उरु । पप्रथे । सहः । ओजः । अच्युतं ॥३॥

इदं सौरं तेजः श्रेष्ठं प्रशस्यतमं ज्योतिषामन्येषां ग्रहनक्षत्रादीनामपि ज्योतिः प्रकाशकं अत एवोत्तममुत्कृष्टं विश्वजित् । विश्वस्य सर्वस्य जेतृ धनजिद्धनस्य च जेतृ बृहत्प्रभूतमुच्यते । एवं गुणविशिष्टमिति सर्वैरभिधीयते । अपि च विश्वभ्राड्विश्वस्य प्रकाशयिता भ्राजो भ्राजमानो महि महान्सूर्यो दृशे दर्शनायोरु विस्तीर्णं सहस्तमसोऽभिभवित्रच्युतं च्युतिरहितमविनाशमोजस्तेजोरूपं बलं पप्रथे । विस्तारयति ॥

॥ अथ चतुर्थी ॥

विभ्राजञ्ज्योतिषा स्व१रगच्छो रोचनं दिवः ।
येनेमा विश्वा भुवनान्याभृता विश्वकर्मणा विश्वदेव्यावता ॥४॥
विऽभ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनं । दिवः ।
येन । इमा । विश्वा । भुवनानि । आऽभृता । विश्वऽकर्मणा । विश्वदेव्यऽवता ॥४॥

हे सूर्य ज्योतिषा तेजसा स्वः सर्वं जगद्विभ्राजन्विभ्राजयन्दिवः संबंधि रोचनं स्थानमगच्छः । प्राप्नोः । विश्वकर्मणा सर्वव्यापारहेतुना विश्वदेव्यावता । विश्वेषां देवानां हितो यागादिर्विश्वदेव्यः । तद्वता येन सौरेण तेजसेमेमानि परिदृश्यमानानि विश्वा सर्वाणि भुवनान्युदकानि भौमान्याभृता घर्मकाल आभृतानि भवंति । यद्वा सर्वाणि भूतजातान्याभृतासमंताद्भृतानि पोषितानि भवंति । तेन ज्योतिषेत्यन्वयः ॥

॥ इत्यष्टमस्याष्टमेऽष्टाविंशो वर्गः ॥

त्वं त्यमिति चतुर्ऋचं विंशं सूक्तं भृगुपुत्रस्येटस्यार्षं गायत्रमैंद्रं । अनुक्रांतं च । त्वं त्यमिटो भार्गवो गायत्रमिति ॥ गतो विनियोगः । तत्राद्या ॥

त्वं त्यमिटतो रथमिंद्र प्रावः सुतावतः ।
अशृणोः सोमिनो हवं ॥१॥
त्वं । त्यं । इटतः । रथं । इंद्र । प्र । आवः । सुतऽवतः ।
अशृणोः । सोमिनः । हवं ॥१॥

हे इंद्र सुतावतः सुतेनाभिषुतेन सोमेन युक्तस्येटत इटस्य । सुपां सुलुगिति ङसस्तस् । एतत्संज्ञस्यर्षेस्त्यं तं प्रसिद्धं रथं प्रावः । प्रारक्षः । सोमिनः सोमयुक्तस्य मम हवमाह्वानमशृणोः । शृणु ॥

॥ अथ द्वितीया ॥

त्वं मखस्य दोधतः शिरोऽव त्वचो भरः ।
अगच्छः सोमिनो गृहं ॥२॥
त्वं । मखस्य । दोधतः । शिरः । अव । त्वचः । भरः ।
अगच्छः । सोमिनः । गृहं ॥२॥

हे इंद्र त्वं मखस्य यज्ञस्य दोधतः कंपमानस्य देवेभ्यः पलायमानस्य शिरः प्रवर्ग्यरूपं त्वचस्त्वगुपलक्षिताच्छरीरादव भरः । अवयुत्य पृथक्कृत्य हृतवानसि । देवेभ्यो निष्क्रांतस्य पुरुषाकारस्य धन्विनो यज्ञस्य शिर इंद्रो वम्रिरूपेण ज्याघातनद्वारा पुरा चिच्छेद । तदभिप्रायेणेदमुक्तं । श्रूयते हि । तस्येंद्रो वम्रिरूपेण

धनुर्ज्यामच्छिनद्रुद्रस्य त्वेव धनुरार्त्निः शिर उत्पिपेष । स प्रवर्ग्योऽभवदिति । स त्वं सोमिनः सोमवतो मम गृहमगच्छः । आगच्छ ॥

॥ अथ तृतीया ॥

त्वं त्यमिंद्र मर्त्यमास्त्रबुध्नाय वेन्यं ।

मुहुः श्रथ्ना मनस्यवे ॥३॥

त्वं । त्यं । इंद्र । मर्त्यं । आस्त्रऽबुध्नाय । वेन्यं ।

मुहुः । श्रथ्नाः । मनस्यवे ॥३॥

हे इंद्र त्वं त्यं तं मर्त्यं मनुष्यं वेन्यं वेनस्य पुत्रं पृथुमास्त्रबुध्नाय । अस्त्रबुध्नो नाम कश्चित् । तस्य पुत्राय मनस्यवे मननीयं स्तोत्रमिच्छते मुहुः शश्वच्छ्रथ्नाः । अहिंसीः । वशमनय इत्यर्थः ॥

॥ अथ चतुर्थी ॥

त्वं त्यमिंद्र सूर्यं पश्चा संतं पुरस्कृधि ।

देवानां चित्तिरो वशं ॥४॥

त्वं । त्यं । इंद्र । सूर्यं । पश्चा । संतं । पुरः । कृधि ।

देवानां । चित् । तिरः । वशं ॥४॥

हे इंद्र त्वं त्यं सूर्यमस्तसमये पश्चा पश्चात्संतं भवंतं पुरः परेद्युरुदयकाले पुरस्तात्कृधि । करोषि । लकारव्यत्ययः । कीदृशं । देवानां चिद्देवानामपि तिरस्तिरोहितं । तैरपि क्व गत इति दुर्विज्ञातं । वशं कांतं ॥

॥ इत्यष्टमस्याष्टम एकोनत्रिंशो वर्गः ॥

आ याहीति चतुर्ऋचमेकविंशं सूक्तमांगिरसस्य संवर्तस्यार्षमुषोदेवताकं । चतस्रोऽपि विंशतिका द्विपदा विराजः । तथा चानुक्रांतं । आ याहि संवर्त उषस्यं द्वैपदमिति ॥ प्रथमे छंदोमे वैश्वदेवसूक्तात्पूर्वमिदं सूक्तं । सूत्रितं च । आ याहि वनसेमा नु कं बभ्रूरेक इति द्विपदासूक्तानि । आ॰ ८. ७. । इति ॥ महाव्रतेऽपि निष्केवल्य एतत् । तथैव पंचमारण्यके सूत्रितं ॥

॥ तत्र प्रथमा ॥

आ याहि वनसा सह गावः सचंत वर्तनिं यदूधभिः ॥१॥

आ। याहि। वनसा। सह। गावः। सचंत। वर्तनिं। यत्। ऊधऽभिः ॥१॥

हे उषो वनसा वननीयेन तेजसा धनेन सार्धमा याहि। आगच्छ। गाव उषसो वाहनभूता वर्तनिं रथं सचंत। सेवंते। अतस्तेन रथेनायाहीत्यर्थः। यद्वा गाव ऊधभिरुपलक्षिताः प्रभूताः। पीना इत्यर्थः। ता गाव इति संबंधः ॥

॥ अथ द्वितीया ॥

आ याहि वस्व्या धिया मंहिष्ठो जारयन्मखः सुदानुभिः ॥२॥

आ। याहि। वस्व्या। धिया। मंहिष्ठः। जारयत्ऽमखः। सुदानुऽभिः ॥२॥

हे उषो वस्व्या प्रशस्तया धियानुग्रहबुद्ध्या कर्मणा स्तुत्या वा सार्धमा याहि। आगच्छ। स चोषःकालः सुदानुभिः शोभनदानैर्दातृभिः पुरुषैर्मंहिष्ठो धनानां दातृतमोऽत एव जारयन्मखः समापयद्यज्ञश्च भवति ॥

॥ अथ तृतीया ॥

पितुभृतो न तंतुमित्सुदानवः प्रति दध्मो यजामसि ॥३॥

पितुऽभृतः। न। तंतुं। इत्। सुऽदानवः। प्रति। दध्मः। यजामसि ॥३॥

पितुभृतो नान्नस्य भर्तार इव सुदानवः शोभनदाना वयं तंतुमित्तंतुं विस्तीर्णमेव प्रति दध्मः। उषसं प्रत्युपायनरूपेण धारयामः। तेन च यज्ञेन तामुषसं यजामसि ॥

दशमेऽहनि प्रातरनुवाक उषस्ये क्रतावुषो भद्रेभिरित्यस्याः स्थान उषा अप स्वसुरित्येषा। सूचितं च। उषा अप स्वसुस्तम इति पच्छो द्विपदां त्रिरुषस्ये। आ॰ ८.१३.। इति ॥

॥ सैषा चतुर्थी ॥

उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता ॥४॥

उषाः। अप। स्वसुः। तमः। सं। वर्तयति। वर्तनिं। सुऽजातता ॥४॥

इयमुषाः स्वसुर्भगिन्या रात्रेः संबंधि तमोऽंधकारमप सं वर्तयति। आत्मीयेन तेजसापगमयति। सुजातता सुजातत्वमात्मनः सुप्रजातत्वं च वर्तनिं रथं प्रापयति ॥

॥ इत्यष्टमस्याष्टमे त्रिंशो वर्गः ॥

आ त्वेति षडृचं द्वाविंशं सूक्तमांगिरसस्य ध्रुवस्यार्षमानुष्टुभं। अभिषिक्तस्य राज्ञः स्तुतिरूपोऽर्थो देवता। तथा चानुक्रांतं। आ त्वा षड् ध्रुवो राज्ञः स्तुतिस्त्वानुष्टुभं त्विति॥ राज्ञो युद्धाय संनहनेऽनेन सूक्तेनाभिमंत्रणं पुरोधसा कर्तव्यं। सूचितं च। आ त्वाहार्षमंतरेधीति पश्चाद्रथस्यावस्थाय। आ॰ गृ॰ ३.१२.। इति॥

॥ तत्र प्रथमा ॥

आ त्वा॑हार्षमं॒तरे॑धि ध्रु॒वस्ति॒ष्ठावि॑चाचलिः।
विश॑स्त्वा॒ सर्वा॑ वांछंतु॒ मा त्वद्रा॒ष्ट्रमधि॑ भ्रशत्॥१॥
आ। त्वा॒। अ॒हा॒र्ष॒। अं॒तः। ए॒धि॒। ध्रु॒वः। ति॒ष्ठ॒। अवि॑ऽचाचलिः।
विशः॑। त्वा॒। सर्वाः॑। वां॒छं॒तु॒। मा। त्वत्। रा॒ष्ट्रं। अधि॑। भ्र॒श॒त्॥१॥

हे राजन् त्वा त्वामाहार्षं। अस्मद्राष्ट्रस्य स्वामित्वेनानैषं। स त्वमंतरस्मासु मध्य एधि। स्वामी भव। ध्रुवो नित्यः सन् अविचाचलिरतिशयेन चलनरहित एव सन् तिष्ठ। राष्ट्रमधितिष्ठ। सर्वाश्च विशः प्रजास्त्वां वांछंतु। अयमेवास्माकं राजास्त्विति कामयंतु। वाछि इच्छायां। त्वत् त्वत्तः सकाशाद्राष्ट्रं राज्यं माधि भ्रशत्। मा भ्रश्यतु। मा वियुक्तं भवतु। भ्रन्शु अधःपतने॥

॥ अथ द्वितीया ॥

इ॒हैवैधि॒ माप॑ च्योष्ठाः॒ पर्व॑त इ॒वावि॑चाचलिः।
इंद्र॑ इ॒वेह ध्रु॒वस्ति॑ष्ठे॒ह रा॒ष्ट्रमु॑ धारय॥२॥
इ॒ह। ए॒व। ए॒धि॒। मा। अप॑। च्यो॒ष्ठाः॒। पर्व॑तःऽइव। अवि॑ऽचाचलिः।
इंद्रः॑ऽइव। इ॒ह। ध्रु॒वः। ति॒ष्ठ॒। इ॒ह। रा॒ष्ट्रं। ऊं॒ इति॑। धा॒र॒य॒॥२॥

हे राजन् इहास्मिन्नेव राज्य एधि। स्वामित्वेन सर्वदा वर्तमानो भव। मापच्योष्ठाः। अपच्युतो मा भूः। मापगमः। पर्वत इव यथा पर्वतो नैश्चल्येनावतिष्ठत एवमविचाचलिश्चलनरहितो भव। इंद्र इव यथा स्वर्गे इंद्र एवमिह लोके त्वं ध्रुवस्तिष्ठ। स्थिरो भव। राष्ट्रमु राष्ट्रं चेह लोके धारय। स्वे स्वे कर्मण्यवस्थापय॥

॥ अथ तृतीया ॥

इममिंद्रो अदीधरद्ध्रुवं ध्रुवेण हविषा।
तस्मै सोमो अधि ब्रवत्तस्मा उ ब्रह्मणस्पतिः ॥३॥
इमं। इंद्रः। अदीधरत्। ध्रुवं। ध्रुवेण। हविषा।
तस्मै। सोमः। अधि। ब्रवत्। तस्मै। ऊं इति। ब्रह्मणः। पतिः ॥३॥

इममभिषिक्तं ध्रुवेण स्थिरेण हविषा तर्पमाण इंद्रो ध्रुवं स्थिरमदीधरत्। धारयतु। सोमश्च तस्मै राज्ञेऽधि ब्रवत्। अधिब्रवीतु। मदीयोऽयमिति पक्षपातवचनं करोतु। तस्मा उ तस्मा एव ब्रह्मणस्पतिर्मंत्रस्य पालको देवश्चाधिब्रवीतु ॥

॥ अथ चतुर्थी ॥

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे।
ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामयं ॥४॥
ध्रुवा। द्यौः। ध्रुवा। पृथिवी। ध्रुवासः। पर्वताः। इमे।
ध्रुवं। विश्वं। इदं। जगत्। ध्रुवः। राजा। विशां। अयं ॥४॥

द्यौर्ध्रुवा स्थिरा भवति। पृथिवी च ध्रुवा स्थिरा भवति। इमे दृश्यमानाः पर्वता महीधराश्च ध्रुवासः स्थिराः। इदं विश्वं सर्वं जगद्ध्रुवं स्थिरं भवति। एवमेवायं विशां प्रजानां राजा स्वामी सन् ध्रुवः स्थिरो भवतु ॥

॥ अथ पंचमी ॥

ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः।
ध्रुवं त इंद्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवं ॥५॥
ध्रुवं। ते। राजा। वरुणः। ध्रुवं। देवः। बृहस्पतिः।
ध्रुवं। ते। इंद्रः। च। अग्निः। च। राष्ट्रं। धारयतां। ध्रुवं ॥५॥

हे राजन् ते तव राष्ट्रं राजा राजमानो वरुणो ध्रुवं स्थिरं धारयतु। देवो दानादिगुणयुक्तो बृहस्पतिर्ध्रुवं धारयतु। इंद्रश्चाग्निश्चोभावपि ते तव राष्ट्रं ध्रुवं स्थिरं धारयतां। इंद्राग्न्योरुभयोरपेक्षया ध्रुवशब्दस्य द्विः प्रयोगः ॥

॥ अथ षष्ठी ॥

ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि ।
अथो त इंद्रः केवलीर्विशो बलिहृतस्करत् ॥ ६ ॥

ध्रुवं । ध्रुवेण । हविषा । अभि । सोमं । मृशामसि ।
अथो इति । ते । इंद्रः । केवलीः । विशः । बलिऽहृतः । करत् ॥ ६ ॥

ध्रुवेण स्थिरेण हविषा पुरोडाशादिना युक्तं ध्रुवं स्थिरं सोममभि मृशामसि । अभिमृशामः । देवतामभिलक्ष्य यागार्थं वयमृत्विजः संस्पृशामः । अथो अथानंतरमेवेंद्रो विशः प्रजास्ते तवैव केवलीरसाधारणाः सतीर्बलिहृतः करस्य प्रदात्रीः करत् । करोतु ॥

॥ इत्यष्टमस्याष्टम एकत्रिंशो वर्गः ॥

अभीवर्तेनेति पंचर्चं त्रयोविंशं सूक्तमांगिरसस्याभीवर्ताख्यस्यार्षमानुष्टुभं । पूर्ववद्राजस्तुतिर्देवता । तथा चानुक्रांतं । अभीवर्तेन पंचाभीवर्त इति ॥ पुरोहित इदं सूक्तं राजानं युद्धाय कृतसंनाहं वाचयीत । सूत्र्यते हि । अथैनं सारयमाणमुपारुह्याभीवर्तं वाचयति । आ॰ गृ॰ ३.१२. । इति ॥

॥ तत्र प्रथमा ॥

अभीवर्तेन हविषा येनेंद्रो अभिवावृते ।
तेनास्मान्ब्रह्मणस्पतेऽभि राष्ट्राय वर्तय ॥ १ ॥

अभिऽवर्तेन । हविषा । येन । इंद्रः । अभिऽववृते ।
तेन । अस्मान् । ब्रह्मणः । पते । अभि । राष्ट्राय । वर्तय ॥ १ ॥

अभीवर्तेन । अभिगच्छत्यनेनेत्यभीवर्तः । करणे घञ् । थाथादिस्वरेणोत्तरपदांतोदात्तत्वं । उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः । ईदृशेन येन हविषा साधनेनेंद्रोऽभिववृते सर्वमभिजगाम तेन हविषेष्टवतोऽस्मान् हे ब्रह्मणस्पते राष्ट्राय राज्यं प्राप्तुमभि वर्तय । अभिगमय ॥

॥ अथ द्वितीया ॥

अभिवृत्य सपत्नानभि या नो अरातयः ।
अभि पृतन्यंतं तिष्ठाभि यो न इरस्यति ॥ २ ॥

अभिऽवृत्यं । सऽपत्नान् । अभि । याः । नः । अरातयः ।
अभि । पृतन्यंतं । तिष्ठ । अभि । यः । नः । इरस्यति ॥२॥

॥ अथ तृतीया ॥

अभि त्वा देवः सविताभि सोमो अवीवृतत् ।
अभि त्वा विश्वा भूतान्यभीवर्तो यथाससि ॥३॥
अभि । त्वा । देवः । सविता । अभि । सोमः । अवीवृतत् ।
अभि । त्वा । विश्वा । भूतानि । अभिऽवर्तः । यथा । अससि ॥३॥

हे राजन् देवो दानादिगुणयुक्तः सविता त्वा त्वामभ्यवीवृतत् । अभिवर्तयतु । अभिगमयतु राष्ट्रं । सोमश्चाभिवर्तयतु । विश्वा विश्वानि सर्वाण्यपि भूतानि पृथिव्यादीनि त्वामभि वर्तयंतु । यथा येन प्रकारेण त्वमभीवर्तोऽसि । अभितः सर्वत्र वर्तमानो भवसि । अस्तेश्छांदसः शपो लुगभावः ॥

॥ अथ चतुर्थी ॥

येनेंद्रो हविषा कृत्व्यभवद्द्युम्न्युत्तमः ।
इदं तदक्रि देवा असपत्नः किलाभुवं ॥४॥
येन । इंद्रः । हविषा । कृत्वी । अभवत् । द्युम्नी । उत्ऽतमः ।
इदं । तत् । अक्रि । देवाः । असपत्नः । किल । अभुवं ॥४॥

येन हविषास्माभिर्दत्तेन माद्यन्निंद्रः कृत्वी वृत्रवधादेः कर्मणः कर्ताभवत् । द्युम्नी । द्युम्नं द्योततेर्यशो वान्नं वा । तद्वान् । अत एवोत्तम उत्कृष्टतमश्चाभवत्तदिदं हविर्हे देवा अक्रि । अकारि । यद्वा । अहमकार्षं । अत एवाहमसपत्नः किलाभुवं । शत्रुरहितोऽप्यभवं खलु ॥

॥ अथ पंचमी ॥

असपत्नः सपत्नहाभिराष्ट्रो विषासहिः ।
यथाहमेषां भूतानां विराजानि जनस्य च ॥५॥
असपत्नः । सपत्नऽहा । अभिऽराष्ट्रः । विऽससहिः ।
यथा । अहं । एषां । भूतानां । विऽराजानि । जनस्य । च ॥५॥

सपत्नहा सपत्ननां शत्रूणां हंतात एवासपत्नः शत्रुरहितोऽहमभुवं। अभिराष्ट्रोऽभिगतराष्ट्रः प्राप्तराज्यः सन् विषासहिः शत्रूणां विशेषेणाभिभविता चाभुवं। यथा येन प्रकारेणाहमेषां दृश्यमानानां सर्वेषां भूतानां प्राणिनां जनस्य च सेवकस्यामात्यादेश्च विराजानि यथेश्वरो भवानि तथा सपत्नहा विषासहिश्चाभुवमित्यर्थः॥

॥ इत्यष्टमस्याष्टमे द्वात्रिंशो वर्गः ॥

प्र व इति चतुर्ऋचं चतुर्विंशं सूक्तं गायत्रं। अर्बुदस्य सर्पर्षेः पुत्र ऊर्ध्वग्रावा नामर्षिः। सोमाभिषवार्था ग्रावाणो देवता। तथा चानुक्रांतं। प्र वश्चतुष्कमूर्ध्वग्रावार्बुदिर्ग्राव्णोऽस्तौद्गायत्रमिति ॥ ग्रावस्तोत्र एतत्सूक्तं। सूचितं च। आ व ऋंजसे प्र वो ग्रावाण इति सूक्तयोः। आ॰ ५.१२.। इति ॥ यद्वेदमेकमेव सूक्तं ग्रावस्तोत्रं। सूच्यते हि। प्र वो ग्रावाण इत्येक उक्तं सर्पणं। आ॰ ५.१२.। इति ॥

॥ तत्र प्रथमा ॥

प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा ।
धूर्षु युज्यध्वं सुनुत ॥१॥
प्र । वः । ग्रावाणः । सविता । देवः । सुवतु । धर्मणा ।
धूःऽसु । युज्यध्वं । सुनुत ॥१॥

हे ग्रावाणः सोमाभिषवार्थाः पाषाणा वो युष्मान्सविता प्रेरको देवो धर्मणात्मीयेन धारणेन कर्मणा प्र सुवतु। अभिषवार्थं प्रेरयतु। षू प्रेरणे। तौदादिकः। यूयं च धूर्ष्वभिषवस्थानेषु प्राच्यादिमहादिक्षु युज्यध्वं। युक्ता भवत। अनंतरं सुनुत। अभिषुणुत सोमं ॥

॥ अथ द्वितीया ॥

ग्रावाणो अप दुच्छुनामप सेधत दुर्मतिं ।
उस्राः कर्तन भेषजं ॥२॥
ग्रावाणः । अप । दुच्छुनां । अप । सेधत । दुःऽमतिं ।
उस्राः । कर्तन । भेषजं ॥२॥

हे ग्रावाणो दुच्छुनां दुःखकारिणीं शत्रुभूतां प्रजामप सेधत। अस्मत्तोऽपगमयत। षिधु गत्यां। तथा दुर्मतिं दुष्टाभिसंधिं चापसेधत। भेषजं सुखमस्माकं यथा

भवति तयोस्ता गाः कर्तन । कुरुत । करोतेश्छांदसो विकरणस्य लुक् । तप्तनप्तनथनाश्चेति तनबादेशः ॥

॥ अथ तृतीया ॥

ग्रावाण उपरेष्वा महीयंते सजोषसः ।

वृष्णे दधतो वृष्ण्यं ॥३॥

ग्रावाणः । उपरेषु । आ । महीयंते । सऽजोषसः ।

वृष्णे । दधतः । वृष्ण्यं ॥३॥

ग्रावाणो दिक्ष्ववस्थिताः पाषाणाः सजोषसः सह प्रीयमाणाः संगताः संतो वोपरेषु । उपरो नामाभिषवाय चतुर्णां ग्राव्णां मध्ये स्थापितो विस्तृतः पाषाणः । प्रदेशापेक्षं बहुवचनं । उपरस्य प्रांतेषु महीयंते । प्रकाशंते । आकारः पूरणः । किं कुर्वंतः । वृष्णे वर्षित्रे सोमाय वृष्ण्यं वीर्यं दधतः प्रयच्छंतः ॥

॥ अथ चतुर्थी ॥

ग्रावाणः सविता नु वो देवः सुवतु धर्मणा ।

यजमानाय सुन्वते ॥४॥

ग्रावाणः । सविता । नु । वः । देवः । सुवतु । धर्मणा ।

यजमानाय । सुन्वते ॥४॥

देवो दानादिगुणयुक्तः सविता हे ग्रावाणो वो युष्मान्धर्मणात्मीयेन धारणेन नु क्षिप्रं प्र सुवतु । अभिषवे प्रेरयतु । किमर्थं । सुन्वते सोमाभिषवं कुर्वते यजमानाय यजमानार्थं । तस्य यागनिष्पत्तय इत्यर्थः ॥

॥ इत्यष्टमस्याष्टमे त्रयस्त्रिंशो वर्गः ॥

प्र सूनव इति चतुर्ऋचं पंचविंशं सूक्तं । ऋभुपुत्रः सूनुर्नामर्षिः । द्वितीया गायत्री शिष्टास्तिस्रोऽनुष्टुभः । आद्यर्भुदेवत्या शिष्टा आग्नेय्यः । तथा चानुक्रांतं । प्र सूनवः सूनुरार्भव आग्नेयमानुष्टुभं द्वितीयं गायत्र्यार्भवीति ॥ गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

प्र सूनव ऋभूणां बृहन्नवंत वृजना ।

क्षामा ये विश्वधायसोऽश्नन्धेनुं न मातरं ॥१॥

प्र । सूनवः । ऋभूणां । बृहत् । नवंत । वृजना ।

क्षाम । ये । विश्वऽधायसः । अश्नन् । धेनुं । न । मातरं ॥१॥

सूनव एतत्संज्ञा ऋभूणां । ऋभुर्विभ्वा वाज इति त्रयाणामपि प्रथमेन व्यपदेशः । तेषां पुत्रा बृहत्प्रभूतं वृजना । संग्रामनामैतत् । वृजनं संग्रामं प्र नवंत । नवतिर्गतिकर्मा । प्रगच्छंति । प्रकर्षेण गच्छंति । प्रकृष्टगमनेन जयो लक्ष्यते । तत्र शत्रूञ्जयंतीत्यर्थः । सूनुर्नामर्षिरात्मानमेव परोक्षेण निरदिशत् । एकस्मिन्नपि पूजार्थं बहुवचनं । य ऋभवो विश्वधायसो विश्वस्य धारकाः क्षाम भूमिमश्नन् । व्याप्नुवन् । अशू व्याप्तौ । व्यत्ययेन श्ना । धेनुं न । धेनुः प्रीणयित्री गौः । तामिव तेषामृभूणामित्यन्वयः । यद्वा । सूर्यरश्मयोऽप्यृभव उच्यंते । य उरु भासमानाः सूर्यरश्मयो विश्वधायसो विश्वं सर्वं रसं धयंतः पिबंतः । यद्वा वृष्ट्यादिप्रदानेन सर्वस्य धारकाः । एवंभूताः संतः क्षाम भूमिमश्नन् अभुंजत । तदीयं सर्वं रसमपिबन् । तत्र दृष्टांतः । मातरं जननीं धेनुं पयस्विनीं गां यथा वत्सः पिबति तथा । य ऋभवोऽश्नंति तेषामृभूणामित्यन्वयः ॥

अग्निप्रणयने प्र देवमिति तृचोऽनुवक्तव्यः । सूचितं च । प्रेषितोऽग्निप्रणयनीयाः प्रतिपद्यते प्र देवं देव्या धियेति तिस्रः ।आ॰ २.१७.। इति ॥ तृच आद्या सूक्ते द्वितीया ॥

प्र देवं देव्या धिया भरता जातवेदसं ।

हव्या नो वक्षदानुषक् ॥२॥

प्र । देवं । देव्या । धिया । भरत । जातऽवेदसं ।

हव्या । नः । वक्षत् । आनुषक् ॥२॥

हे ऋत्विग्यजमाना देवं दानादिगुणयुक्तं जातवेदसं जातानां वेदितारं जातप्रज्ञं जातधनं वेममग्निं प्र भरत । प्रकर्षेण हरत । यद्वा । प्रांचं नयत । केन साधनेनेति तदाह । देव्या दीप्तया धिया प्रज्ञया कर्मणा वा । यद्वैषा सहयोगे तृतीया । देव्या धिया युक्तं । किं प्रयोजनमिति चेत् । नोऽस्माकं हव्या हव्यानि हवींष्यानुषगानुपूर्व्यादनुक्रमेण वक्षत् । अयमग्निर्वहेत् । देवान्प्रापयेत् । वहेर्लेटि सिब्बहुलमिति सिप् ॥

॥ अथ तृतीया ॥

अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते ।
रथो न योरभीवृतो घृणीवाञ्चेतति त्मना ॥३॥

अयं । ऊं इति । स्यः । प्र । देवऽयुः । होता । यज्ञाय । नीयते ।
रथः । न । योः । अभिऽवृतः । घृणिऽवान् । चेतति । त्मना ॥३॥

अयमु अयमेव स्यः सोऽग्निर्देवयुर्देवान्यष्टुमिच्छन्भवति । देवशब्दात्क्यचि न छंदस्यपुत्रेतीत्वदीर्घयोः प्रतिषेधः । अयमेव होता देवानामाह्वाता । अयमेव यज्ञाय यागार्थं प्रणीयते । आहवनीयदेशं प्रति प्रकर्षेण नीयते । अपि च रथो रंहणशीलः सूर्यो रथवान्वा । छांदसो मत्वर्थीयस्य लोपः । स यथा घृणीवान्दीप्तिमान् तद्वद्दीप्तः । योर्मिश्रयिता हविषां देवैः संगमयिता । यौतेरन्येभ्योऽपि दृश्यंत इति विच् । अभीवृत ऋत्विग्यजमानैरावेष्टितः । वृणोतेः कर्मण्यन्येषामपीति पूर्वपदस्य दीर्घः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । एवंभूतोऽग्निस्त्मनात्मना स्वयमेव चेतति । सम्यग्देवान्यष्टुं जानाति । मंत्रेष्वाड्यादेरात्मन इत्याकारलोपः ॥

॥ अथ चतुर्थी ॥

अयमग्निरुरुष्यत्यमृतादिव जन्मनः ।
सहसश्चित्सहीयान्देवो जीवातवे कृतः ॥४॥

अयं । अग्निः । उरुष्यति । अमृतात्ऽइव । जन्मनः ।
सहसः । चित् । सहीयान् । देवः । जीवातवे । कृतः ॥४॥

अयमग्निरमृतादमरणाद्देवनिमित्ताद्भयादिव जन्मनो जायमानान्मनुष्यनिमित्ताद्भयादप्युरुष्यति । तस्माद्रक्षति । उरुष्यती रक्षाकर्मेति यास्कः । भाववाचिनोऽमृतशब्दस्य नञा बहुव्रीहौ नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं । भीत्रार्थानामित्यपादानसंज्ञा । अपि चायं देवः सहसश्चित् । सह इति बलनाम । तस्मादुत्तरस्य मत्वर्थीयस्य बहुलं छंदसीति लुक् । चिच्छब्दोऽप्यर्थः । सहस्वतो बलवतोऽपि सहीयान् बलवत्तरः । सहस्विशब्दादीयसुनि विन्मतोरिति विनो लुक् । टेरिति टिलोपः । एवंभूतो देवो जीवातवे जीवनहेतवे यागाय कृतः । ब्रह्मणा सृष्टः ॥

॥ इत्यष्टमस्याष्टमे चतुस्त्रिंशो वर्गः ॥

पतंगमिति तृचं षड्विंशं सूक्तं प्रजापतिपुत्रस्य पतंगस्यार्षं। आद्या जगती तत-स्त्रिष्टुभौ। मायाभेदस्य प्रतिपाद्यत्वात्तद्देवत्यमिदं सूक्तं। अनुक्रांतं च। पतंगं तृचं पतंगः प्राजापत्यो मायाभेदं जगत्यादीति॥ प्रवर्ग्येऽभिष्टव आद्ये ऋचौ। सूत्रितं च। पतंगमक्तमसुरस्य मायया यो नः सनुत्यः। आ॰ ४.७.। इति॥

॥ तत्र प्रथमा ॥

पतंगमक्तमसुरस्य मायया हृदा पश्यंति मनसा विपश्चितः।
समुद्रे अंतः कवयो वि चक्षते मरीचीनां पदमिच्छंति वेधसः॥१॥
पतंगं। अक्तं। असुरस्य। मायया। हृदा। पश्यंति। मनसा। विपःऽचितः।
समुद्रे। अंतरिति। कवयः। वि। चक्षते। मरीचीनां। पदं। इच्छंति। वेधसः॥१॥

असुरस्यासनकुशलस्य सर्वोपाधिविहीनस्य परब्रह्मणः संबंधिन्या मायया त्रि-गुणात्मिकयाक्तं व्यक्तमभिव्यक्तं। यद्वा मायेति प्रज्ञानाम। प्रज्ञया संबद्धं सर्वज्ञं पतंगं। पतति गच्छतीति पतंगः सूर्यः। तं विपश्चितो विद्वांसो हृदा हृत्स्थेन। तात्स्थ्यात्ताच्छब्द्यं। हृदि निरुद्धेन मनसा पश्यंति। जानंति। कवयः क्रांतदर्शिनस्ते समुद्रे। समुद्रवंत्यस्माद्रश्मय इति समुद्रं सूर्यमंडलं। तस्मिन्नंतर्मध्ये वि चक्षते। विपश्यंति। मंडलांतर्वर्तिनं हिरण्मयं पुरुषमपि जानंतीत्यर्थः। य एवं वेधसो विधातार उक्तप्रकारेण सूर्योपासनस्य कर्तारस्ते मरीचीनां रश्मीनां पदं स्थानं सूर्यमंडलमिच्छंति। अभिलषंति। तदुपासनया प्राप्नुवंतीत्यर्थः। यद्वा। माययाक्तं जीवरूपेणाभिव्यक्तमात्मानं विपश्चितो वेदांताभिज्ञा हृत्स्थेनांतर्मुखेन मनसा पतंगं। पतति व्याप्नोतीति पतंगः परमात्मा। तं पश्यंति। उपाधिपरित्यागेन जीवात्मनः परमात्मना तादात्म्यं साक्षात्कुर्वंतीत्यर्थः। अपि च ते कवयः क्रांतदर्शिनो वेदांताभिज्ञाः समुद्रे। समुद्रवंत्यस्माद्भूतानीति समुद्रः परमात्मा। तस्मिन्नधिष्ठानभूतेऽंतर्मध्ये सर्वं दृश्यजातमध्यस्तत्वेन वि चक्षते। वि पश्यंतीति। अतो दृग्व्यतिरिक्तस्य सर्वस्य मिथ्यात्वाद्वेधसो विधातारस्ते मरीचीनां वृत्तिज्ञानानां पदमधिष्ठानभूतं सच्चित्सुखात्मकं यत्परं ब्रह्म तदेवेच्छंति। तद्भावप्राप्तिमेव कामयंते॥

वाग्देवत्ये पशौ पतंगो वाचमिति पुरोडाशस्यानुवाक्या। सूत्रितं च। यद्वाग्वदंत्यविचेतनानि पतंगो वाचं मनसा बिभर्ति। आ॰ ३.८.। इति॥

॥ सैषा द्वितीया ॥

पतंगो वाचं मनसा बिभर्ति तां गंधर्वोऽवदद्गर्भे अंतः ।
तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो नि पांति ॥२॥

पतंगः । वाचं । मनसा । बिभर्ति । तां । गंधर्वः । अवदत् । गर्भे । अंतरिति ।
तां । द्योतमानां । स्वर्यं । मनीषां । ऋतस्य । पदे । कवयः । नि । पांति ॥२॥

पतंगः सूर्यो वाचं त्रयीरूपां मनसा प्रज्ञया बिभर्ति । धारयति । श्रूयते हि । ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः । तै॰ ब्रा॰ ३. १२. ९. । इति । तामेव वाचं गर्भे शरीरस्य मध्ये वर्तमानो गंधर्वः । गाः शब्दान्धारयतीति गंधर्वः प्राणवायुः । अंतर्मध्येऽवदत् । वदति । प्रेरयति । मारुतस्तूरसि चरन्मंद्रं जनयति स्वरं । पा॰ शि॰ २. ९. । इति स्मरणात् । द्योतमानां स्वर्यं स्वर्गमयित्रीं स्वर्गाय हितां वा मनीषां मनस ईशित्रीं तां त्रयीरूपां वाचमृतस्य यज्ञस्य सत्यभूतस्य सूर्यस्य वा पदे स्थाने कवयो मेधाविन ऋषयो नि पांति । अध्यापनेन नितरां रक्षंति । यद्वा पतंगः सर्वोपाधिशून्यो व्याप्तः परमात्मा । स सृष्ट्यादौ वाचं मनसा बिभर्ति । कानि कानि स्रष्टव्यानीति पर्यालोचनेन मनसा सकलार्थप्रतिपादकं वेदं परामृष्टवानित्यर्थः । स्मर्यते हि । वेदशब्देभ्य एवादौ निर्ममे स महेश्वर इति । गर्भे हिरण्मये ब्रह्मांडेऽंतर्वर्तमानो गंधर्वो हिरण्यगर्भस्तां वाचमवदत् । प्रथममुच्चारितवान् । द्योतमानत्वादिगुणविशिष्टां तां वाचं कवयः क्रांतदर्शिनो देवा ऋतस्य सत्यस्य ब्रह्मणः पदे स्थाने नि पांति । निभृतं रक्षंति ॥

प्रवर्ग्येऽभिष्टवेऽपश्यं गोपामित्येषा । सूत्रितं च । अपश्यं गोपामनिपद्यमानं स्रक्के द्रप्स्यस्य । आ॰ ४. ६. । इति ॥

॥ सैषा तृतीया ॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरंतं ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वंतः ॥३॥

अपश्यं । गोऽपां । अनिऽपद्यमानं । आ । च । परा । च । पथिऽभिः । चरंतं ।
सः । सध्रीचीः । सः । विषूचीः । वसानः । आ । वरीवर्ति । भुवनेषु । अंतरिति ॥३॥

व्याख्यातेयमस्यवामीयसूक्ते । १.१६४.३१.। गोपां गोपायितारमादित्यमपश्यं। अज्ञासिषं। एष हि सर्वाणि भूतजातान्युदयास्तमयादिकर्मणा गोपायति। कीदृशं। अनिपद्यमानं। उच्चैर्गच्छंतं। न ह्यसौ कदाचिन्नीचैः पद्यते। पथिभिराकाशमार्गैः पूर्वाह्ण आ चरंतं। अस्मानभिलक्ष्य गच्छंतं। सायंसमये परा चरंतं। पराङ्मुखं गच्छंतं। प्रकारद्वयसमुच्चयार्थौ चशब्दौ। स सूर्यः सध्रीचीः सहांचंतीः विषूचीर्विविधं पृथक् पृथगंचंतीः स्वस्वव्यापाराय गच्छंतीः। प्राच्याद्या महादिशः सध्रीच्यो विषूच्यः कोणदिशः। वसानः स्वभासाच्छादयन् प्रकाशयन्भुवनेषु लोकेष्वंतर्मध्य आवरीवर्ति। पुनःपुनरुद्यन्नस्तं गच्छन्नावर्तते। यद्वा गोपां शरीरस्य गोपायितारमनिपद्यमानमविनाशिनमविपन्नमा च परा चाभिमुखेन च पराङ्मुखेन च पथिभिर्नाडीलक्षणैर्मार्गैश्चरंतं शरीरे वर्तमानं प्राणमपश्यं। अहमदर्शं ॥

॥ इत्यष्टमस्याष्टमे पंचत्रिंशो वर्गः ॥

त्यमू ष्विति तृचं सप्तविंशं सूक्तं तार्क्ष्यपुत्रस्यारिष्टनेमेरार्षं त्रैष्टुभं तार्क्ष्यदेवताकं। तथा चानुक्रांतं। त्यमू ष्वरिष्टनेमिस्तार्क्ष्यस्तार्क्ष्यमिति ॥ अहर्गणेषु द्वितीयादिष्वहःसु निष्केवल्यसूक्तानां पुरस्तादिदं सूक्तं शंसनीयं। सूत्रितं च। त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यमग्रे निष्केवल्यसूक्तानां। आ॰ ७.१.। इति ॥ विषुवति तु निष्केवल्यसूक्तानामंत एव तत्सूक्तं। सूत्र्यते हि। त्यमू ष्वितीह तार्क्ष्यमंततः। आ॰ ८.६.। इति ॥ महाव्रतेऽपि निष्केवल्य एतत्। तथैव पंचमारण्यके सूत्र्यते ॥

॥ तत्र प्रथमा ॥

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानां।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥१॥

त्यं। ऊं इति। सु। वाजिनं। देवऽजूतं। सहऽवानं। तरुतारं। रथानां।
अरिष्टऽनेमिं। पृतनाजं। आशुं। स्वस्तये। तार्क्ष्यं। इह। हुवेम ॥१॥

त्यमु तं प्रसिद्धमेव तार्क्ष्यं तृक्षपुत्रं सुपर्णं। तृक्षाद्यञ्। गर्गादिः। स्वस्तये क्षेमायेहास्मिन्कर्मणि हुवेम। भृशमाह्वयेमहि। बहुलं छंदसीति ह्वयतेः संप्रसारणं। लिङ्याशिष्यङ्। यद्वा प्रार्थनायां लिङि व्यत्ययेन शः। कीदृशं। वाजिनं बलवंतमन्नवंतं वा देवजूतं देवैः सोमाहरणार्थं प्रेरितं। जु इति गत्यर्थः सौत्रो धातुः। अस्मात्कर्मणि निष्ठा। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। यद्वा देवैः प्रीय-

माणं तर्पमाणं। यदाह यास्कः। जूतिर्गतिः प्रीतिर्वा देवजूतं देवप्रीतं वा। नि° १०.२८.। इति। सहावानं सहस्वंतं बलवंतमभिभवनवंतं वा। अत एव रथानामन्यदीयानां तरुतारं संग्रामे जेतारं। यद्वा रंहणशीला इमे लोका रथाः। तान्सोमाहरणसमये शीघ्रं तरीतारं। श्रूयते हि। एष हीमाँल्लोकान्सद्यस्तरतीति। तरतेस्तृचि ग्रसितस्कभितेत्यादावुडागमो निपात्यते। अरिष्टनेमिमहिंसितरथं। यद्वा नेमिर्नमनशीलमायुधं। अहिंसितायुधं। अथवा। उपचाराज्जनके जन्यशब्दः। अरिष्टनेमेर्मम जनकं पृतनाजं पृतनानां शत्रुसेनानां प्राजितारं प्रगमयितारं जेतारं वा। अज गतिक्षेपणयोः। अस्मात्क्विप्। वलादावार्धधातुके विकल्प इष्यत इति वचनाद्वीभावाभावः। जयतेर्वा डप्रत्ययः। आशुं शीघ्रगामिनं॥

॥ अथ द्वितीया ॥

इंद्रस्येव रातिमाजोहुवानाः स्वस्तये नावमिवा रुहेम।
उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषाम ॥२॥

इंद्रस्यऽइव। रातिं। आऽजोहुवानाः। स्वस्तये। नावंऽइव। आ। रुहेम।
उर्वी इति। न। पृथ्वी इति। बहुले इति। गभीरे इति। मा। वां। आऽईतौ। मा। पराऽइतौ। रिषाम ॥२॥

इंद्रस्येव तार्क्ष्यस्य रातिं दानमाजोहुवाना पुनः पुनराह्वयंतो वयं स्वस्तयेऽविनाशाय नावमिव। नौर्यथा दुरवगाहं समुद्रं तारयति तथा दुःखस्य तारयित्रीं तामा रुहेम। आरूढा भूयास्म। रुहेराशीर्लिङि लिङ्याशिष्यङ्। हे उर्वी उर्व्यौ विस्तीर्णे हे पृथ्वी पृथिवी प्रथिते विख्याते हे बहुले अनंते गभीरे गांभीर्योपेते ईदृश्यौ हे द्यावापृथिव्यौ। नशब्दः संप्रत्यर्थे। संप्रति वां युवयोः संबंधिन्येतौ तार्क्ष्यस्यागमे परेतौ परागमने च वयं मा रिषाम। हिंसिता मा भूम। आङ्पराभ्यामुत्तरस्येणो भावे क्तिन्। तादौ च नितीति गतेः प्रकृतिस्वरत्वं॥

॥ अथ तृतीया ॥

सद्यश्चिद्यः शवसा पंच कृष्टीः सूर्य इव ज्योतिषापस्ततान।
सहस्रसाः शतसा अस्य रंहिर्न स्मा वरंते युवतिं न शर्यां ॥३॥

सद्यः। चित्। यः। शवसा। पंच। कृष्टीः। सूर्यःऽइव। ज्योतिषा। अपः। ततान।
सहस्रऽसाः। शतऽसाः। अस्य। रंहिः। न। स्म। वरंते। युवतिं। न। शर्यां ॥३॥

यश्चिद्योऽपि तार्क्ष्यः सद्यः शीघ्रं शवसात्मीयेन बलेनाप उदकान्यमृतलक्षणानि ततान विस्तारितवान् सूर्य इव। यथा सूर्यः सर्वस्य प्रेरक आदित्यो ज्योतिषात्मीयेन तेजसा वर्षर्तावपो विस्तारयति तद्वत्। कृष्टयो मनुष्याः। पंच कृष्टीः पंचविधान्कृष्टीन्मनुष्यान्प्रति। निषादपंचमांश्चतुरो वर्णानित्यर्थः। अस्य तार्क्ष्यस्य रंहिर्गतिः सहस्रसाः सहस्रसंख्यस्य धनस्य दात्री संभक्त्री वा भवति। तथा शतसाः शतस्य च दात्री संभक्त्री वा भवति। सनतेः सनोतेर्वा जनसनखनेति विट्। विड्वनोरनुनासिकस्यादित्यात्वं। न स्म न खल्वीदृशीं तार्क्ष्यस्य ते गतिं वरंते। के चन वारयंति। तत्र दृष्टांतः। शर्यां शरकांडमयीमिषुं धनुषो मुक्तां युवतिं न लक्ष्येण मिश्रीभवंतीमिव। सा यथा दुर्निवारा तथैषा कैश्चिदपि वारयितुमशक्येत्यर्थः। अत्र निरुक्तं। सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पंच मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयंति प्रयुवतीमिव शरमयीमिषुं। नि० १०.२९.। इति ॥

॥ इत्यष्टमस्याष्टमे षट्त्रिंशो वर्गः ॥

उत्तिष्ठतेति तृचमष्टाविंशं सूक्तमैंद्रं। आद्यानुष्टुप् शिष्टे त्रिष्टुभौ। उशीनरपुत्रः शिबिर्नाम राजा प्रथमाया ऋषिः। काशीनामधिपतिः प्रतर्दनो नाम द्वितीयायाः। रोहिदश्वपुत्रो वसुमना नाम तृतीयायाः। तथा चानुक्रांतं। उत्तिष्ठतैकर्चाः शिबिरौशीनरः काशिराजः प्रतर्दनो रौहिदश्वो वसुमना आद्यानुष्टुबिति ॥ दधिघर्म्य आद्या वक्तव्या। सूचितं च। होतर्वदस्वेत्युक्त उत्तिष्ठताव पश्यतेत्याह। आ० ५.१३.। इति ॥

॥ सैषाद्या ॥

उत्तिष्ठताव पश्यतेंद्रस्य भागमृत्वियं।
यदि श्रातो जुहोतन यद्यश्रातो ममत्तन ॥१॥

उत्। तिष्ठत। अव। पश्यत। इंद्रस्य। भागं। ऋत्वियं।
यदि। श्रातः। जुहोतन। यदि। अश्रातः। ममत्तन ॥१॥

हे ऋत्विज उत्तिष्ठत। आ समंतादूर्ध्वमुत्तिष्ठत। नोपविशत। ऊर्ध्वकर्मत्वादात्मनेपदाभावः। उत्थायर्त्वियमृतौ वसंतादिकाले भवमिंद्रस्य भागं भजनीयं दधिघर्मं पच्यमानमव पश्यत। निरीक्षध्वं। ऋतुशब्दाद्भवार्थे छंदसि घस्। सिति चेति पदसंज्ञया भसंज्ञाया बाधादोर्गुणाभावः। भजेः कर्मणि घञंतो भागशब्दः। कर्षात्वत

इत्यंतोदात्तत्वं। यदि स भागः श्रातः पक्वस्तर्हि जुहोतन। इंद्रार्थमग्नौ जुहुत। तप्त-नप्तनथनाश्चेति तस्य तनबादेशः। भीह्रीत्यादिना पिति प्रत्ययात्पूर्वस्योदात्तत्वं। यद्यश्रातोऽपक्वस्तर्हि ममत्तन। माद्यत। यद्वा स्तुतिभिर्मोदयत। अत्र तेनैव सूत्रेण तनबादेशः॥

तस्यैव दधिघर्मस्य श्रातं हविरित्येषानुवाक्या। सूचितं च। श्रातं हविरित्युक्तः श्रातं हविरित्यन्वाह। आ° ५. १३.। इति॥

॥ सैषा द्वितीया ॥

श्रातं हविरो ष्विंद्र प्र याहि जगाम सूरो अध्वनो विमध्यं।
परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरंतं॥२॥
श्रातं। हविः। ओ इति। सु। इंद्र। प्र। याहि। जगाम। सूरः। अध्वनः। विऽमध्यं।
परि। त्वा। आसते। निधिऽभिः। सखायः। कुलऽपाः। न। व्राजऽपतिं। चरंतं॥२॥

हे इंद्र हविर्दधिघर्माख्यं त्वदीयं श्रातं। पक्वं। श्रीञ् पाक इत्यस्मान्निष्ठायामपस्पृधेयामित्यादौ श्राभावो निपात्यते। ओ आ उ सु सुष्ठु प्र याहि। प्रकर्षेण शीघ्रमागच्छ। सूरः सूर्योऽध्वनो गंतव्यस्य मार्गस्य विमध्यं विकलमध्यमीषदूनं मध्यभागं जगाम। गतवान्। तव यागार्थं मध्याह्नो जात इत्यर्थः। सखायः समानख्याना ऋत्विजश्च निधिभिर्निहितैरभिन्यासादितैः सोमैः सार्धं त्वा त्वां पर्यासते। पर्युपासते। तत्र दृष्टांतः। कुलपा न कुलस्य वंशस्य रक्षकाः पुत्रा यथा व्राजपतिं। व्राजा गंतव्या गृहाः। तेषां पतिं चरंतं गच्छंतमुपासते तथेत्यर्थः। व्रज गतौ। अस्मात्कर्मणि घञ्। अजिव्रज्योश्चेति कुत्वनिषेधः। कर्षात्वत इत्यंतोदात्तत्वे पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वं॥

तस्यैव दधिघर्मस्य श्रातं मन्य इत्येषा याज्या। सूत्र्यते हि। श्रातं मन्य ऊधनि श्रातमग्नाविति यजति। आ° ५. १३.। इति॥

॥ सैषा तृतीया ॥

श्रातं मन्य ऊधनि श्रातमग्नौ सुश्रातं मन्ये तदृतं नवीयः।
माध्यंदिनस्य सवनस्य दध्नः पिबेंद्र वज्रिन्पुरुकृज्जुषाणः॥३॥

श्रातं। मन्ये। ऊधनि। श्रातं। अग्नौ। सुऽश्रातं। मन्ये। तत्। ऋतं। नवीयः।
माध्यँदिनस्य। सवनस्य। दध्नः। पिब। इंद्र। वज्रिन्। पुरुऽकृत्। जुषाणः ॥३॥

ऊधनि गोरूधस्येतद्दधिघर्माख्यं हविः पयोरूपेण श्रातं पक्वमिति मन्ये। जाने। पुनश्च दुग्धं पयोऽग्नावपि श्रातं पक्वं। इदानीं दध्यवस्थमप्यग्नौ पच्यते। अतः सुश्रातं सुपक्वमिति मन्ये। जाने। अत एतद्धविर्ऋतं सत्यभूतं नवीयो नवतरं प्रत्ययतरं भवति। हे वज्रिन् वज्रवन् हे पुरुकृद्बहुकर्मकृदिंद्र जुषाणः प्रीयमाणस्त्वं माध्यंदिनस्य माध्यंदिने भवस्य सवनस्य सोमस्य संबंधिनो दध्नः। कर्मणि षष्ठी। दधिघर्माख्यं हविः पिब ॥

॥ इत्यष्टमस्याष्टमे सप्तत्रिंशो वर्गः ॥

प्र ससाहिष इति तृचमेकोनत्रिंशं सूक्तमिंद्रपुत्रस्य जयस्यार्षं त्रैष्टुभमैंद्रं। तथा चानुक्रांतं। प्र ससाहिषे जय ऐंद्र इति। गतः सूक्तविनियोगः ॥ दर्श इंद्रस्य हविषः प्र ससाहिष इत्येषा याज्या। सूत्रितं च। प्र ससाहिषे पुरुहूत शत्रून् महाँ इंद्रो य ओजसा। आ॰ १.६.। इति ॥ एकादशिन ऐंद्रपशौ पुरोडाशस्येयमेव याज्या। सूत्रितं च। प्र ससाहिषे पुरुहूत शत्रूंस्वस्तये वाजिभिश्च प्रणेतः। आ॰ ३.७.। इति ॥ देवसुवां हविषींद्रस्येयमेवानुवाक्या। सूत्रितं च। प्र ससाहिषे पुरुहूत शत्रूंभुवस्त्वमिंद्र ब्रह्मणा महान्। आ॰ ४.११.। इति ॥

॥ सैषा प्रथमा ॥

प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु।
इंद्रा भर दक्षिणेना वसूनि पतिः सिंधूनामसि रेवतीनां ॥१॥
प्र। ससहिषे। पुरुऽहूत। शत्रून्। ज्येष्ठः। ते। शुष्मः। इह। रातिः। अस्तु।
इंद्र। आ। भर। दक्षिणेन। वसूनि। पतिः। सिंधूनां। असि। रेवतीनां ॥१॥

हे पुरुहूत बहुभिराहूतेंद्र शत्रून्वैरिणः प्र ससाहिषे। प्रकर्षेणाभिभवसि। ते तव शुष्मः शोषकं बलं ज्येष्ठः प्रशस्यतमं वृद्धतमं वा भवति। इहास्मिन्कर्मणि रातिस्तव दानमस्तु। अस्मभ्यं भवतु। तदर्थं हे इंद्र दक्षिणेन हस्तेन वसूनि धनान्या भर। आहर। आनय। त्वं रेवतीनां रयिमतीनां बहुधनानां सिंधूनां स्यंदनशीलानां नदीनां पतिरसि। स्वामी भवसि। रयिशब्दान्मतुपि रयेर्मतौ बहुलमिति संप्रसारणं। छंदसीर इति मतुपो वत्वं। रैशब्दाच्चेति तस्योदात्तत्वं ॥

वैमृधस्य हविषो मृगो नेत्येषा याज्या। सूचितं च। वि न इंद्र मृधो जहि मृगो न भीमः कुचरो गिरिष्ठाः। आ॰ २. १०.। इति ॥

॥ सैषा द्वितीया ॥

मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगंथा परस्याः।
सृकं संशाय पविमिंद्र तिग्मं वि शत्रूंताळ्हि वि मृधो नुदस्व ॥२॥

मृगः। न। भीमः। कुचरः। गिरिऽस्थाः। पराऽवतः। आ। जगंथ। परस्याः।
सृकं। संऽशाय। पविं। इंद्र। तिग्मं। वि। शत्रून्। ताळ्हि। वि। मृधः। नुदस्व ॥२॥

कुचरः कुत्सितचरणो गिरिष्ठाः पर्वतनिवासी मृगो न सिंह इव हे इंद्र त्वं भीमो भयंकरोऽसि। स त्वं परस्याः परावतोऽतिशयेन दूराद्द्युलोकादा जगंथ। आगच्छ। गमेश्छांदसे लिटि क्रादिनियमप्राप्तस्येट उपदेशेऽत्वत इति प्रतिषेधः। आगत्य च सृकं सरणशीलं तिग्मं तीक्ष्णं पविं वज्रं संशाय सम्यक् तीक्ष्णीकृत्य शत्रूनस्मदीयान्वैरिणो हे इंद्र तेन वज्रेण वि ताळ्हि। विशेषेण ताडय। विनाशयेत्यर्थः। तड आघाते। अस्माल्लोटि एयंतादूपमेतत्। तथा मृधः संग्रामोद्युक्तान्युयुत्सूनन्यानपि वि नुदस्व। विशेषेण तिरस्कुरु ॥

॥ अथ तृतीया ॥

इंद्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनां।
अपानुदो जनममित्रयंतमुरुं देवेभ्यो अकृणोरु लोकं ॥३॥

इंद्र। क्षत्रं। अभि। वामं। ओजः। अजायथाः। वृषभ। चर्षणीनां।
अप। अनुदः। जनं। अमित्रऽयंतं। उरुं। देवेभ्यः। अकृणोः। ऊं इति। लोकं ॥३॥

हे इंद्र क्षत्रं क्षतात्त्रायकं वामं वननीयमोजो बलमभिलक्ष्याजायथाः। उत्पन्नोऽसि। हे वृषभ कामानां वर्षितः चर्षणीनां मनुष्याणामस्माकं। नामन्यतरस्यामिति नाम उदात्तत्वं। अमित्रयंतं। अमित्रः शत्रुः। स इवाचरंतं जनमपानुदः। अपागमयः। देवेभ्यश्चोरुं विस्तीर्णं लोकं स्वर्गाख्यमकृणोः। अकार्षीः। उशब्दः समुच्चये ॥

॥ इत्यष्टमस्याष्टमेऽष्टत्रिंशो वर्गः ॥

प्रथ इति तृचं त्रिंशं सूक्तं वैश्वदेवं त्रैष्टुभं। वासिष्ठः प्रथसंज्ञ ऋषिः प्रथमायाः। भारद्वाजः सप्रथाख्य ऋषिर्द्वितीयायाः। सूर्यपुत्रो घर्म ऋषिस्तृतीयायाः। तथा चानुक्रांतं। प्रथश्चैकर्चाः प्रथो वासिष्ठः सप्रथो भारद्वाजो घर्मः सौर्यो वैश्वदेवमिति ॥ प्रवर्ग्येऽभिष्टव एतत्सूक्तं। सूचितं च। गणानां त्वा प्रथश्च यस्य। आ॰ ४.६.। इति ॥

॥ तत्र प्रथमा ॥

प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत्।
धातुर्द्युतानात्सवितुश्च विष्णो रथंतरमा जभारा वसिष्ठः ॥१॥

प्रथः। च। यस्य। सऽप्रथः। च। नाम। आनुऽस्तुभस्य। हविषः। हविः। यत्।
धातुः। द्युतानात्। सवितुः। च। विष्णोः। रथंऽतरं। आ। जभार। वसिष्ठः ॥१॥

यस्य वसिष्ठस्य प्रथो नाम पुत्रो यस्य भरद्वाजस्य सप्रथो नाम पुत्रस्तयोर्मध्ये वसिष्ठ आनुष्टुभस्यानुष्टुप्छंदसा युक्तस्य हविषो घर्माख्यस्य यद्धविर्हविष्ट्वापादकं रथंतरं। रथरंहःसाधनं साम तद्रथंतरं। धातुर्धातृसंज्ञाद्देवाद्द्युतानाद्द्योतमानात्सवितुश्च विष्णोश्चा जभार। आजहार। हृतवान्। हृग्रहोर्भ इति भत्वं। रथशब्दोपपदात्तरतेः संज्ञायां भृतॄवृजीति खच्। अरुर्द्विषदजंतस्येति मुमागमः ॥

॥ अथ द्वितीया ॥

अविंदन्ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत्।
धातुर्द्युतानात्सवितुश्च विष्णोर्भरद्वाजो बृहदा चक्रे अग्नेः ॥२॥

अविंदन्। ते। अतिऽहितं। यत्। आसीत्। यज्ञस्य। धाम। परमं। गुहा। यत्।
धातुः। द्युतानात्। सवितुः। च। विष्णोः। भरत्ऽवाजः। बृहत्। आ। चक्रे। अग्नेः ॥२॥

ते धात्रादयस्तदविंदन् अलभंत यद्बृहत्सामाख्यं घर्मस्य हविषः संस्कारकमतिहितं तिरोहितमासीत्। यच्च बृहत्साम यज्ञस्य ज्योतिष्टोमादेः परममुत्कृष्टं धाम धारकं शरीरभूतं वा गुहा गुहायामस्मदादिविषये निहितमासीत् तत्ते धात्रादयोऽलभंत। तेभ्योऽग्नेश्च सकाशात्तद्बृहत्साम भरद्वाज ऋषिरा चक्रे। आभिमुख्येन कृतवान्। आहृतवानित्यर्थः ॥

॥ अथ तृतीया ॥

तेऽविंदन्मनसा दीध्याना यजुः ष्कन्नं प्रथमं देवयानं ।
धातुर्द्युतानात्सवितुश्च विष्णोरा सूर्यादभरन्घर्ममेते ॥३॥

ते । अविंदन् । मनसा । दीध्यानाः । यजुः । स्कन्नं । प्रथमं । देवऽयानं ।
धातुः । द्युतानात् । सवितुः । च । विष्णोः । आ । सूर्यात् । अभरन् । घर्मं । एते ॥३॥

ते धात्रादयो दीध्याना दीप्यमानाः संतो मनसा बुद्ध्याविंदन् । अलभंत । किं तत् । यजुर्यागसाधनं स्कन्नं स्कंदनीयमासेचनीयं प्रवृंजनसाधनं प्रथमं मुख्यं देवयानं देवानां प्राप्तिसाधनं घर्मं । एवं धात्रादिभिः प्रथममुपलब्धं तं घर्मं धातुर्द्योतमानात्सवितुर्विष्णोः सूर्याच्चैत ऋत्विज आभरन् । आहरन् । आनीतवंत इत्यर्थः ॥

॥ इत्यष्टमस्याष्टम एकोनचत्वारिंशो वर्गः ॥

बृहस्पतिरिति तृचमेकत्रिंशं सूक्तं बृहस्पतिदेवत्यं त्रैष्टुभं । बृहस्पतिपुत्रस्तपुर्मुर्धा नामर्षिः । तथा चानुक्रांतं । बृहस्पतिस्तपुर्मूर्धा बार्हस्पत्यमिति ॥ गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

बृहस्पतिर्नयतु दुर्गहा तिरः पुनर्नेषदघशंसाय मन्म ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥१॥

बृहस्पतिः । नयतु । दुःऽगहा । तिरः । पुनः । नेषत् । अघऽशंसाय । मन्म ।
क्षिपत् । अशस्तिं । अप । दुःऽमतिं । हन् । अथ । करत् । यजमानाय । शं । योः ॥१॥

बृहस्पतिर्बृहतां देवानां पतिः पालयिता । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चेति सुडागमस्तलोपश्च । उभे वनस्पत्यादिष्विति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं । दुर्गहा दुर्गमनानां हंता स देवस्तिरो नयतु । तिरस्कर्तव्यानि पापान्यपसारयतु । अघशंसायास्माकमनर्थमाशंसमानाय पुरुषाय मन्म । मन्यतेर्दीप्तिकर्मणो मन्म । दीप्तमायुधं पुनर्नेषत् । नयतु । नयतेर्लेट्यडागमः । सिब्बहुलमिति सिप् । अपि चाशस्तिमयशस्विनं शत्रुं क्षिपतु । अस्मत्तः प्रेरयतु । दुर्मतिं दुर्बुद्धिं चाप हन् । अपहंतु । अथानंतरं शं रोगाणां शमनं योर्भयानां यावनं च करत् ॥

॥ अथ द्वितीया ॥

नराशंसो नोऽवतु प्रयाजे शं नो अस्त्वनुयाजो हवेषु ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥२॥

नराशंसः । नः । अवतु । प्रऽयाजे । शं । नः । अस्तु । अनुऽयाजः । हवेषु ।
क्षिपत् । अशस्तिं । अप । दुःऽमतिं । हन् । अथ । करत् । यजमानाय । शं । योः ॥२॥

पंचसु प्रयाजेषु द्वितीयः प्रयाजो नराशंसदेवताकः । तस्मिन्प्रयाजे देवताभूतो नराशंसो नरैः शंसनीयोऽग्निर्नोऽस्मानवतु । रक्षतु । हवेष्वाह्वानेषु सत्स्वनुयाजः । त्रयोऽनुयाजाः । द्वितीयोऽनुयाजो नराशंसः । तस्यानुयाजस्य देवताभूतो नराशंसोऽग्निश्च नोऽस्माकं शं सुखकरोऽस्तु । बृहस्पतिश्चाशस्तिं क्षिपदित्यादि पूर्ववत् ॥

॥ अथ तृतीया ॥

तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे हंतवा उं ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥३॥

तपुःऽमूर्धा । तपतु । रक्षसः । ये । ब्रह्मऽद्विषः । शरवे । हंतवै । ऊं इति ।
क्षिपत् । अशस्तिं । अप । दुःऽमतिं । हन् । अथ । करत् । यजमानाय । शं । योः ॥३॥

तपुर्मूर्धा तापकशिरस्को बृहस्पती रक्षसो ये ब्रह्मद्विषो ब्राह्मणद्वेष्टारो राक्षसास्तान्राक्षसांस्तपतु । तापयतु । दहत्वित्यर्थः । किमर्थं । शरवे शरुं हिंसकं रक्षसामधिपतिं हंतवै हंतुं । अनुचरान्पूर्वं नाशयतु पश्चादेनमपि नाशयत्वित्यर्थः । शृ हिंसायामित्यस्माच्छृस्वृस्निहीत्यादिनोप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तत्वं । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी । हंतेस्तुमर्थे सेसेनिति तवैप्रत्ययः । अंतश्च तवै युगपदित्याद्यंतयोर्युगपदुदात्तत्वं । उशब्दः पूरकः ॥

॥ इत्यष्टमस्याष्टमे चत्वारिंशो वर्गः ॥

अपश्यमिति तृचं द्वात्रिंशं सूक्तं त्रैष्टुभं । प्रजापतिपुत्रः प्रजावान्नामर्षिः । ऋचः क्रमेण यजमानपत्नीहोतॄणामाशिषः प्रतिपादिकाः । अतस्तद्देवताकाः । तथा चानुक्रांतं । अपश्यं प्रजावान्प्राजापत्योऽन्वृचं यजमानपत्नीहोत्राशिष इति ॥ प्रवर्ग्येऽभिष्टव एतत्सूक्तं । सूच्यते हि । अपश्यं त्वेत्येतस्याद्यया यजमानमीक्षते द्वितीयया पत्नीं तृतीययात्मानं । आ॰ ४. ६. । इति ॥

॥ तत्र प्रथमा ॥

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतं ।
इह प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम ॥१॥
अपश्यं । त्वा । मनसा । चेकितानं । तपसः । जातं । तपसः । विऽभूतं ।
इह । प्रऽजां । इह । रयिं । रराणः । प्र । जायस्व । प्रऽजया । पुत्रऽकाम ॥१॥

हे यजमान त्वा त्वां मनसा बुद्ध्यापश्यं । अदर्शं । कीदृशं । चेकितानं । कर्माणि भृशं जानंतं । तपसो दीक्षारूपाद्व्रताज्जातं पुनरुत्पन्नं । यद्वा जन्मांतरानुष्ठितात्सुकृतादुत्पन्नं । तपसोऽनुष्ठीयमानाद्यज्ञाद्धेतोर्विभूतं व्याप्तं सर्वत्र प्रख्यातं । हे पुत्रकाम पुत्रान्कामयमान स त्वमिहास्मिँल्लोके प्रजां पुत्रपौत्रादिरूपां रराणो रमयन् रयिं धनमिहास्मिँल्लोके रमयन् प्रजया प्रजनेन प्र जायस्व । पुत्रादिरूपेणोत्पद्यस्व । प्रजा उत्पादयेत्यर्थः ॥

॥ अथ द्वितीया ॥

अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानां ।
उप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामे ॥२॥
अपश्यं । त्वा । मनसा । दीध्यानां । स्वायां । तनू इति । ऋत्व्ये । नाधमानां ।
उप । मां । उच्चा । युवतिः । बभूयाः । प्र । जायस्व । प्रजया । पुत्रऽकामे ॥२॥

हे पत्नि दीध्यानां दीप्यमानां स्वायामात्मीयायां तनू तन्वां शरीर ऋत्व्ये । ऋतुकाले भवं गर्भधारणरूपं कर्मर्त्वियं । तस्मिन्निमित्तभूते नाधमानां भर्तुरुपगमनं याचमानां त्वा त्वां मनसापश्यं । अद्राक्षं । हे पुत्रकामे पुत्रान्कामयमाने मामुप मत्समीपं प्राप्य सा त्वमुच्चोच्चैर्भृशं युवतिस्तरुणी बभूयाः । भूयाः । छंदस्युभयथेत्याशीर्लिङः सार्वधातुकत्वाच्छप् । तस्य छांदसः श्लुः । अलिट्यपि व्यत्ययेन भवतेर इत्यभ्यासस्यात्वं । युवतिर्भूत्वा च प्रजया प्रजनेन प्रजायस्व । पुत्रान्प्रसूष्व । जनी प्रादुर्भावे । श्यनि ज्ञाजनोर्जेति जादेशः ॥

॥ अथ तृतीया ॥

अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वंतः ।
अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥३॥

अहं । गर्भं । अदधां । ओषधीषु । अहं । विश्वेषु । भुवनेषु । अंतरिति ।

अहं । प्रऽजाः । अजनयं । पृथिव्यां । अहं । जनिऽभ्यः । अपरीषु । पुत्रान् ॥ ३ ॥

अहं होतौषधीषु शाल्यादिषु फलार्थं गर्भमदधां । धारयामि । विश्वेषु सर्वेष्व-न्येष्वपि भुवनेषु भूतजातेष्वंतर्मध्येऽहमेव गर्भं धारयामि । तथा पृथिव्यां भूम्यां प्रजाः सर्वान्मनुष्यानहमजनयं । जनयामि । जनिभ्यो जायाभ्योऽपरीष्वन्यास्वपि स्त्रीषु पुत्रानहमजनयं । जनयामि । मत्साध्येन यागेन सर्वस्योत्पत्तेरहं सर्वजनहेतुर्भवा-मीत्यर्थः ॥

॥ इत्यष्टमस्याष्टम एकचत्वारिंशो वर्गः ॥

विष्णुरिति तृचं त्रयस्त्रिंशं सूक्तमानुष्टुभं । गर्भाणां त्वष्टा नामर्षिः प्रजापतिपुत्रो विष्णुर्वा । लिंगोक्ता विष्णुत्वष्टृप्रजापतिसिनीवालीसरस्वत्यश्विन इति देवताः । तथा चानुक्रांतं । विष्णुस्त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्यो गर्भार्थाशीर्लिंगोक्त-देवतमानुष्टुभमिति ॥ लैंगिको विनियोगः ॥

॥ तत्र प्रथमा ॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।

आ सिंचतु प्रजापतिर्धाता गर्भं दधातु ते ॥ १ ॥

विष्णुः । योनिं । कल्पयतु । त्वष्टा । रूपाणि । पिंशतु ।

आ । सिंचतु । प्रजाऽपतिः । धाता । गर्भं । दधातु । ते ॥ १ ॥

विष्णुर्व्यापको देवो योनिं गर्भाधानस्थानं कल्पयतु । करोतु । त्वष्टा तनुकर्तैत-त्संज्ञको देवश्च रूपाणि निरूपकाणि स्त्रीत्वपुंस्त्वाभिव्यंजकानि चिह्नानि पिंशतु । अवयवीकरोतु । पिश अवयवे । मुचादित्वान्नुम् । एवं प्रक्लृप्तायां योन्यां प्रजापती रेत आ सिंचतु । निषिंचतु । सृजत्वित्यर्थः । धाता धारको देवो हे जाये ते तव गर्भं गर्भरूपेण परिणतं तद्रेतो दधातु । तत्रैव धारयतु । गर्भपातापप्रसवा मा भूवन्नित्यर्थः ॥

॥ अथ द्वितीया ॥

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।

गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥ २ ॥

गर्भं। धेहि। सिनीवालि। गर्भं। धेहि। सरस्वति।
गर्भं। ते। अश्विनौ। देवौ। आ। धत्तां। पुष्करऽस्रजा ॥२॥

हे सिनीवालि एतत्संज्ञे देवि गर्भं धेहि। निषिक्तं गर्भं धारय। हे सरस्वति त्वं च निषिक्तं गर्भं धारय। हे जाये पुष्करस्रजा पुष्करमालिनौ स्वर्णकमलाभरणावश्विनौ देवौ ते तव गर्भमा धत्तां। प्रक्षिपतां कुरुतामित्यर्थः ॥

॥ अथ तृतीया ॥

हिरण्ययीं अरणी यं निर्मंथतो अश्विना।
तं ते गर्भं हवामहे दशमे मासि सूतवे ॥३॥
हिरण्ययी इति। अरणी इति। यं। निःऽमंथतः। अश्विना।
तं। ते। गर्भं। हवामहे। दशमे। मासि। सूतवे ॥३॥

हिरण्ययी हिरण्मय्यावरणी यं गर्भमुद्दिश्याश्विनाश्विनौ देवौ निर्मंथतो निर्मंथितवंतौ हे जाये ते तुभ्यं त्वदर्थं तं गर्भं हवामहे। आह्वयामहे। दशमे मासि सूतवे प्रसोतुं। पद्दन्नित्यादिना मासशब्दस्य मास्भावः। सूतेस्तुमर्थे सेसेनिति तवेन्प्रत्ययः॥

॥ इत्यष्टमस्याष्टमे द्विचत्वारिंशो वर्गः ॥

महीति तृचं चतुस्त्रिंशं सूक्तं वरुणपुत्रस्य सत्यधृतेरार्षं गायत्रमादित्यदेवताकं। तथा चानुक्रांतं। महि सत्यधृतिर्वारुणिरादित्यं स्वस्त्ययनं गायत्रं वा इति ॥ धनलिप्सया प्रवसंतं शिष्यमाचार्योऽनेन सूक्तेनाभिमंत्रयते। सूच्यते हि। महि त्रीणामित्यनुमंत्र्यैवमतिसृष्टस्य न कुतश्चिद्भयं भवतीति विज्ञायते। आ० गृ० ३. १०.। इति ॥

॥ तत्र प्रथमा ॥

महिं त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः।
दुराधर्षं वरुणस्य ॥१॥
महिं। त्रीणां। अवः। अस्तु। द्युक्षं। मित्रस्यं। अर्यम्णः।
दुःऽआधर्षं। वरुणस्य ॥१॥

त्रीणां त्रयाणां मित्रस्यार्यम्णो वरुणस्य च द्युक्षं दीप्तमत एव दुराधर्षमन्यैर्धर्षितुं

बाधितुमशक्यं महि महद्वो रक्षणमस्माकमस्तु। त्रीणामित्यपि छंदसि दृश्यत इति वचनात्। पा॰ ७.१.५३.१.। त्रयादेशाभावः। नामन्यतरस्यामिति नाम उदात्तत्वं ॥

॥ अथ द्वितीया ॥

नहि तेषाममा चन नाध्वंसु वारणेषु।
ईशे रिपुरघशंसः ॥२॥

नहि। तेषां। अमा। चन। न। अध्वंऽसु। वारणेषु।
ईशे। रिपुः। अघऽशंसः ॥२॥

अमेति गृहनाम। अमा चन गृहेष्वपि तेषां वरुणमित्रार्यम्णां तदनुगृहीतानां स्तोतॄणां वाघशंसोऽघमनर्थमाशंसमानो रिपुः शत्रुर्न हीशे। न खलु हिंसितुमीष्टे। लोपस्त आत्मनेपदेष्विति तलोपः। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते। तथाध्वसु मार्गेषु वारणेषु यत्र पुरुषा निवार्यंते तेषु च स्थानेषु शत्रुर्निवारयितुं नेष्टे ॥

॥ अथ तृतीया ॥

यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय।
ज्योतिर्यच्छंत्यजस्रं ॥३॥

यस्मै। पुत्रासः। अदितेः। प्र। जीवसे। मर्त्याय।
ज्योतिः। यच्छंति। अजस्रं ॥३॥

अदितेरदीनाया देवमातुः पुत्रासः पुत्रा मित्रादयो यस्मै मर्त्याय मनुष्याय स्तोत्रेऽजस्रमविच्छिन्नं ज्योतिस्तेजो जीवसे जीवितुं प्रयच्छंति तस्य शत्रुर्नेश्वर इत्यर्थः ॥

॥ इत्यष्टमस्याष्टमे त्रिचत्वारिंशो वर्गः ॥

वात इति तृचं पंचत्रिंशं सूक्तं वातगोत्रस्योलस्यार्षं गायत्रं वायुदेवताकं। तथा चानुक्रांतं। वातो वातायन उलो वायव्यमिति। गतो विनियोगः ॥

॥ तत्र प्रथमा ॥

वात आ वातु भेषजं शंभु मयोभु नो हृदे।
प्र ण आयूंषि तारिषत् ॥१॥

वातः । आ । वातु । भेषजं । शंऽभु । मयःऽभु । नः । हृदे ।
प्र । नः । आयूंषि । तारिषत् ॥ १ ॥

वातो वायुर्नोऽस्माकं हृदे हृदयाय भेषजमौषधमुदकं वा वातु । आगमयतु । कीदृग्भूतं । शंभु रोगशमनस्य भावयितृ मयोभु सुखस्य च भावयितृ । अपि च नोऽस्माकमायूंषि प्र तारिषत् । प्रवर्धयतु ॥

॥ अथ द्वितीया ॥

उत वात पितासि न उत भ्रातोत नः सखा ।
स नो जीवातवे कृधि ॥ २ ॥

उत । वात । पिता । असि । नः । उत । भ्राता । उत । नः । सखा ।
सः । नः । जीवातवे । कृधि ॥ २ ॥

उतापि च हे वात त्वं नोऽस्माकं पितासि । उत्पादको भवसि । उतापि च भ्राता भवसि । उतापि च नोऽस्माकं सखा समानख्यानो मित्रभूतश्च भवसि । स त्वं नोऽस्माञ्जीवातवे जीवनहेतवे यागाय कृधि । कुरु । करोतेश्छांदसो विकरणस्य लुक् । श्रुशृणुपॄकृवृभ्य इति हेर्धिः ॥

॥ अथ तृतीया ॥

यददो वात ते गृहे३ऽमृतस्य निधिर्हितः ।
ततो नो देहि जीवसे ॥ ३ ॥

यत् । अदः । वात । ते । गृहे । अमृतस्य । निऽधिः । हितः ।
ततः । नः । देहि । जीवसे ॥ ३ ॥

हे वात वायो ते तव गृहे स्थाने यददो योऽसावमृतस्यामरणस्य निधिर्निक्षेपो हितः स्थापितो वर्तते ततस्तस्मान्निधेराहृत्यामृतत्वं जीवसे नोऽस्माकं जीवनाय देहि । प्रयच्छ ॥

॥ इत्यष्टमस्याष्टमे चतुश्चत्वारिंशो वर्गः ॥

प्राग्नय इति पंचर्चं षट्त्रिंशं सूक्तं । अग्नेः पुत्रस्य वत्सस्यार्षं गायत्रमाग्नेयं । तथा चानुक्रांतं । प्राग्नये पंचाग्नेयो वत्स आग्नेयं त्विति ॥ प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे

छंदसीदमादिके द्वे सूक्ते। सूत्र्यते हि। प्राग्नये वाचमिति सूक्ते इमां मे अग्ने समिधं। आ० ४.१३.। इति॥ दशरात्रस्य नवमेऽहन्याग्निमारुत इदं जातवेदसं निविद्धानं। सूचितं च। मरुतो यस्य हि प्राग्नये वाचमित्याग्निमारुतं। आ० ८.११.। इति॥

॥ तत्र प्रथमा ॥

प्राग्नये वाचमीरय वृषभाय क्षितीनां।
स नः पर्षदति द्विषः ॥१॥

प्र। अग्नये। वाचं। ईरय। वृषभाय। क्षितीनां।
सः। नः। पर्षत्। अति। द्विषः ॥१॥

हे स्तोतरग्नये स्तुतिरूपां वाचं प्रेरय। उच्चारय। कथंभूताय। क्षितीनां मनुष्याणां यजमानानां वृषभाय कामानां वर्षित्रे। किं प्रयोजनमिति चेत् सोऽग्निर्नोऽस्मान्द्विषो द्वेष्टॄनति पर्षत्। अतिपारयेत् ॥

॥ अथ द्वितीया ॥

यः परस्याः परावतस्तिरो धन्वातिरोचते।
स नः पर्षदति द्विषः ॥२॥

यः। परस्याः। पराऽवतः। तिरः। धन्व। अतिऽरोचते।
सः। नः। पर्षत्। अति। द्विषः ॥२॥

योऽग्निः परस्याः परावतोऽतिशयिताद्दूरदेशात्तिरः। प्राप्तनामैतत्। प्राप्तसंबंधं धन्व मरुभूमिं जलवर्जितं देशमतिरोचतेऽतिक्रम्य प्रज्वलति। यद्वा धन्वांतरिक्षं। धन्वांतरिक्षं तिरस्तिर्यगतिरोचते भृशं प्रकाशयते। गतमन्यत् ॥

॥ अथ तृतीया ॥

यो रक्षांसि निजूर्वति वृषा शुक्रेण शोचिषा।
स नः पर्षदति द्विषः ॥३॥

यः। रक्षांसि। निऽजूर्वति। वृषा। शुक्रेण। शोचिषा।
सः। नः। पर्षत्। अति। द्विषः ॥३॥

वृषा वर्षिता योऽग्निः शुक्रेण निर्मलेन शुभ्रवर्णेन वा शोचिषा तेजसा रक्षांसि यज्ञस्य हंतॄणि निजूर्वति निहिनस्ति। जूर्वी हिंसार्थः। गतमन्यत् ॥

॥ अथ चतुर्थी ॥

यो विश्वाभि विपश्यति भुवना सं च पश्यति ।

स नः पर्षदति द्विषः ॥४॥

यः । विश्वा । अभि । विऽपश्यति । भुवना । सं । च । पश्यति ।

सः । नः । पर्षत् । अति । द्विषः ॥४॥

योऽग्निः सूर्यरूपेण विश्वा विश्वानि सर्वाणि भूतजातान्यभिमुखं विपश्यति विशेषेण तेजसा प्रेक्षते । प्रकाशयतीत्यर्थः । भुवना भुवनानि भूतजातानि संपश्यति च सम्यग्जानाति च । अन्यत्सिद्धं ॥

॥ अथ पंचमी ॥

यो अस्य पारे रजसः शुक्रो अग्निरजायत ।

स नः पर्षदति द्विषः ॥५॥

यः । अस्य । पारे । रजसः । शुक्रः । अग्निः । अजायत ।

सः । नः । पर्षत् । अति । द्विषः ॥५॥

अस्य रजसो लोकस्यांतरिक्षस्य पार उपरिदेशे शुक्रः शुभ्रवर्णो योऽग्निर्विद्युदात्मना सूर्यात्मना वाजायत प्रादुर्भवति स नोऽस्मान्द्विषो द्वेष्टॄनति पर्षत् । अतिपारयतु ॥

॥ इत्यष्टमस्याष्टमे पंचचत्वारिंशो वर्गः ॥

प्र नूनमिति तृचं सप्तत्रिंशं सूक्तं । अग्निपुत्रस्य श्येनस्यार्षं गायत्रं जातवेदोगुणकोऽग्निर्देवता । तथा चानुक्रांतं । प्र नूनं तृचमाग्नेयः श्येनो जातवेदस्यमिति ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

॥ तत्र प्रथमा ॥

प्र नूनं जातवेदसमश्वं हिनोत वाजिनं ।

इदं नो बर्हिरासदे ॥१॥

प्र । नूनं । जातऽवेदसं । अश्वं । हिनोत । वाजिनं ।

इदं । नः । बर्हिः । आऽसदे ॥१॥

जातवेदसं जातानां वेदितारं जातधनादिकं वाश्वं कर्मभिर्व्याप्नुवंतं वाजिनमन्नवंतं हे ऋत्विग्यजमाना नूनमवश्यं प्र हिनोत । प्रवर्धयत । यद्वा । अश्वमिव स्तुतिभिः प्रेरयत । हि गतौ वृद्धौ च । अस्माल्लोटि तशब्दस्य तप्तनप्तनथनाश्चेति तबादेशः । किमर्थं । नोऽस्माकमिदं बर्हिरास्तीर्णमासदे । आसत्तुं प्राप्तुं । बर्हिरासीदत्वित्यर्थः । सदेः कृत्यार्थे तवैकेनिति केन्प्रत्ययः ॥

॥ अथ द्वितीया ॥

अस्य प्र जातवेदसो विप्रवीरस्य मीळ्हुषः ।
महीमियर्मि सुष्टुतिं ॥२॥
अस्य । प्र । जातऽवेदसः । विप्रऽवीरस्य । मीळ्हुषः ।
महीं । इयर्मि । सुऽस्तुतिं ॥२॥

जातवेदसो जातानां वेदितुर्विप्रवीरस्य । विप्रा मेधाविनो यजमाना वीराः पुत्रा यस्य । तादृशस्य मीळ्हुषः सेक्तुरस्याग्नेर्महीं महतीं सुष्टुतिं शोभनां स्तुतिं प्रेयर्मि । प्रेरयामि । ऋ गतौ । जौहोत्यादिकः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं ॥

॥ अथ तृतीया ॥

या रुचो जातवेदसो देवत्रा हव्यवाहनीः ।
ताभिर्नो यज्ञमिन्वतु ॥३॥
याः । रुचः । जातऽवेदसः । देवऽत्रा । हव्यऽवाहनीः ।
ताभिः । नः । यज्ञं । इन्वतु ॥३॥

जातवेदसोऽग्नेर्या रुचो रोचमानाः कालीकरालीप्रभृतयः सप्त जिह्वा देवत्रा देवान्प्रति । देवमनुष्यपुरुषपुरुमर्त्येभ्य इत्यादिना द्वितीयार्थे त्राप्रत्ययः । हव्यवाहनीर्हव्यानां हविषां वोढ्र्यः प्रापयित्र्यो भवंति । वा छंदसीति जसि पूर्वसवर्णदीर्घः । ताभिर्जिह्वाभिर्नोऽस्माकं यज्ञं यागसाधनं हविरिन्वतु । देवान्प्रापयतु । इवि व्याप्तौ । इदित्वान्नुम् ॥

॥ इत्यष्टमस्याष्टमे षट्चत्वारिंशो वर्गः ॥

आयं गौरिति तृचमष्टात्रिंशं सूक्तं गायत्रं । सार्पराज्ञी नामर्षिका । सैव देवता सूर्यो वेति । तथा चानुक्रांतं । आयं गौः सार्पराज्ञ्यात्मदैवतं सौर्यं वेति ॥ अवि-

वाक्येऽहनि मानसग्रह एतत्सूक्तं शंसनीयं । सूचितं च । आयं गौः पृश्निरक्रमी-
दित्युपांशु तिस्रः पराचीः शस्त्वा । आ॰ ८.१३. । इति ॥

॥ तत्र प्रथमा ॥

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरं च प्रयन्स्वः ॥१॥
आ । अयं । गौः । पृश्निः । अक्रमीत् । असदत् । मातरं । पुरः ।
पितरं । च । प्रऽयन् । स्व१रिति स्वः ॥१॥

गौर्गमनशीलः पृश्निः प्राष्टवर्णः प्राप्ततेजा अयं सूर्य आक्रमीत् । आक्रांतवान् ।
उदयाचलं प्राप्तवानित्यर्थः । आक्रम्य च पुरः पुरस्तात्पूर्वस्यां दिशि मातरं सर्व-
भूतजातस्य निर्मात्रीं पृथिवीमसदत् । आसीदति । प्राप्नोति । सदेश्छांदसो लुङ् ।
लृदित्वाच्लेरङादेशः । ततः पितरं पालकं द्युलोकं । चशब्दादंतरिक्षं च प्रयन् प्र-
कर्षेण शीघ्रं गच्छन् स्वः स्वरणः शोभनगमनो भवति । यद्वा पितरं स्वर्गलोकं
प्रयन्वर्तते ॥

॥ अथ द्वितीया ॥

अंतश्चरति रोचनास्य प्राणादपानती ।
व्यख्यन्महिषो दिवं ॥२॥
अंतरिति । चरति । रोचना । अस्य । प्राणात् । अपऽअनती ।
वि । अख्यत् । महिषः । दिवं ॥२॥

अस्य सूर्यस्य रोचना रोचमाना दीप्तिरंतः शरीरमध्ये मुख्यप्राणात्मना चरति ।
वर्तते । किं कुर्वती । प्राणादपानती । मुख्यप्राणस्य प्राणाद्याः पंच वृत्तयः । तत्र
प्राणनं नाडीभिरूर्ध्वं वायोर्निर्गमनं । तथाविधात्प्राणात्प्राणनादनंतरमपानती ।
अपाननं नाडीभिरवाङ्मुखं वायोर्नयनं । तत्कुर्वती । अपपूर्वादनितेर्लटः शतृ ।
अदादित्वाच्छपो लुक् । उगितश्चेति ङीप् । शतुरनुम इति नद्या उदात्तत्वं ॥ यद्वा ।
अंतर्द्यावापृथिव्योर्मध्येऽस्य सूर्यस्य रोचना रोचमाना दीप्तिश्चरति । गच्छति । रुच
दीप्तौ । अनुदात्तेतश्च हलादेरिति युच् । किं कुर्वती । प्राणात्प्राणनादुदयानंतरम-
पानती सायंसमयेऽस्तं गच्छंती । ईदृश्या दीप्त्या युक्तः । अत एव महिषो महान्सूर्यो

दिवमंतरिक्षमुदयास्तमययोर्मध्ये व्यख्यत्। विचष्टे। प्रकाशयति॥ महेरविमह्योष्टि-षजित्यौणादिकष्टिषच् प्रत्ययः। चक्षिङः ख्याञ्। छांदसे लुङ्यस्यतिवक्तीत्यादिना च्लेरङादेशः ॥

॥ अथ तृतीया ॥

त्रिंशद्धाम वि राजति वाक्पतंगाय धीयते ।

प्रति वस्तोरह द्युभिः ॥३॥

त्रिंशत् । धाम । वि । राजति । वाक् । पतंगाय । धीयते ।

प्रति । वस्तोः । अह । द्युऽभिः ॥३॥

त्रिंशद्धाम धामानि स्थानानि । वचनव्यत्ययः । वस्तोर्वासरस्याहोरात्रस्याव-यवभूतानि । अहशब्दोऽवधारणे । द्युभिः सूर्यस्य दीप्तिभिरेव वि राजति । वि-राजंते । विशेषेण दीप्यंते । व्यत्ययेनैकवचनं । मुहूर्तान्यत्र धामान्युच्यंते । पंचदश रात्रेः पंचदशाह्नः । पतंगाय । पतति गच्छतीति पतंगः सूर्यः । तस्मै श्रुतिरूपा वाक् प्रति धीयते । प्रतिमुखं स्तोतृभ्यः क्रियते ॥ यद्वा वस्तोरहनि त्रिंशद्धामानि । घटिकाभिप्रायमेतत् । त्रिंशद्घटिकाः । अत्यंतसंयोगे द्वितीया । एतावंतं कालं द्युभि-र्दीप्तिभिरसौ सूर्यो वि राजति । विशेषेण दीप्यते । तस्मिंश्च समये वाक् त्रयीरूपा तस्मै सूर्यरूपाय पतंगाय प्रति धीयते । प्रतिमुखं धार्यते । स्तूयते सूर्यः सर्वत इत्यर्थः । श्रूयते हि । ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्न इत्यादि ॥ यदा त्विदं सूक्तं सार्पराज्या आत्मस्तुतिस्तदा सूर्यात्मना स्तूयत इत्यवगंतव्यं ॥

॥ इत्यष्टमस्याष्टमे सप्तचत्वारिंशो वर्गः ॥

ऋतमिति तृचमेकोनचत्वारिंशं सूक्तं मधुच्छंदसः पुत्रस्याघमर्षणस्यार्षमानुष्टुभं। रात्र्यादीनां भावानां सृष्ट्यादिप्रतिपादकत्वात्तादृग्रूप एवार्थो देवता ॥ तथा चानु-क्रांतं । ऋतं माधुच्छंदसोऽघमर्षणो भाववृत्तमानुष्टुभं त्विति । लिंगाद्विनियोगो ऽवगंतव्यः ॥

॥ तत्र प्रथमा ॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।

ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥१॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।

ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥१॥

ऋतमिति सत्यनाम। ऋतं मानसं यथार्थसंकल्पनं सत्यं वाचिकं यथार्थभाषणं। चकाराभ्यामन्यदपि शास्त्रीयं धर्मजातं समुच्चीयते। तत्सर्वमभीद्धादभितप्राद्ब्रह्मणा पुरा सृष्ट्यर्थं कृतात्तपसोऽधि। अध्युपर्यर्थे। उपर्यजायत। उदपद्यत। तपस्तप्त्वेदं सर्वमसृजतेति श्रुतेः। तपश्चात्र स्रष्टव्यपर्यालोचनलक्षणं। यस्य ज्ञानमयं तप इति श्रुत्यंतरात्। अभिपूर्वादिंधेः कर्मणि निष्ठा। श्वीदितो निष्ठायामितीट्प्रतिषेधः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। स्वरितो वानुदात्ते पदादावित्येकादेशः स्वर्यते। यद्वा। अभीद्धादभितः प्रकाशमानात्परमात्मनो मायाधिष्ठानरूपादानभूताहतं सत्यं चाजायत। जनिकर्तुः प्रकृतिरिति प्रकृतेरपादानसंज्ञा। ततस्तस्मादेवेश्वराद्रात्री। उपलक्षणमेतदह्नोऽपि। अहश्च रात्रिश्चाजायत। रात्रेश्चाजसाविति ङीप्। ततस्तस्मादेवेश्वरादर्णवोऽर्णसोदकेन युक्तः समुद्रश्चाजायत। समुद्रशब्दोऽंतरिक्षोदध्योः साधारण इत्यभिमतार्थस्य प्रकाशनायार्णवशब्देन विशेष्यते। अर्णसः सलोपश्चेति मत्वर्थीयो वप्रत्ययः सलोपश्च॥

॥ अथ द्वितीया ॥

समुद्रादर्णवादधि संवत्सरो अजायत।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी॥२॥
समुद्रादर्णवादधि संवत्सरो अजायत।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी॥२॥

अर्णवात्समुद्रात्सृष्टादध्यूर्ध्वं संवत्सरः संवत्सरोपलक्षितः सर्वः कालोऽजायत। श्रूयते हि। सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि कला मुहूर्ताः काष्ठाश्च। तै॰ आ॰ १०.१.। इति। स चेश्वरः। अहोरात्राण्येतदुपलक्षितानि सर्वाणि भूतानि विदधत् कुर्वन् सृजन्। अभ्यस्तानामादिरित्याद्युदात्तत्वं। ततः समासे कृदुत्तरपदप्रकृतिस्वरत्वं। मिषतो निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्तते॥

॥ अथ तृतीया ॥

सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत्।
दिवं च पृथिवीं चांतरिक्षमथो स्वः॥३॥

सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चांतरिक्षमथो स्वः ॥३॥

सूर्यचंद्रमसौ कालस्य ध्वजभूतौ दिवं च पृथिवीं चांतरिक्षं च। इत्थं त्रिभुवनं स्वः । स्वःशब्दः सुखवाची । दिवो विशेषणं । सुखरूपां दिवं । तदेतत्सर्वं धाता विधाता यथा पूर्वं पूर्वस्मिन्कालेऽकल्पयत् सृष्टवान् तथैवागामिन्यपि कल्पे कल्पयिष्यतीत्यर्थः ॥

॥ इत्यष्टमस्याष्टमेऽष्टाचत्वारिंशो वर्गः ॥

संसमिति चतुर्ऋचं चत्वारिंशं सूक्तं संवननस्यार्षं। समानो मंत्र इति तृतीया त्रिष्टुप् शिष्टास्तिस्रोऽनुष्टुभः । प्रथमाया अग्निर्देवता । शिष्टानां संज्ञानं । अनुक्रम्यते च। संसं चतुष्कं संवननः संज्ञानमाद्याग्नेयी तृतीया त्रिष्टुप् तृतीया त्रिष्टुबिति। आनुष्टुभं त्विति पूर्वमुक्तत्वादवशिष्टानामनुष्टुप्त्वं। सूक्तविनियोगो लैंगिकः॥

॥ तत्र प्रथमा ॥

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इळस्पदे समिध्यसे स नो वसून्या भर ॥१॥
संऽसं । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ ।
इळः । पदे । सं । इध्यसे । सः । नः । वसूनि । आ । भर ॥१॥

हे वृषन् कामानां वर्षितरग्नेऽर्य ईश्वरस्त्वं। अर्यः स्वामिवैश्ययोरिति यत्प्रत्ययांतो निपातितः अर्यः । स्वाम्याख्यायामित्यंतोदात्तत्वं। स त्वं विश्वानि सर्वाणि भूतजातानि संसं। प्रसमुपोदः पादपूरण इति समो द्विर्वचनं। इच्छब्दोऽवधारणे। आ समंतात्संयुवसे । मिश्रयसि । देवेषु मध्ये त्वमेव सर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि। नान्य इत्यर्थः । किंचेळ इडायाः पृथिव्याः पदे स्थान उत्तरवेदिलक्षणे। एतद्वा इळायास्पदं यदुत्तरवेदिनाभिः । ऐ॰ ब्रा॰१.२८.। इति ब्राह्मणं। तत्र त्वं समिध्यसे। ऋत्विग्भिः संदीप्यसे। स तादृशस्त्वं नोऽस्माकं वसूनि धनान्या भर। आहर ॥

॥ अथ द्वितीया ॥

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानतां ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥२॥

सं । गच्छध्वं । सं । वदध्वं । सं । वः । मनांसि । जानतां ।

देवाः । भागं । यथा । पूर्वे । संऽजानानाः । उपऽआसते ॥ २ ॥

हे स्तोतारो यूयं सं गच्छध्वं । संगताः संभूता भवत । समो गम्यृच्छीत्यादिना गमेरात्मनेपदं । तथा सं वदध्वं । सह वदत । परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं ब्रूतेति यावत् । व्यक्तवाचां समुच्चारणे । पा० १.३.४८. । इति वदेरात्मनेपदं । वो युष्माकं मनांसि सं जानतां । समानमेकरूपमेवार्थमवगच्छंतु । संप्रतिभ्यामनाध्याने । पा० १.३.४६. । इति जानातेरात्मनेपदं । यथा पूर्वे पुरातना देवाः संजानाना ऐकमत्यं प्राप्ता हविर्भागमुपासते यथा स्वं स्वीकुर्वंति तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुतेति शेषः ॥

॥ अथ तृतीया ॥

समानो मंत्रः समितिः समानी समानं मनः सह चित्तमेषां ।

समानं मंत्रमभि मंत्रये वः समानेन वो हविषा जुहोमि ॥ ३ ॥

समानः । मंत्रः । संऽइतिः । समानी । समानं । मनः । सह । चित्तं । एषां ।

समानं । मंत्रं । अभि । मंत्रये । वः । समानेन । वः । हविषा । जुहोमि ॥ ३ ॥

पूर्वोऽर्धर्चः परोक्षकृतः उत्तरः प्रत्यक्षकृतः । एषामेकस्मिन्कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणां वा मंत्रः स्तुतिः शस्त्राद्यात्मका गुप्तभाषणं वा समान एकविधोऽस्तु । तथा समितिः प्राप्तिरपि समान्येकरूपास्तु । केवलमामकेत्यादिना समानशब्दाङ्ङीप् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं । तथा मनो मननसाधनमंतःकरणं चैषां समानमेकविधमप्यस्तु । चित्तं विचारजं ज्ञानं तथा सह सहितं परस्परस्यैकार्थेनैकीभूतमस्तु । अहं च वो युष्माकं समानमेकविधं मंत्रमभि मंत्रये । ऐकविध्याय संस्करोमि । तथा वो युष्माकं स्वभूतेन समानेन साधारणेन हविषा चरुपुरोडाशादिनाहं जुहोमि । तृतीया च होश्छंदसीति कर्मणि कारके तृतीया । वषट्कारेण हविः प्रक्षेपयामीत्यर्थः ॥

॥ अथ चतुर्थी ॥

समानी व आकूतिः समाना हृदयानि वः ।

समानमस्तु वो मनो यथा वः सुसहासति ॥ ४ ॥

समानी। वः। आऽकूतिः। समाना। हृदयानि। वः।
समानं। अस्तु। वः। मनः। यथा। वः। सुऽसह। असति ॥४॥

हे ऋत्विग्यजमाना वो युष्माकमाकूतिः संकल्पोऽध्यवसायः समान्येकविधोऽस्तु। तथा वो युष्माकं हृदयानि समानान्येकविधानि संतु। तथा वो युष्माकं मनोऽंतःकरणं। प्रत्येकापेक्षयैकवचनं। तदपि समानमस्तु। यथा वो युष्माकं सुसह शोभनं साहित्यमसति भवति तथा समानमस्त्वित्यन्वयः। अस्तेर्लेटि बहुलं छंदसीति शपो लुगभावः॥

॥ इत्यष्टमस्याष्टम एकोनपंचाशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्येऽष्टमाष्टकेऽष्टमोऽध्यायः संपूर्णः॥

शार्मण्यदेशजातेन श्रीगोतीर्थनिवासिना।
मोक्षमूलरभट्टेन भाष्यमिदं विशोधितं॥

# SARVÂNUKRAMA.

TABLE OF POETS, DEITIES, AND METRES

ASSIGNED TO THE

HYMNS OF THE RIG-VEDA

BY KÂTYÂYANA.

# SARVÂNUKRAMAḤ.

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Vol. I. Pag. |
|---|---|---|---|---|---|---|---|---|
| 1 | 1.1.1 | 1.1.1 | Agnim | 9 | Madhucchandâ Vaiśvâmitraḥ. | Agniḥ. | Gâyatrî. | 43 |
| 2 | 1.1.2 | 1.1.3 | Vâyo | 9 | The same. | 1–3 Vâyuḥ, 4–6 Indra-Vâyû, 7–9 Mitrâ-Varuṇau. | The same. | 53 |
| 3 | 1.1.3 | 1.1.5 | Aśvinâ | 12 | ...... | 1–3 Aśvinau, 4–6 Indraḥ, 7–9 Viśve Devâḥ, 10–12 Sarasvatî. | ...... | 64 |
| 4 | 1.2.1 | 1.1.7 | Surûpakṛitnum | 10 | ...... | Indraḥ. | ...... | 76 |
| 5 | 1.2.2 | 1.1.9 | Â tu | 10 | ...... | The same. | ...... | 84 |
| 6 | 1.2.3 | 1.1.11 | Yunjanti | 10 | ...... | 1–3, 10 Indraḥ, 4, 6, 8, 9 Marutaḥ, 5 and 7 Indraḥ and Marutaḥ. | ...... | 92 |
| 7 | 1.2.4 | 1.1.13 | Indram it | 10 | ...... | Indraḥ. | ...... | 102 |
| 8 | 1.3.1 | 1.1.15 | Aindra sânasim | 10 | ...... | The same. | ...... | 111 |
| 9 | 1.3.2 | 1.1.17 | Indrehi | 10 | ...... | ...... | ...... | 120 |
| 10 | 1.3.3 | 1.1.19 | Gâyanti | 12 | ...... | ...... | Anushṭup. | 127 |
| 11 | 1.3.4 | 1.1.21 | Indram | 8 | Jetâ Mâdhucchandasaḥ. | ...... | The same. | 140 |
| 12 | 1.4.1 | 1.1.22 | Agnim | 12 | Medhâtithiḥ Kâṇvaḥ. | Agniḥ, 6*a* Agnir Nirmathyaḥ and Agnir Âhavanîyaḥ. | Gâyatrî. | 148 |
| 13 | 1.4.2 | 1.1.24 | Susamiddhaḥ | 12 | The same. | 1 Idhmaḥ or Samiddhaḥ, 2 Tanûnapât, 3 Narâśaṃsaḥ, 4 Iḷaḥ, 5 Barhiḥ, 6 Devîr Dvâraḥ, 7 Ushâsâ-Naktâ, 8 Daivyau Hotârau Pracetasau, 9 Tisro Devyaḥ (Sarasvatî, Iḷâ, Bhâratî), 10 Tvashṭâ, 11 Vanaspatiḥ, 12 Svâhâkṛitayaḥ, (Âprisûktam.) | The same. | 156 |
| 14 | 1.4.3 | 1.1.26 | Aibhiḥ | 12 | ...... | Viśve Devâḥ. | ...... | 165 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Vol. I. Pag. |
|---|---|---|---|---|---|---|---|---|
| 15 | 1.4.4 | 1.1.28 | Indra somam | 12 | Medhâtithiḥ Kâṇvaḥ. | Ritavaḥ, 1 Indraḥ, 2 Marutaḥ, 3 Tvashṭâ, 4 Agniḥ, 5 Indraḥ, 6 Mitrâ-Varuṇau, 7–10 Draviṇodâḥ, 11 Asvinau, 12 Agniḥ. | Gâyatrî. | 173 |
| 16 | 1.4.5 | 1.1.30 | Â tvâ | 9 | The same. | Indraḥ. | The same. | 182 |
| 17 | 1.4.6 | 1.1.32 | Indrâvaruṇayoḥ | 9 | ...... | Indrâ-Varuṇau. | Gâyatrî, 4 and 5 Pâdanicṛit. | 187 |
| 18 | 1.5.1 | 1.1.34 | Somânam | 9 | ...... | 1–5 Brahmaṇaspatiḥ, with Indraḥ and Somaḥ in 4, and with Dakshiṇâ in 5, 6–8 Sadasaspatiḥ, 9 Sadasaspatiḥ or Narâsamsaḥ. | Gâyatrî. | 194 |
| 19 | 1.5.2 | 1.1.36 –37 | Prati tyam | 9 | ...... | Agniḥ and Marutaḥ. | The same. | 201 |
| 20 | 1.5.3 | 1.2.1 | Ayam | 8 | ...... | Ribhavaḥ. | ...... | 206 |
| 21 | 1.5.4 | 1.2.3 | Iha | 6 | ...... | Indra-Agnî. | ...... | 212 |
| 22 | 1.5.5 | 1.2.4 | Prâtaryujâ | 21 | ...... | 1–4 Asvinau, 5–8 Savitâ, 9–10 Agniḥ, 11 Devyaḥ, 12 Indrâṇî, Varuṇânî, and Agnâyî, 13–14 Dyâvâ-Pṛithivyau, 15 Pṛithivî, 16–21 Vishṇuḥ, (16 Vishṇuḥ or Devâḥ.) | ...... | 214 |
| 23 | 1.5.6 | 1.2.8 | Tîvrâḥ | 24 | ...... | 1 Vâyuḥ, 2–3 Indra-Vâyû, 4–6 Mitrâ-Varuṇau, 7–9 Indro Marutvân, 10–12 Visve Devâḥ, 13–15 Pûshâ, 16–23*a* Âpaḥ, 23*b*–24 Agniḥ. | Gâyatrî, 19 Puraushṇik, 20 Anushṭup, 21 Pratishṭhâ, 22–24 Anushṭup. | 228 |
| 24 | 1.6.1 | 1.2.13 | Kasya nûnam | 15 | Sunaḥsepa Âjigartiḥ, Kṛitrimo Vaisvâmitro Devarâtaḥ. | 1 Kaḥ, 2 Agniḥ, 3–4 Savitâ, 5 Savitâ or Bhagaḥ, 6–15 Varuṇaḥ. | Trishṭup, 3–5 Gâyatrî. | 241 |
| 25 | 1.6.2 | 1.2.16 | Yac cit | 21 | The same. | Varuṇaḥ. | Gâyatrî. | 252 |
| 26 | 1.6.3 | 1.2.20 | Vasishvâ | 10 | ...... | Agniḥ. | The same. | 262 |
| 27 | 1.6.4 | 1.2.22 | Asvam na tvâ | 13 | ...... | Agniḥ, 13 Devâḥ. | Gâyatrî, 13 Trishṭup. | 267 |
| 28 | 1.6.5 | 1.2.25 | Yatra grâvâ | 9 | ...... | 1–4 Indraḥ, 5–6 Ulûkhalam, 7–8 Ulûkha- | 1–6 Anushṭup, 7–9 Gâyatrî. | 274 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Vol. I. Pag. |
|---|---|---|---|---|---|---|---|---|
| | | | | | | la-Musalau, 9 Prajâpatir Haris'candrah, or Adhishavanacarma, (or Somah.) | | |
| 29 | 1.6.6 | 1.2.27 | Yac cid dhi | 7 | The same. | Indrah. | Panktih. | 279 |
| 30 | 1.6.7 | 1.2.28 | Â vah | 22 | ...... | 1–16 Indrah, 17–19 As'vinau, 20–22 Ushâh. | Gâyatrî, 11 Pâdanicrid Gâyatrî, 16 Trishtup. | 283 |
| 31 | 1.7.1 | 1.2.32 | Tvam agne | 18 | Hiranyastûpa Ângirasah. | Agnih. | Jagatî, 8, 16 and 18 Trishtup. | 294 |
| 32 | 1.7.2 | 1.2.36–38 | Indrasya nu | 15 | The same. | Indrah. | Trishtup. | 308 |
| 33 | 1.7.3 | 1.3.1 | Eta | 15 | ...... | The same. | The same. | 312 |
| 34 | 1.7.4 | 1.3.4 | Tris'cit | 12 | ...... | As'vinau. | Jagatî, 9 and 12 Trishtup. | 334 |
| 35 | 1.7.5 | 1.3.6 | Hvayâmi | 11 | ...... | 1 Agnih, Mitrâ-Varunau, Râtrî, and Savitâ, 2–11 Savitâ. | Trishtup, 1 and 9 Jagatî. | 344 |
| 36 | 1.8.1 | 1.3.8 | Pra vah | 20 | Kanvo Ghaurah. | Agnih, 13–14 Yûpah. | Prâgâtham bârhatam. | 353 |
| 37 | 1.8.2 | 1.3.12 | Krîlam | 15 | The same. | Marutah. | Gâyatrî. | 367 |
| 38 | 1.8.3 | 1.3.15 | Kad dha | 15 | ...... | The same. | The same. | 375 |
| 39 | 1.8.4 | 1.3.18 | Pra yat | 10 | ...... | ...... | Prâg. bârh. | 382 |
| 40 | 1.8.5 | 1.3.20 | Uttishtha | 8 | ...... | Brahmanaspatih. | The same. | 389 |
| 41 | 1.8.6 | 1.3.22 | Yam rakshanti | 9 | ...... | 1–3 and 7–9 Varuna-Mitra-Aryamanah, 4–6 Âdityâh. | Gâyatrî. | 396 |
| 42 | 1.8.7 | 1.3.24 | Sam pûshan | 10 | ...... | Pûshâ. | The same. | 400 |
| 43 | 1.8.8 | 1.3.26 | Kad rudrâya | 9 | ...... | Rudrah, 3 Mitrâ-Varunau, 7–9 Somah. | Gâyatrî, 9 Anushtup. | 406 |
| 44 | 1.9.1 | 1.3.28 | Agne | 14 | Praskanvah Kânvah. | Agnih, 1 and 2 with As'vinau and Ushâh. | Prâg. bârh. | 411 |
| 45 | 1.9.2 | 1.3.31 | Tvam agne | 10 | The same. | Agnih, half of 10 Devâh. | Anushtup. | 420 |
| 46 | 1.9.3 | 1.3.33–35 | Esho | 15 | ...... | As'vinau. | Gâyatrî. | 426 |
| 47 | 1.9.4 | 1.4.1 | Ayam | 10 | ...... | The same. | Prâg. bârh. | 434 |
| 48 | 1.9.5 | 1.4.3 | Saha | 16 | ...... | Ushâh. | The same. | 440 |
| 49 | 1.9.6 | 1.4.6 | Ushah | 4 | ...... | The same. | Anushtup. | 453 |
| 50 | 1.9.7 | 1.4.7 | Ud u tyam | 13 | ...... | Sûryah. | 1–9 Gâyatrî, 10–13 Anushtup. | 456 |
| 51 | 1.10.1 | 1.4.9 | Abhi tyam | 15 | Savyah (Indrah) Ângirasah. | Indrah. | 1–13 Jagatî, 14–15 Trishtup. | 465 |
| 52 | 1.10.2 | 1.4.12 | Tyam su | 15 | The same. | The same. | 1–12 and 14 Jagatî, 13 and 15 Trishtup. | 480 |

